THE
ÂNANDÂS'RAMA SANSKRITA SERIES,
No. 33.
PART I.

# THE RÂJANIGHANTA

AND

# THE DHANVANTARINIGHANTA,

*( Two Treatises on Medicine).*

EDITED BY

**VAIDYA NÂRÂYAṆA SHASTRI PURANDÂRE**

PUBLISHED BY

**HARI NÂRÂYAṆA ÂPTE,**

*Superintendent—Ânandâs'rama.*

PRINTED AT THE ÂNANDÂS'RAMA PRESS,
POONA,
1896.



Price Rs. 6-4.

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३३ 33

# राजनिघण्टुसहितो धन्वन्तरीयनिघण्टुः ।

एतत्पुस्तकं वे० शा० रा० रा० "पुरन्दरे" इत्युपनामकैर्विठ्ठलात्मजैर्वैद्यनारायणशर्मभिः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८१८

खिस्ताब्दाः १८९६

ॐ तत्सद्ब्रह्मणे नमः ।

# प्रस्ताविकालेखः ।

धन्वन्तरीयनिघण्टुरित्यभिधोऽयं ग्रन्थोऽतीव प्राचीनश्चिकित्सकानामत्यन्तोपयोगी च । अत एव तं मुद्रितं कृत्वा प्रकाशं निनीष्वेव मे मनो बहुसमाः । परं सांसारिकैर्विविधव्यवसायैरेतादृशश्चित्ताभिप्राय एतावत्कालं मनोरथमयः संजातः । एवं समतीतेषु दिनेषु संप्रत्ययं ग्रन्थो मुद्रितव्य इति मनसि स्पृहा भृशं समजायत । विधेः सुनियोगेनैष मे चित्ताभिप्रायोऽस्मन्मित्रवर्याणां वेदशास्त्रसंपन्नानां श्रीमतां 'इसलामपूरकर' इत्युपाधिधराणां पण्डितवामनशास्त्रिणां कर्णपथं समायातः । तैश्चायं ग्रन्थ आनन्दाश्रमे मुद्रणीय इति योजना कृता । अनन्तरं श्रीमद्भिः 'महादेव चिमणाजी आपटे' इत्येतैः सम्यगनुज्ञातोऽहमेतस्य पूर्वस्थितस्य ग्रन्थस्य विरचनां कर्तुं समारब्धवान् ।

२. श्रीमद्भिः 'महादेव चिमणाजी आपटे' इत्येतैरस्मदुपयोगार्थं धन्वन्तरीयनिघण्टोर्द्वादश पुस्तकानि दत्तानि । मम सकाशे ग्रन्थस्यास्य त्रीणि पुस्तकान्यासन् । एतेषां पुस्तकान्तराणां संमीलनादयं हस्तस्थितो ग्रन्थो धन्वन्तरीयनिघण्टुरित्यभिधः सुपरिणामः । अथ माघाख्ये मासे श्रीमद्भिः 'महादेव चिमणाजी आपटे' इत्येतैः सह कदाचिदहं सुसंगतः । तस्मिन्समये प्रस्तुतो यथादृष्टो 'धन्वन्तरीयनिघण्टुः' वैद्यानां सम्यगुपयोगार्थमलं न वेति तेषां संजातायां पृच्छायां मयाऽप्यनुवादः कृतो यथाऽस्य ग्रन्थस्यातितरां प्राचीनत्वादोषधीनां संप्रति भिन्ननामपर्यायत्वाच्च सांप्रतिकानां चिकित्सकानां पूर्णोपयोगार्थं न तावदयं ग्रन्थोऽलं भवत्यत एवैष ग्रन्थो 'नरहरपण्डितविरचितराजनिघण्टुना' यदि संयोजितस्तर्हि सम्यग्भविष्यतीति । श्रीमन्महादेव चिमणाजी आपटे इत्येतैरप्यस्मिन्प्रकाशं नीते मन्मनोगतेऽनुमोदितः । अनेनैव कारणेन 'धन्वन्तरीयनिघण्टू राजनिघण्टुसहितः' इत्यस्याभिधानं कृत्वाऽयं ग्रन्थः संशोधितः । एवं ग्रन्थनिर्झरिण्योः संभेदं कृत्वैकौघभूता प्रवाहवेणिका प्रस्तुतग्रन्थरूपेण या मया कल्पिता तस्या विरचनाकर्मणि ये दुःसहाः श्रमास्त्रयोदशमासाभ्यधिककालपर्यन्तं व्यापृतेन मयाऽङ्गीकृतास्तेषां प्रतिमां लेखालेख्ये दर्शयितुं न तावच्छक्यम् । प्रत्यन्तरार्थं यानि पुस्तकान्यानीतानि तेष्वतीवभेदो दृष्टः । सुचिरं तद्गतानां पाठान्तराणां विचार्यैकीकरणकर्मणि मयाऽऽत्मा संत्रासभाजनं कृतः । यदि तावन्मया मदध्ययनकर्मणि नियुक्तं मम पुस्तकं मम हस्ते संनिहितं नाभविष्यत्तर्हि एतस्य सुपूर्णस्य ग्रन्थस्य ग्रथनशोधनकर्मासंभाव्यमभविष्यत् । परमीशकृपया सर्वान्प्रत्यूहान्सुदूरं प्रक्षिप्यैष ग्रन्थः सुपूर्णतां नीतः ।

३. यत्र यत्र पर्यायशब्दविषयकः संशयोऽभूत्तत्र तत्र सुश्रुतभावप्रकाशवाचस्पत्यशब्दरत्नाकरादीन्ग्रन्थविशेषान्समाश्रित्य तच्छेदः कृतः । अत एव तेषां ग्रन्थानां कर्तृन्भृशं समानतोऽस्मि ।

४. संप्रति धन्वन्तरीयनिघण्टुमधिकृत्य किंचिद्वक्तुं सांप्रतमेव । अयं ग्रन्थो धन्वन्तर्यन्तेवासिनां केनचिदपि च्छात्रेण ग्रथित इति वक्ष्यमाणश्लोकान्त्यार्धेन ध्वन्यते । एतच्चास्य ग्रन्थस्यानुक्रमणिकायां षष्ठवर्गस्यान्त्यश्लोकार्धम्—

'द्रव्यावलिः समादिष्टा धन्वन्तरिमुखोद्गता' इति ।

जीवत्स्वायुर्वेदाचार्येषु धन्वन्तरिष्वस्य ग्रन्थस्य विरचना जातेत्युदितवचनात्सुनिश्चितमेव । अपरं च । अस्य ग्रन्थस्य सुलभा श्लोकरचना सुश्रुतग्रन्थेनास्य सादृश्यं प्रकटी करोति । विक्रमसभास्थितेषु नवकविरत्नेषु 'धन्वन्तरिः' इति कविवर्योऽभूत्तेन धन्वन्तरीयनिघण्टुरयं प्रणीत इति केषांचिन्मतम् । किंतु धन्वन्तरिः साक्षादादिदेव इति सुश्रुतेऽपि प्रथमाध्याये कथितम् ।

यथा—

'अहं हि धन्वन्तरिरादिदेवो जरारुजामृत्युहरोऽमराणाम् ।
शैल्याङ्गमङ्गैरपरैरुपेतं प्राप्तोऽस्मि गां भूय इहोपदेष्टुम्' इति ।

सत्यां वस्तुस्थित्यामीदृश्यां धन्वन्तरीयनिघण्टुर्विक्रमकालीन इत्यसंभाव्यमेव ।

५. मम हस्ते संनिहितेषु सर्वेषु पुस्तकेषु पुस्तकद्वयं वर्जयित्वा धातूनां शोधनमारणात्मकं प्रकरणं न संगृहीतम् । न च तद्राजनिघण्टावपि दृश्यते । अत एव यत्र यत्र यस्य यस्य धातोर्नामगुणा लिखितास्तत्र तत्र तस्य तस्य धातोः शोधनमारणं टिप्पण्यां दत्तम् ।

६. यैः सद्गृहस्थैर्धन्वन्तरीयनिघण्टुराजनिघण्ट्वोः पुस्तकानि मदुपयोगार्थं दत्तानि तेषामभिधानमालाऽनया भूमिकया सह सादरं संयोजितैव । मया स्वाध्ययनकर्मणि नियुक्तं धन्वन्तरीयनिघण्टोः पुस्तकमधिकृत्यास्य ग्रन्थस्य मूलं कल्पितम् । तथैव मम पितृव्यभ्रात्रोः पुरन्दरोपाह्वयोर्वैद्यबल्लाळात्मजानन्तराघवाभिधानयोः '१७७३' इति शकाब्दे लिखितं पुस्तकं वे० शा० रा० 'आचार्योपाह्वगणेशात्मजानां रघुनाथशर्मणां' पुस्तकं तथैव 'महादेवात्मजश्रीकृष्ण' इत्येतेषां '१९२१' इति शकाब्दे लिखितं पुस्तकं च मम हस्ते संनिहितमासीत् । सुपरिशुद्धं लिखितमकथितधातुशोधनमारणविषयमेतत्पुस्तकत्रयं भृशं ग्रन्थकर्मणि मदुपयोगार्थतां गतम् । एतस्मिन्पुस्तकत्रय एकार्थद्व्यर्थत्र्यर्थादिवर्गो वर्तते । अन्येष्वत्र कथितेषु पुस्तकेष्वयमुद्दिष्टो वर्गो नास्ति ।

## ७. अस्य ग्रन्थस्योद्घाटनमेवम्—

अस्मिन्ग्रन्थे गणद्रव्यावल्यां यानि यानि द्रव्याणि कथितानि तानि तानि स्थूलायसाक्षरैरादावर्धचन्द्ररेखावकाशस्थितक्रमसंख्याभिर्लिखितानि( )। तथैव तेषामुपभेदा मध्यमायसाक्षरैरन्ते क्रमसंख्याभिरेव दर्शिताः। यथा—'हरितालम्'— ॥ २ ॥ इति। यानि द्रव्याणि गणद्रव्यावल्यां नोक्तानि परं च यस्मिन्वर्गे पुस्तकेषु दृश्यन्ते तस्मिन्नेव वर्गे 'वर्गेतरप्रकरणे' दत्तानि । राजनिघण्टुस्थितद्रव्याणि धन्वन्तरीयनिघण्टौ तेषां वर्गानुसारेण यथायोग्यस्थले मया लिखितानि। अपरं च राजनिघण्टुस्थितान्यवशिष्टद्रव्याण्यस्य ग्रन्थस्य **परिशिष्टप्रकरणे** यथावद्वर्गे लिखितानि।

८. राजनिघण्टौ धन्वन्तरीयनिघण्टुस्थितानि यानि यानि **वचनानि** दृष्टानि तानि तानि तत्र तत्रैवान्ते तारकितानि चिह्नैः (*)। परं च धन्वन्तरीयनिघण्टौ तानि समालिख्याऽऽदिभागे चिह्नैस्तारकितानि।

९. अस्य ग्रन्थस्यान्ते निघण्टुद्वयस्थनिखिलशब्दानामकारादिक्रमेण वर्णानुक्रमणिका तथा संस्कृतमहाराष्ट्रीयकर्नाटकगुर्जरहिन्दील्याटिनाङ्ग्लबङ्गालीयभाषासु द्रव्याभिधानानि च वर्णानुक्रमेण संयोजितानि।

१०. आदर्शपुस्तकवाचनेषु वेदमूर्तिवैद्यवासुदेवात्मजकेशवेन '**आचार्योपाह्वचिन्तामण्यात्मजभास्करेण** च मम साहाय्यं कृतम्। अत एव तावप्यत्राहं संभावयामि।

११. अथ प्रस्तावनाया इतिकरणात्प्रागस्ति मे विज्ञप्तिर्यथा प्रमादाद्भ्रमाद्वैयाकरणरीतिसंभ्रमाद्वा ग्रन्थस्थितान्दोषान्सर्वथा क्षन्तुमर्हन्त्येव दयार्द्रस्वान्ता विद्वज्जनास्तथा श्रूयते—

> "वैयाकरणकिराताद्पशब्दमृगाः क्व यान्ति संत्रस्ताः।
> यदि नटगणकचिकित्सकवैतालिकवदनकन्दरा न स्युः" इति।

तथा चायं ग्रन्थः शब्दकोशसंनिभोऽस्ति। अत एव **श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यैः** सम्यग्भणितमस्ति।

यथा—" बहुच्छिद्रं परित्यज्य गुणलेशजिघृक्षया।
परिगृह्णन्त्वदो विज्ञा ऋजवो दम्भवर्जिताः" ॥

अपि च—"इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः।
प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम्" इति।

अत एव सविनयं भवत्सकाशं वक्ष्यमाणा विज्ञप्तिः—

"यद्यदुक्तमिह प्रोक्तं प्रमादेन भ्रमेण वा ।
कृपया हि दयावन्तः सन्तः संशोधयन्तु तत्" इत्यलम् ।
"पुण्यस्तम्भे स्थितिर्मूला यस्योपाधिः पुरन्दरे ।
द्वितीयो विठ्ठलस्यायं वैद्यो नारायणः सुतः ॥ १ ॥
षट्पञ्चाशत्तमे वर्षे वयसः शोधनं कृतम् ।
ग्रन्थस्य, कृपया कामाक्ष्याः सुसिद्धिं गतं च तत्" ॥ २ ॥ इति ।

युष्मदीयस्य—**वैद्यस्य नारायणशर्मणः**

# आदर्शपुस्तकोल्लेखपत्रिका ।

अथानयोर्धन्वन्तरीयनिघण्टुराजनिघण्ट्वोः शोधनसमये येषां पुस्तकानि संस्करणार्थं गृहीतानि तेषां नामग्रामनिर्देशः पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

( क. ) इति संज्ञितम्—पुस्तकं वे० शा० रा० रा० 'गोरे' इत्युपनामकानाम् "विठ्ठलात्मज नारायण शास्त्री हिन्दळेकर" इत्येतेषामस्ति । अस्य लेखनशकाब्दाः १७०१ । अस्मिन्पुस्तके धातूनां शोधनमारणकर्म व्याख्यातम् । परं चैकार्थद्व्यर्थादिवर्गो न दृश्यते ।

( ख. ) इति संज्ञितम्—पुस्तकं बापट इत्युपनामकानां वे० शा० रा० रा० 'गोपालशास्त्रिणाम् । १९२१ संवत्सरे मार्गशीर्षे मासे शुक्लपक्षे तृतीयायां रविवासरे ( दमण )दवाणापूरनगरे ' साण्डोरकरेत्युपाह्वरणच्छोडात्मजशिवरामनाईक ' इत्येषामुपयोगार्थं ' माधवजी गणपतजी ' इत्यनेन लिखितमेतत्पुस्तकम् । धातूनां शोधनं मारणं च नात्र व्याख्यातम् । तथैवैकार्थद्व्यर्थादिवर्गोऽपि न दृश्यते ।

( ग. ) इति संज्ञितम्—एतत्पुस्तकं 'कृष्णाजी विनायक बापट' इत्येतेषाम् । अस्ति तत्र लिखितं १७२९ संवत्सरे प्रभवे फाल्गुनशुद्धप्रतिपत्तिथौ रामचन्द्रसूनुना बल्लालचक्रदेवेन लिखितमिति । अस्मिन्पुस्तके गणद्रव्यावलिस्तथैकार्थद्व्यर्थादिवर्गो न दृश्यते । तद्वद्धातूनां शोधनं मारणं च न दृश्यते ।

( घ. ) इति संज्ञितम्—आचार्योपनामकानां वे० रा० रा० 'कृष्णात्मजपुरुषोत्तम' इत्येषां पुस्तकमेतत् । लेखनकालः १७०३ । अस्मिन्पुस्तके धातुशोधनमारणादिकथनं न दत्तम् ।

( ङ. ) इति संज्ञितम्—पुस्तकमेतत् ' आडघरे वैद्य ' इत्येषाम् । शाके १७७९ संवत्सरे माघे मासे शुक्लचतुर्थ्यां पुण्यपत्तने लिखितम् । अस्मिन्पुस्तके गणद्रव्यावलिस्तथैकार्थद्व्यर्थादिवर्गो नास्ति । धातुशोधनमारणमस्मिन्पुस्तके दत्तम् ।

( च. ) इति संज्ञितम्—वे० शा० रा० रा० ' गोपाळशास्त्री बापट ' इत्येते-

षाम् । गुडूच्यादिप्रथमवर्गपरिमितमेवैतत्पुस्तकम् । नास्त्य-
स्मिञ्शकलेखः ।

( छ. ) इति संज्ञितम्—श्रीमन्महादेव चिमणाजी आपटे इत्येतैः ' वटोदर '
इत्याख्यराजधानीतः समानीतम् । शकदर्शनमस्मिन्न वर्तते ।
अस्य ग्रन्थस्य सप्तमाद्वर्गात्पुरः कानिचित्पृष्ठानि गलितानि
वर्तन्ते । द्विशतसंवत्सरावधिको लेखनकालो वर्तत इति लेखन-
दर्शनेनानुमीयते । धातुशोधनमारणादिविषयोऽत्र न वर्तते ।

( ज. ) इति संज्ञितम्—राजनिघण्टुपुस्तकम्—पुण्यपत्तनस्थानां माटे इत्युपाह्वानां वे.
शा. रा. रा. कृष्णशास्त्री वैद्य इत्येतेषाम् । तत्र लेखनशको
न वर्तते । तथाऽप्येतत्पुस्तकं पञ्चसप्ततिवर्षदेशीयं भवतीति मे
मतिः । एतदप्यंशतो मदीयपुस्तकानुसारि । अस्मिन्पुस्तके
नास्ति धातूनां शोधनमारणादिप्रकरणम् ।

( झ. ) इति संज्ञितम्—आनन्दाश्रमस्थं संस्करणार्थं लिखितं पुस्तकम् ।

( ञ. ) इति संज्ञितम्—धन्वन्तरीयनिघण्टुपुस्तकमेतत्, रा० रा० " श्रीपतराव
छत्रे वकील " इत्येतेषाम् ।

( ट. ) इति संज्ञितम्—धन्वन्तरीयनिघण्टुपुस्तकमेतत्, खेडग्रामनिवासिनां रा० रा०
' नागुभाऊ वकील ' इत्येतेषाम् ।

( ठ. ) इति संज्ञितम्—राजनिघण्टुपुस्तकमेतत्, रा० रा० 'श्रीपतराव छत्रे
वकील' इत्येतेषाम् ।

( ड. ) इति संज्ञितम्—राजनिघण्टुपुस्तकम्, रा० रा० 'नागुभाऊ वकील' इत्ये-
तेषाम् ।

( ढ. ) इति संज्ञितम्—चिंचवडग्रामनिवासिनां चापेकर इत्युपाह्वानां वे० शा० रा०
रा० 'गणेश विनायक' इत्येतेषाम् । राजनिघण्टुपुस्तकमेतत् ।

( ण. ) इति संज्ञितम्—धन्वन्तरीयनिघण्टुपुस्तकमेतत्, चिंचवडग्रामनिवासिनां रा०
रा० चापेकर इत्येतेषाम् ।

( त. ) इति संज्ञितम्—धन्वन्तरीयनिघण्टुपुस्तकमेतत्,—आनन्दाश्रमपुस्तकसंग्रहाल-
यस्थम् ।

**समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।**

॥ श्रीः ॥

# सपरिशिष्टधन्वन्तरीयनिघण्टुराजनिघण्टुस्थवर्गाणाम्

## अनुक्रमः ।


मङ्गलाचरणम् ... ... ... १
ग्रन्थस्य कारणम्... ... ... ,,
गणद्रव्यावलिः ... ... ... २
१ गुडूच्यादिः प्रथमो वर्गः ... ... ,,
२ शतपुष्पादिको द्वितीयो वर्गः ... ६९
३ चन्दनादिस्तृतीयो वर्गः ... ... ९३
४ करवीरादिश्चतुर्थो वर्गः ... ... १३४
५ आम्रादिः पञ्चमो वर्गः ... ... १६९
६ सुवर्णादिः षष्ठो वर्गः ... ... २०५
७ मिश्रकादिः सप्तमो वर्गः ... ... २९९
परिशिष्टम्... ... ... ... ३१९
राजनिघण्ट्ववशिष्टद्रव्यावलिः ... ३१९
मङ्गलाचरणम् ... ... ... ३१९
प्रस्तावना... ... ... ... ३१९
१ अनूपादिः प्रथमो वर्गः ... ... ३२१
२ भूम्यादिर्द्वितीयो वर्गः ... ... ३२४
३ गुडूच्यादिस्तृतीयो वर्गः ... ... ३२९
४ शताह्वादिश्चतुर्थो वर्गः ... ... ३३४
५ पर्पटादिः पञ्चमो वर्गः ... ... ३४०
६ पिप्पल्यादिः षष्ठो वर्गः ... ... ३४५
७ मूलकादिः सप्तमो वर्गः ... ... ३४७
८ शाल्मल्यादिरष्टमो वर्गः ... ... ३५६
९ प्रभद्रादिर्नवमो वर्गः ... ... ३६४
१० करवीरादिर्दशमो वर्गः ... ... ३६८
११ आम्रादिरेकादशो वर्गः ... ... ३७३
१२ चन्दनादिर्द्वादशो वर्गः ... ... ३७५
१३ सुवर्णादिस्त्रयोदशो वर्गः ... ... ३७५
१४ पानीयादिश्चतुर्दशो वर्गः ... ... ३८१
१५ क्षीरादिः पञ्चदशो वर्गः ... ... ३८४
१६ शाल्यादिः षोडशो वर्गः ... ... ३८४
१७ मांसादिः सप्तदशो वर्गः ... ... ३९०
१८ मनुष्यादिरष्टादशो वर्गः ... ... ३९३
१९ सिंहादिरेकोनविंशो वर्गः ... ... ४०२
२० रोगादिर्विंशो वर्गः ... ... ... ४०८
२१ सत्वादिरेकविंशो वर्गः ... ... ४१४
२२ मिश्रकादिर्द्वाविंशो वर्गः ... ... ४१९
२३ एकार्थादिस्त्रयोविंशो वर्गः ... ... ४२१
धन्वन्तरीयोत्तरनिघण्टावेकार्थाद्यभिधानद्रव्यावलिः... ... ... ४३५


इति वर्गानुक्रमणी संपूर्णा ।

ॐ तत्सद्ब्रह्मणे नमः ।

अथ राजनिघण्टुसहितो धन्वन्तरीयनिघण्टुः ।

---

श्रीकामाक्ष्यै नमः । ॐ नमो विघ्नराजाय ।

# अथ *धन्वन्तरीयनिघण्टुप्रारम्भः ।

---

## तत्राऽऽदौ मङ्गलाचरणम् ।

नमामि धन्वन्तरिमादिदेवं सुरासुरैर्वन्दितपादपद्मम् ॥
लोके जरारुग्भयमृत्युनाशं धातारमीशं विविधौषधीनाम् ॥ १ ॥

## ग्रन्थस्य कारणम् ।

अनेकदेशान्तरभाषितेषु सर्वेष्वथ प्राकृतसंस्कृतेषु ॥
गूढेष्वगूढेषु च नास्ति संख्या द्रव्याभिधानेषु तथौषधीषु ॥ २ ॥
प्रयोजनं यस्य तु यावदेव तावत्स गृह्णाति यथाऽम्बु कूपात् ॥
तथा निघण्टाम्बुनिधेरनन्ताद्गृह्णाम्यहं किंचिदिहैकदेशम् ॥ ३ ॥
नामोक्तमेकस्य यथौषधस्य नामापरस्यापि तदेव चोक्तम् ॥
शास्त्रेषु लोकेषु च यत्प्रसिद्धं न गृह्यतेऽसौ पुनरुक्तदोषः ॥ ४ ॥
तुल्याभिधानानि तु यानि शिष्टैर्द्रव्याणि योगे विनिवेशितानि ॥
अर्थाधिकारागमसंप्रदायैर्विभज्य तर्केण च तानि युञ्ज्यात् ॥ ५ ॥
किरातगोपालकतापसाद्या वनेचरास्तत्कुशलास्तथाऽन्ये ॥
विदन्ति नानाविधभेषजानां प्रमाणवर्णाकृतिनामजातीः ॥ ६ ॥
तेभ्यः सकाशादुपलभ्य वैद्यः पश्चाच्च शास्त्रेषु विमृश्य बुद्ध्या ॥
विकल्पयेद्द्रव्यरसप्रभावान्विपाकवीर्याणि तथा प्रयोगात् ॥ ७ ॥
प्रायो जनाः सन्ति वनेचरास्ते गोपादयः प्राकृतनामसंज्ञाः ॥
प्रयोजनार्थो वचनप्रवृत्तिर्यस्मात्ततः प्राकृतमित्यदोषः ॥ ८ ॥

---

* "गुडूच्यादिनिघण्टः" "द्रव्यावलिधन्वन्तरीयः" इत्येतौ क्वचित्पुस्तके पाठौ दृश्येते ।

---

१ घ. °रसादिते° । २ घ. च. यदौष° । ३ क. ख. ग. च. च । ४ क. ग. च °वेदिता° । ५ घ. °विचार्य त° । ६ ग. घ. °पाधिक° । ७ क. घ. ततः । ८ क. ग. °श्चात्सुश्रा° । ख. °श्चात्स्व-शा° । ९ क च. °भावत्रा° । १० ग. जडाः । ११ छ. °मतज्ज्ञाः । १२ ग. °नार्थे व° ।

एकं तु नाम प्रथितं बहूनामेकस्य नामानि तथा बहूनि ॥
द्रव्यस्य जात्याकृतिवर्णवीर्यरसप्रभावादिगुणैर्भवन्ति ॥ ९ ॥
नाम श्रुतं केनचिदेकमेव तेनैव जानाति स भेषजं तु ॥
अन्यस्तथाऽन्येन तु वेत्ति नाम्ना तदेव चान्योऽथ परेण कश्चित् ॥ १० ॥
बहून्यतः प्राकृतसंस्कृतानि नामानि विज्ञाय बहूंश्च पृष्ट्वा ॥
दृष्ट्वा च संस्पृश्य च जातिलिङ्गैर्विद्याद्भिषग्भेषजमादरेण ॥ ११ ॥
गोपालास्तापसा व्याधा ये चान्ये वनचारिणः ॥
मूलजातिश्च ये तेभ्यो भेषजव्यक्तिरिष्यते ॥ १२ ॥
अनामविन्मोहमुपैति वैद्यो न वेत्ति पश्यन्नपि भेषजानि ॥
क्रियाक्रमो भेषजमूलमेव तद्भेषजं चापि निघण्टुमूलम् ॥ १३ ॥
तस्मान्निघण्टुरित्येष नातिसंक्षेपविस्तरः ॥
हिताय वैद्यपुत्राणां यथावत्संप्रकाश्यते ॥ १४ ॥
द्रव्यावलिं विना वैद्यास्ते वैद्या हास्यभाजनम् ॥
द्रव्यावलिभिधानानां तृतीयमपि लोचनम् ॥ १५ ॥
द्रव्यावलिनिविष्टानां द्रव्याणां नामनिर्णयम् ॥
लोकप्रसिद्धं वक्ष्यामि यथागमपरिस्फुटम् ॥ १६ ॥
अनन्तपारस्य निगृह्य किंचित्सारं चिकित्सागमसागरस्य ॥
उक्तो मया संप्रति कल्पयोगाद्द्रव्यावलीनामसमुच्चयोऽयम् ॥ १७ ॥
विचार्य दोषौषधदेशकालं वपुर्वयः सात्म्यबलाग्निमात्रम् ॥
विकारहेत्वाकृतिसाध्यताश्च ततश्चिकित्सेद्भिषगामयार्तिम् ॥ १८ ॥
ज्वराभिभूते षडहे व्यतीते विपक्वदोषे कृतलङ्घनाद्यैः ॥
यद्भेषजं वैद्यवरप्रयुक्तं निःसंशयं हन्त्यचिरेण रोगान् ॥ १९ ॥

## अथ गणद्रव्यावलिः ।

### तत्राऽऽदौ गुडूच्यादिः प्रथमो वर्गः ॥ १ ॥

गुडूच्यतिविषामूर्वामञ्जिष्ठाधन्वयासकैः । वासाखदिरनिम्बैश्च पिबेत्काथं तु वातिके ॥ १ ॥ किराततिक्तकटुकामुस्तापर्पटिकाम्बुभिः। पटोलद्विनिशाभ्यां च पिबेत्काथं तु पैत्तिके ॥ २ ॥ शढीपुष्करभार्गीभिः पाठाकट्फलदारुभिः । कत्तृणेनाथ शृङ्ग्या च पिबेत्काथं कफज्वरे ॥ ३ ॥ पर्ण्यौ बृहत्यौ गोकण्टो बिल्वोऽ-

१ क. ङ. प्रथितं । २ घ. °स्तदन्ये° । ३ क. °संक्षिप्तवि° । ४ क. ख. °मात्राः ॥ वि° । घ. °मात्रान् । वि° । ५ क. घ. च. °नादौ ॥ य° । ६ क. घ. °द्यैः ॥ यो भेष° । ७ क. °टोलेन नि° । ८ क. के ॥ २ ॥ सटीपु° । ९ ख. च. छ. °भारङ्गीपा° ।

ग्निमन्थनोऽरलुः । काश्मर्यः पाटला चेति संनिपातहरो गणः ॥ ४ ॥ जीवकर्षभकौ मेदे काकोल्यौ द्वे च योजिते[1] । द्वे सुपर्ण्यौ[2] च जीवन्ती मधुकं रक्तपित्तनुत् ॥ ५ ॥ क्षेपकः—( रक्तपित्तहरो वृष्यो मधुरोऽयं गणः स्मृतः । ) ऋद्धिर्विदार्यात्मगुप्ता शितिवाराश्मभेदकौ । श्रावण्यौ सारिवे चोभे बाकुची रक्तवातनुत् ॥ ६ ॥ मदनेक्ष्वाकुजीमूतत्रपुसं कृतवेधनम् । धामार्गवोऽश्मन्तकश्च कोविदारो विषाणिकः ॥ ७ ॥ शणपुष्पी तथा बिम्बी स्निग्धस्विन्नवतां ततः । श्रेष्ठमेतत्प्रयोक्तव्यं वमनं श्लेष्मरोगिणाम् ॥ ८ ॥ त्रिफलाऽऽरग्वधो दन्ती द्रवन्ती नीलिनी सुधा । सप्तला काञ्चनक्षीरी त्रिवृता चेन्द्रवारुणी ॥९॥ विशाला त्रायमाणा च शङ्खिन्यङ्कोल एव च । श्रेष्ठं पित्तविकारेषु योज्यमेतद्विरेचनम् ॥ १० ॥ अपामार्गस्तेजवती तथा ज्योतिष्मतीफलम्[3] । योज्यं नस्यं कृतिव्याधौ शिरोरोगे च पीनसे ॥ ११ ॥ रास्नाऽश्वगन्धा वर्षाभूस्तथा सहचरो बला । प्रसारणीशतावर्यौ[4]वेरण्डश्चापि सर्वतः ॥ १२ ॥ आस्थापनं कल्पमेतैस्तथा वातानुलोमनम् । तैलं कषायैः[5]शोषैश्च गोक्षीरैः साधितं[6] जयेत् ॥ १३ ॥ वातशोणितमर्शांसि ज्वरमुन्मादमर्दितम् । कट्यूरूपार्श्वपृष्ठार्तिशोषं शोफं सवेपथुम्[7] ॥ १४ ॥

गुडूच्यादिरयं वर्गः प्रथमः परिकीर्तितः ॥
ऊर्ध्वाधोदोषहरणः सर्वामयविनाशनः ॥ १ ॥

॥ इति गुडूच्यादिः प्रथमो वर्गः ॥ १ ॥

---

## अथ शतपुष्पादिर्द्वितीयो वर्गः ॥ २ ॥

शतपुष्पा मिशिर्वचा हपुषा कृमिहा तथा । सवत्सकश्चेन्द्रयवा त्रिक्षारा[8] *लवणानि च ॥१ ॥ हिङ्गुर्हिङ्गी शिवाटी च तुम्बूरुत्वक्फलानि च । एभिः सुसाधितं सर्पिः पयसा योनिदोषनुत् ॥ २ ॥ मूत्रकृच्छ्रार्तिशूलघ्नं वन्ध्यानामपि गर्भदम् । ग्रहण्यर्शःपाण्डुरोगप्लीहगुल्मोदरापहम् ॥ ३ ॥ सूक्ष्मैला केसरं त्वक्क पत्रं तालिसकं तुगा । पृथ्वीका[9] दाडिमं धान्यं जीरकं च द्विकार्षिकम् ॥ ४ ॥ पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् । मरीचं दीप्यकं चैव वृक्षाम्लं[10] साल्मवेतसम् ॥ ५ ॥ अजमोदाजगन्धे च दधित्थं[11] चेति कार्षिकम् । प्रदेयमिह

---

* 'चरके'—सौवर्चलं सैन्धवं च विडमौद्भिदमेव च ।
सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ॥ १ ॥

---

१ ख. ग. योजयेत् । २ क. घ. छ. शूर्पपर्ण्यौ । ३ क. °तीति च।यो° । घ. °ती बुधैः।यो° । ४ घ. °वर्गो गन्धर्वश्चापि सर्वतः । ५ छ. °यपिष्टे च गो° । ६ क. साधनं च यत् । ७ ख. °वेदनम् । ८ क. ख. घ. द्वौ क्षारौ । ९ ख. मृद्वीका । १० च. °म्लं चाऽऽम्लवे° । ११ क. °त्थं चार्धका° ।

शुद्धायाः शर्करायाश्चतुष्पलम् ॥ ६ ॥ चूर्णमग्निप्रसादं[1] स्यात्परमं[2] रुचिवर्धनम् । प्लीहकासामयार्शांसि श्वासं शूलं ज्वरं वमिम् ॥ ७ ॥ निहन्ति दीपयत्यग्निं बलवर्णकरं परम् । वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम् ॥ ८ ॥

शतपुष्पादिको वर्गो द्वितीयः परिकीर्तितः ॥
कायाग्निदीपनो बल्यो वक्त्रसौगन्ध्यतीक्ष्णकृत् ॥ २ ॥

॥ इति शतपुष्पादिर्द्वितीयो वर्गः ॥ २ ॥

---

# अथ चन्दनादिस्तृतीयो वर्गः ॥ ३ ॥

चन्दनं कुङ्कुमोशीरं प्रियङ्गुस्तुणिरोचना । तुरुष्कागरुकस्तूर्यः कर्पूरो जातिपत्रिका ॥ १ ॥ जातिकङ्कोलपूगानां लवङ्गस्य फलानि च । नलिका नलदं कुष्ठं हरेणुस्तगरं प्लवम् ॥ २ ॥ नखं व्याघ्रनखं स्पृक्का बोलो दमनकं मुरा । स्थौणेयकं चोरकं च शैलेयं[3] त्वेलवालुकम् ॥ ३ ॥ सरलं सप्तपर्णं च लाक्षा तामलकी तथा । लामज्जकं पद्मकं च धातक्याः कुसुमानि च ॥ ४ ॥ प्रपौण्डरीकं कर्चूरं समांशैः[4] सममात्रिकैः । महासुगन्धमित्येतत्प्रस्थं तैलस्य साधयेत् ॥ ५ ॥ प्रस्वेदमलदौर्गन्ध्यकण्डुकुष्ठहरं परम् । अनेनाभ्यक्तगात्रस्तु वृद्धः सप्ततिकोऽपि वा ॥ ६ ॥ युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः । सुभगो दर्शनीयश्च गच्छेच्च प्रमदाशतम् ॥ ७ ॥ वन्ध्याऽपि लभते गर्भं षण्ढोऽपि पुरुषायते । अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥ ८ ॥ मनःशिला ससिन्दूरं सौराष्ट्री[5] गन्धकद्वयम् । ससिक्थकः[6] सर्जरसः कासीसं पुरकुन्दरुः[7] ॥ ९ ॥ प्राह्वः[8] सल्लकिकम्पिल्लं सकङ्कुष्ठमरुष्करम् । एभिर्गोमूत्रसंसिद्धं कटुतैलं विपाचयेत् ॥१०॥ पामाविचर्चिकादद्रूकण्डुकुष्ठकृमिव्रणान् । अभ्यङ्गान्नाशयत्येव नाम्ना विद्राविणं मतम् ॥ ११ ॥ तुत्थं तु ताप्यञ्जनधातुफेनैश्चक्षुष्यरीतीकतरोध्रशङ्खैः[9] । नेत्रामयं[10] काचमलार्तिकण्डूरुग्दाहतैमिर्यहरं परं च ॥ १२ ॥

चन्दनादिरयं वर्गस्तृतीयः परिकीर्तितः ।
श्रीमतां भोगिनामर्हः प्रायो गन्धगुणाश्रयः ॥ ३ ॥

॥ इति चन्दनादिस्तृतीयो वर्गः ॥ ३ ॥

---

१ भ. °प्रदं नाम पर°। २ छ. °मं वीर्यंत्र°। ३ क. °यं मेल°। ४ क. ख. ग. घ. °शैः शाणमा°। ५ क. गन्धमारिका। ६ क. सतिक्तकः। ७ क. ख. ग. °सं परकु°। ८ क. ग. प्रान्हस°। छ. प्राह्वः। ९ छ. °नैः सखर्परीतिकतकलोध्रकुष्ठैः। ने°। १० छ. नेत्राञ्जनं।

## अथ करवीरादिश्चतुर्थो वर्गः ॥ ४ ॥

करवीरस्त्वेडगजो धत्तूरो लाङ्गली तथा । भृङ्गार्कपुष्पकाकाह्वामूलकं शिग्रुसर्षपौ ॥ १ ॥ भूतिः सुरसजम्बीरं कुठेरः सुमुखासुरी । एभिः सुतक्रसौवीरैर्दद्रुमण्डलतां जयेत् ॥ २ ॥ सिध्मातिपामापिटकाकृमिकुष्ठानि नाशयेत् । एभिर्गोमूत्रसंसिद्धं कटुतैलं विपाचयेत् ॥ ३ ॥ काण्डरीजलपिप्पल्यौ रसोनो गृञ्जनं तथा । पलाण्डुर्दुद्रुमश्चैव योज्यं कृमिविनाशनम् ॥ ४ ॥ कदलीसिन्दुवारौ च निर्गुण्डी गिरिकर्णिका । जन्तुकारा च पद्मा च वाराही मांसरोहिणी ॥ ५ ॥ वन्दकाऽऽदित्यकान्ता च नाकुल्यौ वृद्धदारुकः । रक्तपाद्यौ शङ्खपुष्पी तैन्दुली कासमर्दकः ॥ ६ ॥ पिष्टैस्तु बस्तमूत्रेण योज्यमेतद्गदे ज्वरे । नस्ये धूमप्रयोगेषु सर्वभूतग्रहापहम् ॥ ७ ॥ उन्मादमोहज्वरकृच्छ्रलूताजलाग्निचोरोरगवृश्चिकादीन् । उपद्रवानेष विषाणि हन्ति स कृत्रिमस्थावरजङ्गमानि ॥ ८ ॥ ईक्षवस्त्रिविधाः काशो दर्भौ द्वौ च शरस्तथा । वंशो नलश्च दूर्वा च श्वेतनीलारुणोत्पलम् ॥ ९ ॥ पद्मिनी पद्मबीजं च मृणालं मूलकेसरम् । एतद्धि रक्तपित्तोत्थे विकारे परमं हितम् ॥ १० ॥

करवीरादिको वर्गश्चतुर्थः समुदाहृतः ॥
नानाव्याधिप्रशमनो नानाद्रव्यसमाश्रयः ॥ ४ ॥

॥ इति करवीरादिश्चतुर्थो वर्गः ॥ ४ ॥

---

## अथाऽऽम्रादिः पञ्चमो वर्गः ॥ ५ ॥

आम्राम्रातकजम्बीरं नारङ्गं बीजपूरकम् । आम्लिकारुकभव्यानि तिन्दुकश्च विकङ्कतम् ॥ १ ॥ मधुकं पीलु खर्जूरं द्राक्षाक्षोडपरूषकम् । तूलं पालेवतं तालं प्रियालं नारिकेरकम् ॥ २ ॥ वटाश्वत्थप्लक्षजम्बूदुम्बरं फल्गु क्षीरिणी । श्लेष्मातकः शमी कोलं करीरं करमर्दकम् ॥ ३ ॥ एषां फलानि हृद्यानि यथाकालर्तुकानि च । समाहृत्य प्रयोज्यानि बलवर्णाग्निवृद्धये ॥ ४ ॥ कदम्बौ द्वौ करञ्जौ च शिरीषार्जुनवेतसाम् । वरुणः शिंशपा सर्जः शाल्मली मुष्ककोऽरिमः ॥ ५ ॥ एषां पयः प्रविष्टानि वल्कलानि च योजयेत् । विसर्पव्रणरुग्दाहशोफार्तानां प्रशान्तये ॥ ६ ॥ मल्लिकावार्षिकाजातीवासन्तीग्रैष्मच-

---

१ क. भूतः सर° । छ. भूतीमु° । २ क. °रैरङ्गमुद्वर्तनं भवेत् । ३ क. तण्डुली । ४ छ. इक्षयः क्षुरकः शाको दर्भौ द्वौ द्वौ शरस्तथा । ५ क. ख. °लं पद्मके° । ६ क. ख. °न्दुकं सत्रिक तथा । ७ क. °केलकम् । ८ ख. °म्बूतुम्बरं क्षीराणिस्तथा । ९ घ. बलवर्णकराणि च । १० घ. °तसः । व° । ११ क. °शपाः स° ।

म्पकाः । तरुण्यौ यूथिकाकुन्दाशतपत्रातिमुक्तकैः ॥ ७ ॥ बकुलः किणिरातश्च तिलकाशोककिंशुकाः । पुष्पाण्येतानि धार्याणि वृक्षसौगन्ध्यमिच्छता॥ ८ ॥*॥

आम्रादिरयमुद्दिष्टो वर्गश्रेष्ठस्तु पञ्चमः ॥
हर्षणो गन्धसौरम्यफलत्वक्पुष्पसंश्रयः ॥ ९ ॥

॥ इत्याम्रादिः पञ्चमो वर्गः ॥ ५ ॥

---

# अथ सुवर्णादिः षष्ठो वर्गः ॥ ६ ॥

सुवर्णरौप्यताम्राणि त्रपु रीतिश्च सीसकम् । कांस्यं लोहं च योज्यानि गरदोषप्रशान्तये ॥ १ ॥ रसवैक्रान्तगारुत्मं हीरमुक्ताप्रवालकम् । क्षयं पाण्डुमतीसारं गरलादिविषं जयेत् ॥ २ ॥ शालिव्रीहियवा मुद्गा राजमाषाश्च कोद्रवाः । नीवारश्यामकौ कङ्गूर्वनमुद्गाढकी तथा ॥ ३ ॥ श्लेष्मपित्तहरा ह्येताः शीतलाः शुक्रला अपि । तद्वन्मसूरिका हन्ति मसूरिं ग्रहणीं तथा ॥ ४ ॥ गोधूमधान्यमाषादिर्विज्ञेया गुरुशीतलाः । वृष्या मलकराः प्रोक्ता स्निग्धवातविनाशनाः ॥ ५ ॥ चणका वर्तुलाः प्रोक्ता वातला रक्तपित्तहाः ॥ कुलित्थाः श्वासहिक्कार्शःकफशुक्रानिलापहाः ॥ ६ ॥ तैलं सर्पिः †पयस्तक्रं क्षौद्रं सूक्तं सकाञ्जिकम् । सुरासवं +मार्जिका च जलं च विविधं शुभम् ॥ ७ ॥ पानाय परिषेकाय नस्यायाऽऽलोडनाय च । भेषजानां प्रयोज्यं स्यात्प्रयोगेषु यथाविधि ॥ ८ ॥ पुरुषस्त्रीवपुर्वाचावायुपित्तकफास्तथा । मोहं प्रकृतिरेतानि शरीरे चैव तिष्ठति(?) ॥ ९ ॥ अस्थि मांसं वसा रक्तं शुक्रं मज्जास्तथा रसः । इमानि सप्त धातूनि ज्ञातव्यानि भिषग्वरैः ॥ १० ॥ हस्त्यश्वोष्ट्रखराजाविवृकव्याघ्राश्च केसरी । वराहमृग इत्येषां मांसं योज्यं तु बृंहणम् ॥ ११ ॥ महिषोऽथ बलीवर्दो मत्स्यः कच्छप एव च । आमूषिकाबिडालानां शृगालकपिबर्हिषाम् ॥ १२ ॥ शिलीमुखशुकस्यापि सारिकाचक्रवाकयोः । हंसकुक्कु-

---

* क. च. पुस्तकयोरिमौ श्लोकौ दृश्येते—

"वार्ताकं वास्तुकं चिल्ली राजांका भ्रमरत्वचा । सूरणं मधुकालुश्च रक्तालुश्चालुकाह्वयः ॥ १ ॥
दधिपुष्पी च सिंघाटमार्द्रकं वत्सनागकः । करहाटमलक्तश्च कर्कटं वालुकं तथा" ॥ २ ॥

तथा चपुस्तकेऽयं विशेषः ।

"महा मधुफला चेति वार्ताकादिरयं गणः । प्रहाण्यर्शांसि विष्टम्भा नाशयत्याशु योजितः ॥१॥

† 'चरके'—अविक्षीरमजाक्षीरं गोक्षीरं माहिषं च यत् ॥
उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा ॥ १ ॥

+ क्वचित् 'माञ्जिका' इत्यपि पाठो दृश्यते ।

---

१ छ. योज्यानि । २ च. °णि पुष्पसौ° ।

टलावानां कोकिलोलूकभोगिनाम् ॥ १३ ॥ भेकादीनां च *विण्मूत्रैर्मेदोत्व-ग्रोमसंयुतैः । धूपं दद्याज्ज्वरार्तेभ्य उन्मत्तेभ्यो विशेषतः ॥ १४ ॥ अप-स्माराभिभूतेभ्यो ग्रहार्तेभ्यस्तथैव च । प्राप्नुयादायुरारोग्यं बलवर्णं मनेः स्थिरम् ॥ १५ ॥ योगानेतान्समाश्रित्य मांसद्रव्यसमाश्रयान् । द्रव्यावलिः समादिष्टा धन्वतरिमुखोद्गता ॥ १६ ॥

सुवर्णादिरयं वर्गः षष्ठ उक्तो यथा³क्रमम् ॥
धातुद्रव्यद्रवद्रव्यमांसद्रव्यसमाश्रयः ॥ ६ ॥

॥ इति सुवर्णादिः षष्ठो वर्गः ॥ ६ ॥

## अथ मिश्रकादिः सप्तमो वर्गः ॥ ७ ॥

मिश्रको †⁴व्यस्तरोगाणां विषाण्यष्टादशापि च । उपविषाणि सर्वाणि तथा प्रशमनानि च ॥ १॥ क्षेपकम्—( एकार्थद्व्यर्थत्र्यर्थानि नानार्थानि तथैव च ।) एतत्सर्वं समासेन वक्ष्याम्यत्र यथाक्रमम् । योगा⁵नेतान्प्रयुञ्जीत पुरुषे नित्यमात्मवान् ॥ २ ॥ सत्सु पूजामवाप्नोति परत्रेह च विन्दति । शतत्रयं च द्रव्याणां त्रिसप्तत्यधिकोत्तरम् ॥ ३ ॥ हिताय वै⁶द्यविदुषां द्रव्यावल्यां प्रकाशितम् । गणद्रव्यावली ह्युं⁷क्ता संयोगा सहमात्रया । पर्यायनामान्युच्यन्ते गुडूच्यादेर्यथाक्रमम् ॥ ४ ॥

॥ इति मिश्रकः सप्तमो वर्गः ॥ ७ ॥

इति धन्वन्तरीये गणद्रव्यावली समाप्ता ।

### अथ धन्वन्तरीयनिघण्टुः ( राजनिघण्टुसहितः )

## तत्र गुडूच्यादिः प्रथमो वर्गः ।

धन्वन्तरिपदद्वंद्वं नत्वा लोकहितार्थिनाम् ।
रसवीर्यविपाकादि द्रव्याणां कथ्यते मया ॥

### ( १ ) गुडूची ।

गुडूच्यमृतवल्ली च च्छिन्ना छिन्नरुहाऽमृता । छिन्नोद्भवाऽमृतलता धारा

---

* 'चरके'—अविमूत्रमजामूत्रं गोमूत्रं माहिषं तथा ।
हस्तिमूत्रमथोष्ट्रस्य हयस्य च खरस्य च ॥ १ ॥

† 'मेदिन्याम्'—व्यस्तो व्याकुले व्यापिते वा ।

---

१ छ. °तेंभ्यो विशेषतः । प्रा° । २ छ. °नःस्विनाम् । ३ छ. °थानघम् । ४ छ. °स्तयोगाश्च वि° । ५ छ. नन्दति । ६ छ °द्यपुत्राणां द्र° । ७ छ. ह्येषा सगुणोक्ता मयाऽधुना । प° ।

वत्सादनी स्मृता ॥ १ ॥ सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा । प्रोक्ता नागकुमारी च च्छिन्नाङ्गी ज्वरनाशिनी ॥ २ ॥ जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता । वयस्था मण्डली सौम्या विशल्याऽमृतसंभवा ॥ ३ ॥ पिण्डामृता बहुच्छिन्ना सा चोक्ता कन्दरोहिणी । रसायनी मृत्तिका च चन्द्रहासा भिषग्जिता ॥ ४ ॥ कन्या कन्दोद्भवा कन्दाऽमृतकन्दा गुडूचिका ।

गुणाः—गुडूची स्वरसे तिक्ता कषायोष्णा गुरुस्तथा । त्रिदोपजन्तुरक्तार्शःकुष्ठज्वरहरा परा ॥ ५ ॥ गुडूच्यायुष्प्रदा मेध्या तिक्ता संग्राहिणी बला । ज्वरतृट्पाण्डुवातासृक्छर्दिमेहत्रिदोषजित् ॥ ६ ॥ गुडूची कफवातघ्नी पित्तमेदोविशोषिणी । रक्तवातप्रशमनी कण्डूविसर्पनाशिनी ॥ ७ ॥ * कन्दोद्भवा गुडूची च कटूष्णा संनिपातहा । *विषघ्नी ज्वरभूतघ्नी वलीपलितनाशिनी ॥ ॥ ८ ॥ अन्यच्च—घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफं च । वातास्रमुग्रं रुबुतैलमिश्रा शुण्ठ्याऽऽमवातं शमये डूची ॥ ९ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

ज्ञेया गुडूच्यमृतवल्ल्यमृता ज्वरारिः श्यामा वरा सुरकृता मधुपर्णिका च । छिन्नोद्भवाऽमृतलता च रसायनी च च्छिन्ना च सोमलतिकाऽमृतसंभवा च ॥ ॥ १ ॥ वत्सादनी छिन्नरुहा विशल्या भिषक्प्रिया कुण्डलिनी वयस्था । जीवन्तिका नागकुमारिका च स्याच्छन्निका सैव च चण्डहासा ॥ २ ॥ अन्या कन्दोद्भवा कन्दामृता पिण्डगुडूचिका । बहुच्छिन्ना बहुरुहा पिण्डालुः कन्दरोहिणी ॥ ३ ॥ पूर्वा चाब्धिकराह्वा स्यादुत्तरा लोकसंज्ञिका । गुडूच्योरुभयोरित्थमेकत्रिंशदिहाभिधाः ॥ ४ ॥

गुणाः—ज्ञेया गुडूची गुरुरुष्णवीर्या तिक्ता कषाया ज्वरनाशिनी च । दाहार्तितृष्णावमिरक्तवातप्रमेहपाण्डुभ्रमहारिणी च ॥ ५ ॥ * * ॥ ६ ॥

## ( २ ) †अतिविषा । ( उपविषम् )

अतिविषा शुक्लकन्दा ज्ञेया विश्वा च भङ्गुरा । श्यामकन्दा प्रतिविषा शृङ्गी चोपविषा विषा ॥ १० ॥ आर्द्रा श्वेता विरूपा च विषदा पित्तवल्लभा । गुणप्रियाऽतिसारघ्नी बालानां रोगनाशिनी ॥ ११ ॥

गुणाः—*कटूष्णाऽतिविषा तिक्ता कफपित्तज्वरापहा । *आमातीसारकासघ्नी विषच्छर्दिविनाशिनी ॥ १२ ॥

---

† अतिविषाशोधनम्—दोलायां गोमयक्काथे पचेदतिविषां तथा । सूर्यतापे भवेच्छुष्का योजयेत्तां भिषग्वरैः ॥

---

१ क. ग. ङ. च. 'कासाश्च वि' ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अतिविषा श्वेतकन्दा विश्वा शृङ्गी च भङ्गुरा। विरूपा श्यामकन्दा च विश्वरूपा महौषधी ॥ ७ ॥ वीरा प्रतिविषा चान्द्री विषा श्वेतवचा स्मृता। अरुणोपविषा चैव ज्ञेया सप्तदशाह्वया ॥ ८ ॥

गुणाः—* * ॥ ९ ॥

## ( ३ ) मूर्वा।

मूर्वा मधुरसा देवी पृथक्पर्णी त्रिपर्ण्यऽपि। देवश्रेणी स्वादुरसा स्निग्धपर्णी च मोरटा ॥ १३ ॥

गुणाः—मूर्वा स्वादुरसा चोष्णा हृद्रोगकफवातजित्। कुष्ठकण्डूवमीमेहविषमज्वरनाशिनी ॥ १४ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

मूर्वा दिव्यलताऽमरा मधुरसा देवी त्रिपर्णी मधुश्रेणी भिन्नदलाऽमरी मधुमती तिक्ता पृथक्पर्णिका। गोकर्णी लघुपर्णिका च दहनी तेजस्विनी मोरटा देवश्रेणिमधुलिकामधुदलाः स्युः पीलुनी रक्तला ॥ १० ॥ सुखोषिता स्निग्धपर्णी पीलुपर्णी मधुस्रवा। ज्वलनी गोपवल्ली चेत्यष्टाविंशतिसंज्ञका ॥ ११ ॥

गुणाः—मूर्वा तिक्ता कषायोष्णा हृद्रोगकफवातहृत्। वमिभ्रमेहकुष्ठारिर्विषमज्वरहारिणी ॥ १२ ॥

### मोरटः ( मूर्वाविशेषः ) ॥ १ ॥

मोरटः कीर्णपुष्पश्च पीलुपुष्पो मधुस्रवः। तेजिनी दीर्घमूला च पुरुषः क्षीरमोरटः ॥ १५ ॥

गुणाः—*ज्वरघ्नो मुखवैरस्यतृष्णादाहविनाशनः। कफपित्तहरश्चासौ विज्ञेयः क्षीरमोरटः ॥ १६॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

मोरटः कीर्णपुष्पश्च पीलुपत्रो मधुस्रवः। घनमूलो दीर्घमूलः पुरुषः क्षीरमोरटः ॥ १३ ॥

गुणाः—मोरटः क्षीरबहुलो मधुरः सकषायकः। पित्तदाहज्वरान्हन्ति वृष्यो बलविवर्धनः ॥ १४ ॥

---

* अयं श्लोकः ग ङ च छ पुस्तकेषु न दृश्यते।

---

१ त. तिक्तरसा।

## ( ४ ) मञ्जिष्ठा ।

मञ्जिष्ठा कालमेषी च समङ्गा विकसाऽरुणा । मञ्जुका रक्तयष्टी च भाण्डी योजनवल्ल्यपि ॥ १७ ॥ क्षेत्रिणी विजया रक्ता रक्ताङ्गी वस्त्रभूषणा । जिङ्गी भण्डी तथा काला गण्डाली कालमेषिका ॥ १८ ॥

गुणाः—*मञ्जिष्ठा मधुरा स्वादे कषायोष्णा गुरुस्तथा । *कफोग्रव्रणमेहास्रविषनेत्रामयाञ्जयेत् ॥ १९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

मञ्जिष्ठा हरिणी रक्ता गौरी योजनवल्लिका । समङ्गा विकसा पद्मा रोहिणी कालमेषिका ॥ १५ ॥ भण्डी चित्रलता चित्रा चित्राङ्गी जननी[1] च सा । मण्डूकपर्णी विजया मञ्जूषा रक्तयष्टिका ॥ १६ ॥ क्षेत्रिणी[2] चैव रागाढ्या भण्डीरी कोलभाण्डिका । अरुणा ज्वरहन्त्री च छत्रा[3] नागकुमारिका ॥ १७ ॥ भौण्डारलतिका[4] चैव रागाङ्गी वस्त्रभूषणा । सैकत्रिंशाह्वया प्रोक्ता मञ्जिष्ठा च भिषग्वरैः ॥ १८ ॥

गुणाः—* * ॥ १९ ॥

## ( ५ ) धन्वयासः ।

* धन्वयासो दुरालम्भा ताम्रमूली च कच्छुरा । * दुरालभा च दुःस्पर्शा यासो धन्वयवासकः ॥ २० ॥

गुणाः—दुरालम्भा स्वादुशीता तिक्ता दाहविनाशनी । विषमज्वरतृट्च्छर्दिमेहमोहविनाशिनी ॥ २१ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

प्रबोधनी सूक्ष्मदला विरूपा दुरभिग्रहा । दुर्लभा दुष्प्रधर्षा च स्याच्चतुर्दशसंज्ञका ॥ २० ॥ * * ॥

गुणाः—दुरालम्भा कटुस्तिक्ता सोष्णा क्षाराम्लिका तथा । मधुरा वातपित्तघ्नी ज्वरगुल्मप्रमेहजित् ॥ २१ ॥ अन्या क्षुद्रदुरालम्भा मरुस्था मरुसंभवा । विशारदाऽजभक्षा स्यादजादन्युष्ट्रभक्षिका ॥ २२ ॥ कषाया फणिहृच्चैव ग्राहिणी करभप्रिया । करभादनिका चेति विज्ञेया द्वादशाभिधा ॥ २३ ॥ दुरालम्भा द्वितीया च गौल्याऽम्लज्वरकुष्ठनुत् । श्वासकासभ्रमघ्नी च पारदे शुद्धिकारिका ॥ २४ ॥

---

१ झ. ढ. जलनी । २ ज. ट. क्षीरिणी । ३ झ. ट. च्छद्मो । ४ ज. भण्डीरलतिका ।

## यासः ( धन्वयासविशेष ) ॥ २ ॥

यासो यवासकोऽनन्तो बालपत्रोऽधिकण्टकः । दूरमूलः समुद्रान्तो दीर्घमूलो मरुद्भवः ॥ २२ ॥

गुणाः—यवासकः स्वादुतिक्तो ज्वरतृड्रक्तपित्तनुत् ।

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

यासो यवासो बहुकण्टकोऽल्पकः क्षुद्रेङ्गुदी रोदनिका च कच्छुरा । स्याद्बालपत्रोऽधिककण्टकः खरः सुदूरमूलो विषकण्टकोऽपि सः ॥ २५ ॥ अनन्तस्तीक्ष्णकण्टश्च समुद्रान्तो मरुद्भवः । दीर्घमूलः सूक्ष्मपत्रो विषघ्नः कण्टकालुकः ॥ २६ ॥ त्रिपर्णिका च गान्धारी चैकविंशतिनामभिः ।

गुणाः—यासो मधुरतिक्तोऽसौ शीतः पित्तार्तिदाहजित् । बलदीपनकृत्तृष्णाकफच्छर्दिविसर्पजित् ॥ २७ ॥

## ( ६ ) वासकः ।

वासकः सिंहपर्णी च वृषो वासा[१]ऽथ सिंहिका । आटरूषः सिंहमुखी भिषग्माताऽटरूषकः ॥ २३ ॥

गुणाः—आटरूषो हिमस्तिक्तः पित्तश्लेष्मास्रकासजित् । क्षयहृच्छर्दिकुष्ठघ्नो ज्वरतृष्णाविनाशनः ॥ २४ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

वासकः सिंहिका वासा भिषग्माता वसादनी । आटरूषः सिंहमुखी सिंही कण्ठीरवी वृषः ॥ २८ ॥ शितपर्णी वाजिदन्ता नासा पञ्चमुखी तथा । सिंहपर्णी मृगेन्द्राणी नामान्यस्यास्तु षोडश ॥ २९ ॥

गुणाः—वासा तिक्ता कटुः शीता कासघ्नी रक्तपित्तजित् । कामलाकफवैकल्यज्वरश्वासक्षयापहा ॥ ३० ॥

## ( ७ ) खदिरः । ( मृगः, मृगशीर्षः )

खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च जिह्मशल्यः क्षतक्षमः ॥ २५ ॥

गुणाः—खदिरः स्याद्रसे तिक्तो हिमपित्तकफास्रनुत् । कुष्ठामकासकण्डूतिकृमिदोषहरः स्मृतः ॥ २६ ॥ खदिरः कृमिकुष्ठघ्नः कफरेतोविशोषणः ।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

खदिरो बालपत्रश्च खा[२]द्यपत्रिक्षितिक्षमाः । सुशल्यो वक्रकण्टश्च यज्ञाङ्गो

---

१ क च. छ. 'सा च सिं'। २ झ. ढ. 'खाद्यप।

दन्तधावनः ॥ ३१ ॥ गायत्री जिह्मशल्यश्च कण्टी सारद्रुमस्तथा। कुष्ठारि-र्बहुसारश्च मेध्यः सप्तदशाह्वयः ॥ ३२ ॥

गुणाः—खदिरस्तु रसे तिक्तः शीतः पित्तकफापहः। पाचनः कुष्ठकासास्र-शोफकण्डूव्रणापहः।

## सोमवल्कः ( खदिरविशेषः ) ॥ ३ ॥

खदिरः श्वेतसारोऽन्यः सोमवल्कः पथिद्रुमः। श्यामसारो नेमिवृक्षः कार्मुकः कुब्जकण्टकः ॥ २७ ॥

गुणाः—श्वेतस्तु खदिरस्तिक्तः शीतपित्तकफापहः। रक्तदोषहरश्चैव कण्डू-कुष्ठविनाशनः ॥ २८ ॥

राजनिघण्टौ—खदिरः श्वेतसारोऽन्यः कार्मुकः कुब्जकण्टकः। सोमसारो नोमिवृक्षः सोमवल्कः पथिद्रुमः ॥ ३४ ॥

गुणाः—श्वेतस्तु खदिरस्तिक्तः कषायः कटुरुष्णकः। कण्डूतिभूतकुष्ठघ्नः कफवातव्रणापहः ॥ ३५ ॥

( राजनिघण्टौ )-शाल्मल्यादिरष्टमो वर्गः—

## ताम्रकण्टकः। ( खदिरविशेषः ) ॥ ४ ॥

सरक्तो रक्तसारश्च सुसारस्ताम्रकण्टकः। स प्रोक्तो बहुशल्यश्च याज्ञिकः कुष्ठतोदनः ॥ ३६ ॥ यूपद्रुमोऽस्रखदिरोऽपरश्च दशधा स्मृतः।

गुणाः—कटूष्णो रक्तखदिरः कषायो गुरुतिक्तकः। आमवातास्रवातघ्नो व्रणभूतज्वरापहः ॥ ३७ ॥

( राजनिघण्टौ ) शाल्मल्यादिरष्टमो वर्गः—

## विट्खदिरः ( खदिरविशेषः ) ( क्षुद्रखदिरः ) ॥ ५ ॥

विट्खदिरः काम्भोजी कालस्कन्धश्च गोरटो मरुजः। पत्रतरुर्बहुसारः संसारः खादिरो ग्रहैर्महासारः ॥ ३८ ॥

गुणाः—विट्खदिरः कटुरुष्णास्तिक्तो रक्तव्रणोत्थदोषहरः। कण्डूतिविषवि-सर्पज्वरकुष्ठोन्मादभूतघ्नः ॥ ३९ ॥

( राजनिघण्टौ ) शाल्मल्यादिरष्टमो वर्गः—

## अरिः ( खदिरविशेषः ) ॥ ६ ॥

अरिः संदानिका दाला ज्ञेया खदिरपत्रिका।

गुणाः—अरिः कषायकटुका तिक्ता रक्तार्तिपित्तनुत् ॥ ४० ॥

(राजनिघण्टौ) शाल्मल्यादिरष्टमो वर्गः—

## खादिरः (खदिरनिर्यासः) ॥ ७ ॥

खादिरः खदिरोद्भूतस्तत्सारो रङ्गदः स्मृतः । ज्ञेयः खदिरसारश्च तथा रङ्गः षडाह्वयः ॥ ४१ ॥

गुणाः—कटुकः खादिरः सारस्तिक्तोष्णः कफवातहृत् । व्रणकण्ठामयघ्नश्च रुचिकृद्दीपनः परः ॥ ४२ ॥

## (८) निम्बः (उत्तराभाद्रपदा)

निम्बो नियमनो नेता पिचुमन्दः सुतिक्तकः । अरिष्टः सर्वतोभद्रः प्रभद्रः पारिभद्रकः ॥ २९ ॥

गुणाः—निम्बस्तिक्तरसः शीतो लघुः श्लेष्मास्रपित्तनुत् । कुष्ठकण्डूव्रणान्हन्ति लेपाहारादिशीतलः ॥ ३० ॥ अपक्वं पाचयेच्छोफं व्रणं पक्वं विशोधयेत् ।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

अथ निगदितः प्रभद्रः पिचुमन्दः पारिभद्रको निम्बः । काकफलः कीरेष्टो नेताऽरिष्टश्च सर्वतोभद्रः ॥ ४३ ॥ धमनो विशीर्णपर्णी पवनेष्टः पीतसारकः[२] शीतः । वरतिक्तोऽरिष्टफलो ज्येष्ठामालकश्च हिङ्गुनिर्यासः ॥ ४४ ॥ छर्दन-[१]श्चाग्निधमनो ज्ञेया नाम्नां तु विंशतिः ॥

गुणाः—प्रभद्रकः प्रभवति शीततिक्तकः कफव्रणक्रिमिवमिशोफशान्तये । बलासभिद्बहुविषपित्तदोषजिद्विशेषतो हृदयविदाहशान्तिकृत् ॥ ४५ ॥

## महानिम्बः (निम्बविशेषः) ॥ ८ ॥

महानिम्बः स्मृतोद्रेकी कार्मुको विषमुष्टिकः । केशमुष्टिर्निम्बरको[३] रम्यकोऽक्षीर एव च ॥ ३१ ॥

गुणाः—महानिम्बो रसे तिक्तः शीतपित्तकफापहः । कुष्ठरक्तविनाशी च विषूचीं हन्ति शीतलः ॥ ३२ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

महानिम्बो मदोद्रेकः कार्मुकः केशमुष्टिकः । काकाण्डो रम्यकोऽक्षीरो महातिक्तो हिमद्रुमः ॥ ४६ ॥

---

१ झ. छर्दिन॰ । २ ज. ॰र्दनः स्याग्निध॰ । ३ ग. ॰म्बवरो र॰ ।

गुणाः—महानिम्बस्तु शिशिरः कषायः कटुतिक्तकः। अस्रदाहबलासघ्नो विषमज्वरनाशनः ॥ ४७ ॥

( राजनिघण्टौ ) प्रभद्रादिर्नवमो वर्गः—

कैडर्यः ( निम्बविशेषः ) ॥ ९ ॥

कैडर्योऽन्यो महानिम्बो रामणो रमणस्तथा। गिरिनिम्बो महारिष्टः शुक्रशालः कफाह्वयः ॥ ४८ ॥

गुणाः—कैडर्यः कटुकस्तिक्तः कषायः शीतलो लघुः। संतापशोषकुष्ठास्र-क्रिमिभूतविषापहः ॥ ४९ ॥

## ( ९ ) किराततिक्तः।

किराततिक्तको हैमः काण्डस्तिक्तः किरातकः। भूनिम्बो नार्यतिक्तश्च[1] किरातो रामसेनकः ॥ ३३ ॥ कैडर्यः पिचुमन्दश्च निम्बोऽरिष्टो वरत्वचः। छर्दिघ्नो हिङ्गुनिर्यासः प्रियशालश्च पार्वतः ॥ ३४ ॥ नेपालः कथितश्चान्यो जातिभेदो ज्वरान्तकः। महातिक्तश्च तिक्तश्च निद्रारिः संनिपातहा ॥ ३५ ॥

गुणाः—किरातको रसे तिक्तो रसः शीतो लघुस्तथा। श्लेष्मपित्तास्रशोफादिकासतृष्णाज्वरापहः ॥ ३६ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

भूनिम्बो नार्यतिक्तः स्यात्कैरातो रामसेनकः। कैराततिक्तको हैमः काण्डस्तिक्तः किरातकः ॥ ५० ॥

गुणाः—भूनिम्बो वातलस्तिक्तः कफपित्तज्वरापहः। व्रणसंरोपणः पथ्यः कुष्ठकण्डूतिशोफनुत् ॥ ५१ ॥ नेपालनिम्बः—नेपालनिम्बो नैपालस्तृणनिम्बो ज्वरान्तकः। नाडीतिक्तोऽर्धतिक्तश्च निद्रारिः संनिपातहा ॥ ५२ ॥

गुणाः—नेपालनिम्बः शीतोष्णो योगवाही लघुस्तथा। तिक्तोऽतिकफपित्तास्रशोफतृष्णाज्वरापहः ॥ ५३ ॥

## ( १० ) *कटुका।

कटुका मत्स्यशकला मत्स्यपित्ता च रोहिणी। कृष्णभेदा काण्डरुहा नाम्ना कटुकरोहिणी ॥ ३७ ॥ अशोकरोहिणी तिक्ता चक्राङ्गी शकुलादनी। कटुरोहि-

* कटुकाशोधनम्—कटुकीमुष्णदुग्धेन प्रक्षाल्य ग्राहयेदपि।

१ ख. 'स्क्रमि'। २ ख. ग. ङ. 'श्च कैरा'। ३ क. घ. ङ. च. कौण्डर्यः। ४ क. ख. घ. ङ. च. पथिकश्चान्यो।

ण्यरिष्टा च मोक्ता तिक्तकरोहिणी ॥ ३८ ॥ आमघ्नी शतपर्वा च विप्राङ्गी जननी जना।

गुणाः—कटुका पित्तजित्तिक्ता कटुः शीतास्रदाहजित्। बलासारोचकान्हन्ति विषमज्वरनाशिनी ॥ ३९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

कटुका जननी तिक्ता रोहिणी तिक्तरोहिणी। चक्राङ्गी मत्स्यपित्ता च वकुला शकुलादनी ॥ ५४ ॥ सादनी शतपर्वा स्याच्चक्राङ्गी मत्स्यभेदिनी। अशोकरोहिणी कृष्णा कृष्णभेदा महौषधी ॥ ५५ ॥ कट्व्यञ्जनी काण्डरुहा कटुश्च कटुरोहिणी। केदारकटुकाऽरिष्टाऽप्यामघ्नी पञ्चविंशतिः ॥ ५६ ॥

गुणाः—कटुकाऽतिकटुस्तिक्ता शीतपित्तास्रदोषजित्। बलासारोचकश्वास-ज्वरहृद्रेचनी च सा ॥ ५७ ॥

## ( ११ ) मुस्ता।

मुस्ता[1] चाम्बुधरो मेघो घनो राजकसेरुकः। भद्रमुस्तो वराहोऽब्दो गाङ्गेयः कुरुविन्दकः ॥ ४० ॥ जीमूतोऽथ वृषध्वाङ्क्षी जलदोऽथ जलावहः[2]। नादेयः पिण्डमुस्तोऽन्यो नागरः परिकीर्तितः ॥ ४१ ॥

गुणाः—मुस्ता तिक्तकषायाऽग्निशिशिरा श्लेष्मरक्तजित्। पित्तज्वरातिसा-रघ्नी तृष्णाकृमिविनाशनी ॥ ४२ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

मुस्ता भद्रा वारिदाम्भोदमेघा जीमूतोऽब्दो नीरदोऽभ्रं घनश्च। गाङ्गेयं स्याद्भद्रमुस्ता वराही गुण्ड्रग्रन्थिर्भद्रकासी कसेरुः ॥ ५८ ॥ क्रोडेष्टा कुरुवि-न्दाख्या सुगन्धिर्ग्रन्थिला हिमा। वन्या राजकसेरुश्च कच्छोत्था[3] पञ्चविंशतिः ॥ ५९ ॥

गुणाः—भद्रमुस्ता कषाया च तिक्ता शीता च पाचनी। पित्तज्वरकफघ्नी च ज्ञेया संग्रहणी च सा ॥ ६० ॥ अपरा नागरमुस्ता नगरोत्था नागरादिघन-संज्ञा। चक्राङ्का नादेयी चूडाला पिण्डमुस्ता च ॥ ६१ ॥ शिशिरा च वृषध्वाङ्क्षी कच्छरुहा चानुकेसरोचाटा। सा पूर्णकोष्ठसंज्ञा कलापिनी सागरे-न्दुमिता ॥ ६२ ॥

गुणाः—तिक्ता नागरमुस्ता कटुः कषाया च शीतला कफनुत्। पित्तज्व-रातिसारारुचितृष्णादाहनाशनी श्रमहृत् ॥ ६३ ॥

---

१ ग. ङ. च. छ. मुस्तमम्बु। २ क. ख. ग. घ. ङ. च बलाहकः। ३ झ. कच्छन्योत्था।

## जलमुस्तम् ( क्षुद्रमुस्ता ) ( मुस्ताविशेषः ) ॥ १० ॥

जलमुस्तं दाशपुरं वानेयं परिपेलवम् । कैवर्तिमुस्तं शैवालं जलजं जीवि-ताह्वयम् ॥ ४३ ॥

गुणाः—जलजं[1] तिक्तकटुकं कषायं कान्तिदं हिमम् । मेध्यं[2] वातान्ध्यविसर्प-कण्डूकुष्ठविषापहम् ॥ ४४ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

शैवालं जलनीली स्याच्छैवलं जलजं च तत् ॥

गुणाः—शैवालं शीतलं स्निग्धं संतापव्रणनाशनम् ॥ ६४ ॥

## ( १२ ) पर्पटः ।

पर्पटः स्यात्पर्पटको वरतिक्तः[3] सुतिक्तकः । रजो रेणुश्च पांशुश्च[4] कवचो वर्मकण्टकः[5] ॥ ४५ ॥

गुणाः—*पर्पटः शीतलस्तिक्तः पित्तश्लेष्मज्वरापहः । *रक्तदाहारुचि-ग्लानिमदभ्रमविनाशनः ॥ ४६ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

पर्पटश्चरको रेणुस्तृष्णारिः खरको रजः । शीतः शीतप्रियः पांशुः कल्पाङ्गी वर्मकण्टकः ॥ ६५ ॥ कृशशाखः पर्पटकः सुतिक्तो रक्तपुष्पकः । पित्तारिः कटुपत्रश्च कवचोऽष्टादशाभिधः ॥ ६६ ॥ * * ॥ ६७ ॥

## ( १३ ) वालकम् ।

वालकं वारि तोयं च ह्रीबेरं जलमम्बु च । केश्यं वज्रमुदीच्यं च पिङ्गमाच-मनं कचम् ॥ ४७ ॥

गुणाः—वालकं शीतलं तिक्तं पित्तश्लेष्मविसर्पजित् । कफास्रक्कण्डुकुष्ठानि ज्वरदाहौ च नाशयेत् ॥ ४८ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

वालकं वारिपर्यायैरुक्तं ह्रीबेरकं तथा । केश्यं वज्रमुदीच्यं च पिङ्गं च ललनाप्रियम् ॥ ६८ ॥ वालं च कुन्तलोशीरं कचामोदं शशीन्दुधा ।

गुणाः—वालकं शीतलं तित्कं पित्तवान्तितृषापहम् ॥ ६९ ॥ ज्वरकुष्ठाति-सारघ्नं केश्यं श्वित्रव्रणापनुत् ।

---

१ क. ख. ग. घ. ङ. °लमुस्तं तिक्तकटुकं° । २ क. ख. घ. ङ. मेध्यवा° । ३ क. ख. ग. घ. ङ. °तिक्तश्च नामतः । र° । ४ घ. ङ. पाण्डुश्च । ५ ग. ब्रह्मकण्टकः । त कर्मकण्टकः ।

## ( १४ ) पटोलः । ( पटोलम् )

पटोलः कुलकः प्रोक्तः पाण्डुकः कर्कशच्छदः ॥ ४९ ॥ राजीफलः पाण्डुफलो राजनामाऽमृताफलः ।[1]

गुणाः—वीर्यगर्भप्रतानश्च कुष्ठहा कासमुक्तिदः ॥ ५० ॥ पटोलं कटुकं तीक्ष्णमुष्णं पित्तविरोधि च । कफास्रक्कण्डुकुष्ठानि ज्वरदाहौ च नाशयेत् ॥ ५१ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

स्यात्पटोलः कटुफलः कुलकः कर्कशच्छदः । राजनामाऽमृतफलः पाण्डुः पाण्डुफलो मतः ॥ ७३ ॥ बीजगर्भो नागफलः कुष्ठारिः कासमर्दनः । पञ्च-राजिफलो ज्योत्स्नी कुष्ठघ्नः षोडशाह्वयः ॥ ७४ ॥

गुणाः—पटोलः कटुतिक्तोष्णो रक्तपित्तबलासजित् । कफकण्डूतिकुष्ठास्रग्-ज्वरदाहार्तिनाशनः ॥ ७५ ॥

## स्वादुपत्रफला । ( पटोलविशेषः ) ॥ ११ ॥

पटोली स्याद्द्वितीयाऽन्या स्वादुपत्रफला[2] च सा । पटोलायास्तु पर्यायैर्यो-जयेद्भिषगुत्तमः[3] ॥ ५२ ॥

गुणाः—पटोलपत्रं पित्तघ्नं वल्ली चास्य कफापहा । फलं त्रिदोषशमनं मूलं चास्य विरेचयेत् ॥ ५३ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

ज्ञेया स्वादुपटोली च पटोली मण्डली च सा । पटोली मधुरादिः स्यात्प्रोक्ता दीर्घपटोलिका ॥ ७६ ॥ स्निग्धपर्णी स्वादुपूर्वैः पर्यायैश्च पटोलिका ।

गुणाः—पटोली स्वादुपित्तघ्नी रुचिकृज्ज्वरनाशनी ॥ ७७ ॥ बलपुष्टिकरी पथ्या ज्ञेया दीपनपाचनी । पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ॥ ७८ ॥ फलं त्रिदोषशमनं मूलं चास्य विरेचनम् ।

## ( १५ ) हरिद्रा ।

हरिद्रा पीतिका पिङ्गा रजनी रञ्जिनी निशा । गौरी वर्णवती पीता हरिता[4] वरवर्णिनी ॥ ५४ ॥

हलदीका[5] भद्रलता ज्ञेया वर्णविलासिनी । विषघ्नी च जयन्ती च दीर्घ-रङ्गा तु रङ्गिणी ॥ ५५ ॥

---

१ ज. °राजीफ° । २ घ. °लारसा । ३ ख. घ. °षजोत्तमैः । ग. °षजां वरः । ङ. °षग्वरैः ।
४ क. ख. ग. घ. ङ. °रिद्रा व° । ५ क. हलादिका ।

गुणाः—हरिद्रा स्वरसे तिक्ता रूक्षोष्णा विषकुष्ठनुत् । कण्डूमेहव्रणान्हन्ति देहवर्णविधायिनी ॥ ५६ ॥ विशोधनी कृमिहरा पीनसारुचिनाशिनी ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

हरिद्रा हरिद्रञ्जनी स्वर्णवर्णा सुवर्णा शिवा वर्णिनी दीर्घरागा । हरिद्री च पीता वराङ्गी च गौरी जनिष्ठा वरा वर्णदात्री पवित्रा ॥ ७९ ॥ हरिता रजनीनाम्नी विषघ्नी वरवर्णिनी । पिङ्गला वर्णिनी चैव मङ्गल्या मङ्गला च सा ॥ ८० ॥ लक्ष्मी भद्रा शिफा शोफा शोभना सुभगाह्वया । श्यामा जयन्तिका द्वे च त्रिंशन्नामविलासिनी ॥ ८१ ॥

गुणाः—हरिद्रा कटुतिक्तोष्णा कफवातास्रकुष्ठनुत् ॥ मेहकण्डूव्रणान्हन्ति देहवर्णविधायिनी ॥ ८२ ॥

## ( १६ ) दारुहरिद्रा ।

अन्या दारुहरिद्रा च पीतद्रुः पीतचन्दनम् ॥ ५७ ॥ निर्दिष्टा काष्ठरजनी सा च कालेयकं स्मृतम् । कालायकं दारुनिशा दार्वी पीताह्वपीतकम् ॥ ५८ ॥ कटंकटेरी पर्जन्या पीतदारु पचंपचा । हेमवर्णवती पीता हेमकान्ता कुसुम्भका ॥ ५९ ॥

गुणाः—तिक्ता दारुहरिद्रा स्याद्रूक्षोष्णा व्रणमेहजित् । कर्णनेत्रमुखोद्भूतां रुजं कण्डूं च नाशयेत् ॥ ६० ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अन्या दारुहरिद्रा च दार्वी पीतद्रु पीतिका । कालेयकं पीतदारु स्थिररागा च कामिनी ॥ ८३ ॥ कटंकटेरी पर्जन्या पीतदारु निशा स्मृता । कालीयकं कामवती दारुपीता पचंपचा ॥ ८४ ॥ स्यात्कर्कटकिनी ज्ञेया प्रोक्ता सप्तदशाह्वया ।

गुणाः—तिक्ता दारुहरिद्रा तु कटूष्णा व्रणमेहनुत् ॥ ८५ ॥ कण्डूविसर्पत्वग्दोषविषकर्णाक्षिदोषनुत् ।

## ( १७ ) शठी । ( सठी )

सटी सठी पलाशश्च ज्ञेया पृथुपलाशिका । सुगन्धमूला गन्धाली षड्ग्रन्था सुव्रता वधूः ॥ ६१ ॥ चन्द्राणी चन्द्रगन्धा च दुर्विधेयेतिसंज्ञिता ॥ ६२ ॥

गुणाः—सठी स्यात्तिक्ततीक्ष्णोष्णा संनिपातज्वरापहा ॥ ६३ ॥ कफोग्रव्रणकासघ्नी वक्त्रशुद्धिविधायिनी ।

---

१ क. घ. ङ. 'षमेहनु' । २ ङ. 'ण्डूकुष्ठव्र' । ३ झ. पित्ता । ४ झ. हरिद्रा । ५ क. च. 'यका स्मृता । ग. घ. 'यकः स्मृतः । ६ क. घ. ङ. च. 'तका ॥ ५८ ॥ क' । ७ घ. ङ. च. कुसुम्भला ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

सटी सठी पलाशश्च षड्ग्रन्था सुव्रता वधूः । सुगन्धमूला गन्धाली शटिका च पलाशिका ॥ ८६ ॥ सुभद्रा च तृणी दूर्वा गन्धा पृथुपलाशिका । सौम्या हिमोद्भवा गन्धा वधूर्नागेन्दुसंमिता ॥ ८७ ॥

गुणाः—सटी सतिक्ताम्लरसा लघूष्णा रुचिप्रदा च ज्वरहारिणी च । कफास्रकण्डूव्रणदोषहन्त्री वक्त्रामयध्वंसकरी च सोक्ता ॥ ८८ ॥

## गन्धपलाशः । ( शठीविशेषः ) ॥ १२ ॥

[1]अन्यो गन्धपलाशश्च स्थूलकस्तिक्तकन्दकः ॥ ६४ ॥ तापसी ज्वलनी चैव हरिद्रा पत्रकन्दका ।

गुणाः—कासश्वासहरा[2] सिध्माज्वरशूलानिलापहा ॥ ६५ ॥ सटी स्वर्या त्वधोमूला कषायकटुका सरा ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अन्या तु गन्धपत्रा स्यात्स्थूलास्या तिक्तकन्दका । वनजा सटिका वन्या स्तवक्षीर्येकपत्रिका ॥ ८९ ॥ गन्धपीता पलाशान्ता गन्धाढ्या गन्धपत्रिका । दीर्घपत्रा गन्धनिशा वेदभूह्वा सुपाकिनी ॥ ९० ॥

गुणाः—गन्धपत्रा कटुः स्वादुस्तीक्ष्णोष्णा कफवातजित् । कासच्छर्दिज्वरान्हन्ति पित्तकोपं करोति च ॥ ९१ ॥

## ( १८ ) मूलम् ।

मूलं पुष्करमूलं च पौष्करं पुष्कराह्वयम् । काश्मीरं पुष्करजटा वी[3]रं तत्फलपत्रकम् ॥ ६६ ॥

गुणाः—तिक्तं पुष्करमूलं तु कटूष्णं कफवातजित् । ज्वरारोचककासघ्नं शोफाध्मानविनाशनम् ॥ ६७ ॥ श्वासं हिक्कां जयत्येव सेव्यमानं शनैः शनैः ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

मूलं पुष्करमूलं च पुष्करं पद्मपत्रकम् । पद्मं पुष्करजं बीजं पौष्करं पुष्कराह्वयम् ॥ ९२ ॥ काश्मीरं ब्रह्मतीर्थं च श्वासारिर्मूलपुष्करम् । ज्ञेयं पञ्चदशाह्वं च पुष्कराद्ये जटाशिफे ॥ ९३ ॥

गुणाः—पुष्करं कटु तिक्तोष्णं कफवातज्वरापहम् । श्वासारोचककासघ्नं शोफघ्नं पाण्डुनाशनम् ॥ ९४ ॥

---

१ क. ख. ग. च. अन्या गन्धपलाशी च स्थूलका तिक्तकन्दका ॥ ६४ ॥ ता° । २ झ. °रा हिध्मा° । ३ झ. चिरं ।

## ( १९ ) भार्गी । ( भार्ङ्गी )

भार्गी गर्दभशाकं च पद्मा ब्राह्मणयष्टिका । अङ्गारवल्ली फञ्जी च सैव ब्रह्मसुवर्चसा ॥ ६८ ॥ शक्रमाता च कासघ्नी भृङ्गजा भार्गवा मता ।

गुणाः—भार्गी स्यात्स्वरसे तिक्ता चोष्णा श्वासकफापहा । गुल्मज्वरासृग्वातघ्नी यक्ष्माणं हन्ति पीनसम् ॥ ६९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

भार्गी गर्दभशाकश्च फञ्जी चाङ्गारवल्लरी । वर्षा ब्राह्मणयष्टिश्च बर्बरो भृङ्गजा च सा ॥ ९५ ॥ पद्मा यष्टिश्च भारङ्गी वातारिः कासजित्परम् । सुरूपा भ्रमरेष्टा च शक्रमाता च षोडश ॥ ९६ ॥

गुणाः—भार्गी तु कटुतिक्तोष्णा कासश्वासविनाशनी । शोफव्रणक्रिमिघ्नी च दाहज्वरनिवारिणी ॥ ९७ ॥

## ( २० ) पाठा ।

*पाठाऽम्बष्ठाऽम्बष्ठकी च प्राचीना पापचेलिका । वरतिक्ता बृहत्तिक्ता पाठिका स्थापनी वृकी ॥ ७० ॥ मालती च वरा देवी त्रिवृताऽन्या शुभा मता ।

गुणाः—पाठा तिक्ता रसा वृष्या विषघ्नी कुष्ठकण्डुनुत् । छर्दिहृद्रोगज्वराजित्रिदोषशमनी परा ॥ ७१ ॥ पाठाऽतिसारशूलघ्नी कफपित्तज्वरापहा ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

*पाठिका स्थापनी चैव श्रेयसी वृद्धिकर्णिका ॥ ९८ ॥ एकाष्ठीला कुचैली च दीपनी वरतिक्तका ।

तिक्तपुष्पा वरा तिक्ता दीपनी त्रिशिरा वृकी ॥ ९९ ॥ मालवी च वरा देवी वृत्तपर्णी द्विदाङ्घ्रिता ।

गुणाः—पाठा तिक्ता गुरूष्णा च वातपित्तज्वरापहा । भग्नसंधानकृत्पित्तदाहातीसारशूलहृत् ॥ १०० ॥

### श्वासारिः (पाठाविशेषः) ॥ १३ ॥

श्वासारिः पद्मतीर्थं च पद्मं पुष्करसागरम् ।

गुणाः—वृक्षरोहं शूलहरं समूलं सुखसंभवम् ॥ ७२ ॥

---

१ झ. फाञ्जी । २ क ङ. च. ʼञीयं वर्षो बर्बरुकस्तथा ॥ ६८ ॥ शʼ । ३ झ. शुक्रमाता । ४ झ. ʼवाप्रणीः । ५ क. ख. भार्ङ्गी । ६ क. पापवेलिका । ७ झ. तिक्तापूषा बृहत्तिक्ता ।

## ( २१ ) कट्फलः ।

कट्फलः सोमवल्कश्च श्रीपर्णी कुमुदा तथा। महाकुम्भा च कुम्भीका भद्रा भद्रवतीति च ॥ ७३ ॥

गुणाः—कट्फलः कफवातघ्नो गुल्ममेहाग्निदाहजित्[1] ॥ रुचिष्यो ज्वरदुर्नामग्रहणीपाण्डुरोगहा ॥ ७४ ॥

अन्यच्च—कट्फलं च कषायं च कफधातुविकारजित्। हृल्लासमुखरोगघ्नं कासश्वासज्वरापहम् ॥ ७५ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

कुमुदा चोग्रगन्धश्च भद्रा रञ्जनकस्तथा। कुम्भी च लघुकाश्मर्यः श्रीपर्णी च त्रिपञ्चधा ॥ १०१ ॥

गुणाः—कट्फलः कटुरुष्णश्च कासश्वासज्वरापहः। उग्रदाहहरो रुच्यो मुखरोगशमप्रदः ॥ १०२ ॥

## ( २२ ) देवदारुः ।

देवदारु स्मृतं दारु सुराह्वं किलिमं[2] च तत्। स्नेहविद्धं महादारु भद्रदार्विन्द्रदारु च ॥ ७६ ॥ देवकाष्ठं भद्रकाष्ठं पूतिकाष्ठं सुदारु च। सुरदार्विन्द्रवृक्षश्च तथैवामरदारु च ॥ ७७ ॥

गुणाः—देवदारु रसे तिक्तं स्निग्धोष्णं[3] श्लेष्मवातजित्। आमदोषविबन्धाध्मप्रमेहविनिवर्तकम् ॥ ७९ ॥ देवदार्वनिलं हन्ति स्निग्धोष्णं श्लेष्मपाकतः।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

देवदारु सुरदारु दारुकं स्निग्धदारुरमरादिदारु च। भद्रदारु शिवदारु शांभवं भूतहारि भवदारु रुद्रवत् ॥ १०३ ॥ देवकाष्ठं पूतिकाष्ठं भद्रकाष्ठं सुकाष्ठकम्। अस्निग्धदारुकं चैव काष्ठदारु षडाह्वयम् ॥ १०४ ॥

गुणाः—देवकाष्ठं तु तिक्तोष्णं रूक्षं श्लेष्मानिलापहम्। भूतदोषापहं धत्ते लिप्तमङ्गेषु कालिकम् ॥ १०५ ॥

## ( २३ ) कट्तृणम् ।

कत्तृणं सकलं भूतिर्भूतिदं रोहिषं तृणम्। ध्यामकं श्यामकं पौरं पाटलं देवदंशकम्[4] ॥ ८० ॥

गुणाः—कत्तृणं श्वासकासघ्नं हृद्रोगशमनं परम्। विषूच्यजीर्णशूलघ्नं कफपित्तास्रनाशनम्[5] ॥ ८१ ॥

१ च. 'ग्निमान्द्यजि'। २ ङ. किरिमं। ३ क. 'ष्णं कफवा'। ४ क. च 'वदण्डक'। ५ क ग. च. 'कफ्लीहवातास्र'।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

कुतृणं कत्तृणं भूतिर्भूतिकं रोहिषं तृणम् । श्यामकं ध्यामकं पूतिर्मुद्गलं वदग्धकम् ॥ १०६ ॥

गुणाः—कुतृणं दशनामाढ्यं कटुतिक्तकफापहम् । शस्त्रशल्यादिदोषघ्नं बालग्रहविनाशनम् ॥ १०७ ॥ अन्यद्रोहिषकं दीर्घं दृढकाण्डो दृढच्छदम् । द्राघिष्ठं दीर्घनालश्च तिक्तसारश्च कुत्सितम् ॥ १०८ ॥

गुणाः—दीर्घरोहिषकं तिक्तं कटूष्णं कफवातजित् । भूतग्रहविषघ्नं च व्रणक्षतविरोपणम् ॥ १०९ ॥

## कपटम् ॥ १४ ॥ ( कट्तृणविशेषः )

कपटं च सुमङ्गल्यं[1] चिडा गन्धवधूस्तथा । तरुणं तरुणी तारा[2] वातभूतवि[3]नाशनी ॥ ८२ ॥

गुणाः—कफवातहरा चोष्णा दीपनी रक्तपित्तजित् ।

## गुण्ठः ॥ १५ ॥ ( कत्तृणविशेषः )

गुण्ठो वृत्तगुणः शुण्ठः शृङ्गभेदी भमूलकः । शुण्ठं कुण्ठं तृणशुण्ठो वर्तुलः पृथुकन्दकः ॥ ८३ ॥

गुणाः—कषायानुरसः स्वादुः शीतलो मूत्रकृच्छ्रहा । रक्तपित्तहरो गुण्ठो रजःशुक्रविशोधनः ॥ ८४ ॥

## ( २४ ) शृङ्गी ।

शृङ्गी कर्कटशृङ्गी च कुलीरा कर्कटाह्वया । कुलीरभृङ्गी चक्रा च महाघोषा नवाङ्गिनी ॥ ८५ ॥ चन्द्रास्पदा विषाणी च शृङ्गी वनजमूर्धजा ।

गुणाः[4]—तिक्ता कर्कटशृङ्गी च गुरुश्चोर्ध्वसमीरजित् ॥ ८६ ॥ कासश्वासार्तियक्ष्मघ्नी वान्तितृष्णारुचीर्जयेत् ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

शृङ्गी कुलीरभृङ्गी स्याद्घोषा च वनमूर्धजा । चन्द्रा कर्कटशृङ्गी च महाघोषा च शृङ्गिका ॥ ११० ॥ कालिका चेन्दुखण्डा च लताङ्गी च विषाणिका । चक्रा च शिखरं चैव कर्कटाह्वा त्रिपञ्चधा ॥ १११ ॥

गुणाः—तिक्ता कर्कटशृङ्गी तु गुरुरुष्णानिलापहा । हिक्कातीसारकासघ्नी श्वासपित्तास्रनाशिनी ॥ ११२ ॥

---

१ क. °ल्यं विडागन्धवतुस्त° । २ क. ङ. च. तारौ । ३ क. ङ. च. °तनिवारिणी । गु° । ४ क. ङ. च. °णाः—कर्कटाह्वा ज्वरश्वासकासघ्नी तिक्तका हिमा । हिध्मातिसारपित्तास्रानूर्ध्ववातारुची जये° ।

## अजशृङ्गी　( शृङ्गीविशेषः ) ॥ १६ ॥

*अजशृङ्गी मेषशृङ्गी सर्पदंष्ट्रा च वर्तिका। द्वितीया दक्षिणावर्ता वृश्चिकाली विषाणिका ॥ ८७ ॥

गुणाः—अजशृङ्गी हिमा स्वादुः शोफतृष्णावमीर्जयेत्। चक्षुष्या स्वादुतृड्रोगविषकासार्तिकुष्ठनुत् ॥ ८८ ॥

( राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः )—

* चक्षुष्या तिक्तदुग्धा च पुत्रश्रेणी विषाणिका ॥ ११३ ॥

गुणाः—अजशृङ्गी कटुस्तिक्ता कफार्शःशूलशोफजित्। चक्षुष्या श्वासहृद्रोगविषकासातिकुष्ठजित् ॥ ११४ ॥

## ( २५ ) शालिपर्णी।

शालिपर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा ॥ ८७ ॥ विदारिगन्धांऽशुमती दीर्घमूला सुपत्रिका। शालिपर्णीविशेषः—आलकं पालकं दग्धं सबलं भूमिगन्धिकम् ॥ ८८ ॥ ज्वलनाभं विशुद्धं च गन्धं बोटं कुसुम्भकम्।

गुणाः—शालिपर्णी रसे तिक्ता गुरूष्णा वातदोषजित् ॥ ८९ ॥ विषमज्वरमेहघ्नी शोफवातविनाशनी।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

स्याच्छालिपर्णी सुदला सुपत्रिका स्थिरा च सौम्या कुमुदा गुहा ध्रुवा। विदारिगन्धांऽशुमती सुपर्णिका स्याद्दीर्घमूलाऽपि च दीर्घपत्रिका ॥ ११३ ॥ वातघ्नी पित्तला तन्वी सुधा सर्वानुकारिणी। शोफघ्नी सुभगा देवी निश्चला व्रीहिपर्णिका ॥ ११४ ॥ सुमूला च सुरूपा च सुपत्रा शुभपत्रिका। शालिपर्णी शालिदला स्यादूनत्रिंशदाह्वया ॥ ११५ ॥

गुणाः—शालिपर्णी रसे तिक्ता गुरूष्णा वातदोषनुत्। विषमज्वरमेहार्शःशोफसंतापनाशनी ॥ ११६ ॥

## ( २६ ) पृष्टिपर्णी ॥ ( पृश्निपर्णी )

पृष्टिपर्णी पृथक्पर्णी कलशी धावनी गुहा। शृगालविन्नाऽङ्घ्रिबला पर्णी क्रोष्टुकपुच्छिका ॥ ९० ॥

पृष्टिपर्णीविशेषः—सर्वानुकारिणी तन्वी दीर्घपर्णी च पर्णिका। कुमुदाऽतिगुहा चैव विषघ्नी सैव कीर्तिता ॥ ९१ ॥

गुणाः—पृष्टिपर्णी रसे स्वादुर्लघूष्णाऽस्रत्रिदोषजित्। कासश्वासप्रशमनी ज्वरतृड्दाहनाशिनी ॥ ९२ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

स्यात्पृश्निपर्णी कलशी महागुहा शृगालविन्ना धमनी च मेखला । लाङ्गूलिका क्रोष्टुकपुच्छिका गुहा शृगालिका सैव च सिंहपुच्छिका ॥ ११७ ॥ पृथक्पर्णी दीर्घपर्णी दीर्घा क्रोष्टुकमेखला । चित्रपर्ण्युपचित्रा च श्वपुच्छाऽष्टादशाह्वया ॥ ११८ ॥

गुणाः—पृश्निपर्णी कटूष्णाम्ला तिक्तातीसारकासजित् । वातरोगज्वरोन्मादव्रणदाहविनाशिनी ॥ ११९ ॥

## ( २७ ) बृहती ॥

बृहती सिंहिका कान्ता[1] वार्ताकी राष्ट्रिका कुली । विषदा स्थूलकण्टाकी[2] महती तु महोटिका ॥ ९३ ॥

गुणाः—सिंहिका कफवातघ्नी श्वासशूलज्वरापहा । छर्दिहृद्रोगमन्दाग्निमामदोषांश्च नाशयेत् । बृहती ग्राहिणी सोष्णा वातघ्नी पाचनी तथा ॥ ९४ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

बृहती महती क्रान्ता वार्ताकी सिंहिका कुली । राष्ट्रिका स्थूलकण्टा च भण्टाकी तु महोटिका ॥ १२० ॥ बहुपत्री कण्टतनुः कण्टालुः कटफला तथा । डोरली वनवृन्ताकी नामान्यस्याश्चतुर्दश ॥ १२१ ॥

गुणाः—बृहती कटुतिक्तोष्णा वातजिज्ज्वरहारिणी । अरोचकामकासघ्नी श्वासहृद्रोगनाशिनी ॥ १२२ ॥

### सर्पतनुः । ( बृहतीविशेषः ) ॥ १७ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

बृहत्यन्या सर्पतनुः क्षविका पीततण्डुला । पुत्रप्रदा बहुफला गोधिनीति षडाह्वया ॥ १२३ ॥

गुणाः—क्षविका बृहती तिक्ता कटुरुष्णा च तत्समा । युक्त्या द्रव्यविशेषेण धारासंस्तम्भसिद्धिदा ॥ १२४ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

### श्वेतबृहती । ( बृहतीविशेषः ) ॥ १८ ॥

श्वेताऽन्या श्वेतबृहती ज्ञेया श्वेतमहोटिका । श्वेतसिंही श्वेतफला श्वेतवार्ताकिनी च षट् ॥ १२५ ॥

गुणाः—विज्ञेया श्वेतबृहती वातश्लेष्मविनाशनी । रुच्या चाञ्जनयोगेन

१ ण. क्रान्ता । २ ख. ग. 'लभण्टा' । ३ ग. घ. ङ. च. 'ण्टालीम' ।

नानानेत्रामयापहा ॥ ११९ ॥

## ( २८ ) कण्टकारी ।

कण्टकारी तु दुःस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका । कण्टालिका कण्टकिनी धावनी दुष्प्रधर्षिणी ॥ ९५ ॥

गुणाः—कण्टकारी कटुस्तिक्ता तथोष्णा श्वासकासजित् । अरुचिज्वरवातामदोषहृद्रदनाशिनी ॥ ९६ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

कण्टकारी कण्टकिनी दुःस्पर्शा दुष्प्रधर्षिणी । क्षुद्रा व्याघ्री निदिग्धा च धावनी क्षुद्रकण्टिका ॥ १२० ॥ बहुकण्टा क्षुद्रकण्टा ज्ञेया क्षुद्रफला च सा । कण्टारिका चित्रफला स्याच्चतुर्दशसंज्ञका ॥ १२१ ॥

गुणाः—कण्टकारी कटूष्णा च दीपनी श्वासकासजित् । प्रतिश्यायार्तिदोषघ्नी कफवातज्वरार्तिनुत् ॥ १२२ ॥

## लक्ष्मणा (बृहतीविशेषः) ॥ १९ ॥

लक्ष्मणा क्षेत्रदूती च सितासिंही कुमर्तिका । सुश्वेता कण्टकारी च दुर्लभा च महौषधी ॥ ९७ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

सितकण्टारिका श्वेता क्षेत्रदूती च लक्ष्मणा । सितसिंही सितक्षुद्रा क्षुद्रवार्ताकिनी सिता ॥ १२३ ॥ क्लिश्मा च कटुवार्ताकी क्षेत्रजा कपटेश्वरी । स्यान्निःस्नेहफला रामा सितकण्टा महौषधी ॥ १२४ ॥ गर्दभी चन्द्रिका चान्द्री चन्द्रपुष्पा प्रियंकरी । नाकुली दुर्लभा रास्ना द्विरेषा द्वादशाह्वया ॥ १२५ ॥

गुणाः—श्वेतकण्टारिका रुच्या कटूष्णा कफवातनुत् । चक्षुष्या दीपनी ज्ञेया भोक्ता रसनियामिका ॥ १२६ ॥

## कासघ्नी । (बृहतीविशेषः) ॥ २० ॥

कासघ्नी क्षुद्रमाता च क्वचिद्वार्ताकिनी विदुः । वनजा किंचिदाटव्या कपटा कपटेश्वरी ॥ ९८ ॥ मलिना मलिनाङ्गी च कटुवार्ताकिनीति च । गर्दभी बहुवाहा च चन्द्रपुष्पा प्रियंकरी ॥ ९९ ॥

गुणाः—कण्टकारीद्वयं तिक्तं वातामकफकासजित् । फलानि क्षुद्रिकाणां तु कटुतिक्तज्वरापहा ॥ १०० ॥ कण्डुकुष्ठकृमिघ्नानि कफवातहराणि च ॥

---

१ ग्र. धाविनी ।

वृन्ताकी। ( बृहतीविशेषः ) ॥ २१ ॥

वृन्ताकी वार्तिका वृन्ता भाण्टाकी भण्टिका मता।

गुणाः—*वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम्। कफवातहरं हृद्यं दीपनं शुक्रलं लघु ॥ १०१ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

वार्ताकी कण्टवृन्ताकी कण्टालुः कण्टपत्रिका। निद्रालुर्मांसलफला वृन्ताकी च महोटिका ॥ १२७ ॥ चित्रफला कण्टकिनी महती कटफला च सा। मिश्रवर्णफला नीला फला रक्तफला तथा ॥ १२८ ॥ शाकश्रेष्ठा वृत्तफला नृपप्रियफलस्मृतिः।

गुणाः—वार्ताकी कटुका रुच्या मधुरा पित्तनाशिनी। बलपुष्टिकरी हृद्या गुरुर्वातेषु निन्दिता ॥ १२९ ॥

## ( २९ ) गोक्षुरः।

गोक्षुरः स्याद्गोक्षुरको भक्षकः स्वादुकण्डकः। गोकण्टको भक्षटकः षडङ्गः कण्टकत्रिकः ॥ १०२ ॥ अन्यच्च—गोकण्टो गोक्षुरः कण्टी षडङ्गः क्षुरकः क्षुरः। त्रिकण्टकः कण्टफलः श्वदंष्ट्रो व्यालदंष्ट्रकः ॥ १०३ ॥

गुणाः—श्वदंष्ट्रो बृंहणो वृष्यस्त्रिदोषशमनोऽग्निकृत्। शूलहृद्रोगकृच्छ्रघ्नः प्रमेहविनिवर्तकः ॥ १०४ ॥ अन्यच्च—गोक्षुरो मूत्रकृच्छ्रघ्नो वृष्यः स्वादुः समीरजित्। शूलहृद्रोगशमनो बृंहणो मेहनाशनः ॥ १०५ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

स्याद्गोक्षुरो गोक्षुरकः क्षुराङ्गः श्वदंष्ट्रकः कण्टकभद्रकण्टकौ। स्याद्व्यालदंष्ट्रः क्षुरको महाङ्गो दुश्चक्रमश्च क्रमशो दशाह्वः ॥ १३० ॥ क्षुद्रोऽपरो गोक्षुरकस्त्रिकण्टकः कण्टी षड्ङ्गो बहुकण्टकः क्षुरः। गोकण्टकः कण्टफलः पलंकषा क्षुद्रक्षुरो भक्षटकश्चणद्रुमः ॥ १३१ ॥ स्थलशृङ्गाटकश्चैव वनशृङ्गाटकस्तथा। इक्षुगन्धः स्वादुकण्टः पर्यायाः षोडश स्मृताः ॥ १३२ ॥

गुणाः—स्यातामुभौ गोक्षुरकौ सुशीतलौ बलप्रदौ तौ मधुरौ च बृंहणौ। कृच्छ्राश्मरीमेहविदाहनाशनौ रसायनौ तत्र बृहद्गुणः परः ॥ १३३ ॥

## ( ३० ) बिल्वः। ( चित्रा )

बिल्वः शलाटुः शाण्डिल्यो हृद्यगन्धो महाफलः। शैलूपः श्रीफलश्चाह्वः

---

*क पुस्तके—लवणमरिचचूर्णेनाऽऽप्लुतं रामठाढ्यं दहनवदनपक्वं जम्बुकान्तं निकान्तम्। हरति पवनदोषं श्लेष्महन्तृ प्रसिद्धं जठरभरणभव्यं चारुभोज्यं भरित्यम् ॥

कर्कटः पूतिमारुतः ॥ १०६ ॥ लक्ष्मीफलो गन्धगर्भः सत्यकर्मा वरारुहः । वातसारोऽरिमेदश्च कण्टको ह्यसिताननः ॥ १०७ ॥

गुणाः—विल्वमूलं त्रिदोषघ्नं छर्दिघ्नं मधुरं लघु । विल्वस्य च फलं चाम्लं स्निग्धं संग्राहि दीपनम् ॥ १०८ ॥ कटुतिक्तकषायोष्णं तीक्ष्णं वातकफाप-हम् । विद्यात्तदेवं पक्वं तु मधुरानुरसं गुरु ॥ १०९ ॥ विदाहि विष्टम्भकरं दोषहृत्पूतिमारुतम् ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

बिल्वः शल्यो हृद्यगन्धः शलादुः शाण्डिल्यः स्याच्छ्रीफलः कर्कटाहः । शैलूषः स्याच्छैवपत्रः शिवेष्टः पत्रश्रेष्ठो गन्धपत्रस्त्रिपत्रः ॥ १३४ ॥ लक्ष्मीफलो गन्धफलो दुरारुहस्त्रिशाकपत्रस्त्रिशिखः शिवद्रुमः । सदाफलः सत्फलदः सुभूतिकः समीरसारः शिखिनेत्रसंज्ञितः ॥ १३५ ॥

गुणाः—बिल्वस्तु मधुरो हृद्यः कषायः पित्तजिद्गुरुः । कफज्वरातिसारघ्नो रुचिकृद्दीपनः परः ॥ १३६ ॥ बिल्वमूलं त्रिदोषघ्नं मधुरं लघु वातनुत् । फलं तु कोमलं स्निग्धं गुरु संग्राहि दीपनम् ॥ १३७ ॥ तदेव पक्वं विज्ञेयं मधुरं सरसं गुरु । कटुतिक्तकषायोष्णं संग्राहि च त्रिदोषजित् ॥ १३८ ॥

## ( ३१ ) अग्निमन्थः ।

अग्निमन्थोऽग्निमथनस्तर्कारी विजयन्तिका । वह्निमन्थोऽरणी केतुः श्रीपर्णी कर्णिका जया ॥ ११० ॥ नादेयी वह्निमथनो द्वितीयश्चाग्निमन्थनः । रक्ताङ्गो मन्थनश्चैव स चैवारणिको मतः ॥ १११ ॥ क्षुद्राग्निमन्थस्त्वपरः पूर्वनामनियो-जितः । क्षुद्राग्निमन्थ इत्यादिनामानि परिचक्षते ॥ ११२ ॥

गुणाः—तर्कारी कटुका तिक्ता तथोष्णाऽनिलपाण्डुजित् । शोफश्लेष्माग्निमा-न्द्यामविबन्धांश्च विनाशयेत् ॥ ११३ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

अग्निमन्थोऽग्निमथनस्तर्कारी वैजयन्तिका । वह्निमन्थोऽरणी केतुः श्रीपर्णी कर्णिका जया ॥ १३६ ॥ नादेयी विजयाऽनन्ता नदी यावत्त्रयोदश ॥

गुणाः—तर्कारी कटुरुष्णा च तिक्ताऽनिलकफापहा । शोफश्लेष्माग्निमान्द्या-र्शोविड्बन्धाध्माननाशनी ॥ १३७ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

---

१ क. च. °र्मा सुदारु° । २ क. च. °ण्टकाढ्योऽसि° । ३ क. ख. च. °व संपक्वं म° । ४ ख. °षकृद्धन्ति मा° । ङ. च. °षकृत्पू° । ५ क. स वै वारुणिकोत्तमः । क्षु° । ६ ङ. च. छ. °तः । द्वितीयः क्षु° ।

## क्षुद्राग्निमन्थः । ( अग्निमन्थविशेषः ) ॥ २२ ॥

क्षुद्राग्निमन्थस्तपनो विजया गणकारिका । अरणिर्लघुमन्थश्च तेजोवृक्षस्तनुत्वचा ॥ १३८ ॥

गुणाः—अग्निमन्थद्वयं चैव तुल्यं वीर्यरसादिषु । तत्प्रयोगानुसारेण योजयेत्स्वमनीषया ॥ १३९ ॥

## ( ३२ ) स्योनाकः ।

स्योनाकः शुकनासश्च कट्वङ्गोऽथ कटंभरः । मयूरजङ्घोऽरलुकः[1] प्रियजीवः कुटंनटः ॥ ११४ ॥ स प्रोक्तः पृथुशिम्बश्च टिण्टुको दीर्घवृन्तकः । भल्लूकः शिल्लको फल्गुवृन्ताको जम्बुको मतः ॥ ११५ ॥

गुणाः—टिण्टुकः शिशिरस्तिक्तो बस्तिरोगहरः परः । पित्तश्लेष्मामवातातीसारकासारुचीर्जयेत् ॥ ११६ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

स्योनाकः शुकनासश्च कट्वङ्गोऽथ कटंभरः । मयूरजङ्घोऽरलुकः प्रियजीवः कुटंनटः ॥ १४० ॥ स्योनाकः पृथुशिम्बोऽन्यो भल्लको दीर्घवृन्तकः । पीतवृक्षश्च टेण्टूको भुतसारो सुनिद्रुमः ॥ १४१ ॥ निःसारः फल्गुवृन्ताकः पूतिपत्रो वसन्तकः । मण्डूकपर्णः पीताङ्गो जम्बूकः पीतपादकः ॥१४२॥ वातारिः पीतकः शोणः कूटनश्च विरेचनः । भ्रमरेष्टो बर्हिजङ्घो नेत्रनेत्रमिताभिधः ॥ १४३ ॥

गुणाः—स्योनाकयुगुलं तिक्तं शीतलं च त्रिदोषजित् । पित्तलेष्मातिसारघ्नं संनिपातज्वरापहम् ॥ १४४ ॥ तथाच-टेण्टूफलं कटूष्णं च कफवातहरं लघु । दीपनं पाचनं हृद्यं रुचिकृल्लवणाम्लकम् ॥ १४५ ॥

## ( ३४ ) काश्मर्यः ।

काश्मर्या काश्मरी हीरा काश्मर्यो मधुपर्ण्यपि । श्रीपर्णी सर्वतोभद्रा गेम्भारी[2] कृष्णवृन्तका ॥ ११७ ॥

गुणाः—*श्रीपर्णी स्वरसे तिक्ता गुरूष्णा रक्तपित्तजित् । त्रिदोषश्रमदाहार्तिज्वरतृष्णाविषाञ्जयेत् ॥ ११८ ॥ अन्यच्च—श्रीपर्णी स्वादुतिक्ता च रक्तपित्तज्वरापहा । काश्मर्य कुसुमं वृष्यं बल्यं पित्तास्रनाशनम् ॥ ११९ ॥

---

* 'श्रीपर्णी स्वादुतिक्ता च रक्तपित्तज्वरापहा ।
काश्मर्यकुसुमं वृष्यं बल्यं पित्तास्रनाशनम्' ॥

---

१ ग. °रल्लूकः । २ क. ख. ङ. च काम्भारी ।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

स्यात्काश्मर्यः काश्मरी कृष्णवृन्ता हीरा भद्रा सर्वतोभद्रिका च । श्रीपर्णी स्यात्सिन्धुपर्णी सुभद्रा कम्भारी सा कट्फला भद्रपर्णी ॥ १४६ ॥ कुमदा च गोपभद्रा विदारिणी क्षीरिणी महाभद्रा । मधुपर्णी स्वभद्रा कृष्णा श्वेता च रोहिणी गृष्टिः ॥ १४७ ॥ स्थूलत्वचा मधुमती सुफला मेदिनी महाकुमुदा । सुदृढत्वचा च कथिता विज्ञेया विंशतिर्नाम्नाम् ॥ १४८ ॥

गुणाः—काश्मरी कटुका तिक्ता गुरूष्णा कफशोफनुत् । त्रिदोषविषदाहार्ति-ज्वरतृष्णास्रदोषजित् ॥ १४९ ॥

## ( ३४ ) पाटला ( पाटली )

पाटलोक्ता तु कुम्भिका ताम्रपुष्पाऽम्बुवासिनी । स्थाली वसन्तदूती स्याद-मोघा कालवृन्तिका ॥ १२० ॥

गुणाः—पाटलाऽपि रसे तिक्ता गुरूष्णा पवनास्रजित् । पित्तहिक्कावमीशोफ-कफारोचकनाशनी ॥ १२१ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

पाटली ताम्रपुष्पी च कुम्भिका रक्तपुष्पिका । वसन्तदूती चामोघा ताली च विटवल्लभा ॥ १५० ॥ स्थिरगन्धाऽम्बुवासा च कालवृन्तीन्दुभूह्वया ।

गुणाः—पाटली तु रसे तिक्ता कटूष्णा कफवातजित् । शोफाध्मानवमिश्वा-सशमनी संनिपातनुत् ॥ १५१ ॥

## काष्ठपाटला । ( पाटलाविशेषः ) ॥ २३ ॥

द्वितीया पाटला श्वेता निर्दिष्टा काष्ठपाटला । सा चैव श्वेतकुम्भीका कुबेराक्षी फलेरुहा ॥ १२२ ॥

गुणाः—*पाटलाया गुणस्तद्वत्किंचिन्मारुतकृद्भवेत् ।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

सितपाटलिका चान्या सितकुम्भी फलेरुहा । सिता मोघा कुबेराक्षी सिताह्वा काष्ठपाटला ॥ १५२ ॥ पाटली धवला प्रोक्ता ज्ञेया वसुमिताह्वया ।

गुणाः—सितपाटलिका तिक्ता गुरूष्णा वातदोषजित् । वमिहिक्काकफघ्नी च श्रमशोषापहारिका ॥ १५३ ॥

---

* क. ख. ङ. च. पुस्तकेऽयं श्लोको दृश्यते—
'पाटलायुगुलं हृद्यं सुगन्धं कफवातजित् ।
पाटलाया गुणस्तद्वत्किंचिन्मारुतकोपजित्' ॥

---

१ ज. स्वयभ° । २ ज. °ला सोमे° ।

## ( ३५ ) जीवकः ।

जीवकः शृङ्गकः क्ष्वेडो दीर्घायुः कूर्चशीर्षकः । ह्रस्वाङ्गो मधुरः स्वादुः प्राणदश्चिरजीव्यपि ॥ १२३ ॥

गुणाः—जीवको मधुरः शीतो रक्तपित्तानिलाञ्जयेत् । दाहज्वरक्षयं हन्ति कफशुक्रविवर्धनः ॥ १२४ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

जीवको जीवनो जीव्यः शृङ्गाह्वः प्राणदः प्रियः । चिरजीवी च मधुरो मङ्गल्यः कूर्मशीर्षकः ॥ १५४ ॥ ह्रस्वाङ्गो वृद्धिदश्चोक्तो ह्यायुष्माञ्जीवकस्तथा । दीर्घायुर्बलदश्चैव नामान्येतानि षोडश ॥ १५५ ॥

गुणाः—जीवको मधुरः शीतो रक्तपित्तानिलार्तिजित् । क्षयदाहज्वरान्हन्ति शुक्रश्लेष्मविवर्धनः ॥ १५६ ॥

## ( ३६ ) ऋषभः । (गौडे काश्मीरे च प्रसिद्धः)

ऋषभो दुर्धरो[2] धीरो मातृको वृषभो वृषः । विषाणी[3] ककुदिन्द्राक्षो बन्धुरो गोपतिस्तथा ॥ १२५ ॥

गुणाः—ऋषभस्तु रसे स्वादुः पित्तरक्तसमीरहा । क्षयदाहज्वरं हन्ति श्लेष्मशुक्रविवर्धनः ॥ १२६ ॥ हन्ति दाहास्रपित्तानि क्षयवातज्वरैः सह ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

ऋषभो गोपतिर्धीरो वृषाणी धूर्धरो वृषः । ककुद्मान्पुङ्गवो वोढा शृङ्गी धुर्यश्च भूपतिः ॥ १५७ ॥ कामी ऋक्षप्रियश्चोक्तो लाङ्गुली गौश्च बन्धुरः । गोरक्षो वनवासी च ज्ञेयो विंशतिनामकः ॥ १५८ ॥

गुणाः—ऋषभो मधुरः शीतः पित्तरक्तविरेकनुत् । शुक्रश्लेष्मकरो दाहक्षयज्वरहरश्च सः ॥ १५९ ॥

## ( ३७ ) मेदा ।

मेदा ज्ञेया मणिच्छिद्रा शल्यपर्णी धराऽपि च । महामेदा देवमणिर्वसुच्छिद्रा प्रकीर्तिता ॥ १२७ ॥

गुणाः—मेदा स्वादुरसा शीता क्षयदाहज्वरापहा । सपित्तं च जयेत्कासं सकफं च विवर्धयेत् ॥ १२८ ॥ महामेदा हिमा स्वादुः कफपित्तविवर्धनी । हन्ति दाहास्रपित्तानि क्षयवातज्वरैः सह ॥ १२९ ॥

---

१ च 'णदः क्षीर' । २ क. घ. ङ. च. धीरः श्रीमानृषभको वृषः । ३ क. ख. वृषाणी । ४ क. ख. ङ. च. 'ष्मवीर्यवि' । ५ क. ख. ङ. च. 'दादयं गुरु स्तन्यं वातपित्तहरं परम् । स' ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

मेदा वसा मणिच्छिद्रा जीवनी शल्यपर्णिका । नखच्छेद्या हिमा रक्ता मध्यदेशे प्रजायते ॥ १६० ॥ मेदःसारा स्नेहवमी मेदिनी मधुरा वरा। स्निग्धा मेदोद्भवा साध्वी शल्यदा बहुरन्ध्रिका॥ १६१ ॥ स्यात्षोडशाभिधा चैव युता पुरुषदन्तिका।

गुणाः—मेदा तु मधुरा शीता पित्तदाहार्तिकासनुत् । राजयक्ष्मज्वर-हरा वातदोषकरी च सा॥ १६२॥ महामेदा वसुच्छिद्रा जीवनी पांशुरा-गिणी। देवेष्टा सुरमेदा च दिव्या देवमणिस्तथा ॥ १६३ ॥ देवगन्धा महा-छिद्रा ऋक्षार्हा रुद्रसंमिता। महामेदाभिधः कन्दो लताजातः सुपाण्डुरः॥१६४॥ मेदाऽपि शुक्लकन्दः स्यान्मेदो धातुमिव स्रवेत्।

गुणाः—महामेदा हिमा रुच्या कफशुक्रप्रवृद्धिकृत्। हन्ति दाहास्रपित्तानि क्षयं वातं ज्वरं च सा॥ १६२ ॥

## *विजया। ( मेदाविशेषः ) ॥ २४ ॥

विजया रञ्जिका भङ्गी तन्द्राकृद्बहुवादिनी ।मादिनी मादिका मादुः मोक्ता गञ्जाकिनिस्तथा॥ १३० ॥

गुणाः—भङ्गी कफहरी तिक्ता ग्राहिणी पाचनी लघुः । तीक्ष्णोष्णा पित्तला मोहमन्दवाग्वह्निवर्धिनी ॥ १३१ ॥

## ( ३८ ) काकोली।

काकोली मधुरा शुक्ला क्षीरा ध्वांक्षोलिका स्मृता। वयस्था स्वादुमांसी च वायसोली च कर्णिका॥ १३२ ॥

गुणाः—काकोली स्वादुशीता च वातपित्तज्वरापहा। दाहघ्नी क्षयहन्त्री च श्लेष्मशुक्रविवर्धिनी ॥ १३३ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

काकोली मधुरा काकी कालिका वायसोलिका ।क्षीरा च ध्वांक्षिका वीरा शुक्ला धीरा च मेदुरा ॥ १६६ ॥ ध्वांक्षोली स्वादुमांसी च वयस्था चैव जीविनी। इत्येषा खलु काकोली ज्ञेया पञ्चदशाह्वया॥ १६७॥

* विजयाशोधनम्—बब्बुलत्वक्कषायेण भङ्गां संस्वेद्य शोषयेत् । गोदुग्धभावनां दत्त्वा शुष्कां सर्वत्र योजयेत्॥ १ ॥

१ क. ङ. ज. कोकिला। घ. काकिनी। २ ङ. च. छ. च रक्तापि।

गुणाः—काकोली मधुरा स्निग्धा क्षयपित्तानिलार्तिनुत् । रक्तदाहज्वरघ्नी च कफशुक्रविवर्धिनी ॥ १६८ ॥

## ( ३९ ) क्षीरकाकोली ।

द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी । वयस्था क्षीरमधुरा वीरा क्षीरविषाणिका ॥ १३४ ॥

गुणाः—रुचिष्या कफपित्तास्रहृद्रोगशमनी मता । श्वासकासक्षयहरा वृष्या बस्तिविशोधनी ॥ १३५ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी । पयस्या क्षीरमधुरा वीरा क्षीरविषाणिका । जीववल्ली जीवशुक्ला स्यादित्येषा नवाह्वया ॥ १६९ ॥ रसवीर्यविपाकेषु काकोल्या सदृशी च सा ।

## ( ४० ) माषपर्णी ।

माषपर्णी च काम्बोजी कृष्णवृन्ता महासहा । आर्द्रमाषा सिंहविन्ना मांसमासाऽश्वपुच्छिका ॥ १३६ ॥

गुणाः—माषपर्णी रसे तिक्ता शीतला रक्तपित्तजित् । कफपित्तशुक्रकरी हन्ति दाहज्वरानिलान् ॥ १३७ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

माषपर्णी तु काम्बोजी कृष्णवृन्ता महासहा । आर्द्रमाषा मांसमासा मङ्गल्या हयपुच्छिका ॥ १७० ॥ हंसमाषाऽश्वपुच्छा च पाण्डुरा माषपत्रिका । कल्याणी वज्रमूली च शालिपर्णी विसारिणी ॥ १७१ ॥ आत्मोद्भवा बहुफला स्वयंभूः सुलभा घना । इत्येषा माषपर्णी स्यादेकविंशतिनामका ॥ १७२ ॥

गुणाः—माषपर्णी रसे तिक्ता वृष्या दाहज्वरापहा । शुक्रवृद्धिकरी बल्या शीतला पुष्टिवर्धिनी ॥ १७३ ॥

## ( ४१ ) मुद्गपर्णी ।

मुद्गपर्णी क्षुद्रसहा शिम्बी मार्जारगन्धिका । वनजा रिङ्गिणी ह्रस्वा शूर्पपर्ण्यावुभे स्मृते ॥ १३८ ॥

गुणाः—मुद्गपर्णी हिमा स्वादुर्वातरक्तविनाशिनी । पित्तदाहज्वरान्हन्ति कृमिघ्नी कफशुक्रनुत् ॥ १३९ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

मुद्गपर्णी क्षुद्रसहा शिम्बी मार्जारगन्धिका । वनजा रिङ्गिणी ह्रस्वा शूर्पपर्णी कुरङ्गिका ॥ १७४ ॥ कांसिका काकमुद्गा च वनमुद्गा वनोद्भवा । अरण्यमुद्गा वन्येति ज्ञेया पञ्चदशाह्वया ॥ १७५ ॥

गुणाः—मुद्गपर्णी हिमा कासवातरक्तक्षयापहा । पित्तदाहज्वरान्हन्ति चक्षुष्या शुक्रवृद्धिकृत् ॥ १७६ ॥

## ( ४२ ) जीवन्ती ।

जीवन्ती जीवनीया च जीवनी जीववर्धनी । माङ्गल्यनामधेया च शाकश्रेष्ठा यशस्करी ॥ १४० ॥

गुणाः—चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा । शाकानां प्रवरा यूनां द्वितीया किंचिदेव तु ॥ १४१ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

जीवन्ती स्याज्जीवनी जीवनीया जवा जीव्या जीवदा जीवदात्री । शाकश्रेष्ठा जीवभद्रा च भद्रा मङ्गल्या च क्षुद्रजीवा यशस्या ॥ १७७ ॥ शृङ्गाटी जीवपृष्ठा च काञ्जिका शशशिम्बिका। सुपिङ्गलेति जीवन्ती ज्ञेया अष्टादशाभिधा ॥ १७८ ॥ जीवन्त्यन्या बृहत्पूर्वा पुत्रभद्रा प्रियंकरी । मधुरा जीवपृष्ठा च बृहज्जीवा यशस्करी ॥ १७९ ॥

गुणाः—जीवन्ती मधुरा शीता रक्तपित्तानिलापहा । क्षयदाहज्वरान्हन्ति कफवीर्यविवर्धिनी ॥ १८० ॥ एवमेव बृहत्पूर्वा रसवीर्यबलान्विता। भूतविद्रावणी ज्ञेया वेगाद्रसनियामिका ॥ १८१ ॥

## ( ४३ ) मधुयष्टी ।

मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा । यष्टीकं मधुकं चैव यष्ट्याह्वं मधुयष्टिका ॥ १४२ ॥

गुणाः—मधुयष्टिः स्वादुरसा शीतपित्तविनाशिनी । वृष्या शोषक्षयहरा विषच्छर्दिविनाशनी ॥ १४३ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

यष्टीमधुर्मधुयष्टी मधुवल्ली मधुस्रवा । मधुकं मधुका यष्टी यष्ट्याह्वं वसुसंमितम् ॥ १८२ ॥

गुणाः—मधुरं यष्टिमधुकं किंचित्तिक्तं च शीतलम् । चक्षुष्यं पित्तहृद्वृष्यं शोषतृष्णाव्रणापहम् ॥ १८३ ॥

---

१ क. ङ. च. 'ल्यमागधे' । २ ग. 'सा शिशिरा पित्तना' ।　　6

क्षीतनकम् । ( मधुयष्टीविशेषः ) ॥ २९ ॥

तल्लक्षणं क्षीतनकं क्षीतनं क्षीतिका च सा । स्थलजा जलजाऽन्या तु मधुपर्णी मधूलिका ॥ १४४ ॥

गुणाः—यष्टिकायुगुलं स्वादु तृष्णापित्तास्रजित्समम् ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अन्यत्क्षीतनमुक्तं क्षीतनकं क्षीतनीयकं मधुकम् । मधुवल्ली च मधूलो मधुरंलता मधुरसाऽतिरसा ॥ १८४ ॥ शोषापहा च सौम्या स्थलजा जलजा च सा द्विधाभूता । सामान्येन मतेयं द्वादशसंज्ञा बहुज्ञधिया ॥ १८५ ॥

गुणाः—क्षीतनं मधुरं रुच्यं बल्यं वृष्यं व्रणापहम् । शीतलं गुरु चक्षुष्यमस्रपित्तापहं परम् ॥ १८६ ॥

## ( ४४ ) ऋद्धिः ।

ऋद्धिर्वृद्धिः सुखं सिद्धी रथाङ्गं मङ्गलं वसु । ऋषिसृष्टा[3] युगं योग्यं लक्ष्मीः सर्वजनप्रिया ॥ १४५ ॥

गुणाः—ऋद्धिर्मधुरशीता स्यात्क्षयपित्तानिलाञ्जयेत् । रक्तदोषज्वरं हन्ति वर्धनी कफशुक्रयोः ॥ १४६ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

ऋद्धिः सिद्धिःप्राणदा जीवदात्री सिद्धा योग्या चेतनीया रथाङ्गी ।मङ्गल्या स्याल्लोककान्ता यशस्या जीवश्रेष्ठा द्वादशाह्वा क्रमेण ॥ १८७ ॥ वृद्धिस्तुष्टिः पुष्टिदा वृद्धिदात्री मङ्गल्या श्रीः संपदा श्रीर्जनेष्टा । लक्ष्मीर्भूतिर्मुत्सुखं जीवभद्रा ज्ञेया एवं विंशतिः सप्त चाऽऽह्वाः ॥ १८८ ॥ ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवतः कोशयामले । श्वेतरोमान्वितः कन्दो लताजातः सरन्ध्रकः ॥ १८९ ॥ तूलग्रन्थिसमा ऋद्धिर्वामावर्तफला च सा । वृद्धिस्तु दक्षिणावर्तफला प्रोक्ता महर्षिभिः ॥ १९० ॥

गुणाः—ऋद्धिर्वृद्धिश्च मधुरा सुस्निग्धा तिक्तशीतला । रुचिमेधाकरी श्लेष्मकुष्ठकृमिहरा परा ॥ १९१ ॥ प्रयोगेष्वनयोरेकं यथालाभं प्रयोजयेत् । यत्र द्वयानुसृष्टिः स्याद्द्वयमप्यत्र योजयेत् ॥ १९२ ॥

## ( ४५ ) विदारिका ।

विदारिका मता शुक्ला स्वादुकन्दा शृगालिका । वृष्यकन्दा विदारी च वृष्यवल्ली विडालिका ॥ १४७ ॥

---

१ झ. 'रनामम' । २ झ. ढ. 'मम्लपि' । ३ क. ङ. च 'षिश्रेष्ठा यु' । ४ झ. वृक्षक' । ५ झ. वृक्षव' ।

गुणाः—विदारी शिशिरा स्वादुर्गुरुः स्निग्धा समीरजित्। पित्तास्रजित्तथा बल्या वृष्या चैव प्रकीर्तिता ॥ १४८ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

विदारिका स्वादुकन्दा सिता शुक्ला शृगालिका। विदारी वृष्यकन्दा च विडाली वृष्यवल्लिका ॥ १९३ ॥ भूकूष्माण्डी स्वादुलता गजेष्टा वारिवल्लभा। ज्ञेया कन्दफला चेति मनुसंख्या ह्यामता ॥ १९४ ॥

गुणाः—विदारी मधुरा शीता गुरुः स्निग्धाऽस्रपित्तजित्। ज्ञेया च कफकृत्पुष्टिबल्या वीर्यविवर्धनी ॥ १९५ ॥

## क्षीरविदारी (विदारिकाविशेषः) ॥ २६ ॥

अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्ल्यपि। क्षीरवल्ली क्षीरकन्दा क्षीरशुक्ला पयस्विनी ॥ १४९ ॥

गुणाः—विदारिकन्दो बल्यश्च वातपित्तहरश्च सः। मधुरो बृंहणो वृष्यः शीतस्पर्शोऽतिमूत्रकः ॥ १५० ॥ स्तनदोषस्य हरणी गूढवृष्यविषूदनी।

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्लरी। इक्षुवल्ली क्षीरकन्दः क्षीरवल्ली पयस्विनी ॥ १९६ ॥ क्षीरशुक्ला क्षीरलता पयःकन्दा पयोलता। पयोविदारिका चेति विज्ञेया द्वादशाह्वया ॥ १९७ ॥

गुणाः—ज्ञेया क्षीरविदारी च मधुराम्ला कषायका। तिक्ता च पित्तशूलघ्नी मूत्रमेहामयापहा ॥ १९८ ॥ क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालकः। विनालो रोगहर्ता स्याद्वयस्तम्भी सनालकः ॥ ४९९ ॥

## ( ४६ ) कपिकच्छूः।

*कपिकच्छूरात्मगुप्ता स्वयंगुप्ता महर्षभी। *लाङ्गूली केण्डला चण्डा मर्कटी दुरभिग्रहा ॥ १५१ ॥

गुणाः—कपिकच्छू रसे स्वादुस्तिक्ता शीताऽनिलापहा। वृष्या पित्तास्रहन्त्री च दुष्टव्रणविनाशिनी ॥ १५२ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

* * ॥ २०० ॥ कपिरोमफला गुप्ता दुःस्पर्शा कच्छुरा जया। प्रावृषेण्या शूकशिम्बी बदरी गुरुरार्षभी ॥ २०१ ॥ शिम्बी वराहिका तीक्ष्णा रोमालुर्वनसूरिका। कीशरोमा रोमवल्ली स्यात्षड्विंशतिनामका ॥ २०२ ॥

---

१ ङ. °त्रलः ॥ स्त°। २ ङ. च. कण्डरा। ३ क. ङ. च. °हा। शीतपि°।

गुणाः—कपिकच्छूः स्वादुरसा वृष्या वातक्षयापहा । शीतपित्तास्रहन्त्री च विकृतव्रणनाशिनी ॥ २०३ ॥

## दधिपुष्पी । ( कपिकच्छूविशेषः ) ॥ २७ ॥

दधिपुष्पी तु खट्वाङ्गी खट्वा पर्यङ्कपादिका । वृषभी सा तु काकाण्डी ज्ञेया सूकरपादिका ॥ १५३ ॥

गुणाः—कफपित्तहरा गुर्वी रञ्जनी वातनाशिनी । उष्णवीर्या स्वादुरसा काकाण्डी माषवद्भवेत् ॥ १५४ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

दधिपुष्पी खट्वाङ्गी खट्वा पर्यङ्कपादिका कूपा । खट्वापादी वंश्या काकोली कोलपालिका नवधा ॥ २०४ ॥

गुणाः—दधिपुष्पी कटुमधुरा शिशिरा संतापपित्तदोषघ्नी । वातामयदोषकरी गुरुस्तथाऽरोचकघ्नी च ॥ २०५ ॥

## ( ४७ ) शितिवारः । ( शितिवारकः )

शितिवारः सूचिपत्रः सूच्याह्वः सुनिषण्णकः । श्रीवारकः शितिवरः स्वस्तिकः कुक्कुटः शिखी ॥ १५५ ॥

गुणाः—*सुनिषण्णोऽग्निकृद्वृष्यो गुरुर्ग्राही त्रिदोषजित् । शितिवारस्तु संग्राही कषायः सर्वदोषजित् ॥ १५६ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

शितावरी शितवरः सूच्याह्वः सूचिपत्रकः । श्रीवारकः शिखी बभ्रूः स्वस्तिकः सुनिषण्णकः ॥ २०६ ॥ कुरुटः कुक्कुटः सूचिदलः श्वेताम्बरोऽपि सः । मेधाकृद्ग्राहकश्चेति ज्ञेयः पञ्चदशाह्वयः ॥ २०७ ॥

गुणाः—शितिवारस्तु संग्राही कषायोष्णस्त्रिदोषजित् । मेधारुचिप्रदो दाहज्वरहारी रसायनः ॥ २०८ ॥

## ( ४८ ) पाषाणभेदकः ।

* पाषाणभेदकोऽश्मघ्नः शिलाभेदोऽश्मभेदकः । * स चैवोपलभेदश्च नगभिद्दृषदश्मजित् ॥ १५७॥

गुणाः—पाषाणभेदकः शूलकृच्छ्रमेहत्रिदोषजित् । हृद्रोगप्लीहगुल्मार्शोबस्तिशुद्धिकरः परः ॥ १५८ ॥ अश्मभेदो हिमस्तिक्तः शर्कराशिश्नशूलजित् ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

---

*छपुस्तकेऽयं चार्धश्लोकः—हृद्रोगप्लीहगुल्मार्शोबस्तिशुद्धिकरः परः ॥

** ॥ १०९ ॥ श्वेता चोपलभेदी च नगजिच्छिलगर्भजा ॥

गुणाः—पाषाणभेदी मधुरस्तिक्तो मेहविनाशनः । तृड्दाहमूत्रकृच्छ्रघ्नः शीतलश्चाश्मरीहरः ॥ २१० ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

## वटपत्री ( पाषाणभेदकविशेषः ) ॥ २८ ॥

अन्या तु वटपत्री स्यादन्या चैरावती च सा । गोधावतीरावती च श्यामा खट्वाङ्गनामिका ॥ २११ ॥

गुणाः—वटपत्री हिमा गौल्या मेहकृच्छ्रविनाशिनी । बलदा व्रणहन्त्री च किंचिद्दीपनकारिणी ॥ २१२ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

## श्वेतशिला ( पाषाणभेदकविशेषः ) ॥ २९ ॥

अन्या श्वेता शिलावल्का शिलजा शैलवल्कला । वल्कला शैलगर्भाह्वा शिलात्वक्सप्तनामिका ॥ २१३ ॥

गुणाः—शिलावल्कं हिमं स्वादु मेहकृच्छ्रविनाशनम् । मूत्रारोधाश्मरीशूलक्षयपित्तापहारकम् ॥ २१४ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

## चतुष्पत्री ( पाषाणभेदकविशेषः ) ॥ ३० ॥

क्षुद्रपाषाणभेदाऽन्या चतुष्पत्री च पार्वती । नागभूरश्मकेतुश्च गिरिभूः कन्दरोद्भवा ॥ २१५ ॥ शैलोद्भवा च गिरिजा नगजा च दशाह्वया ।

गुणाः—क्षुद्रपाषाणभेदा च व्रणकृच्छ्राश्मरीहरा ॥ २१६ ॥

## ( ४९ ) श्रावणी ।

श्रावणी[1] स्यान्मुण्डिनिका भिक्षुः श्रवणशीर्षिका । श्रावणाह्वा प्रव्रजिता परिव्राजी तपोधना ॥ १५९ ॥ महाश्रावणिका मुण्डी लोभनीया तथाऽन्यथा । कदम्बपुष्पिका प्रोक्ता छिन्नग्रन्थिनिका च सा ॥ १६० ॥

गुणाः—मुण्डिका कटुतिक्ता स्यादनिलास्रविनाशिनी । आमारुचिघ्न्यपस्मारगण्डश्लीपदनाशिनी ॥ १६१ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

श्रावणी स्यान्मुण्डिनिका भिक्षुः श्रवणशीर्षिका । श्रवणा च प्रव्रजिता परिव्राजी तपोधना ॥ २१७ ॥

---

१ क. ङ. च. 'जी तथा घना । २ क. घ. ङ. 'स्याद्वातपित्तास्रना' ।

गुणाः—श्रावणी तु कषाया स्यात्कटूष्णा कफपित्तनुत् । आमातीसारकासघ्नी विषच्छर्दिविनाशिनी ॥ २१८ ॥ महाश्रावणिकाऽन्या सा महामुण्डी च लोचनी । कदम्बपुष्पा विकचा क्रोडचोडा पलंकषा ॥ २१९ ॥ नदीकदम्बो मुण्डाख्या महामुण्डनिका च सा । छिन्ना ग्रन्थिनिका माता स्थविरा लोभनी तथा ॥ २२० ॥ भूकदम्बो लम्बुजा स्यादित्येषा षोडशाह्वया ॥ २२१ ॥

गुणाः—महामुण्डोष्णतिक्ता च ईषद्गौल्या मरुच्छिदा । स्वरकृद्रोचनी चैव मेहकृच्च रसायनी ॥ २२२ ॥

## ( ५० ) सारिवा ।

* सारिवा शारदा गोपा गोपवल्ली प्रतानिका । *गोपकन्या लताऽऽस्फोता श्वेतोक्ता काष्ठसारिवा ॥ १६१ ॥

## ( ५१ ) कृष्णमूली ।

* सारिवाऽन्या कृष्णमूली कृष्णा चन्दनसारिवा । *भद्रा चन्दनगोपा तु चन्दना कृष्णवल्ल्यपि ॥ १६२ ॥

गुणाः—*सारिवे द्वे तु मधुरे कफवातास्रनाशने । * कुष्ठकण्डुज्वरहरे मेहदुर्गन्धिनाशने ॥ १६३ ॥ कृष्णमूली तु संग्राहिशिशिरा कफपित्तजित् । तृष्णारुचिप्रशमनी रक्तपित्तहरा स्मृता ॥ १६४ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

॥ ** ॥ २२३ ॥ ** ॥ २२४ ॥ ** ॥ २२५ ॥

## ( ५२ ) बाकुची ।

बाकुची सोमराजी तु सोमवल्ली सुवल्ल्यपि । अवल्गुजा कृष्णफला सैव पूतिफला मता ॥ १६५ ॥ चन्द्रलेखेन्दुलेखा च शशिलेखा मता च सा । पूतिकर्णी कालमेषी[3] दुर्गन्धा कुष्ठनाशनी ॥ १६६ ॥

गुणाः—बाकुची शीतला तिक्ता श्लेष्मकुष्ठकृमीञ्जयेत् । रसायनोपयुक्ता च रुचिमेधाविनाशिनी ॥ १६७ ॥ बाकुची कटुका पाके ग्राहिकुष्ठव्रणापहा ।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

बाकुची सोमराजी च सोमवल्ली सुवल्लिका । सिता सितावरी चन्द्रलेखा चान्द्री च सुप्रभा ॥ २२६ ॥ कुष्ठहन्त्री च काम्बोजी प्रतिगन्धा च वल्गुजा ।

---

१ झ. मरुच्छ्रवा । २ क. लताऽऽस्फोटा । ३ ग. घ 'ची स्याद्रसे ति' । ४ ग. घ. 'यनी च कुष्ठघ्नी मेधाग्निबलवर्धनी ।

स्मृता चन्द्राभिधा राजी कालमाषी तथैन्दवी ॥ २२७ ॥ कुष्ठदोषापहा चैव कान्तिदा वल्गुजा तथा । चन्द्राभिधा प्रभायुक्ता विंशतिः स्यात्तु नामतः ॥ २२८ ॥

गुणाः—बाकुची कटुतिक्तोष्णा कृमिकुष्ठकफापहा । त्वग्दोषविषकण्डूतिखर्जुप्रशमनी च सा ॥ २२९ ॥

## ( ५३ ) मदनः ।

मदनः शल्यको राटः पिण्डी पिण्डीतकः फलः । तगरः करहाटश्च च्छर्दनो विषपुष्पकः ॥ १६८ ॥

गुणाः—मदनः कटुकस्तिक्तस्तथा चोष्णो व्रणापहः । श्लेष्मज्वरप्रतिश्यायगुल्मेषु विद्रधीषु च ॥ १६९ ॥ शोफस्यापि हरो बस्तौ वमने चेह शस्यते ।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

मदनः शल्यकैडर्यः पिण्डी धाराफलस्तथा । तरटः करहाटश्च राहुः पिण्डातकः स्मृतः ॥ २३० ॥ घण्टालो मादनो हर्षो घण्टाख्यो बस्तिरोधनः ॥ २३१ ॥ ग्रन्थिफलो गोलफलो मदनाह्वश्च विंशतिः ॥ २३२ ॥

गुणाः—मदनः कटुतिक्तोष्णः कफवातव्रणामहः । शोफदोषापहश्चैव वमने च प्रशस्यते ॥ २३३ ॥

## ( ५४ ) कटुकालाम्बुनी ।

कटुकालाम्बुनी तुम्बी लम्बा पिण्डफला च सा । इक्ष्वाकुः क्षत्रियवरा तिक्तबीजा महाफला ॥ १७० ॥

गुणाः—कासश्वासच्छर्दिहरा विषार्ते कफकर्षिते । इक्ष्वाकुर्वमने शस्तः प्रशाम्यति च मानवः ॥ १७१ ॥ कटुतुम्बी कटुस्तिक्ता वातकृच्छ्वासकासजित् । * कासघ्नी शोधनी शोफव्रणशूलविषापहा ॥ १७२ ॥ * द्वितीया भिन्नविक्रान्ता गुर्वी रूक्षाऽतिशीतला ।

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

कटुतुम्बी कटुफला तुम्बिनी कटुतुम्बिनी । बृहत्फला राजपुत्री तिक्तबीजा च तुम्बिका ॥ २३४ ॥

गुणाः—कटुतुम्बी कटुस्तीक्ष्णा वान्तिकृच्छ्वासवातजित् । ** ॥ २३५ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

---

१ क. ग. ङ. च. गालवः । २ क. ख. विषमुष्टिकः ।

## गोरक्षतुम्बी ( अलाम्बुनीविशेषः ) ॥ ३१ ॥

गोरक्षतुम्बी गोरक्षी नवालाम्बुर्घटाभिधा। कुम्भालाम्बुर्घटालाम्बुः कुम्भतुम्बी च सप्तधा ॥ २३६ ॥

गुणाः—कुम्भतुम्बी समधुरा शिशिरा पित्तहारिणी। गुरुः संतर्पणी रुच्या वीर्यपुष्टिबलप्रदा ॥ २३७ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## क्षीरतुम्बी ( अलाम्बुनीविशेषः ) ॥ ३२ ॥

क्षीरतुम्बी दुग्धतुम्बी दीर्घवृत्तफलाभिधा। इक्ष्वाकुः क्षत्रियवरा दीर्घबीजा महाफला ॥ २३८ ॥ क्षीरिणी दुग्धबीजा च दन्तबीजा पयस्विनी। महावल्ली ह्यलाम्बुश्च श्रमघ्नी शरभूमिता ॥ २३९ ॥

गुणाः—तुम्बी समधुरा स्निग्धा पित्तघ्नी गर्भपोषकृत्। वृष्या वातप्रदा चैव बलपुष्टिविवर्धनी ॥ २४० ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## भूतुम्बी ( अलाम्बुनीविशेषः ) ॥ ३३ ॥

भूतुम्बी नागतुम्बी च शक्रचापसमुद्भवा। वल्मीकसंभवा देवी दिव्यतुम्बी षडाह्वया ॥ २४१ ॥

गुणाः—भूतुम्बी कटुकोष्णा च संनिपातापहारिणी । दन्तार्गलादन्तरोधधनुर्वातादिदोषनुत् ॥ २४२ ॥

## ( ५५ ) जीमूतकः ।

जीमूतको देवताडो[1] वृत्तकोशो गरागरी। प्रोक्ताऽऽखुविषहा वेणी देवदाली च ताडका ॥ १७३ ॥

गुणाः—जीमूतको ज्वरश्वासकासहिध्मारुचिक्षये । शोफपाण्डुविषद्वेषी गरेषु वमने हितः ॥ १७४ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

जीमूतकः कण्टफला गरागरी वेणी सहा कोशफला च कट्फला। घोरा कदम्बा विषहा च कर्कटी स्याद्देवदाली खलु सारमूषिका ॥ २४३ ॥ वृत्तकोशा विषघ्नी च दाली लोमशपत्रिका। तुरङ्गिका च तर्कारी नाम्नामेकोनविंशतिः ॥ २४४ ॥

गुणाः—देवदाली तु तिक्तोष्णा कटुः पाण्डुकफापहा । दुर्नामश्वासकासघ्नी कामलाभूतनाशिनी ॥ २४५ ॥

---

[1] क. °ताड्गो वृ°। ङ. च. °ताड्गो गकोशा नागरागिरा। प्रो°

## ( ५६ ) त्रपुसम्।

त्रपुसं कटुकं तिक्तं विपाण्डुर्हस्तिपर्णिनी। दीर्घपर्णी मूत्रफला लता कर्कटिकाऽपि च ॥ १७५ ॥

गुणाः—त्रपुसं छर्दिहृत्प्रोक्तं मूत्रबस्तिविशोधनम्।

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

त्रपुसी पीतपुष्पी कण्टालुस्त्रपुसकर्कटी। बहुफला कोशफला सा तुन्दिलफला मुनिः ॥ २४६ ॥

गुणाः—स्यात्त्रपुसीफलं रुच्यं मधुरं शिशिरं गुरु। भ्रमपित्तविदाहार्तिवान्तिहृद्दहमूत्रदम् ॥ २४७ ॥

### उर्वारुः ( त्रपुसविशेषः ) ॥ ३४ ॥

* उर्वारुः कर्कटी प्रोक्ता व्यालपत्रा च लोमशा। *स्थूला तोयफला चैव हस्तिदन्तफला मुनिः ॥ १७६ ॥

गुणाः—*उर्वारुकं पित्तहरं सुशीतलं मूत्रामयघ्नं मधुरं रुचिप्रदम्। *संतापमूर्छापहरं सुतृप्तिदं वातप्रकोपाय घनं तु सेवितम् ॥ १७७ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

॥ * * ॥ २४८ ॥ * * ॥ २४९ ॥

### वालुकम् ( त्रपुसविशेषः ) ॥ ३५ ॥

वालुकं काण्डकं वालु तच्छीतं मधुरं गुरु।

गुणाः—रक्तपित्तहरं भेदि लघूष्णं पक्वमग्निकृत् ॥ १७८ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

अथ वालुकी बहुफला स्निग्धफला क्षेत्रकर्कटी क्षेत्ररुहा। मधुरफला शारदिका क्षुद्रेर्वारुश्च पीतपुष्पीका ॥ २५० ॥

गुणाः—वालुकी मधुरा शीताध्मानहृद्या श्रमापहा। पित्तप्रशमनी रुच्या कुरुते कासपीनसौ ॥ २५१ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

### कर्कटी ( त्रपुसविशेषः ) ॥ ३६ ॥

अथ कर्कटी कटुदला छर्दासनीका च पीतसा मूत्रफला। त्रपुसी च हस्तिपर्णी लोमशकण्टा च मूत्रला नागमिता ॥ २५२ ॥

---

१ क. छर्याफणी। ग. छर्यामनी। झ. छर्यायनी। २ ट. °पायहरं तु। ३ ट. बहुकण्टा।

गुणाः—कर्कटी मधुरा शीता त्वक्तिक्ता कफपित्तजित् । रक्तदोषकरा पक्का मूत्ररोधार्तिनाशनी ॥ २५३ ॥ मूत्रावरोधशमनं बहुमूत्रकारि कृच्छ्राश्मरीप्रशमनं विनिहन्ति पित्तम् । वान्तिश्रमघ्नबहुदाहनिवारि रुच्यं श्लेष्मापहं लघु च कर्कटिकाफलं स्यात् ॥ २५४ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## षड्भुजा ( त्रपुसविशेषः ) ॥ ३७ ॥

अथ षड्भुजा मधुफला षड्रेखा वृत्तकर्कटी तिक्ता । तिक्तफला मधुपाका वृत्तेर्वारुश्च षण्मुखा नवधा ॥ २५५ ॥

गुणाः—तिक्तं बाल्ये तदनु मधुरं किंचिदम्लं च पाके निष्पक्वं चेत्तदमृतसमं तर्पणं पुष्टिदायि । वृष्यं दाहश्रमविशमनं मूत्रवृद्धिं च धत्ते पित्तोन्मादापहरकफदं षाड्भुजं वीर्यकारि ॥ २५६ ॥

## शीर्णवृन्तम् ( त्रपुसविशेषः ) ॥ ३८ ॥

शीर्णवृन्तं चित्रफलं विचित्रं पीतवर्णकम् ।

गुणाः—शीर्णवृन्तं लघु स्वादु भेद्युष्णं वह्निपित्तकृत् ॥ १७९ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## मृगाक्षी ( त्रपुसविशेषः ) ॥ ३९ ॥

मृगाक्षी शतपुष्पा च मृगेर्वारुर्मृगादनी । चित्रवल्ली बहुफला कपिलाक्षी मृगेक्षणा ॥ २५७ ॥ चित्रा चित्रफला पथ्या विचित्रा मृगचिर्भिटा । मरुजा कुम्भसी देवी कटुफला लघुचिर्भिटा ॥ २५८ ॥ सेन्दिनी च महादेवी ज्ञेया चैकोनविंशतिः ।

गुणाः—मृगाक्षी कटुका तिक्ता पाकेऽम्ला वातनाशनी । पित्तकृत्पीनसहरा दीपनी रुचिकृत्परा ॥ २५९ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## चीणाकर्कटी । ( त्रपुसविशेषः ) ॥ ४० ॥

चीणाकर्कटिका ज्ञेया बीजकर्कटिका तथा । सुदीर्घा राजिलफला बाणैः कुलककर्कटी ॥ २६० ॥

गुणाः—चीणाकर्कटिका रुच्या शिशिरा पित्तनाशनी । मधुरा तृप्तिदा हृद्या दाहशोषापहारिणी ॥ २६१ ॥

---

१ ८. मूत्रशुद्धिं ।

## चिर्भटम् । ( त्रपुसविशेषः ) ॥ ४१ ॥

चिर्भटं धेनुदुग्धं च ज्ञेयं गोरक्षकर्कटी ।
गुणाः—चिर्भटं मधुरं रूक्षं गुरु पित्तकफापहम् ॥ १८० ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

स्याच्चिर्भिटा सुचित्रा चित्रफला क्षेत्रचिर्भिटा पाण्डुफला । पथ्या च रोचनफला चिर्भिटिका कर्कटी ग्रहसंख्या ॥ २६२ ॥

गुणाः—बाल्ये तिक्ता चिर्भिटा किंचिदम्ला गौल्योपेता दीपनी सा च पाके । शुष्का रूक्षा श्लेष्मवातारुचिघ्नी जाड्यघ्नी सा रोचनी दीपनी च ॥ २६३ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

## गोपालकर्कटी । ( त्रपुसविशेषः ) ॥ ४२ ॥

गोपालकर्कटी वन्या गोपकर्कटिका तथा । क्षुद्रेर्वारुः क्षुद्रफला गोपाली क्षुद्रचिर्भटा ॥ २६४ ॥

गुणाः—गोपालकर्कटी शीता मधुरा पित्तनाशनी । मूत्रकृच्छ्राश्मरीमेहदाहशोषनिवर्तनी ॥ २६५ ॥

## डङ्गरी । ( त्रपुसविशेषः ) ॥ ४३ ॥

*डङ्गरी डाङ्गरी चैव दीर्घोर्वारुश्च डङ्गरिः । *डाङ्गारी नागशुण्डी च गजदन्तफला मुनिः ॥ १८१ ॥

गुणाः—*डङ्गरी शीतला रुच्या दाहपित्तास्रदोषजित् । *शोषहृत्तर्पणी गौल्या जाड्यहा मूत्ररोधनुत् ॥ १८२ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

** ॥ ६६ ॥

गुणाः—** ॥ ६७ ॥

बालं डाङ्गरिकं फलं सुमधुरं शीतं च पित्तापहं तृष्णादाहनिबर्हणं च रुचिकृत्संतर्पणं पुष्टिदम् । वीर्योन्मेषकरं बलप्रदमिदं भ्रान्तिश्रमध्वंसनं पक्वं चेत्कुरुते तदेव मधुरं तृड्दाहरक्तं गुरु ॥ २६८ ॥

## कूष्माण्डिका । ( त्रपुसविशेषः ) ॥ ४४ ॥

कूष्माण्डिका कुम्भफला तथा स्थिरफला मता । कूष्माण्डी सोमसृष्टा च पीतिका च बृहत्फला ॥ १८३ ॥

---

१ क. ड. डमरी । २ क. 'शुण्टी च । ३ ङ. शोफहृ' ।

गुणाः—वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् । बस्तिशुद्धिकरं वृष्यं हृद्यं चेतोविकारजित् ॥ १८४ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

कर्कोटिका च कूष्माण्डी कुम्भाण्डी तु बृहत्फला । सुफला स्यात्कुम्भफला नागपुष्पफला मुनिः ॥ २६९ ॥

गुणाः—मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीछेदनं विण्मूत्रग्लपनं तृषार्तिशमनं जीर्णाङ्गपुष्टिप्रदम् । वृष्यं स्वादुतरं त्वरोचकहरं बल्यं च पित्तापहं कूष्माण्डं प्रवरं वदन्ति भिषजो वल्लीफलानां पुनः ॥ २७० ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## मांसलफलः । ( त्रपुसविशेषः ) ॥ ४५ ॥

मांसलफलः कलिङ्गश्चित्रफलश्चित्रवल्लिकश्चित्रः । मधुरफलो वृत्तफलो घृणाफलो मांसलो नवधा ॥ २७१ ॥

गुणाः—कलिङ्गो मधुरः शीतः पित्तदाहश्रमापहः । वृष्यः संतर्पणो बल्यो वीर्यपुष्टिविवर्धनः ॥ २७२ ॥

## वन्ध्यकर्कोटकी । (त्रपुसविशेषः) ॥ ४६ ॥

वन्ध्यकर्कोटकी देवी मनोज्ञा च कुमारिका । नागारिः सर्पदमनी विषकण्टकिनी तथा ॥ १८५ ॥ विज्ञेया नागदमनी सर्वभूतप्रमर्दिनी । व्याघ्रपादप्रजा चैव ज्ञेया योगीश्वरी तथा ॥ १८६ ॥

गुणाः—नागारिर्लूताविषजिद्धन्ति श्लेष्मविषद्वयम् ।

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

वन्ध्या देवी वन्ध्यकर्कोटकी स्यान्नागारातिर्नागहन्त्री मनोज्ञा । पथ्या दिव्या पुत्रदात्री सुकन्दा श्रीकन्दा सा कन्दवल्लीश्वरी च ॥ २७३ ॥ सुगन्धा सर्पदमनी विषकण्टकिनी वरा । कुमारी विषहन्त्री च नाम्नामित्यूनविंशतिः ॥ २७४ ॥

गुणाः—वन्ध्यकर्कोटकी तिक्ता कटूष्णा च कफापहा । स्थावरादिविषघ्नी च शस्यते सा रसायने ॥ २७५ ॥

## कर्कोटकी । ( त्रपुसविशेषः ) ॥ ४७ ॥

कर्कोटकी स्वादुफला मनोज्ञा च कुमारिका । अवन्ध्या चैव देवी च विषप्रशमनी तथा ॥ १८७ ॥

---

१ घ. 'गरी कन्या स' । २ ख. वन्ध्यापुत्रप्रदा ।

गुणाः—कर्कोटकीयुगं तिक्तं हन्ति श्लेष्मविषद्वयम् । मधुना च शिरोरोगे कन्दस्तस्याः प्रशस्यते ॥ १८८ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

कर्कोटकी स्वादुफला मनोज्ञा च मनस्विनी । बोधना वन्ध्यकर्कोटी देवी कण्टफलाऽपि च ॥ २७६ ॥

गुणाः—कर्कोटकी कटूष्णा च तिक्ता विषविनाशनी । वातघ्नी पित्तहृच्चैव दीपनी रुचिकारिणी ॥ २७७ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## करका । ( त्रपुसविशेषः ) ॥ ४८ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

करका कारवल्ली च चीरिपत्रः करिल्लका । सूक्ष्मवल्ली कण्टफला पीतपुष्पाऽम्बुवल्लिका ॥ २७८ ॥

गुणाः—कारवल्ली सुतिक्तोष्णा दीपनी कफवातजित् । अरोचकहरा चैव रक्तदोषकरी च सा ॥ २७९ ॥

## कुडुहुञ्ची । ( त्रपुसविशेषः ) ॥ ४९ ॥

कुडुहुञ्ची श्रीफलिका प्रतिपत्रफला च सा । शुभ्रवी कारवी चैव प्रोक्ता बहुफला तथा ॥ २८० ॥ क्षुद्रकारलिका प्रोक्ता ज्ञेया कन्दलता तथा । क्षुद्रादिकारवल्ली च प्रोक्ता सा च नवाह्वया ॥ २८१ ॥

गुणाः—कुडुहुञ्ची कटुरुष्णा तिक्ता रुचिकारिणी च दीपनदा । रक्तानिलदोषकरी पथ्याऽपि च सा फले प्रोक्ता ॥ २८२ ॥ कारलीकन्दमर्शोघ्नं मलरोधविशोधनम् । योनिनिर्गतदोषघ्नं गर्भस्रावविषापहम् ॥ २८३ ॥

## ( ५७ ) धामार्गवः ।

धामार्गवः कोशफला राजकोशातकी तथा । कर्कोटकी पीतपुष्पा महाजाली निरुच्यते ॥ १८९ ॥ महाकोशातकी धन्या हस्तिघोषा महाफला ।

गुणाः—धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च । कोशातकी सुतिक्तोष्णा पक्वामाशयशोधिनी ॥ १९० ॥ कासगुल्मोदरगरे वातश्लेष्माशयस्थिते । कफे च कण्ठवक्त्रस्थे कफसंचयनेषु च ॥ १९१ ॥ अन्या स्वादुस्त्रिदोषघ्नी ज्वरस्यान्ते हिता स्मृता ।

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

---

१ ट. कारली । २ क. ख. ग. ङ. च. फला ।

हस्तिकोशातकी त्वन्या बृहत्कोशातकी तथा। महाकोशातकी वृत्ता ग्राम्यकोशातकी शराः ॥ २८४ ॥

गुणाः—हस्तिकोशातकी स्निग्धा मधुराऽऽध्मानवातकृत्। वृष्या कृमिकरी चैव व्रणसंरोपणी च सा ॥ २८५ ॥

## कोशातकी। ( धामार्गवविशेषः ) ॥ ९० ॥

कोशातकी कृतच्छिद्रा जालिनी कृतवेधनी। क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिका मता ॥ १९२ ॥

गुणाः—क्ष्वेडास्तिक्तः कटुस्तीक्ष्णोऽप्रगाढश्च प्रशस्यते। कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ १९३ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

कोशातकी कृतच्छिद्रा जालिनी कृतवेधना। क्ष्वेडा सुतिक्ता घण्टाली मृदङ्गफलिनी तथा ॥ २८६ ॥

गुणाः—कोशातकी तु शिशिरा कटुकाऽल्पकषायका। पित्तवातकफघ्नी च मलाध्मानविशोधिनी ॥ २८७ ॥

अन्यच्च-राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

कोशातकी स्वादुफला सुपुष्पा कर्कोटकी स्यादपि पीतपुष्पा। धाराफला दीर्घफला सुकोशा धामार्गवः स्यान्नवसंज्ञकोऽयम् ॥ २८८ ॥

गुणाः—धाराकोशातकी स्निग्धा मधुरा कफपित्तनुत्। ईषद्वातकरी पथ्या रुचिकृद्बलवीर्यदा ॥ २८९ ॥

## ( ५८ ) अश्मन्तकः।

अश्मन्तकश्चन्द्रकस्तु[1] कुशली चाम्लपत्रकः। श्लक्ष्णस्त्वग्वालुकापर्णः स्मृतो यमलपत्रकः[2] ॥ १९४ ॥

गुणाः—अश्मन्तकः कषायस्तु हिमः पित्तकफापहः। कषायः शीतसंग्राही कफपित्तास्रदोषनुत् ॥ १९५ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

अश्मन्तकश्चेन्दुकश्च[3][4] कुद्दालश्चाम्लपत्रकः। अश्मान्तश्चेन्दुशफरी शिलान्तश्चाम्बुदः स्मृतः ॥ २९० ॥ पाषाणान्तक इत्युक्तो वह्निचन्द्रमिताह्वयः ॥ २९१ ॥

गुणाः—अश्मन्तकः स्यान्मधुरः कषायः सुशीतलः पित्तहरः प्रमेहजित्। विदाहतृष्णाविषमज्वरापहो विषार्तिविच्छर्दिहरश्च भूतजित् ॥ २९२ ॥

---

१ ख. 'कश्चेन्द्र' त. 'कश्चैन्द्र'। २ क. ख. घ. ङ. च. 'पत्रः स्मृ'। ३ ट 'श्चेन्द्रक'। ४ ख. 'न्दुकुश्च'।

## ( ५९ ) कोविदारः ।

कोविदारः काञ्चनारः कुद्दालः कुण्डली कुली । ताम्रपुष्पश्चमरिको महायमलपत्रकः ॥ १९६ ॥

गुणाः—कोविदारः कषायस्तु संग्राही व्रणरोपणः । गण्डमालागुदभ्रंशशमनः कुष्ठकेशहा ॥ १९७ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

कोविदारः काञ्चनारः कुद्दालः कनकारकः । कान्तपुष्पश्च करकः कान्तारो यमलच्छदः ॥ २९३ ॥ पीतपुष्पः सुवर्णारो गिरिजः काञ्चनारकः । युग्मपत्रो महापुष्पः स्याच्चतुर्दशधाभिधः ॥ २९४ ॥

गुणाः—कोविदारः कषायः स्यात्संग्राही व्रणरोपणः । दीपनः कफवातघ्नो मूत्रकृच्छ्रनिबर्हणः ॥ २९५ ॥

## ( ६० ) आवर्तकी । ( विषाणिका )

आवर्तकी तिन्दुकिनी विभाण्डी पीतकीलका । चर्मरङ्गा पीतपुष्पा महाजाली निरूच्यते ॥ १९८ ॥

गुणाः—आवर्तकी च कुष्ठघ्नी सोर्ध्वाधोदोषनाशनी । कषाया शीतला तृष्या त्रिदोषघ्न्यतिसारजित् ॥ १९९ ॥ शोफगुल्मोदरानाहकृमिजालविनाशिनी ।

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

आवर्तकी तिन्दुकिनी विभाण्डी विषाणिका रङ्गलता मनोज्ञा । सा रक्तपुष्पी महदादिजाली सा पीतकीलाऽपि च चर्मरङ्गा ॥ २९६ ॥ वामावर्ता च संप्रोक्ता भूसंख्या शशिसंयुता ।

गुणाः—आवर्तकी कषायाम्ला शीतला पित्तहारिणी ॥ २९७ ॥

## (६१) शणपुष्पी । ( षणपुष्पी, सणपुष्पी, खिलिहिला, शणबीजा )

शैणपुष्पी बृहत्पुष्पी सा चोक्ता शणघण्टिका । महाशणो माल्यपुष्पी वमनी कटुतिक्तका ॥ २०० ॥

गुणाः—शणपुष्पी रसे तिक्ता वमनी कफपित्तजित् । वातघ्नी कण्ठहृद्रोगमुखरोगविनाशिनी ॥ २०१ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

---

१ ङ्म. 'दारोऽथ कुद्दालः कुम्भारः कु' । २ क. ङ. 'प्यश्वाम' । ३ क. ङ. च. षणपुष्पी । ४ क. 'क्ता षण' । ५ क. म 'हाशनो मा' ।

शणपुष्पी बृहत्पुष्पी शाणिका शणघण्टिका । पीतपुष्पी स्थूलफला लोमशा माल्यपुष्पिका ॥ २९८ ॥

गुणाः—शणपुष्पी रसे तिक्ता कषाया कफवातजित् । अजीर्णज्वरदोषघ्नी वमनी रक्तदोषनुत् ॥ २९९ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

## सूक्ष्मपुष्पा ( शणपुष्पीविशेषः ) ॥ ५१ ॥

द्वितीयाऽन्या सूक्ष्मपुष्पा स्यात्क्षुद्रशणपुष्पिका । विष्टिका सूक्ष्मपर्णी च बाणाह्वा सूक्ष्मघण्टिका ॥ ३०० ॥

गुणाः—शणपुष्पी क्षुद्रतिक्ता वम्या[1] रसनियामिका । तृतीयाऽन्या वृत्तपर्णी श्वेतपुष्पा महासिता । सा महाश्वेतघण्टी च सा महाशणपुष्पिका ॥ ३०१ ॥ महाश्वेता कषायोष्णा शस्ता रसनियामिका ।

## ( ६२ ) बिम्बी ।

बिम्बी रक्तफला तुण्डी तुण्डिकेरफला[2] च सा । ओष्ठोपमफला गोह्वा[3] पीलुपर्णी च तुण्डिका ॥ २०२ ॥

गुणाः—तुण्डिका कफपित्तास्रक्शोफपाण्डुज्वरापहा[4] । श्वासकासापहं स्तन्यं फलं वातकफापहम् ॥ २०३ ॥ बिम्बीफलं[5] स्वादु शीतं स्तम्भनं लेखनं गुरु । पित्तास्रदाहशोफघ्नं वाताध्मानविबन्धकृत् ॥ २०४ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

तिक्ततुण्डी तु तिक्ताख्या कटुका कटुतुण्डिका । बिम्बी च कटुतिक्तादि-तुण्डीपर्यायगा च सा ॥ ३०२ ॥

गुणाः—कटुतुण्डी कटुस्तिक्ता कफवान्तिविषापहा । अरोचकास्रपित्तघ्नी सदा पथ्या च रोचनी ॥ ३०३ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

अथ भवति मधुरबिम्बी मधुबिम्बी स्वादुतुण्डिका तुण्डी । रक्तफला रुचिरफला सोष्णफला पीलुपर्णी च ॥ ३०४ ॥

गुणाः—बिम्बी तु मधुरा शीता पित्तश्वासकफापहा । असृग्ज्वरहरा रम्या कासजिद्गृहबिम्बिका ॥ ३०५ ॥

---

१ ज. वन्या । २ क. ङ. च. 'केशफ' । ३ क. ङ. कोष्णा । ख. च. कोह्ला । ४ क. ख. ङ. च. 'त्तास्रशो' । ५ क. 'ळं स्तन्यकरं स्वादुकासार्तिबुद्धिजित् । पि' ।

## † ( ६३ ) हरीतकी । ( त्रिफलान्तर्गता )

*हरीतक्यभया पथ्या प्रपथ्या पूतनाऽमृता । जयाऽव्यथा हैमवती वयस्था चेतकी शिवा ॥ २०५ ॥ प्राणदा नन्दिनी चैव रोहिणी विजया च सा ।

गुणाः—+कषायाऽम्ला च कटुका तिक्ता मधुरसान्विता । इति पञ्चरसा पथ्या लवणेन विवर्जिता ॥ २०६ ॥ अम्लभावाज्जयेद्वातं पित्तं मधुरतिक्तकात् । कफं रूक्षकषायत्वात्रिदोषघ्नी ततोऽभया ॥ २०७ ॥ प्रपथ्या लेखनी लघ्वी मेध्या चक्षुर्हिता सदा । मेहकुष्ठव्रणच्छर्दिशोफवातास्रकृच्छ्रजित् ॥ २०८ ॥ वातानुलोमनी हृद्या सेन्द्रियाणां प्रसादनी । संतर्पणकृतान्रोगान्प्रायो हन्ति हरीतकी ॥ २०९ ॥ तृष्णायां मुखशोषे च हनुस्तम्भे गलग्रहे । नवज्वरे तथा क्षीणे गर्भिण्यां न प्रशस्यते ॥ २१० ॥ हरस्य भवने जाता हरीता च स्वभावतः । सर्वरोगांश्च हरते तेन ख्याता हरीतकी ॥ २११ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

---

*'भावप्रकाशे'—सुधर्मायां गतो विष्णुः सुरासुरसमावृतः । पपौ सुधां स्वयं तस्मात्पतिताः सप्त विन्दवः ॥ १ ॥ ततो हरीतकी जाता सप्तधा लोमहर्षदा । अभया चेतकी पथ्या पूतना च हरीतकी। जया हैमवती चैव प्रोक्ताः सप्त इमाः शिवाः ॥ २ ॥

'अभया' त्र्यङ्गुला ज्ञेया सूक्ष्मवर्णा गुरुस्तथा । त्रिरेखा वर्तुला रूक्षा कफहृद्रेचनी स्मृता ॥ ३ ॥
'चेतकी' पूर्वदेशे स्याद्वास्तिव्याधिविनाशिनी । दशाङ्गुलैकरेखा च देवानामपि दुर्लभा ॥ ४ ॥
'पथ्या' मागधदेशे स्याद्वस्तिव्याधिविनाशिनी । पञ्चाङ्गुला चतूरेखा कीर्तिता च रसायनी ॥ ५ ॥
'पूतना' सप्तकोणान्ता सिंहलद्वीपजा मता । आयुष्या सा हरा शुभ्रा नामतश्च षडङ्गुला ॥ ६ ॥
'हरीतकी' वनोद्भूता सर्वोदरविनाशिनी । मूत्रकृच्छ्राश्मरीमेहवातपित्तकफापहा ॥ ७ ॥
'जया' सिन्धूद्भवा ज्ञेया गुल्मप्लीहविनाशिनी । रक्तातिसारपित्तघ्नी दीपनी कफहृत्परा ॥ ८ ॥
क्षुद्रा 'हैमवती' प्रोक्ता बालव्याधिविनाशिनी । नेत्ररोगे प्रशस्ता च सर्वामयविनाशिनी ॥ ९ ॥

†'आत्रेयसंहितायाम्' अभया द्व्यङ्गुला प्रोक्ता पूतना चतुरङ्गुला । सार्धाङ्गुला च जीवन्ती चेतकी स्यात्षडङ्गुला ॥ १ ॥ चेतकी द्विविधा प्रोक्ता कृष्णा शुक्ला च वर्णतः । षडङ्गुला हिता प्रोक्ता शुक्ला चैकाङ्गुला स्मृता ॥ २ ॥ श्रेष्ठा कृष्णा समाख्याता रेचनार्थे जिगीषुणा । चेतकीवृक्षशाखायां यावत्तिष्ठन्ति तां पुनः ॥ ३ ॥ भिन्दन्ति पशुपक्ष्याद्या नराणां कोऽत्र विस्मयः । चेतकीं यावद्विधृत्य हस्ते तिष्ठति मानवः ॥ ४ ॥ तावद्भिनत्ति रोगांस्तु प्रभावान्नात्र संशयः । नृपाणां सुकुमाराणां तथा भेषजविद्विषां ॥ ५ ॥ कृशानां हितमेवं स्यात्सुखोपायविरेचनम् । हरीतकी दरिद्राणामनपायरसायनम् ॥ ६ ॥ पथ्यस्यान्तेऽथवा चाऽऽदौ भक्षेत्त्वाऽऽमयनाशिनीम् ।

+'ग्रन्थान्तरे'-ग्रीष्मे तुल्यगुडां ससैन्धवयुतां मेघाम्बुद्वनाम्बरे तुल्यां शर्करया शरद्यमलया शुण्ठ्या तुषाराङ्गणे ॥ पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संमिश्रितां राजन्प्राप्य हरीतकीमिव गदा नश्यन्तु ते शत्रवः ॥ १ ॥ हरीतकी रसायनी समीररक्तनाशिनी । वरा स्वराग्निदीपनी त्रिदोषशूलनाशिनी ॥ २ ॥

हरीतकी हैमवती जयाऽभया शिवाऽव्यथा चेतनिका च रोहिणी । पथ्या प्रपथ्याऽपि च पूतनाऽमृता जीवप्रिया जीवनिका भिषग्वरा ॥ ३०६ ॥ जीवन्ती प्राणदा जीव्या कायस्था श्रेयसी च सा । देवी दिव्या च विजया वह्निनेत्रमिताभिधा ॥ ३०७ ॥

गुणाः—हरीतकी पञ्चरसा च रेचनी कोष्ठामयघ्नी लवणेन वर्जिता । रसायनी नेत्ररुजापहारिणी त्वगामयघ्नी किल रोगवाहिनी ॥ ३०८ ॥ अन्यच्च— बीजास्थितिक्ता मधुरा तदन्तस्त्वग्भागतः सा कटुरुष्णवीर्या । मांसांशतश्चाम्लकषाययुक्ता हरीतकी षड्रसा स्मृतेयम् ॥ ३०९ ॥ हरीतकीभेदाः—हरीतक्यमृतोत्पन्ना सप्तभेदैरुदीरिता । तस्या नामानि वर्णांश्च वक्ष्याम्यथ यथाक्रमम् ॥ ३१० ॥ विजया रोहिणी चैव पूतना चामृताऽभया । जीवन्ती चेतनी चेति नाम्ना सप्तविधा मता ॥ ३११ ॥ अलाबुनाभिर्विजया सुवृत्ता रोहिणी मता । स्वल्पत्वक्पूतना ज्ञेया स्थूलमांसाऽमृता स्मृता ॥ ३१२ ॥ पञ्चास्रा चाभया ज्ञेया जीवन्ती स्वर्णवर्णभाक् । त्र्यस्रां तु चेतकीं विद्यादित्यासां रूपलक्षणम् ॥ ३१३ ॥ विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना सिन्धौ स्यादथ रोहिणी तु विजया जाता प्रतिस्थानके । चम्पायाममृताऽभया च जनिता देशे सुराष्ट्राह्वये जीवन्ती च हरीतकी निगदिता सप्तप्रभेदा बुधैः ॥ ३१४ ॥ सर्वप्रयोगे विजया च रोहिणी क्षतेषु लेपेषु तु पूतनोदिता । विरेचने स्यादमृता गुणाधिका जीवन्तिका स्यादिह जीर्णरोगजित् ॥ ३१५ ॥ स्याच्चेतकी सर्वरुजापहारिका नेत्रामयघ्नीमभयां वदन्ति । इत्थं यथायोगमियं प्रयोजिता ज्ञेया गुणाढ्या न कदाचिदन्यथा ॥ ३१६ ॥ चेतकी च धृता हस्ते यावत्तिष्ठति देहिनः । तावद्विरेचते वेगात्तत्प्रभावान्न संशयः ॥ ३१७ ॥ सप्तानामपि जातीनां प्रधानं विजया स्मृता । सुखप्रयोगसुलभा सर्वव्याधिषु शस्यते ॥ ३१८ ॥ क्षिप्ताऽप्सु निमज्जति या सा ज्ञेया गुणवती भिषग्वर्यैः । यस्या यस्या भूयो निमज्जनं सा गुणाढ्या स्यात् ॥ ३१९ ॥ हरते प्रसभं व्याधीन्भूयस्तरति यद्वपुः । हरीतकी तु सा प्रोक्ता तत्र कीर्दीप्तिवाचकः ॥ ३२० ॥ हरीतकी तु तृष्णायां हनुस्तम्भे गलग्रहे । शोषे नवज्वरे जीर्णे गुर्विण्यां नैव शस्यते ॥ ३२१ ॥

## ( ६४ ) विभीतकः ( त्रिफलान्तर्गतः )

विभीतकः कर्षफलो वासन्तोऽक्षः कलिद्रुमः । संवर्तको भूतवासः कल्को हार्यो बहेडकः ॥ २१२ ॥

---

१ क. ख. ग. ङ. च विभीतकः ।

गुणाः—विभीतकः कटुः पाके लघुर्वैस्वर्यजित्सरः। कासाक्षिवक्त्ररोगघ्नः केशवृद्धिकरः परः ॥ २१३ ॥ अन्यच्च—विभीतकं कषायं च कृमिवैस्वर्यजित्सरम्। चक्षुष्यं कटुरूक्षोष्णं पाके स्वादु कफास्रजित् ॥ २१४ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

विभीतकस्तैलफलो भूतवासः कलिद्रुमः। संवर्तकस्तु वासन्तः कलिवृक्षो बहेडकः ॥ ३२२ ॥ हार्यः कर्षफलः कलिकधर्मघ्नोऽक्षोऽनिलघ्नकः। विभीतकश्च कासघ्नः स प्रोक्तः षोडशाह्वयः ॥ ३२३ ॥

गुणाः—विभीतकः कटुस्तिक्तः कषायोष्णः कफापहः। चक्षुष्यः पलितघ्नश्च विपाके मधुरो लघुः ॥ ३२४ ॥

## ( ६५ ) वयस्था (भरणी) (त्रिफलान्तर्गता )

वयस्थाऽऽमलकं वृष्यं जातीफलरसं शिवम्। धात्रीफलं श्रीफलं च तथाऽमृतफलं स्मृतम् ॥ २१५ ॥

गुणाः—*कषायं कटु तिक्तोष्णं स्वादु चाऽऽमलकं हिमम्। रसं त्रिदोषहृद्वृष्यं ज्वरघ्नं च रसायनम् ॥ २१६ ॥ हन्ति वान्तं तदम्लत्वात्पित्तं माधुर्यशैत्यतः। कफं रूक्षकषायत्वात्फलं धात्र्यास्त्रिदोषजित् ॥ २१७ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

आमलकी वयस्था च श्रीफला धात्रिका तथा। अमृता च शिवा शान्ता शीताऽमृतफला तथा ॥ ३२५ ॥ जातीफला च धात्रेयी ज्ञेया धात्रीफला तथा। वृष्या वृत्तफला चैव रोचनी च चतुर्दश ॥ ३२६ ॥

गुणाः—आमलकं कषायाम्लं मधुरं शिशिरं लघु। दाहपित्तवमीमेहशोफघ्नं च रसायनम् ॥ ३२७ ॥ अन्यच्च—कटु मधुरकषायं किंचिदम्लं कफघ्नं रुचिकरमतिशीतं हन्ति पित्तास्रतापम्। श्रमवमनविबन्धाध्मानविष्टम्भदोषप्रशमनममृताभं चाऽऽमलक्याः फलं स्यात् ॥ ३२८ ॥

---

* ख. पुस्तके—

'आमलकं मधुराल्पकरं च दृष्टिकरं बहुशुक्रकरं च।
शीतकरं सुपवित्रकरं च च्छर्दिहरं व्रणमेहहरं च ॥
शोषहरं बहुदोषहरं च मेहसमूत्रहरं च वरं च।
केशकरं मुखरोगहरं च जीवितदीर्घकरं च वरं च' ॥

इति श्लोकद्वयमधिकं दृश्यते।

---

१ क. ङ. °लघुः शीतबलासजित्। का°। २ ग. °रः। केशाक्षिकण्ठरोगघ्नः केशरञ्जकरः सरः। अ°।

## प्राचीनामलकम् ( वयस्थाविशेषः ) ॥ ५२ ॥

प्राचीनामलकं प्राचीनारङ्गं रक्तकं मतम् ।
गुणाः—तत्पक्कं पित्तकफकृद्दुर्जरं गुरु वातजित् ॥ २१८ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

## काष्ठधात्री । ( वयस्थाविशेषः ) ॥ ५३ ॥

अन्यच्चाऽऽमलकं प्रोक्तं काष्ठधात्रीफलं तथा । क्षुद्रामलकमित्युक्तं क्षुद्रजातीफलं च तत् ॥ ३२९ ॥

गुणाः—काष्ठधात्रीफलं स्वादु कषायं कटुकं तथा । शीतं पित्तास्रदोषघ्नं पूर्वोक्तमधिकं गुणैः ॥ ३३० ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

## कर्कटः । ( वयस्थाविशेषः ) ॥ ५४ ॥

कर्कटः कार्कटः कर्कः क्षुद्रधात्री च स स्मृतः । क्षुद्रामलकसंज्ञश्च प्रोक्तः कर्कफलश्च षट् ॥ ३३१ ॥

गुणाः—कार्कटं तु फलं रुच्यं कषायं दीपनं परम् । कफपित्तहरं ग्राहि चक्षुष्यं लघु शीतलम् ॥ ३३२ ॥

## ( ६६ ) आरग्वधः ।

आरग्वधो दीर्घफलो व्याधिहा[1] चतुरङ्गुलः । आरेवतस्तथा कर्णी कर्णिकारोऽथ रेचनः ॥ २१९ ॥

गुणाः—आरग्वधो रसे तिक्तो गुरूष्णः कृमिशूलनुत् । कफोदरप्रमेहघ्नः कृच्छ्रगुल्मत्रिदोषजित् ॥ २२० ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

आरग्वधोऽन्यो मन्थानो रोचनश्चतुरङ्गुलः । हेमपुष्पो राजतरुः कण्डूघ्नश्च ज्वरान्तकः ॥ ३३३ ॥ अरुजः स्वर्णपुष्पश्च स्वर्णद्रुः कुष्ठसूदनः । कर्णाभरणकः प्रोक्तो महाराजद्रुमः स्मृतः ॥ ३३४ ॥ कर्णिकारो महादिः स्यात्प्रोक्तश्चैकोनविंशतिः ।

गुणाः—आरग्वधोऽतिमधुरः शीतः शूलापहारकः । ज्वरकण्डूकुष्ठमेहकफविष्टम्भनाशनः ॥ ३३५ ॥

---

1 क. ख. ग. ङ. च 'धिघ्नश्चतु' ।

## कर्णिकारः ( आरग्वधविशेषः ) ॥ ५५ ॥

कर्णिकारो राजवृक्षः प्रग्रहः कृतमालकः। आरोग्यशिम्बी शम्याको व्याधिघातो व्यथान्तकः ॥ २२१ ॥

गुणाः—कृतमालो मधुः शीतः पित्तघ्नो मधुरः सरः। तत्फलं मधुरं बल्यं वातपित्तामजित्सरम् ॥ २२२ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

अथ भवति कर्णिकारो राजतरुः प्रग्रहश्च कृतमालः। सुफलश्च परिव्याधो व्याधिरिपुः पङ्क्तिबीजको वसुसंज्ञः ॥ ३३६ ॥

गुणाः—कर्णिकारो रसे तिक्तः कटूष्णः कफशूलहृत्। उदरक्रिमिमेहघ्नो व्रणगुल्मनिवारणः ॥ ३३७ ॥

## ( ६७ ) दन्ती।

दन्ती शीघ्रा निकुम्भा स्यादुपचित्रा मकूलकः। तथोदुम्बरपर्णी च विशल्या च गुणप्रिया ॥ २२३ ॥

गुणाः—दन्ती तीक्ष्णोष्णकटुका कफवातोदराञ्जयेत्। अर्शोव्रणाश्मरीशूलान्हन्ति दीपनशोधनी ॥ २२४ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

दन्ती शीघ्रा श्येनघण्टा निकुम्भी नागस्फोता दन्तिनी चोपचित्रा। भद्रा रूक्षा रोचनी चानुकूला निःशल्या स्याद्वक्रदन्ता विशल्या ॥ ३३८ ॥ मधुपुष्पैरण्डफला भद्राण्येरण्डपत्रिका। उदुम्बरदला चैव तरुणी चाणुरेवती॥ ३३९ ॥ विशोधनी च कुम्भी च ज्ञेया चाग्निकराह्वया ॥

गुणाः—दन्ती कटूष्णा शूलामत्वग्दोषशमनी च सा। अर्शोव्रणाश्मरीशल्यशोधनी दीपनी परा ॥ ३४० ॥

## अरणी ( दन्तीविशेषः ) ॥ ५६ ॥

अरणी[२] च वराङ्गी च तथैव च जयावहा। आवर्तकी केशरुहा तथैव विषभद्रका ॥ २२५ ॥

गुणाः—*दन्ती रसेषु तिक्तोष्णा शूलत्वग्दोषनाशिनी। कफवातोदरार्शांसि हन्ति दीपनशोधनी ॥ २२६ ॥

---

* ग. पुस्तके—'दन्ती तीक्ष्णोष्णकटुका कफं चोदरजं जयेत्। अर्शोव्रणाश्मरीशूलान्हन्ति दीपनपाचनी' ॥ इत्ययं श्लोको दृश्यते।

---

१ क. ख. ग. ङ. च. 'पवित्रा'। २ क. ख. ग. ङ. वरणी।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अन्या दन्ती केशरुहा विषभद्रा जयावहा। आवर्तकी वराङ्गी च जयाह्वा भद्रदन्तिका ॥ ३४१ ॥

गुणाः—अन्या दन्ती कटूष्णा च रेचनी कृमिहा परा। शूलकुष्ठामदोषघ्नी तन्द्रामयविनाशनी ॥ ३४२ ॥

## *रेचकः (दन्तीबीजम्) ॥ ५७ ॥

*रेचको जयपालश्च सारकस्तित्तिरीफलम्। दन्तीबीजं मलद्रावी निकुम्भो बीजरेचकः ॥ २२७ ॥ कुम्भीबीजं निकुम्भा च बीजं तत्कुम्भिनीफलम् ॥

गुणाः—*जेपालः कटुरुष्णश्च कृमिहारी विरेचनः। *दीपनः कफवातघ्नो जठरामयशोधनः ॥ २२८ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

*दन्तीबीजं मलद्रावि ज्ञेयं स्याद्बीजरेचनी ॥ ३४३ ॥ कुम्भीबीजं कुन्तिनी-बीजसंज्ञं घण्टाबीजं दन्तिनीबीजमुक्तम्। बीजान्ताख्यं शोधनी चक्रदन्त्यो वेदेन्द्राख्यं तन्निकुम्भ्याश्च बीजम् ॥ ३४४ ॥

गुणाः—* * ॥ ३४५ ॥

## ( ६८ ) द्रवन्ती।

द्रवन्ती शम्बरी चित्रा न्यग्रोधा मूषिकाह्वया[1]। प्रत्यक्श्रेणी विषा चण्डा पुत्रश्रेण्याखुपर्णिका[2] ॥ २२९ ॥

गुणाः—द्रवन्ती ग्रहणीतृष्णात्रिदोषशमनी हिता। अभिच्छिन्नतनौ ग्रन्थ्यां प्रमेहे जठरे गरे ॥ २३० ॥ कफपित्तामये पाण्डौ कृमिकोष्ठभगंदरे। द्रवन्ती हृद्रोगहरा कफकृमिविनाशिनी ॥ २३१ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

द्रवन्ती शाम्बरी चित्रा न्यग्रोधी शतमूलिका। प्रत्यक्श्रेणी वृषा चण्डा

---

*जयपालशोधनम्—वस्त्रे बद्ध्वा तु जेपालं गोमयस्थोदके न्यसेत्। पाचयेद्याममात्रं तु जेपालः शुद्धतां व्रजेत् ॥ १ ॥ अन्यच्च—जेपालं निस्तुषं कृत्वा दुग्धे दोलायुते पचेत्। अन्तर्जिह्वां परित्यज्य युञ्जीयाद्रसकर्मणि ॥ २ ॥ अन्यच्च—जेपालो रहितस्त्वगङ्कुररसज्ञाभिर्मले माहिषे निक्षिप्तस्त्र्यहमुष्णतोयविमलः खल्वे सवासोर्दितः। लिप्तो नूतनखर्परेषु विगतस्नेहो रजःसंनिभो निम्बस्याम्बुनि भावितश्च बहुशः शुद्धो गुणाढ्यो भवेत् ॥ ३ ॥

---

[1] ङ. मूलका°। [2] क. घ. ङ. च. °त्रशृङ्गयाखु°।

पत्रश्रेण्याखुकर्णिका ॥ ३४६ ॥ मूषकाह्वादिका कर्णी प्रतिपर्णी शिफा च सा सहस्रमूली विक्रान्ता ज्ञेया स्याच्चतुरेकधा ॥ ३४७ ॥

गुणाः—द्रवन्ती मधुरा शीता रसबन्धकरी परा । ज्वरघ्नी कृमिहा शूलशमनी च रसायनी ॥ ३४८ ॥

## ( ६९ ) नीलिनी ।

नीलिनी नीलिका काला ग्राम्या तूणीविशोधनी। तुत्था श्रीफलिका मोचा भारवाही च रञ्जनी ॥ २३२ ॥ *अन्यच्च—उपभूतः केशरुहः सहदेवोऽग्रपत्रकः । कीर्तनी विजया राज्ञी तथैव च जयावहा ॥ २३३ ॥

गुणाः—नीली तिक्ता रसे चोष्णा कटिवातकफापहा । केश्या विषोदरं हन्ति वातासृक्कृमिनाशिनी ॥ २३४ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

नीली नीला नीलिनी नीलपत्री तुत्था राज्ञी नीलिका नीलपुष्पी । काली श्यामा शोधनी श्रीफला च ग्राम्या भद्रा भारवाही च मोचा ॥ ३४९ ॥ कृष्णा व्यञ्जनकेशी च रञ्जनी च महाफला । असिता क्लीतनी नीलकेशी चारटिका मता ॥ ३५० ॥ गन्धपुष्पा श्यामलिका रङ्गपत्री महाबला । स्थिररङ्गा रङ्गपुष्पी स्यादेकविंशदाह्वया ॥ ३५१ ॥

गुणाः—नीली तु कटुतिक्तोष्णा केश्या कासकफामनुत् । मरुद्विषोदरव्याधिगुल्मजन्तुज्वरापहा ॥ ३५२ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

### महानीली ( नीलिनीविशेषः ) ॥ ५८ ॥

अन्या चैव महानीली अमला राजनीलिका । तुत्था श्रीफलिका मेला[1] केशार्ही भृशपत्रिका ॥ ३५३ ॥

गुणाः—महानीली गुणाढ्या स्याद्रङ्गश्रेष्ठा सुवीर्यदा।पूर्वोक्तनीलिकाऽऽदेश्या सगुणा सर्वकर्मसु ॥ ३५४ ॥

## ( ७० ) †स्नुक् ।

स्नुक्स्नुही च महावृक्षो गुडा निस्त्रिंशपत्रकः । समन्तदुग्धा गण्डीरः सीहुण्डो वज्रकण्टकः ॥ २३५ ॥

---

*कपुस्तके—द्वितीया शरपुङ्खा च शताह्वा शतपत्रिका । रक्तापहा रक्तहारी द्वितीया नीलिसंभवा ॥ गुणाः—नीलिका फलजन्तुघ्नी विषजित्तिक्तका शुचिः । हृद्रोगवातगुल्मेषु प्लीहरोगे च योजयेत्" इति पाठो दृश्यते ।

†स्नुक्क्षीरशोधनं पञ्चगव्येषु कार्यम् ।

---

१ क. ख. ग. ङ. च. मेला ।

गुणाः—निहुडिङ्गो रसे तिक्तो गुरूष्णः कफवातजित् । दुष्टव्रणाश्मरीं हन्ति तथा वातविशोधनः ॥ २३६ ॥ स्नुहीक्षीरं विषाध्मानं गुल्मोदरहरं परम् । स्नुही रसेषु तिक्ता च गुरूष्णा कफवातजित् ॥ २३७ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

स्नुही सुधा महावृक्षः क्षीरी निस्त्रिंशपत्रिका । शाखाकण्टश्च गुण्डाख्यः सेहुण्डो वज्रकण्टकः ॥ ३५५ ॥ बहुशाखो वज्रवृक्षो वातारिः क्षीरकाण्डकः । भद्रो व्याघ्रनखश्चैव नेत्रारिर्दण्डवृक्षकः ॥ ३५६ ॥ समन्तदुग्धो गण्डीरो ज्ञेयः स्नुक्चेति विंशतिः ।

गुणाः—स्नुहिरुष्णा पित्तदाहकुष्ठवातप्रमेहनुत् । क्षीरं वातविषाध्मानगुल्मोदरहरं परम् ॥ ३५७ ॥ स्नुहिरन्या त्रिधारा स्यात्तिस्रो धारास्तु यत्र सा । पूर्वोक्तगुणवत्येषा विशेषाद्रससिद्धिदा ॥ ३५८ ॥

## ( ७१ ) सातला ।

* सातला सप्तला सारी विदुला[1] विमलाऽमला । बहुफेना चर्मकषा फेना दीप्ता मरालिका ॥ २३८ ॥

गुणाः—सातला शोधनी तिक्ता कफपित्तास्रदोषनुत् । शोफोदराध्मानहरा किंचिन्मारुतकृद्भवेत् ॥ २३९ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

* बहुफेना चर्मकषा फेना दीप्ता विषाणिका ॥ ३५९ ॥

स्वर्णपुष्पी चित्रघना स्यात्त्रयोदशनामका ।

गुणाः—सातला कफपित्तघ्नी लघुतिक्तकषायिका । विसर्पकुष्ठविस्फोटव्रणशोफनिकृन्तनी ॥ ३६० ॥

## ( ७२ ) क्षीरिणी ।

क्षीरिणी काञ्चनक्षीरी कटुपर्णी च घर्षिणी । तिक्तदुग्धा हैमवती हेमदुग्धा हिमावती ॥ २४० ॥

गुणाः—तिक्ता तु काञ्चनक्षीरी पित्तकृमिविषापहा । शोधनी दोषसंघातशमनी रक्तपित्तजित् ॥ २४१ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

---

१ च. बिन्दुला । २ झ. त. 'रानाहह' ।

क्षीरिणी काञ्चनक्षीरी कर्षणी कटुपर्णिका । तिक्तदुग्धा हैमवती हिमदुग्धा हिमावती ॥ ३६२ ॥ हिमाद्रिजा पीतदुग्धा यवचित्रा हिमोद्भवा । हैमी च हिमजा चेति चतुरेकगुणाह्वया ॥ ३६३ ॥

गुणाः—क्षीरिणी कटुतिक्ता च रेचनी शोफतापनुत् । कृमिदोषकफघ्नी च पित्तज्वरहरा च सा ॥ ३६४ ॥

## सर्वक्षीरी ( क्षीरिणीविशेषः ) ॥ ५९ ॥

सर्वक्षीरी स्वर्णदुग्धा सुवर्णक्षीरिका[1]ऽपि च । हेमाह्वा[2] कनकक्षीरी हेमक्षीरी च काञ्चनी ॥ २४२ ॥

गुणाः—क्षीरिणीयुगुलं तिक्तं कृमिपित्तकफापहम् ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

स्वर्णक्षीरी स्वर्णदुग्धा स्वर्णाह्वा रुक्मिणी तथा । सुवर्णा हेमदुग्धी च हेमक्षीरी च काञ्चनी ॥ ३६५ ॥

गुणाः—स्वर्णक्षीरी हिमा तिक्ता कृमिपित्तकफापहा । मूत्रकृच्छ्राश्मरीशोफदाहज्वरहरा परा ॥ ३६६ ॥

## ( ७३ ) श्यामा ।

श्यामा त्रिवृन्मालविका मसूरविदला च सा । कालाऽर्धचन्द्रा कालिन्दी सुषेणी कालमेष्यपि[3] ॥ २४३ ॥

गुणाः—त्रिवृता कटुरुष्णा तु कृमिश्लेष्मोदरज्वरान् । शोफपाण्ड्वामयप्लीहान्हन्ति श्रेष्ठा विरेचने ॥ २४४ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

उक्ता त्रिवृन्मालविका मसूरा श्यामाऽऽर्धचन्द्रा विदला सुषेणी । कालिन्दिका सैव तु कालमेषी काली त्रिवेलाऽवनिचन्द्रसंज्ञा ॥ ३६७ ॥

गुणाः—त्रिवृत्तिक्ता कटूष्णा च कृमिश्लेष्मोदरार्तिजित् । कुष्ठकण्डूव्रणान्हन्ति प्रशस्ता च विरेचने ॥ ३६८ ॥

## शुक्रभाण्डी ( श्यामाविशेषः ) ॥ ६० ॥

शुक्रभाण्डी[4] त्रिभण्डी स्यात्काकाक्षी सरला[5] त्रिवृत् । सर्वानुभूतिस्त्रिपुटा न्यस्ता कुमुदगन्धिनी[6] ॥ २४५ ॥

---

१ क. ङ. °का मता । हे° । २ क. हेमाह्वा । ३ क. °लपुष्प्यपि । ४ क. घ. शुक्लभण्डी । ५ क. ङ. च. रसना । ६ क. ख. ङ. घ. कोटरवासिनी ।

गुणाः—कषाया मधुरा चोष्णा विपाके कटुका त्रिवृत् । कफपित्तप्रशमनी रूक्षा चानलकोपनी ॥ २४६ ॥ कफपित्तहरा रूक्षा मधुरा बहुरेचनी । वातकृत्कटुका पाके कषाया त्रिवृताऽरुणा ॥ २४७ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

रक्ताऽन्यापि च कालिन्दी त्रिपुटा ताम्रपुष्पिका । कुलवर्णा मसूरी चाप्यमृता कासनाशिका ॥ ३६९ ॥

गुणाः—रक्ता त्रिवृद्रसे तिक्ता कटूष्णा रेचनी च सा । ग्रहणी मलविष्टम्भहारिणी हितकारिणी ॥ ३७० ॥

## ( ७४ ) ऐन्द्री ।

ऐन्द्रीन्द्रवारुणीन्द्राह्वाऽथेन्द्रवारुर्मृगादनी । गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि ॥ २४८ ॥

गुणाः—इन्द्रवारुणिकाऽत्युष्णा रेचनी कटुका तथा । कृमिश्लेष्मव्रणान्हन्ति हन्ति सर्वोदराण्यपि ॥ २४९ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

ऐन्द्रीन्द्रवारुण्यरुणा मृगादनी गवादनी क्षुद्रसहेन्द्रचिर्भिटा । सूर्या विषघ्नी गुणकर्णिकाऽमरा माता सुवर्णा सुफला च तारका ॥ ३७१ ॥ वृषभाक्षी गवाक्षी च पीतपुष्पीन्द्रवल्लरी । हेमपुष्पी क्षुद्रफला वारुणी बालकप्रिया ॥ ३७२ ॥ रक्तेर्वारुर्विषलता शक्रवल्ली विषापहा । अमृता विषवल्ली च ज्ञेयोनत्रिंशदाह्वया ॥ ३७३ ॥

गुणाः—इन्द्रवारुणिका तिक्ता कटुः शीता च रेचनी । गुल्मपित्तोदरश्लेष्मकृमिकुष्ठज्वरापहा ॥ ३७४ ॥

## ( ७५ ) विशाला ।

अन्येन्द्रवारुणी प्रोक्ता विशाला च महाफला । आत्मरक्षा चित्रफला त्रपुसी त्रपुसा च सा ॥ २५० ॥

गुणाः—इन्द्रवारुद्वयं तिक्तं कटु पाके रसे लघु । वीर्योष्णं कामलापित्तकफश्लीपदनाशनम् ॥ २५१ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

महेन्द्रवारुणी रम्या चित्रवल्ली महाफला । सा माहेन्द्री चित्रफला त्रपुसी त्रपुसा च सा ॥ ३७५ ॥ आत्मरक्षा विशाला च दीर्घवल्ली वृहत्फला । स्याद्वृहद्वारुणी सौम्या नामान्यस्याश्चतुर्दश ॥ ३७६ ॥

गुणाः—महेन्द्रवारुणी ज्ञेया पूर्वोक्तगुणभागिनी। रसे वीर्ये विपाके च किंचि[1]द्दोषा गुणाधिका ॥ ३७७ ॥

## श्वेतपुष्पी ( विशालाविशेषः ) ॥ ६१ ॥

श्वेतपुष्पी मृगाक्षी च मृगेर्वारुर्मृगादनी । हस्तिदन्ती नागदन्ती वारुणी गजचिर्भटा ॥ २५२ ॥

गुणाः—कण्ठरो[2]गापचिश्वासकासप्लीह[3]कफोदरम् । मूढ[4]गर्भं[5] च हरति कुष्ठदुष्टव्रणाञ्जयेत् ॥ २५३ ॥

## ( ७६ ) त्रायमाणा ।

त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणका । बलदेवा बलभद्रा वार्षिकं [6]गिरिजानुजा ॥ २५४ ॥

गुणाः—त्रायन्ती कफपित्तास्रगुल्मज्वरहरा मता। उष्णा कटुकषाया च सूतिकाशूलनाशिनी ॥ २५५ ॥ रक्तपित्तश्रमच्छर्दिविषघ्नी तिक्तवल्कला ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

त्रायमाणा कृतत्राणा त्रायन्ती त्रायमाणिका । बलभद्रा सुकामा च वार्षिकी गिरिजानुजा ॥ ३७८ ॥ मङ्गल्याह्वा देवबला पालिनी भयनाशिनी । अवनी रक्षणी त्राणा विज्ञेया षोडशाह्वया ॥ ३७९ ॥

गुणाः—भ्रमतृष्णाक्षयग्लानिविषच्छर्दिविनाशनी ।

## ( ७७ ) यवतिक्ता ।

यवतिक्ता शङ्खिनी तु दृढपादा विसर्पिणी । नाकुली चाक्षपीडा च नेत्रमीला यशस्करी ॥ २५६ ॥

गुणाः—*शङ्खिनी कटुतिक्ताम्ला गुरुः स्निग्धा विशोधनी । त्रिदोषशमनी कुष्ठश्वयथूदरनाशनी ॥ २५७ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

यवतिक्ता महातिक्ता दृढपादा विसर्पिणी । नाकुली नेत्रमीला च शङ्खिनी पत्रतण्डुली ॥ ३८० ॥ तण्डुली चाक्षपीडा च सूक्ष्मपुष्पी यशस्विनी । माहेश्वरी तिक्तयवा यावी तिक्तेति षोडश ॥ ३८१ ॥

---

* ख. पुस्तके—' यवतिक्ता सुतिक्ता च दोषघ्नी दीपनी मता ।
शङ्खिनी च रसे तिक्ता मेध्या कृमिविषापहा ' इति पाठो दृश्यते ।

---

१ ज. 'चिद्देषा । २ ग. ङ. च. 'रोगोप' । ३ ङ. 'हगरोद' । ४ झ. मूलगर्भापहरणी कु' । ५ ग. छ. 'ढगर्भापहरणी कु' । ६ ङ. च. गिरिसानुगम् । झ. गिरिसानुजम् ।

गुणाः—यवतिक्ता सतिक्ताऽम्ला दीपनी रुचिकृत्परा। कृमिकुष्ठविषामास्र-दोषघ्नी रेचनी च सा ॥ ३८२ ॥

## ( ७८ ) अङ्कोटः।

अङ्कोटोऽङ्कोलको रेची निर्दिष्टो दीर्घकीलकः। पीतसारस्ताम्रफलो गन्ध-पुष्पो निकोचकः ॥ २५८ ॥

गुणाः—अङ्कोलः स्निग्धतीक्ष्णोष्णः कटुको वातनाशनः। कुक्कुराखुविषं हन्ति ग्रहजन्तुविषापहः ॥ २५९ ॥ भूतहृद्विषहृच्चैव कण्ठशूलस्य शोधनः।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

अङ्कोलः कोटरो रेची गूढपत्रो निकोचकः। गुप्तस्नेहः पीतसारो मदनो गूढमल्लिका ॥ ३८३ ॥ पीतस्ताम्रफलो ज्ञेयो दीर्घकालो गुणाढ्यकः। कोलको लम्बकर्णश्च गन्धपुष्पश्च रोचनः ॥ ३८४ ॥ विज्ञानतैलगर्भश्च स्मृतिसंख्याभिधः स्मृतः।

गुणाः—अङ्कोलः कटुकः स्निग्धो विषलूतादिदोषनुत्। कफानिलहरः सूतः शुद्धिकृद्रेचनीयकः ॥ ३८५ ॥

## ( ७९ ) अपामार्गः।

अपामार्गस्तु शिखरी प्रत्यक्पुष्पी मयूरकः। अधःशल्योऽथ किणिही दुर्ग्रहः खरमञ्जरी ॥ २६० ॥ स चैवोक्तः शैखरिको मर्कटी दुरभिग्रहः। पराक्पुष्पी वशीरश्च कण्टी मर्कटपिप्पली ॥ २६१ ॥

गुणाः—*अपामार्गस्तु तिक्तोष्णः कटुश्च कफनाशनः।*अर्शःकण्डूदरामघ्नो रक्तहृद्ग्राहिवान्तिकृत् ॥ २६२ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

अपामार्गस्तु शिखरी किणिही खरमञ्जरी। दुर्ग्रहश्चाप्यधःशल्यः प्रत्यक्पुष्पी मयूरकः ॥ ३८६ ॥ काण्डकण्ठः शैखरीको मर्कटी दुरभिग्रहः। वशीरश्च पराक्पुष्पी कण्टी मर्कटपिप्पली ॥ ३८७ ॥ कटुर्मञ्जरिको नन्दी क्षवकः पङ्क्तिकण्टकः। मालाकण्टश्च कुब्जश्च त्रयोविंशतिनामकः ॥ ३८८ ॥

गुणाः—* * ॥ ३८९ ॥

### रक्तपुष्पः ( अपामार्गविशेषः ) ॥ ६२ ॥

अन्यो रक्तो रक्तपुष्पो वशीरः कपिपिप्पली। क्षुद्रापामार्गको रक्तः ख्यातको रक्तपूर्वकः ॥ २६३ ॥

---

१ झ. वामनी सरः। कु°। २ क. ख. 'शल्यश्च कि°। ३ क. च. °न्तिजित्।

गुणाः—अपामार्गोऽरुणो वातविष्टम्भी कफनाशनः। रक्तापामार्गकः शीतः कटुकः कफवातनुत् ॥ २६४ ॥ * व्रणकण्डूविषघ्नश्च संग्राही वान्तिकृत्परः। अपामार्गः कटुस्तिक्तस्तीक्ष्णोष्णः कफनाशनः ॥ २६५ ॥ सिध्मोदरापचीमेहकण्ड्वर्शोघ्नश्च वान्तिकृत्।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

अन्यो रक्तो ह्यपामार्गः क्षुद्रापामार्गकस्तथा। आघट्टको दुग्धनिका रक्तबिन्द्वल्पपत्रिका ॥ ३९० ॥

गुणाः—रक्तोऽपामार्गकः शीतः कटुकः कफवातनुत्। * ॥ ३९१ ॥

## (८०) तेजस्विनी।

तेजस्विनी तेजवती तेजोह्वा[२] तेजनीति च। अश्वघ्नी[३] वल्कला शीता पारिजाता महौजसी ॥ २६६ ॥

गुणाः[४]—तेजोह्वा श्लेष्मवातघ्नी रुच्या दीपनपाचनी ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

तेजोवती बहुरसा कनकप्रभाऽन्या तीक्ष्णा सुवर्णनकुली लवणाग्निदीप्ता। तेजस्विनी सुरलताऽग्निफलाऽग्निगर्भा स्यात्कङ्गुणी तदनु शैलसुता सुतैला ॥ ३९२ ॥ सुवेगा वायसी तीव्रा काकाण्डी वायसादनी। गीर्लता श्रीफली सौम्या ब्राह्मी लवणकिंशुका ॥ ३९३ ॥ पारावतपदी पीता पीततैला यशस्विनी। मेध्या मेधाविनी धीरा स्यादेकत्रिंशदाह्वया ॥ ३९४ ॥

## (८१) ज्योतिष्मती।

ज्योतिष्मती तु कटभी सुवर्णलतिकेति च। ज्योतिष्कायाऽग्निभासा च लवणोक्ता च दुर्जेरा[५] ॥ २६७ ॥

गुणाः—कटभी तिक्ततीष्णोष्णा कफजिच्च विरेचनी। मेधाकरी वर्णकरी व्रण्या जठरनाशिनी ॥२६८॥ ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित्। अत्युष्णा वमनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा ॥ २६९ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

ज्योतिष्मती स्वर्णलताऽनलप्रभा ज्योतिर्लता सा कटभी सुपिङ्गला। दीप्ता च मेध्या मतिदा च दुर्जरा सरस्वती स्यादमृतार्कसंख्यया ॥ ३९५ ॥

गुणाः—ज्योतिष्मती तिक्तरसा च रूक्षा किंचित्कटुर्वातकफापहा च। दाहप्रदा दीपनकृच्च मेध्या प्रज्ञां च पुष्णाति तथा द्वितीया ॥ ३९६ ॥

---

१ क ङ. च. °तजित्। २ ग. तेजोका। ३ ख. अस्वप्ना। ४ क. ङ. च. °णाः—वातश्लेष्महरा कण्ठ्या रु°। ५ क. ङ. दुर्भरा। ग. दुर्लभा।

## ( ८२ ) राष्णा ( रास्ना )

* रास्ना युक्तरसा रस्या श्रेयसी रसना रसा । सुगन्धमूलाऽतिरसा सैव पुत्तिरसा स्मृता[1] ॥ २७० ॥

गुणाः—रास्ना तिक्तोष्णगुर्वी[2] स्याद्विषवातास्रकासजित् । शोफवातोदरश्लेष्मशमन्यामस्य पाचनी ॥ ३७१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

*। सुगन्धिमूला सुरसा रसाढ्याऽतिरसा दश ॥ ३९७ ॥

गुणाः—रास्ना तु त्रिविधा प्रोक्ता मूलं पत्रं तृणं तथा । ज्ञेये मूलदले श्रेष्ठे तृणरास्ना च मध्यमा ॥ ३९८ ॥ रास्ना गुरुश्च तिक्तोष्णा विषवातास्रकासजित् । शोफकम्पोदरश्लेष्मशमनी पाचनी च सा ॥ ३९९ ॥

## ( ८३ ) अश्वगन्धा ।

अश्वगन्धा वाजिगन्धा कम्बुकाऽश्वावरोहकः । वाराहकर्णी तुरगी बल्या वाजिकरी स्मृता ॥ २७२ ॥

गुणाः—अश्वगन्धा कषायोष्णा तिक्ता वातकफापहा । विषव्रणक्षयान्हन्ति कान्तिवीर्यबलप्रदा ॥ २७३ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

अश्वगन्धा वाजिगन्धा कम्बुकाष्ठा वराहिका । वराहकर्णी तुरगी वनजा वाजिनी हयी ॥ ४०० ॥ पुष्टिदा बलदा पुण्या हयगन्धा च पीवरा । पलाशपर्णी वातघ्नी श्यामला कामरूपिणी ॥ ४०१ ॥ कालप्रियकरी बल्या गन्धपत्री हयप्रिया । वराहपत्री विज्ञेया त्रयोविंशतिनामिका ॥ ४०२ ॥

गुणाः—अश्वगन्धा कटूष्णा स्यात्तिक्ता च मदगन्धिका । बल्या वातहरा हन्ति कासश्वासक्षयव्रणान् ॥ ४०३ ॥

## ( ८४ ) पुनर्नवा ।

पुनर्नवा विशाखश्च कठिल्लः[3] शशिवाटिका । वृश्चीरः[4] क्षुद्रवर्षाभूर्दीर्घपत्रः कठिल्लकः ॥ २७४ ॥

गुणाः—पुनर्नवा भवेदुष्णा तिक्ता रूक्षा कफापहा । सशोफपाण्डुहृद्रोगकासोरःक्षतशूलनुत् ॥ २७५ ॥

---

१ क. ग. घ. ङ. च. मता । २ क. ङ. 'र्वी च विष' । ३ च. कुठिल्लकः झ. कपिल्लकः । ४ छ. वृश्चिकः ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

पुनर्नवा विशाखश्च कठिल्लः शशिवाटिका । पृथ्वी च सितवर्षाभूर्दीर्घपत्रः कठिल्लकः ॥ ४०४ ॥

गुणाः—श्वेता पुनर्नवा सोष्णा तिक्ता कफविषापहा । कासहृद्रोगशूलास्रपाण्डुशोफानिलार्तिनुत् ॥ ४०५ ॥

## क्रूरः (पुनर्नवाविशेषः) ॥ ६३ ॥

पुनर्नवोऽपरः क्रूरः सद्योमण्डलपत्रकः । श्वेतमूलो वर्षकेतुर्महावर्षाभुरुच्यते ॥ २७६ ॥

गुणाः—रक्ता पुनर्नवा तिक्ता सारिणी शोफनाशिनी । रक्तप्रदरदोषघ्नी पाण्डुपित्तप्रमर्दनी ॥ २७७ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

पुनर्नवाऽन्या रक्ताख्या क्रूरा मण्डलपत्रिका । रक्तकाण्डा वर्षकेतुर्लोहिता रक्तपत्रिका ॥ ४०६ ॥ वैशाखी रक्तवर्षाभूः शोफघ्नी रक्तपुष्पिका । विकस्वरा विषघ्नी च प्रावृषेण्या च सारिणी ॥ ४०७ ॥ वर्षाभवः शोणपत्रो[१] भौमः संमीलितद्रुमः । पुनर्नवो नवो नव्यः स्याच्च विंशतिसंज्ञया ॥ ४०८ ॥

गुणाः—रक्ता पुनर्नवा तिक्ता सारिणी शोफनाशिनी । रक्तप्रदरदोषघ्नी पाण्डुपित्तप्रमर्दनी ॥ ४०९ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

## नीलपुनर्नवा (पुनर्नवाविशेषः) ॥ ६४ ॥

नीला पुनर्नवा नीला श्यामा नीलपुनर्नवा । कृष्णाख्या नीलवर्षाभूर्नीलादिस्वाभिधान्विता ॥ ४१० ॥

गुणाः—नीला पुनर्नवा तिक्ता कटूष्णा च रसायनी । हृद्रोगपाण्डुश्वयथुश्वासवातकफापहा ॥ ४११ ॥

# (८५) सैरेयकः ।

सैरेयकः सहचरः सैरेयश्च सहाचरः । पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत् ॥ २७८ ॥ पीतः कुरण्टको ज्ञेयो रक्तः कुरबकः स्मृतः ।

गुणाः—कुरण्टको हिमस्तिक्तः शोफतृष्णाविदाहनुत् । केश्यो वृष्योऽथ वल्यश्च त्रिदोषशमनो मतः ॥ २७९ ॥

---

१ ग्र. ढ. शोणः ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

अथ रक्ताम्लानः स्याद्रक्तसहाख्यः स चापरिम्लानः । रक्तामलान्तकोऽपि च रक्तप्रसवश्च कुरुबकश्चैव ॥ ४१२ ॥ रामालिङ्गनकामो रागप्रसवो मधूत्सवः प्रसवः । सुभगो भसलानन्दः स्यादित्ययमिन्दुचन्द्रमितः ॥ ४१३ ॥

गुणाः—उष्णः कटुः कुरबको वातामयशोफनाशनो ज्वरनुत् । आध्मानशूलकासश्वासार्तिप्रशमनो वर्ण्यः ॥ ४१४ ॥ पीतः स किङ्किरातः पीताम्लानः कुरण्टकः कनकः । पीतकुरबः सुपीतः स पीतकुसुमश्च सप्तसंज्ञः स्यात् ॥४१५॥

गुणाः—किङ्किरातः कषायोष्णस्तिक्तश्च कफवातजित् । दीपनः शोफकण्डूतिरक्तत्वग्दोषनाशनः ॥ ४१६ ॥ नीलपुष्पा तु सा दासी नीलाम्लानस्तुच्छादनः । बला चाऽऽर्तगला चैव नीलपुष्पा च षड्विधा ॥ ४१७ ॥

गुणाः—आर्तगला कटुस्तिक्ता कफमारुतशूलनुत् । कण्डूकुष्ठव्रणान्हन्ति शोफत्वग्दोषनाशनी ॥ ४१८ ॥ अन्यच्च—कुण्टः[1] कुरण्टो[2] झिण्टी सा वन्या सहचरी तु सा पीता । शोणी कुरबकनाम्नी कण्टकिनी शोणझिण्टिका चैव ॥४१९॥ साऽन्या तु नीलझिण्टी नीलकुरण्टश्च नीलकुसुमा च । बाणो बाणा दासी कण्टाऽऽर्तगला च सप्तसंज्ञा स्यात् ॥ ४२० ॥

गुणाः—झिण्टिकाः कटुकास्तिक्ता दन्तामयशान्तिदाश्च शूलघ्न्यः । वातकफशोफकासत्वग्दोषविनाशकारिण्यः ॥ ४२१ ॥

## ( ८६ ) बला ।

बला भद्रौदनी वाटी समङ्गा खरयष्टिका । महासमङ्गौदनिका शीतपाक्योदनाह्वया ॥ २८० ॥

गुणाः—बला स्निग्धा हिमा स्वादुर्वृष्या बल्या त्रिदोषनुत् । रक्तपित्तक्षयं[4] हन्ति बलौजो वर्धयत्यपि ॥ २८१ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

बला समङ्गौदनिका च भद्रा भद्रौदनी स्यात्खरकाष्ठिका च । कल्याणिनी भद्रबला च मोटा वाटी बलाढ्येति दशाह्वया स्यात् ॥ ४२२ ॥

गुणाः—बलाऽतितिक्ता मधुरा पित्तातिसारनाशनी । बलवीर्यप्रदा पुष्टिकफरोगविशोधनी[5] ॥ ४२३ ॥

---

१ ज. 'स्तुपाद'। २ ज. ट. कण्टः। ३ ट. कुरटो। ४ क. च. 'क्षतं ह'। ५ ज. 'रोधनि'।

## महाबला ( बलाविशेषः ) ॥ ६५ ॥

महाबला वर्षपुष्पी तथा वाट्यायनी स्मृता। सहदेवा देवसहा पीतपुष्पी बृहत्फला ॥ २८२ ॥

गुणाः—महाबला तु हृद्रोगवातार्शःशोफनाशनी। शुक्रवृद्धिकरी हन्यादिषमं च ज्वरं नृणाम् ॥ २८३ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

महाबला ज्येष्ठबला कटंभरा केशारुहा केसरिका मृगादनी। स्याद्वर्षपुष्पाऽपि च केशवर्धनी पुरासिनी देवसहा च सारिणी ॥ ४२४ ॥ सहदेवी पीतपुष्पी देवार्हा गन्धवल्लरी। मृगा मृगरसा चेति ज्ञेया सप्तदशाह्वया ॥४२५॥

गुणाः—महाबला तु हृद्रोगवातार्शःशोफनाशनी। शुक्रवृद्धिकरी बल्या विषमज्वरहारिणी ॥ ४२६ ॥

## गाङ्गेरुकी ( बलाविशेषः ) ॥ ६६ ॥

गाङ्गेरुकी नागबला खरगन्धिनिका झषा। विश्वदेवा तथाऽरिष्टा खण्डा ह्रस्वगवेधुका ॥ २८४ ॥

गुणाः—गाङ्गेरुकी मधुराम्ला कषायोष्णा गुरुस्तथा। कटुस्तिक्ता च वातघ्नी व्रणपित्तविकारजित् ॥ २८५ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

भद्रौदनी नागबला खरगन्धा चतुष्फला। महोदया महाशाखा महापत्रा महाफला ॥ ४२७ ॥ विश्वदेवा तथाऽरिष्टा खर्वा ह्रस्वगवेधुका। देवदण्डा महादण्डा घण्टेत्याह्वास्तु षोडश ॥ ४२८ ॥

गुणाः—मधुराम्ला नागबला कषायोष्णा गुरुस्तथा। कण्डूतिकुष्ठवातघ्नी व्रणपित्तविकारजित् ॥ ४२९ ॥

## बलिका ( बलाविशेषः ) ॥ ६७ ॥

बलिकाऽतिबला प्रोक्ता वाट्यपुष्पी च कङ्कता। वृष्या प्रोक्ता वृष्यगन्धा सैव भूरिबला मता ॥ २८६ ॥

गुणाः—वातपित्तापहं ग्राहि बल्यं वृष्यं बलात्रयम्।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

बलिकाऽतिबला बल्या विकङ्कता वाट्यपुष्पिका घण्टा। शीता च शीतपुष्पा भूरिबला वृष्यगन्धिका दशधा ॥ ४३० ॥

---

१ क. °ला वाट्यपु°। २ क. ङ. °पुष्पा बृ°।

गुणाः—तिक्ता कटुश्चातिबला वातघ्नी कृमिनाशनी । दाहतृष्णाविषच्छर्दि-क्लेदोपशमनी परा ॥ ४३१ ॥

## बला ( बलाविशेषः ) ॥ ६८ ॥

बला चातिबला चैव महाबलबला बला । अन्या राजबला चेति बलायाः पञ्चकं मतम् ॥ २८७ ॥

गुणाः—ततिपत्तवातजिद्ग्राहि बल्यं वृष्यं च कृच्छ्रजित् । स्निग्धं मधुरमायुष्यं वातासृग्दरनाशनम् ॥ २८८ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

महासमङ्गौदनिका बलाह्वया वृक्षारुहा वृद्धिबलाऽक्षतण्डुला । भुजंगजिह्वाऽपि च शीतपाकिनी शीता बला शीतवरा बलोत्तरा ॥ ४३२ ॥ बल्या स्वरहटी चैव व्यालजिह्वा त्रिपञ्चधा ।

गुणाः—महासमङ्गा मधुरा अम्ला चैव त्रिदोषहा । युक्त्या बुधैः प्रयोक्तव्या ज्वरदाहविनाशनी ॥ ४३३ ॥

## ( ८७ ) प्रसारणी ।

प्रसारणी सुप्रसरा सरणी सारणी च सा । चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥ २८९ ॥

गुणाः—प्रसारणी गुरुस्तिक्ता सरा संधानकृन्मता । त्रिदोषशमनी वृष्या तेजःकान्तिबलप्रदा ॥ २९० ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

प्रसारिणी सुप्रसरा सारणी सरणी सरा । चारुपर्णी राजबला भद्रपर्णी प्रतानिका ॥ ४३४ ॥ प्रबला राजपर्णी च बल्या भद्रबला तथा । चन्द्रवल्ली प्रभद्रा च ज्ञेया पञ्चदशाह्वया ॥ ४३५ ॥

गुणाः—प्रसारिणी गुरूष्णा च तिक्ता वातविनाशनी । अर्शःश्वयथुहन्त्री च मलविष्टम्भहारिणी ॥ ४३६ ॥

## ( ८८ ) शतावरी ।

शतावरी शतपदी पीवरीन्दीवरी वरी । ऋष्यप्रोक्ता द्वीपिशत्रुर्द्वीपिका चोर्ध्वकण्टका ॥ २९१ ॥

गुणाः—शतावरी हिमा तिक्ता रसे स्वादुः क्षयास्रजित् । वातपित्तहरा वृष्या रसायनवरा स्मृता ॥ २९२ ॥

---

१ ट. ढ. खिरिहिटी । २ झ. 'का खरक' ।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

शतावरी शतपदी पीवरीन्दीवरी वरी। ऋष्यप्रोक्ता द्वीपिशत्रुर्द्वीपिकाऽमरकण्टिका ॥ ४३७ ॥ सूक्ष्मपत्रा सुपत्रा च बहुमूला शताह्वया। नारायणी स्वादुरसा शताह्वा लघुपर्णिका ॥ ४३८ ॥ आत्मशल्या जटामूला शतवीर्या महौदनी। मधुरा शतमूला च केशिका शतनेत्रिका ॥ ४३९ ॥ विश्वाख्या वैष्णवी कार्ष्णी वासुदेवी वरीयसी। दुर्मरा तैजवल्ली च स्यात्त्रयस्त्रिंशदाह्वया ॥ ४४० ॥

## सहस्रवीर्या (शतावरीविशेषः) ॥ ६९ ॥

सहस्रवीर्या भीरुश्च रेङ्गिणी बहुपत्रिका। महापुरुषदन्ता च शतावर्यूर्ध्वकण्टिका ॥ २९३ ॥

गुणाः—सहस्रवीर्या मेध्या तु हृद्या वृष्या रसायनी। शीतवर्या निहन्त्यर्शोग्रहणीनयनामयान् ॥ २९४ ॥ तदङ्कुरस्त्रिदोषघ्नो लघुरर्शःक्षयापहः।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

महाशतावरी वीरा तुङ्गिनी[1] बहुपत्रिका। सहस्रवीर्या सुरसा महापुरुषदन्तिका ॥ ४४१ ॥ ऊर्ध्वकण्टा[2] महावीर्या फणिजिह्वा महाशना। शतवीर्या सुवीर्या च नामान्यस्यास्त्रयोदश ॥ ४४२ ॥

गुणाः—शतावर्यौ हिमे वृष्ये मधुरे पित्तजित्परे। कफवातहरे तिक्ते महाश्रेष्ठे रसायने ॥ ४४३ ॥ शतावरीद्वयं वृष्यं मधुरं पित्तजिद्धिमम्। महती कफवातघ्नी तिक्ता श्रेष्ठा रसायने ॥ ४४४ ॥ कफपित्तहरास्तिक्तास्तस्या एवाङ्कुराः स्मृताः।

## (८९) एरण्डः।

एरण्डस्तरुणः शुक्लश्चित्रो गन्धर्वहस्तकः। पञ्चाङ्गुलो वर्धमान आमण्डो दीर्घदण्डकः ॥ २९५ ॥ रक्तोऽपरो हस्तिकर्णो[3] व्याघ्रो व्याघ्रदलो रुवुः। रुवुको हस्तिकर्णी च चञ्चुकोत्तानपत्रकः ॥ २९६ ॥

गुणाः—*एरण्डोऽपि रसे तिक्तः स्वादूष्णोऽनिलनाशनः। उदावर्तप्लीहगुल्मबस्तिशूलान्त्रवृद्धिनुत् ॥ २९७ ॥ गुरुर्वातप्रशमनो विकाराञ्शोणिता-

---

* क. ङ. पुस्तकयोः—

'तैलमैरण्डजं बल्यं गुरूष्णं मधुरं सरम्।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं भृशम्' इति श्लोको दृश्यते।

---

१ ख. ङ. झ. ण. तुङ्गिनी। २ ज. झ ढ. ऊर्ध्वकन्दा। ३ क. ङ. हस्तपर्णो।

ञ्जयेत् । फलं स्वादु च सक्षारं लघूष्णं भेदि वातजित् ॥ २९८ ॥ एरण्डयुगुलं वृष्यं स्वादु पित्तसमीरजित् ।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

श्वेतैरण्डः सितैरण्डश्चित्रो गन्धर्वहस्तकः । आमण्डस्तरुणः शुक्लो वातारिर्दीर्घदण्डकः ॥ ४४५ ॥ पञ्चाङ्गुलो वर्धमानो रुबुको द्वादशाह्वयः । रक्तैरण्डोऽपरो व्याघ्रो हस्तिकर्णो रुबुस्तथा । उरुबूको नागकर्णश्चञ्चुरुत्तानपत्रकः ॥ ४४६ ॥ करपर्णो याचनकः स्निग्धो व्याघ्रदलस्तथा । तत्करश्चित्रबीजश्च ह्रस्वैरण्डस्त्रिपञ्चधा ॥ ४४७ ॥

गुणाः—श्वेतैरण्डः स कटुकरसस्तिक्त उष्णः कफार्तिध्वंसं धत्ते ज्वरहरमरुत्कासहारी रसार्हः[1] । रक्तैरण्डः श्वयथुपचनः शान्तिरक्तार्तिपाण्डुभ्रान्तिश्वासज्वरकफहरोऽरोचकघ्नो लघुश्च ॥ ४४८ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

## स्थूलैरण्डः ( एरण्डविशेषः ) ॥ ७० ॥

स्थूलैरण्डो महैरण्डो महापञ्चाङ्गुलादिकः ।

गुणाः—स्थूलैरण्डो गुणाढ्यः स्याद्रसवीर्यविपक्तिषु ॥ ४४९ ॥

वर्गेतरदेतदधोगतम्—

## ॥ १ ॥ * *वृषमेधा ।

वृषमेधा च मेषाक्षिर्बस्ताक्षिश्छगलाक्षिका ।

गुणाः—वृषगन्धा रसे तिक्ता कषाया मधुरा कटुः । विपाकशमनी शीता लघ्वी मारुतकोपनी ॥ १ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

बस्ताक्षी वृषगन्धाख्या मेषाक्षी वृत्तपत्रिका । अजाक्षी बोकडी चैव स्यादित्येषा षडाह्वया ॥ २ ॥

गुणाः—बस्ताक्षी स्यात्कटुरसा कासदोषविनाशिनी । बीजदा गर्भजननी कीर्तिता भिषगुत्तमैः ॥ ३ ॥

गुडूच्यादिरयं वर्गः प्रथमः परिकीर्तितः ।
ऊर्ध्वाधोदोषहरणः सर्वामयविनाशनः ॥

इति रसवीर्यविपाकसहितैः राजनिघण्टुयुतधन्वन्तरीयनिघण्टौ गुडूच्यादिः प्रथमो वर्गः ॥ १ ॥

---

* * अस्या वृषमेधायास्तथाऽस्मिन्नेव वर्गे पूर्वे गतायाः (२४)चतुर्विंशतिसंख्यामितायाः शृङ्ग्याश्च परस्परसंबन्धत्वादत्र वर्गान्ते संगृहीता ।

---

[1] झ. वसार्हः ।

## अथ राजनिघण्टुसहितधन्वन्तरीयनिघण्टौ द्वितीयः शतपुष्पादिको वर्गः ।

### ( १ ) शतपुष्पा ।

शतपुष्पा मिशिर्घोषी[1] पीतिका माधवी[2] शिफा[3] । अतिच्छत्रा त्ववाक्पुष्पी शताह्वा कारवी स्मृता ॥ १ ॥

गुणाः—शताह्वा कटुका तिक्ता स्निग्धोष्णा श्लेष्मवातजित् । ज्वरनेत्रव्रणान्हन्ति वस्तिकर्मणि शस्यते ॥ २ ॥ शतपुष्पादलं चोक्तं वृष्यं मधुरगुल्मजित् । वातघ्नं दीपनं स्तन्यं[4] कफकृद्रुचिदायकम् ॥ ३ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

शताह्वा शतपुष्पा च मिसिर्घोषा च पोतिका । अहिच्छत्राऽप्यवाक्पुष्पी माधवी कारवी शिफा ॥ १ ॥ संघातपत्रिका छत्रा वज्रपुष्पा सुपुष्पिका । शतप्रसूना बहुला पुष्पाह्वा शतपत्रिका ॥ २ ॥ वनपुष्पा भूरिपुष्पा सुगन्धा सूक्ष्मपत्रिका । गन्धारिकाऽतिच्छत्रा च चतुर्विंशतिनामिका ॥ ३ ॥

गुणाः—शताह्वा तु कटुस्तिक्ता स्निग्धा श्लेष्मातिसारनुत् । ज्वरनेत्रव्रणघ्नी च वस्तिकर्मणि शस्यते ॥ ४ ॥

### ( २ ) मिश्रेया ।

मिश्रेया तालपर्णी तु तालपत्री मिशिस्तथा । शालेयः स च शालीनो नाम्ना शीतशिवो मतः ॥ ४ ॥

गुणाः—तिक्ता स्वादुर्हिमा वृष्या दुर्नामक्षयजिन्मिशी । क्षतक्षीणहिता बल्या वातपित्तास्रदोषजित्[5] ॥ ५ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

मिश्रेया तालपर्णी च तालपत्रा मिशिस्तथा । शालेया स्याच्छीतशिवा शालीना वनजा च सा ॥ ५ ॥ अवाक्पुष्पी मधुरिका छत्रा संहितपुष्पिका । सुपुष्पा सुरसा वन्या ज्ञेया पञ्चदशाह्वया ॥ ६ ॥

गुणाः—मिश्रेया मधुरा स्निग्धा कटुः कफहरा परा । वातपित्तोत्थदोषघ्नी प्लीहजन्तुविनाशनी ॥ ७ ॥

---

१ क. °षा पौति° । ख. °षा शोफिका । ग. ङ. °षा पोति° । २ ग. मागधी । ३ ख. °फा । आहिच्छत्रा ह्यवा° । ४ ङ. °न्यं पित्तकृ° । ५ ग. °षनुत् ।

## ( ३ ) वचा ।

वचोग्रगन्धा गोलोमी जटिलोग्रा च लोमशा । अन्या श्वेतवचा मेध्या षड्ग्रन्था हैमवत्यपि ॥ ६ ॥

गुणाः—वमनी कटुतिक्तोष्णा वातश्लेष्मरुजापहा । कण्ठ्या च मेध्या कृमिहृद्विबन्धाध्मानशूलनुत् ॥ ७ ॥ वचाद्वयं तु कटुकं रूक्षोष्णं मलमूत्रलम् । दीपनं कफवातघ्नं मेध्यापुष्पं च पाचनम् ॥ ८ ॥ जन्तुघ्नं चोग्रगन्धं स्याल्लघु कण्ठास्यरोगजित् ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

वचोग्रगन्धा गोलोमी जटिलोग्रा च लोमशा । रक्षोघ्नी विजया भद्रा मङ्गल्येति दशाह्वया ॥ ८ ॥

गुणाः—वचा तिक्ता कटूष्णा च कफामग्रन्थिशोफनुत् । वातज्वरातिसारघ्नी वान्तिकृन्मादभूतनुत् ॥ ९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

### मेध्या ( वचाविशेषः ) ॥ १ ॥

मेध्या श्वेतवचा त्वन्या षड्ग्रन्था दीर्घपत्रिका । तीक्ष्णगन्धा हैमवती मङ्गल्या विजया च सा ॥ १० ॥

गुणाः—श्वेतवचाऽतिगुणाढ्या मतिमेधायुःसमृद्धिदा कफनुत् । वृष्या च वातभूतक्रिमिदोषघ्नी च दीपनी च वचा ॥ ११ ॥

## ( ४ ) हपुषा ।

हपुषा विपुषा विश्रा[1] विश्रगन्धाऽतिगन्धिका । अपरा चाश्वत्थफला कच्छुघ्मा[2] ध्वाङ्क्षनाशिनी ॥ ९ ॥

गुणाः—हपुषा कटुतिक्तोष्णा गुरुर्वातबलासजित् । अर्शांसि गुल्मशूलानि हन्ति जन्तूदरैः सह ॥ १० ॥ प्लीहोदरविबन्धघ्नी शूलगुल्मार्शसां हिता ।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

हपुषा विपुषा विश्रा विश्रगन्धा विगन्धिका । अन्या चासौ स्वल्पफला कच्छुघ्नी ध्वाङ्क्षनाशिनी ॥ १२ ॥ प्लीहशत्रुर्विषघ्नी च कफघ्नी चापराजिता । पूर्वा तु पञ्चनाम्नी स्यादपरा सप्तधाभिधा ॥ १२ ॥

गुणाः—हपुषा कटुतिक्तोष्णा गुरुः श्लेष्मबलासजित् । प्रदरोदरविड्बन्धशूलगुल्मार्शसां हरा ॥ १४ ॥

---

१ छ. विश्वा मिश्रं । २ ङ. कच्छुघ्नी ।

## ( ५ ) विडङ्गा ।

विडङ्गं जन्तुहन्त्री च कृमिघ्नी चित्रतण्डुला । तण्डुली कृमिहाऽमोघा कैरला मृगगामिनी ॥ ११ ॥

गुणाः—रूक्षोष्णं कटुकं पाके लघु वातकफापहम् । ईषत्तिक्तं विषान्हन्ति विडङ्गं कृमिनाशनम् ॥ १२ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

विडङ्गा कृमिहा चित्रतण्डुला तण्डुलीयका । वातारिस्तण्डुला प्रोक्ता जन्तुघ्नी मृगगामिनी ॥ १५ ॥ कैरली गहराऽमोघा कपाली चित्रतण्डुला । वरा सुचित्रबीजा च जन्तुहन्त्री च षोडश ॥ १६ ॥

गुणाः—विडङ्गा कटुरुष्णा च लघुर्वातकफार्तिनुत् । अग्निमान्द्यारुचिभ्रान्तिकृमिदोषविनाशनी ॥ १७ ॥

## ( ६ ) कुटजः ।

कुटजः कौटजः कौटो वत्सको गिरिमल्लिका । कलिङ्गो मल्लिकापुष्प इन्द्रवृक्षोऽथ वृक्षकः ॥ १३ ॥

गुणाः—कुटजः कटुजस्तिक्तः कषायो रूक्षशीतलः । कुष्ठातीसारपित्तास्रगुदजानि विनाशयेत् ॥ १४ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

कुटजः कौटजः शक्रो वत्सको गिरिमल्लिका । कलिङ्गो मल्लिकापुष्पः प्रावृष्यः शक्रपादपः ॥ १८ ॥ वरतिक्तो यवफलः संग्राही पाण्डुरद्रुमः । प्रावृषेण्यो महागन्धः स स्यात्पञ्चदशाभिधः ॥ १९ ॥

गुणाः—कुटजः कटुतिक्तोष्णः कषायश्चातिसारजित् । तत्रासितोऽस्रपित्तघ्नस्त्वग्दोषार्शोनिकृन्तनः ॥ २० ॥

## ( ७ ) इन्द्रयवः ।

फलानि तस्येन्द्रयवाः शक्राह्वाः स्युः कलिङ्गकाः । तथा वत्सकबीजानि प्रोक्ता भद्रयवास्तथा ॥ १५ ॥ वल्लजं गह्वरं चैव सा चोक्ता कृष्णतण्डुला ।

गुणाः—शक्राह्वाः कटुतिक्तोष्णास्त्रिदोषघ्नाश्च दीपनाः । रक्तार्शांस्यतिसारं च घ्नन्ति शूलवमीस्तथा ॥ १६ ॥

---

१ ख. कटूष्णं । २ ट. 'हा चैत्रा त' । ३ ग. 'टजो गिरिजो वत्सव' । ४ क. ख. घ. ङ. 'को हिमम' । ५ 'यो गुरुशी' । ६ क. ङ. विशोधयेत् ।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

इन्द्रयवा तु शक्राह्वा शक्रबीजानि वत्सकः । तथा वत्सकबीजानि भद्रजा कुटजाफलम् ॥ २१ ॥ ज्ञेया भद्रयवा चैवं बीजान्ता कुटजाभिधा । तथा कलिङ्गबीजानि पर्यायैर्दशधाभिधा ॥ २२ ॥

गुणाः—इन्द्रयवा कटुस्तिक्ता शीता कफवातरक्तपित्तहरा । दाहातिसारशमनी नानाज्वरदोषशूलमूलघ्नी ॥ २३ ॥

## ( ८ ) यवक्षारः ( त्रिक्षारान्तर्गतः )

यवक्षारः स्मृतः पाक्यो यवजो यावशूकजः । यवाह्वः शूकजो यव्यो यावशूको यवाग्रजः ॥ १७ ॥

गुणाः—यवक्षारः कटूष्णश्च कफवातोदरार्तिजित् । आमशूलाश्मरीकृच्छ्रविषदोषहरः सरः ॥ १८ ॥ उष्णो विरूक्षणस्तीक्ष्णो दीपनः कफवातजित् । पित्तास्रदूषणो हृद्यो यवजः क्षार उच्यते ॥ १९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

यवक्षारः स्मृतः पाक्यो यवजो यवसूचकः । यवशूको यवाह्वश्च यवापत्यं यवाग्रजः ॥ २४ ॥

गुणाः—यवक्षारः कटूष्णश्च कफवातोदरार्तिनुत् । आमशूलाश्मरीकृच्छ्रविषदोषहरः सरः ॥ २५ ॥

## ( ९ ) सर्जिक्षारः ( त्रिक्षारान्तर्गतः )

क्षारोऽन्यः सर्जिकाक्षारः सर्जिकाऽथ सुवर्चिका । सुवर्चिकः सुवर्चोऽथ सुखवर्चः स एव च ॥ २० ॥

गुणाः—सर्जिकोष्णा कटुः क्षाररसा वातकफौ जयेत् । गुल्माध्मानकृमीन्मान्द्यमेदोजठरनाशिनी ॥ २१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

स्वर्जिक्षारः स्वर्जिकश्च क्षारस्वर्जी सुखार्जिकः । सुवर्चिकः सुवर्ची च सुखवर्चा वसूपमः ॥ २६ ॥

गुणाः—स्वर्जिकः कटुरुष्णश्च तीक्ष्णो वातकफार्तिनुत् । गुल्माध्मानकृमीन्हन्ति व्रणजाठरदोषनुत् ॥ २७ ॥

---

१ क. ङ. °वजः शूकजः स्मृतः । य° । २ ङ. परः । ३ क. ख. ग. स उच्यते । गु° ।

## ( १० ) †टङ्कणः ( त्रिक्षारान्तर्गतः )

टङ्कणष्टङ्कणक्षारो मालतीरससंभवः। द्रावी द्रावणकश्चैव लोहानां शुद्धिकारकः ॥ २२ ॥

गुणाः—कथितष्टङ्कणक्षारः कटूष्णः कफनाशनः। स्थावरादिविषघ्नश्च कासश्वासापहारकः ॥ २३ ॥ विरूक्षणोऽनिलहरः श्लेष्महा पित्तदूषणः। अग्निदीप्तिकरस्तीक्ष्णष्टङ्कणक्षार उच्यते ॥ २४ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

टङ्कणष्टङ्कणक्षारो रङ्गक्षारो रसाधिकः। लोहद्रावी रसघ्नश्च सुभगो रङ्गदश्च सः ॥ २८ ॥ वर्तुलं कणकक्षारं मलिनं धातुवल्लभम्। त्रयोदशाह्वयश्चात्र कथितं तु भिषग्वरैः ॥ २९ ॥

गुणाः—कथितष्टङ्कणक्षारः कटूष्णः कफनाशनः। स्थावरादिविषघ्नश्च कासश्वासापहारकः ॥ ३० ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

### टङ्कणम् ( टङ्कणभेदः ) ॥ २ ॥

द्वितीयं टङ्कणं श्वेतं श्वेतकं श्वेतटङ्कणम्[१]। लोहशुद्धिकरं सिन्धुमालतीतीरसंभवम् ॥ ३१ ॥ शिवं च द्रावकं प्रोक्तं शितक्षारं[२] दशाभिधम् ॥

गुणाः—सुश्वेतं टङ्कणं स्निग्धं कटूष्णं कफवातनुत्। आमक्षयापहृच्छ्वासविषकासमलापहम् ॥ ३२ ॥

## ( ११ ) सैन्धवम्।

सैन्धवं सिन्धु सिन्धूत्थं नादेयं सिन्धुजं शिवम्। शुद्धं शीतशिवं चान्यन्माणिमन्थं शिलात्मकम्[३] ॥ २५ ॥

गुणाः—सैन्धवं शिशिरं स्निग्धं लघु स्वादु त्रिदोषजित्। हृद्यं हृन्नेत्ररोगघ्नं व्रणारोचकनाशनम् ॥ २६ ॥ सैन्धवं स्वादु चक्षुष्यं वृष्यं रोचनदीपनम्। अविदाहि विबन्धघ्नं सुखदं स्यात्त्रिदोषजित् ॥ २७ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

सैन्धवं स्याच्छीतशिवं नादेयं सिन्धुजं शिवम्। शुद्धं शिवात्मजं पथ्यं मणिमन्थं नवाभिधम् ॥ ३३ ॥

---

† टङ्कणशोधनम्—टङ्कणं वह्नियोगेन स्फुटितं शुद्धतां व्रजेत्। टङ्कणोऽग्निकरो रूक्षः कफघ्नो वातपित्तकृत् ॥ १ ॥

---

१ घ. 'वः। सौभाग्यद्रावक'। २ ज. सितक्षारं। ३ क. ख. घ. शिवात्मजम्। ग. शिलालकम्।

गुणाः—सैन्धवं लवणं वृष्यं चक्षुष्यं रुचिदीपनम् । त्रिदोषशमनं पूतं व्रणदोषविबन्धजित् ॥ ३४ ॥ सैन्धवं द्विविधं ज्ञेयं शीतं रक्तमिति क्रमात् । रसवीर्यविपाकेषु गुणाढ्यं पूतनं शिवम् ॥ ३५ ॥

## ( १२ ) बिडम् ( विडम् )

विडं कृत्रिमकं धूर्तं क्षारं द्रा[1]वणमासुरम् । सुपाक्यं खण्डलवणं कृ[2]तकं चेति नामतः ॥ २८ ॥

गुणाः—सक्षारं दीपनं[3] शूलहृद्रोगकफनाशनम् । रोचनं तीक्ष्णमुष्णं च बिडं वातानुलोमनम् ॥ २९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

विडं द्राविडकं खण्डं कृतकं क्षारमासुरम् । सुपाक्यं खण्डलवणं धूर्तं कृत्रिमकं दश ॥ ३६ ॥

गुणाः—विडमुष्णं च लवणं दीपनं वातनाशनम् । रुच्यं चाजीर्णशूलघ्नं गुल्ममेहविनाशनम् ॥ ३७ ॥

## ( १३ ) अक्षम् ।

अक्षं सौवर्चलं प्रोक्तं रुचकं हृद्यगन्धकम् । तिलकं कृष्णलवणं तत्काल-लवणं स्मृतम् ॥ ३० ॥

गुणाः—लघु सौवर्चलं पाके वीर्योष्णं विषदं कटु । गुल्मशूलविबन्धघ्नं हृद्यं सुरभि रो[4]चनम् ॥ ३१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

सौवर्चलं तु रुचकं तिलकं हृद्यगन्धकम् । अक्षं च कृष्णलवणं रु[5]च्यकं द्राविकं तथा ॥ ३८ ॥

गुणाः—सौवर्चलं लघु क्षारं कटूष्णं गुल्मजन्तुजित् । ऊर्ध्ववातामशूलार्ति-विबन्धारोचकाञ्जयेत् ॥ ३९ ॥

## ( १४ ) उद्भिदम् ( औद्भिदम् )

*औ[6]द्भिदं पांशुलवणं रोमकं वसुकं वसु । उखरं पांसवक्षारमौर्वं[7] सार्व-गुणं तथा ॥ ३२ ॥

---

* आयुर्वेदविज्ञाने—औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयम् ।

---

१ ख. ग. छ. द्राविडमा° । २ ख. कृत्रिमं । ३ ग. छ. झ. °नं सूक्ष्मं हृ° । ४ ङ. रेचनम् । ५ ञ. रुच्यं कादवि° । ६ झ. उद्भिदं । ७ क. ख. ङ. °र्वे सर्वगुणोत्तरम् । गु° ।

गुणाः—लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् । सतिक्तं कटुकं क्षारं विद्याल्लवणमौद्भिदम् ॥ ३३ ॥ पांशुजं तिक्तमत्युग्रं व्यवायि कटु पाचितम् ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

रोमकमौद्भिदमुक्तं बसुकं बसु पांशुलवणमूखरजम् । पांसवमौखरमैरिणमौर्वं सार्वंसहं रुद्रैः ॥ ४० ॥

गुणाः—रोमकं तीक्ष्णमत्युष्णं कटु तिक्तं च दीपनम् । दाहशोषकरं ग्राहि पित्तकोपकरं परम् ॥ ४१ ॥

## ( १५ ) सामुद्रलवणम् ।

सामुद्रलवणं प्राहुः क्षारं च शिशिरं तथा । समुद्रजं सागरजं लवणोदधिसंभवम् ॥ ३४ ॥

गुणाः—सामुद्रलवणं पाके नात्युष्णमविदाहि च । भेदनं स्निग्धमीषच्च शूलघ्नं नातिपित्तलम् ॥ ३५ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

सामुद्रकं तु सामुद्रं समुद्रलवणं शिवम् । वंशिरं सागरोत्थं च शिशिरं लवणाब्धिजम् ॥ ३८ ॥

गुणाः—सामुद्रं लघु हृद्यं च पलितास्रदपित्तदम् । विदाहि कफवातघ्नं दीपनं रुचिकृत्परम् ॥ ४३ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

## नीलकाचोद्भवम् । (लवणविशेषः) ॥ ३ ॥

नीलकाचोद्भवं काचतिलकं काचसंभवम् । काचसौवर्चलं कृष्णलवणं पाक्यजं स्मृतम् ॥४४॥ काचोत्थं हृद्यगन्धं च तत्काललवणं तथा । कुरुविन्दं काचमलं कृत्रिमं च चतुर्दश ॥ ४५ ॥

गुणाः—काचादिलवणं रुच्यमीषत्क्षारं च पित्तलम् । दाहकं कफवातघ्नं दीपनं गुल्मशूलहृत् ॥ ४६ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

## गाढलवणम् (लवणविशेषः ) ॥ ४ ॥

गाढादिलवणं शुभ्रं पृथ्वीजं गडदेशजम् । गडोत्थं च महारम्भं साम्भरं सम्भरोद्भवम् ॥ ४७ ॥

गुणाः—गडोत्थं तृष्णलवणमीषदम्लं मलापहम् । दीपनं कफवातघ्नमर्शोघ्नं कोष्ठशोधनम् ॥ ४८ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

## द्रौणेयम् ( लवणविशेषः ) ॥ ५ ॥

द्रौणेयं वार्धेयं द्रोणीजं वारिजं च वार्धिभवम्। द्रोणीलवणं द्रौणं त्रिकूटलवणं च वसुसंज्ञम् ॥ ४९ ॥

गुणाः—द्रौणेयं लवणं पाके नात्युष्णमविदाहि च। भेदनं स्निग्धमीषच्च शूलघ्नं चाल्पपित्तलम् ॥ ५० ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

## औषरकम् ( लवणविशेषः )॥ ६ ॥

औषरकं सार्वगुणं सार्वरसं सर्वलवणमूखरजम्। साम्भारं बहुलवणं मेलकलवणं च मिश्रकं नवधा ॥ ५१ ॥

गुणाः—औषरं तु कटु क्षारं तिक्तं वातकफापहम्। विदाहि पित्तकृद्ग्राहि मूत्रसंशोषकारि च ॥ ५२ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

## लवणारम् ( लवणविशेषः ) ॥ ७ ॥

लवणारं लवणोत्थं लवणासुरजं च लवणभेदश्च। जलजं लवणक्षारं लवणं च क्षारलवणं च ॥ ५२ ॥

गुणाः—लोणारक्षारमत्युष्णं तीक्ष्णं पित्तमरुद्धिदम्। क्षारं लवणमीषच्च वातगुल्मादिदोषनुत् ॥ ५४ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

## वज्रकम् । ( लवणविशेषः ) ॥ ८ ॥

वज्रकं वज्रकक्षारं क्षारश्रेष्ठं विदारकम्। सारं चन्दनसारं च धूमोत्थं धूमजं[1] गजा ॥ ५५ ॥

गुणाः—वज्रकं क्षारमत्युष्णं तीक्ष्णं क्षारं च रोचनम्[2]। गुल्मोदरातिविष्टम्भशूलप्रशमनं सरम् ॥ ५६ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

## सर्वक्षारः। ( लवणविशेषः ) ॥ ९ ॥

सर्वक्षारो बहुक्षारः समूहक्षारकस्तथा। स्तोमक्षारो महाक्षारो मलारिः क्षारमेलकः ॥ ५७ ॥

---

१ ट. धूमभङ्गजा। २ झ. रेचनम्।

गुणाः—सर्वक्षारो ह्यतिक्षारश्चक्षुष्यो बस्तिशोधनः । गुदावर्तकृमिघ्नश्च मलवस्त्रविशोधनः ॥ ५८ ॥

## ( १६ )*हिङ्गु ।

हिङ्गु रामठमत्युग्रं जन्तुघ्नं भूतनाशनम् । अगूढगन्धं बाह्लीकं जरणं सूपधूपनम् ॥ ३६ ॥

गुणाः—हिङ्गूष्णं कटुकं हृद्यं सरं वातकफौ कृमीन् । हन्ति गुल्मोदराध्मानबन्धशूलहृदामयान् ॥ ३७ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

हिङ्गूग्रगन्धं भूतारिर्बाह्लीकं जन्तुनाशनम् । शूलगुल्मादिरक्षोघ्नमुग्रवीर्यं च रामठम् ॥ ५९ ॥

अगूढगन्धं जरणं भेदनं सूपधूपनम् । दीप्तं सहस्रवेधीति ज्ञेयं पञ्चदशाभिधम् ॥ ६० ॥

गुणाः—हृद्यं हिङ्गु कटूष्णं च कृमिवातकफापहम् । विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्मनाशनम् ॥ ६१ ॥

## ( १७ ) हिङ्गुपत्री ( हिङ्गी )

हिङ्गुपत्री तु कबरी पृथ्वीका पृथुला पृथुः । बाष्पिका दीर्घिका तन्वी बिल्विका दारुपत्रिका ॥ ३८ ॥

गुणाः—बाष्पिका कटुतीक्ष्णोष्णा हृद्या वातकफापहा । कृमिप्लीहविबन्धार्शोगुल्महृद्बस्तिशूलनुत् ॥ ३९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

पृथ्वीका हिङ्गुपत्री च कबरी दीर्घिका पृथुः । तन्वी च दारुपत्री च बिल्वी बाष्पी नवाह्वया ॥ ६२ ॥

गुणाः—हिङ्गुपत्री कटुस्तीक्ष्णा तिक्तोष्णा कफवातनुत् । आमकृमिहरा रुच्या पथ्या दीपनपाचनी ॥ ६३ ॥

## ( १८ ) नाडीहिङ्गुः ।

नाडीहिङ्गु पलाशो तु जन्तुका रामठी च सा । वंशपत्री वेणुपत्री पिण्डहिङ्गु शिवाटिका ॥ ४० ॥

---

*हिङ्गुशोधनम्—अङ्गारस्थे लौहपात्रे सघृते रामठं क्षिपेत् ।
चालयेत्किंचिदारक्तवर्णं योगेषु योजयेत् ॥ १ ॥

---

१ क. ङ. शूलनाशनम् । २ क. ख. घ. ङ. 'शाख्यो ज' ।

गुणाः—नाडीहिङ्गु कटूष्णं च कफवातार्तिशान्तिकृत् । विष्टम्भनाविबन्धामदोषघ्नं दीपनं परम् ॥ ४१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

नाडीहिङ्गु पलाशाख्या जन्तुका रामठी च सा । वंशपत्री च पिण्डाह्वा सुवीर्या हिङ्गुनाडिका ॥ ६४ ॥

गुणाः—नाडीहिङ्गु कटूष्णं च कफवातार्तिशान्तिकृत् । विष्ठाविबन्धदोषघ्नमानाहामयहारि च ॥ ६५ ॥

## ( १९ ) तुम्बुरुः ।

*तुम्बरुः सौरभः सौरो वनजः सानुजो द्विजः । *तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः ॥ ४२ ॥

गुणाः—तुम्बरुः कटुतीक्ष्णोष्णः कफमारुतशूलजित् । अपतन्द्रोदराध्मानकृमिघ्नो वह्निदीपनः ॥ ४३ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

* * ॥ ६६ ॥ स्फुटफलः सुगन्धिश्च स प्रोक्तो द्वादशाह्वयः ।

गुणाः—तुम्बरुर्मधुरस्तिक्तः कटूष्णः कफवातनुत् । शूलगुल्मोदराध्मानकृमिघ्नो वह्निदीपनः ॥ ६७ ॥

## ( २० ) सूक्ष्मैला ।

सूक्ष्मैला द्राविडी तुत्था कोरङ्गी बहुला त्रुटिः । एला कपोतवर्णा च चन्द्रबाला च निष्कुटी ॥ ४४ ॥

गुणाः—सूक्ष्मैला मूत्रकृच्छ्रघ्नी श्वासकासक्षये हिता । सूक्ष्मैला शीतला स्वादुहृद्या रोचनदीपनी ॥ ४५ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

एला बहुलगन्धैन्द्री द्राविडी निष्कुटिस्त्रुटिः । कपोतवर्णी गौराङ्गी बाला बलवती हिमा ॥ ६८ ॥ चन्द्रिका चोपकुञ्ची च सूक्ष्मसागरगामिनी । गर्भारिर्गन्धफलिका कायस्थाऽष्टादशाह्वया ॥ ६९ ॥

## भद्रैला ( एलाविशेषः ) ॥ १० ॥

भद्रैला बृहदेला तु त्रिपुटा त्रिपुटोद्भवा । स्थूलैला त्वक्सुगन्धा च पृथ्वीका कन्यका पुटा ॥ ४६ ॥

गुणाः—एला तिक्ता च लघ्वी स्यात्कफवातविषव्रणान् । बस्तिकण्डुरुजो हन्ति मुखमस्तकशोधनी ॥ ४७ ॥

---

१ ग. घ. ङ. 'तन्त्रोद' । २ क. ङ. त्रिदिवा । ३ क. ङ. 'कण्ठरु' ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

स्थूलैला बृहदेला त्रिपुटा त्रिदिवोद्भवा च भद्रैला । सुरभित्वक्च महैला पृथ्वी कन्या कुमारिका चैन्द्री ॥ ७० ॥ कायस्था गोपुटा कान्ता घृताची गर्भसंभवा । इन्द्राणी दिव्यगन्धा च विज्ञेयाऽष्टादशाह्वया ॥ ६७ ॥

एलाद्वयगुणाः—एलाद्वयं शीतलतिक्तमुक्तं सुगन्धि पित्तार्तिकफापहारि । करोति हृद्रोगमलार्तिबस्तिपुंस्त्वघ्नमत्र स्थविरा गुणाढ्या ॥ ७२ ॥

## ( २१ ) नागपुष्पम् ( अनुराधा )

नागपुष्पं मतं नागं केसरं नागकेसरम् । चाम्पेयं नागकिञ्जल्कं कनकं हेम काञ्चनम् ॥ ४८ ॥

गुणाः—नागकेसरमल्पोष्णं लघु तिक्तं कफापहम् । बस्तिरुग्विषवातास्र-कण्डूघ्नं शोफनाशनम् ॥ ४८ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

किञ्जल्कं कनकाह्वं च केसरं नागकेसरम् । चाम्पेयं नागकिञ्जल्कं नागीयं काञ्चनं तथा ॥ ७३ ॥ सुवर्णं हेमकिञ्जल्कं रुक्मं हेम च पिञ्जरम् । फणिप-नगयोगादिकेसरं पञ्चभूह्वयम् ॥ ७४ ॥

गुणाः—नागकेसरमल्पोष्णं लघु तिक्तं कफापहम् । बस्तिवातामयघ्नं च कण्ठशीर्षरुजापहम् ॥ ७५ ॥

## ( २२ ) त्वक् ।

त्वचं वराङ्गं भृङ्गं त्वक्चोचं शकलमुत्कटम् । सैहलं लाटपर्णं च मुखशोध्यं वनप्रियम् ॥ ५० ॥

गुणाः—वराङ्गं लघु तीक्ष्णोष्णं कफवातविषापहम् । कण्ठवक्त्ररुजो हन्ति शिरोरुग्बस्तिशोधनम् ॥ ५१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

त्वचं त्वग्वल्कलं भृङ्गं वराङ्गं मुखशोधनम् । शकलं सैहलं वन्यं सुरसं रामवल्लभम् ॥ ७६ ॥ उत्कटं बहुगन्धं च विज्जुलं च वनप्रियम् । लाटपर्णं गन्धवल्कं वरं शीतं वसुक्षिती ॥ ७७ ॥

गुणाः—त्वचं तु कटुकं शीतं कफकासविनाशनम् । शुक्रामशमनं चैव कण्ठशुद्धिकरं लघु ॥ ७८ ॥

---

१ क. घ. ङ. °मत्युष्णं । २ क. शोषनाशनम् । झ. शीर्षरेचकम् । ३ क. ङ. °ध्यं वरं प्रि° । ४ क. ग. ङ. कण्ठ° ।

## ( २३ ) तमालपत्रम् ( पत्रजम् )

तमालपत्रं पत्रं स्यात्पलाशं छदनं दलम् । रामं तापसजं वासो गोपनं[1] वस्त्र-मंशुकम् ॥ ५२ ॥

गुणाः—पत्रकं कफवातार्शोहृल्लासारोचकापहम् ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

पत्रं तमालपत्रं च पत्रकं छदनं दलम् । पलाशमंशुकं वासस्तापसं सुकुमार-कम् ॥ ७९ ॥ वस्त्रं तमालकं रामं गोपनं वसनं तथा । तमालं सुरभिगन्धं ज्ञेयं सप्तदशाह्वयम् ॥ ८० ॥

गुणाः—पत्रकं लघु तिक्तोष्णं कफवातविषापहम् । बस्तिकण्डूतिदोषघ्नं मुख-मस्तकशोधनम् ॥ ८१ ॥

## ( २४ ) तालीसकम् ।

तालीसकं तु तालीसं पत्रं तालीसपत्रकम् । नीलमामलकीपत्रं पत्राढ्यं च शुकोदरम् ॥ ५३ ॥

गुणाः—तालीसं श्वासकासघ्नं दीपनं श्लेष्मपित्तजित्[2] । मुखरोगहरं हृद्यं सुपत्रं पत्रसंवृतम् ॥ ५४ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

तालीसपत्रं तालीसं पत्राख्यं च शुकोदरम् । धात्रीपत्रं चार्कवेधं करिपत्रं घनच्छदम् ॥ ८२ ॥ नीलं नीलाम्बरं तालं तालीपत्रं तैलाह्वयम्[3] । तालीसप-त्रकस्येति नामान्याहुश्चतुर्दश ॥ ७९ ॥

गुणाः—तालीसपत्रं तिक्तोष्णं मधुरं कफवातनुत् । कासहिक्काक्षयश्वासच्छ-र्दिदोषविनाशकृत् ॥ ८४ ॥

## ( २५ ) वंशरोचना ।

स्याद्वंशरोचना वांशी तुङ्गक्षीरी[4] तुगा शुभा । त्वक्क्षीरी वंशजा शुभ्रा वंश-क्षीरी च वैणवी[5] ॥ ५५ ॥ वंशक्षीरी स्मृता वंश्या यवजा यवसंभवा । गोधूम-संभवा चान्या षष्टितण्डुलजोद्भवा ॥ ५६ ॥

गुणाः—कषाया मधुरा तिक्ता कासघ्नी वंशलोचना । मूत्रकृच्छ्रक्षयश्वासहिता बल्या च बृंहणी ॥ ५७ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

---

१ झ. गोपानां । २ ङ. 'ष्मवातजि' । ३ ज. ट. लताह्वयं । ४ झ. तुगाक्षी' । ५ क. ङ. वैष्णवी ।

स्याद्वंशरोचना वांशी तुङ्गक्षीरी तुगा शुभा । त्वक्क्षीरी वंशगा शुक्रा वंशक्षीरी च वैणवी ॥ ८५ ॥ त्वक्सारा कर्मरी श्वेता वंशकर्पूररोचना । तुङ्गा रोचनिका पिङ्गा नवेन्दुर्वंशशर्करा ॥ ८६ ॥

गुणाः—स्याद्वंशरोचना रूक्षा कषाया मधुरा हिमा । रक्तशुद्धिकरी तापपित्तोद्रेकहरा शुभा ॥ ८७ ॥

## पलाशगन्धा ( वंशरोचनाविशेषः ) ॥ ११ ॥

अन्या पलाशगन्धा च तवक्षीरी प्रकीर्तिता ।

गुणाः—त्वक्क्षीरी मधुरा रूक्षा कषायाऽस्रारुचिव्रणान् । पित्तश्वासक्षयान्हन्ति कासदाहनिषूदनी ॥ ५८ ॥ तुगाक्षीरी क्षयश्वासकासघ्नी मधुरा हिमा ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

तवक्षीरं पयःक्षीरं यवजं गवयोद्भवम् । अन्यद्गोधूमजं चान्यत्पिष्टिकातण्डुलोद्भवम् ॥ ८८ ॥ अन्यच्च तालसंभूतं तालक्षीरादिनामकम् । वनगोक्षीरजं श्रेष्ठमभावेऽन्यदुदीरितम् ॥ ८९ ॥

गुणाः—तवक्षीरं तु मधुरं शिशिरं दाहपित्तनुत् । क्षयकासकफश्वासनाशनं चास्रदोषनुत् ॥ ९० ॥

## ( २६ ) उपकुञ्ची ।

उपकुञ्चा चोपकुञ्ची कालिका चोपकालिका । सुषवी[2] कुञ्चिका कुञ्ची पृथ्वीका स्थूलजीरकः ॥ ५९ ॥

गुणाः—पृथ्वीका कटुका पाके रुच्या पित्ताग्निदीपनी । श्लेष्माध्मानहरा जीर्णा जन्तुघ्नी च प्रकीर्तिता ॥ ६० ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

दीप्योपकुञ्चिका काली पृथ्वी स्थूलकणा पृथुः । मनोज्ञा जारणी जीर्णा तरुणः स्थूलजीरकः ॥ ९१ ॥ सुषवी कारवी ज्ञेया पृथ्वीका च चतुर्दश ।

गुणाः—पृथ्वीका कटुतिक्तोष्णा वातगुल्मामदोषनुत् । श्लेष्माध्मानहरा जीर्णा जन्तुघ्नी दीपनी परा ॥ ९२ ॥

## ( २७ ) दाडिमः ।

दाडिमो दाडिमीसारः कुट्टिमः फलै[3]शाडवः । स्वाद्वम्लो रक्तबीजश्च करकः शुकवल्लभः ॥ ६१ ॥

---

१ झ. 'कुञ्चीकोप' । २ क.ड. 'वी कारवी कु' । ३ क. ड. 'लकाण्डवः । ग. ' लखाण्डवः ।

गुणाः—स्निग्धोष्णं दाडिमं हृद्यं कफपित्तविरोधि च । द्विविधं तच्च विज्ञेयं मधुरं चाम्लमेव च ॥ ६२ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

दाडिमो दाडिमीसारः कुट्टिमः फलशाडवः । करको रक्तबीजश्च सुफलो दन्तबीजकः ॥ ९३ ॥ मधुबीजः कुचफलो रोचनः शुकवल्लभः । मणिबीजस्तथा वल्कफलो वृत्तफलश्च सः ॥ ९४ ॥ सुनीलो नीलपत्रश्च ज्ञेयः सप्तदशाह्वयः ।

गुणाः—दाडिमं मधुरमम्लकषायं कासवातकफपित्तविनाशि । ग्राहि दीपनकरं च लघूष्णं शीतलं श्रमहरं रुचिदायि ॥ ९५ ॥ दाडिमं द्विविधमीरितमार्यैरम्लमेकमपरं मधुरं च । तत्र वातकफहारि किलाम्लं तापहारि मधुरं लघु पथ्यम् ॥ ९६ ॥ ग्रथान्तरे—अल्मं कषायं मधुरं वातघ्नं ग्राहि दीपनम् ।

## ( २८ ) धान्यकम् ।

धान्यकं धान्यका धान्या धानी धानेयकं तथा । कुस्तुबुरुश्चाल्लुका च च्छत्रधान्यं वितुन्नकम् ॥ ६३ ॥

गुणाः—आर्द्रा कुस्तुम्बुरुः कुर्यात्स्वादुः सौगन्ध्यहृद्यताम् । सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशिनी ॥ ६४ ॥ धान्यकं कासतृट्छर्दिज्वरहृच्चक्षुषो हितम् । कषायं तिक्तमधुरं हृद्यं रोचनदीपनम्[2] ॥ ६५ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

धान्यकं धान्यजं धान्यं धानेयं धनिकं तथा । कुस्तुम्बुरुश्चावलिका छत्रधान्यं वितुन्नकम् ॥ ९७ ॥ सुगन्धिः शाकयोग्यश्च सूक्ष्मपत्रो जनप्रियः । धान्यबीजो बीजधान्यं वेधकं षोडशाह्वयम् ॥ ९८ ॥

गुणाः—धान्यकं मधुरं शीतं कषायं पित्तनाशनम् । ज्वरकासतृषाछर्दिकफहारि च दीपनम् ॥ ९९ ॥

## ( २९ ) जीरकम् ।

जीरकं दीर्घकं ह्यमजाजी दीप्यमागधम् । मनोज्ञं वरुणं रुच्यं पीताभं पूज्यमानकम् ॥ ६६ ॥

गुणाः—जीरकं कटु रुक्षं च वातहृद्दीपनं परम् । गुल्माध्मानातिसारघ्नं ग्रहणीकृमिहृत्परम् ॥ ६७ ॥

---

१ क. ग. ङ. 'च्छत्रान्यं तु विन्न' । २ दीपनपाचनम् ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

जीरको जरणो जीरो जीर्णो दीप्यश्च दीपकः । अजाजिको वह्निशङ्को माग-
धश्च नवाह्वयः ॥ १०० ॥

गुणाः—जीरकः कटुरुष्णश्च वातहृद्दीपनः परः । गुल्माध्मानातिसारघ्नो ग्रहणीकृमिहृत्परः ॥ १०१ ॥

**शुक्लः** ( जीरकविशेषः ) ॥ १२ ॥

शुक्लाजाजी कणा ख्याता दीर्घकः कणजीरकः । स्तन्यो दीर्घकणा गौर-
जीरको दीर्घजीरकः ॥ ६८ ॥

गुणाः—गौराजाजी हिमा रुच्या कटुर्मधुरदीपनी । कृमिघ्ना विषहन्त्री च चक्षुष्याऽऽध्माननाशिनी ॥ ६९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

गौरादिजीरकस्त्वन्योऽजाजी स्याच्छ्वेतजीरकः । कणाह्वा कणजीर्णा च कणा दीप्यः सितादिकः॥१०२॥ ज्ञेया दीर्घकणा चैव सिताजाजी नवाह्वया।

गुणाः—गौराजाजी हिमा रुच्या कटुर्मधुरदीपनी । कृमिघ्नी विषहन्त्री च चक्षुष्याऽऽध्माननाशिनी ॥ १०३ ॥

**कृष्णः** ( जीरकविशेषः ) ॥ १३ ॥

कृष्णाजाजी तु जरणा सुगन्धः कणजीरकः । काश्मीरजीरका वर्षा कालिः स्यात्कालपेशिका ॥ ७० ॥

गुणाः—जरणा कटुरुष्णा च कफशोफनिकृन्तनी । रुच्या जीर्णज्वरघ्नी च चक्षुष्या ग्राहिणी परा ॥ ७१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

कृष्णा तु जरणा काली बहुगन्धा च भेदिनी[२] । कटुभेदिनिका रुच्या नीला नीलकणा स्मृता ॥ १०४ ॥ काश्मीरजीरका वर्षा काली स्याद्दन्तशोधनी । कालमेषी सुगन्धा च विज्ञेया षोडशाभिधा ॥ १०५ ॥

गुणाः—जरणा कटुरुष्णा च कफशोफनिकृन्तनी । रुच्या जीर्णज्वरघ्नी च चक्षुष्या ग्रहणी परा ॥ १०६ ॥

**बृहत्पाली** ( जीरकविशेषः ) ॥ १४ ॥

बृहत्पाली सूक्ष्मपत्रा वन्यजीरः कणा तथा ।

---

१ झ. करजी° । २ झ. °नी । पटु° । ३ ट. स्याद्वान्त° ।

गुणाः—वन्यजीरः कटुः शीतो व्रणहा पञ्चनामकः ॥ ७२ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

बृहत्पाली क्षुद्रपत्रोऽरण्यजीरः कणा तथा ।

गुणाः—वनजीरः कटुः शीतो व्रणहा पञ्चनामकः ॥ १०७ ॥ जीरकादि-गुणाः—जीरकाः कटुकाः पाके कृमिघ्ना वह्निदीपनाः । जीर्णज्वरहरा रुच्या व्रणहाध्माननाशनाः ॥ १०८ ॥

## ( ३० ) पिप्पली ।

पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला । उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा ॥ ७३ ॥

गुणाः—पिप्पली कटुका स्वादुर्हिमा स्निग्धा त्रिदोषजित् । तृड्ज्वरोदरजन्त्वामनाशनी च रसायनी ॥ ७४ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

पिप्पली कृकरा शौण्डी चपला मागधी कणा । कटुबीजा च कोरङ्गी वैदेही तिक्ततण्डुला ॥ १०९ ॥ श्यामा दन्तफला कृष्णा कोला च मगधोद्भवा । उषणा चोपकुल्या च स्मृत्याह्वा तीक्ष्णतण्डुला ॥ ११० ॥

गुणाः—पिप्पली ज्वरहा वृष्या स्निग्धोष्णा कटुतिक्तका । दीपनी मारुतश्वासकासश्लेष्मक्षयापहा ॥ १११ ॥

## ( ३१ ) मूलम् ।

मूलं च पिप्पलीमूलं ग्रन्थिकं[1] चविकाशिरः[2] । कोलमूलं कटुग्रन्थि[3] सर्वग्रन्थिकमूषणम् ॥ ७५ ॥

गुणाः—कटूष्णं पिप्पलीमूलं श्लेष्मसंघातनाशनम् । वातोच्छित्तिकरं[4] हन्ति कृमीन्वह्निप्रदीप्तिकृत्[5] ॥ ७६ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

ग्रन्थिकं पिप्पलीमूलं मूलं तु चविकाशिरः[6] । कोलमूलं कटुग्रन्थि कटुमूलं कटूषणम् ॥ ११२ ॥ सर्वग्रन्थि च पत्राढ्यं विरूपं शोणसंभवम् । सुग्रन्थि ग्रन्थिलं चैव पर्यायाः स्युश्चतुर्दश ॥ ११३ ॥

गुणाः—कटूष्णं पिप्पलीमूलं श्लेष्मकृमिविनाशनम् । दीपनं वातरोगघ्नं रोचनं पित्तकोपनम् ॥ ११४ ॥

---

१ ख. ग. 'कं वटिका' । २ ख. ग. 'रः । कोल' । ३ ग. कणाग्र' । ४ क. ङ. 'तोपशमनं ह' । ५ क. 'मीनमिग्र' । ६ ट. वटिकाशिरः ।

## ( ३२ ) चविका ।

चविका कोलवल्ली च चव्यं चविकमेव च ।

गुणाः—चव्यं च कटुकोष्णं स्याज्जन्तुहृद्दीपनं परम्। कफोद्रेकहरं वातप्रकोपशमनं भवेत् ॥ ७७ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

चव्यकं चविका चव्यं वशिरो गन्धनाकुली । वल्ली च कोलवल्ली च कोलं [1]कुकरमस्तकम् ॥ ११५ ॥ तीक्ष्णा [2]करिकणा वल्ली कृकरो द्वादशाभिधा ।

गुणाः—चव्यं स्यादुष्णकटुकं लघु रोचनदीपनम् ॥ ११६ ॥ जन्तूद्रेकापहं कासश्वासशूलार्तिकृन्तनम् ।

### श्रेयसी ( हस्तिपिप्पली ) ( चविकाविशेषः ) ॥ १५ ॥

तस्याः ( चविकायाः ) फलं विनिर्दिष्टं श्रेयसी गजपिप्पली। अन्यच्च—तत्फलं श्रेयसी हस्तिमगधा गजपिप्पली । गजकृष्णा करिकणेभकणा द्विपपिप्पली ॥ ७८ ॥

गुणाः—गजपिप्पलिका स्वादुः कटुरुष्णा च कीर्तिता। बलासं हन्ति वातेन सार्धं जन्तुजयप्रदा ॥ ७९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

गजोषणा चव्यफला चव्यजा गजपिप्पली। श्रेयसी छिद्रवैदेही दीर्घग्रन्थिश्च तैजसी ॥ ११७ ॥ वर्तुली स्थूलवैदेही ज्ञेया चेति दशाभिधा ।

गुणाः—गजोषणा कटूष्णा च रूक्षा मलविशोषणी ॥ ११८ ॥ बलासवातहन्त्री च स्तन्यवर्णविवर्धिनी ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

### सैंहली ( पिप्पलीविशेषः ) ॥ १६ ॥

सैंहली सर्पदण्डा च सर्पाङ्गी ब्रह्मभूमिजा । पार्वती शैलजामूलं लम्बबीजा तथोत्कटा ॥ ११९ ॥ अद्रिजा सिंहलस्था च लम्बदन्ता च [3]जीवला। जीवला जीवनेत्रा च [4]कुरवी षोडशाह्वया ॥ १२० ॥

गुणाः—सैंहली कटुरुष्णा च जन्तुघ्नी दीपनी परा । कफश्वाससमीरार्तिशमनी कोष्ठशोधनी ॥ १२१ ॥

---

१ ज. ठ. कुटल्मस्तकम् । ट. कटुलमस्तकम् । २ झ करिणिका । ३ ट. जीवाली । ४ ज. ट. कुनखी ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

### वनादिपिप्पली ( पिप्पलीविशेषः ) ॥ १७ ॥

वनादिपिप्पल्यभिधानयुक्तं सूक्ष्मादिपिप्पल्यभिधानमेतत् । क्षुद्रादिपिप्पल्यभिधानयोज्यं वनाभिधापूर्वकणाभिधानम् ॥ १२२ ॥

गुणाः—वनपिप्पलिका चोष्णा तीक्ष्णा रुच्या च दीपनी । आमा भवेद्गुणाढ्या तु शुष्का स्वल्पगुणा स्मृता ॥ १२३ ॥

### ( ३३ ) चित्रकः ( चित्रकम् )

चित्रको दहनो व्यालः पाठिनो दारुणोऽग्निकः । ज्योतिष्को वल्लरी वह्निः पाली पाठी कटुः शिखी ॥८०॥ कृष्णारुणोऽनलो द्वीपी चित्रभानुश्च पावकः ।

गुणाः—चित्रकोऽग्निसमः पाके कटुकः कफशोफजित् । वातोदरार्शोग्रहणीक्षयपाण्डुविनाशनः ॥ ८१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

चित्रकोऽग्निश्च शार्दूलश्चित्रः पाली कटुः शिखी । कृशानुर्दहनो व्यालो ज्योतिष्कः पालकस्तथा ॥१२४॥ अनलो दारुणो वह्निः पावकः शबलस्तथा । पाठी द्वीपी च चित्राङ्गो ज्ञेयः शूरश्च विंशतिः ॥ १२५ ॥

गुणाः—चित्रकोऽग्निसमः पाके कटुः शोफकफापहः । वातोदरार्शोग्रहणीकृमिकण्डूतिनाशनः ॥ १२६ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

### कालः ( चित्रकविशेषः ) ॥ १८ ॥

कालो व्यालः कालमूलोऽतिदीप्यो मार्जारोऽग्निर्दाहकः पावकश्च । चित्राङ्गोऽयं रक्तचित्रो महाङ्गः स्याद्रुद्राह्वश्चित्रकोऽन्यो गुणाढ्यः ॥ १२७ ॥

गुणाः—स्थूलकायकरो रुच्यः कुष्ठघ्नो रक्तचित्रकः । रसे नियामको लोहे वेधकश्च रसायनः ॥ १२८ ॥

### ( ३४ ) शुण्ठी ।

* शुण्ठी महौषधं विश्वं नागरं विश्वभेषजम् । विश्वौषधं शृङ्गबेरं कटुभद्रं तथाऽऽर्द्रकम् ॥ ८२ ॥

---

१ झ. °द्रा च पि° । २ झ. ढ. °योग्यं व° । ३ ग. घ. पाठीरो । ४ ग. छ. °तिष्कश्चारुणो वह्निः । ५ ग. पाठी पाठिः शठः शिखी । ६ क. घ. ङ. °त् । प्लीहोद° । ७ ख. ङ. °णीकृमिकण्डु° । ८ झ. °श्चित्रपाली कुठः शि° ।

गुणाः—†स्निग्धोष्णा कटुका शुण्ठी वृष्या शोफकफारुचीन् । हन्ति वातोदरश्वासपाण्डुश्लीपदनाशिनी ॥ ८३ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

*। विश्वौषधं कटुग्रन्थि कटुभद्रं कटूषणम् ॥१२९॥ सौपर्णं शृङ्गबेरं च कफारिश्चाऽऽर्द्रकं स्मृतम् । शोषणं नागराह्वं च विज्ञेयं षोडशाह्वयम् ॥ १३० ॥

गुणाः—शुण्ठी कटूष्णा स्निग्धा च कफशोफानिलापहा । शूलबन्धोदराध्मानश्वासश्लीपदहारिणी ॥ १३१ ॥

## आर्द्रकम् ( शुण्ठीविशेषः ) ॥ १९ ॥

आर्द्रकं गुल्ममूलं च मूलजं कन्दलं वरम् । शृङ्गबेरं महीजं च सैकतेष्टमनूपजम् ॥ ८४ ॥ अपाकशाकमार्द्राख्यं राहुच्छत्रं सुशाककम् । शार्ङ्गं स्यादार्द्रशाकं च सच्छाकं मुनिभूह्वयम् ॥ ८५ ॥

गुणाः—*कटूष्णमार्द्रकं हृद्यं विपाके शीतलं लघु । *दीपनं रुचिदं शोफकफकण्ठामयापहम् ॥ ८६ ॥ कफानिलहरं स्वर्यं विबन्धानाहशूलजित् । कटूष्णं रोचनं वृष्यं हृद्यं चैवाऽऽर्द्रकं स्मृतम् ॥ ८७ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

आर्द्रकं गुल्ममूलं च मूलजं कन्दलं वरम् । शृङ्गबेरं महीजं च सैकतेष्टमनूपजम् ॥ १३२ ॥ अपाकशाकं चाऽऽर्द्राख्यं राहुच्छत्रं सुशाककम् । शार्ङ्गं स्यादार्द्रशाकश्च सुशाकं मुनिभूह्वयम् ॥ १३३ ॥

गुणाः— * * ॥ १३४ ॥

## ( ३५ ) मरिचम् ।

मरिचं पेलितं[2] श्यामं वल्लीजं कृष्णमूषणम् । यवनेष्टं शिरोवृत्तं कोलकं धर्मपचनम्[3] ॥ ८८ ॥

गुणाः—मरिचं कटु तिक्तोष्णं पित्तकृच्छ्लेष्मनाशनम् । वायुं निवारयत्येव जन्तुसंताननाशनम् ॥ ८९ ॥

---

† ख. पुस्तक इमे श्लोका दृश्यन्ते—

‘शुण्ठी स्यात्कफवातघ्नी कटुवृष्याऽऽमपाचनी । विपाके कटुतिक्तोष्णा स्वादुः स्निग्धाऽग्निकृत्सरा ॥
नागरं कफवातघ्नं विपाके मधुरं कटु । स्निग्धोष्णं रोचनं हृद्यं सस्नेहं लघु दीपनं ॥
प्रातरुत्थाय कोष्णेन वारिणा परिकीर्तितम् । मन्दाग्निदीपनं मुख्यं यतिपिबेद्विश्वभेषजम् ॥
वातशूले विबन्धे च सामदोषे च मार्दवे । नागराम्बु सदा पथ्यं जीर्णाजीर्णविशङ्किनः ’ ॥

---

१ ट. ‘द्रंजं स्मृ’ । २ ग. ङ. मलिनं । ३ झ. चर्मपत्रकम् ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

मरिचं पलितं श्यामं कोलं वल्लीजमूषणम् । यवनेष्टं वृत्तफलं शाकाङ्गं धर्मपत्तनम् ॥ १३५ ॥ कटुकं च शिरोवृत्तं वीरं कफविरोधि च । रूक्षं सर्वहितं कृष्णं सप्तभूख्यं निरूपितम् ॥ १३६ ॥

गुणाः—मरिचं कटु तिक्तोष्णं लघुश्लेष्मविनाशनम् । समीरकृमिहृद्रोगहरं च रुचिकारकम् ॥ १३७ ॥

## मरीचम् ( मरीचविशेषः ) ॥ २० ॥

मरीचं शुभ्रमरिचं बीजं शिग्रोस्तु शिग्रुजम् ॥

गुणाः—नात्युष्णं नातिरूक्षं च वीर्यतो मरिचं सितम् । पित्तकोपकरं तीक्ष्णं रूक्षं रोचनदीपनम् ॥ ९० ॥ रसे पाके च कटुकं कफघ्नं मरिचं लघु ।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

सितमरिचं तु सिताख्यं सितवल्लीजं च बालकं बहुलम् । धवलं चन्द्रकमेतन्मुनिनाम गुणाधिकं च वश्यकरम् ॥ १३८ ॥

गुणाः—कटूष्णं श्वेतमरिचं विषघ्नं भूतनाशनम् । अवृष्यं दृष्टिरोगघ्नं युक्त्या चैव रसायनम् ॥ १३९ ॥

## ( ३६ ) यवानी ( दीप्यकम् )

यवानी दीपको दीप्यो यवसाह्वो यवाग्रजः । यवानिकोग्रगन्धा च दीपनीया च दीपनी ॥ ९१ ॥

गुणाः—यवानी कटुतिक्तोष्णा वातश्लेष्मोद्भिजामयान् । हन्ति गुल्मोदरं शूलं दीपयत्याशु चानलम् ॥ ९२ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

यवानी दीप्यको दीप्यो यवसाह्वो यवाग्रजः । दीपनी चोग्रगन्धा च वातारिर्भूकदम्बकः ॥ १४० ॥ यवजो दीपनीयश्च शूलहन्त्री यवानिका । उग्रा च तीव्रगन्धा च ज्ञेया पञ्चदशाह्वया ॥ १४१ ॥

गुणाः—यवानी कटुतिक्तोष्णा वातार्शःश्लेष्मनाशनी । शूलाध्मानकृमिच्छर्दिमर्दनी दीपनी परा ॥ १४२ ॥

## यवानिका ( यवानीविशेषः ) ॥ २१ ॥

यवानिका यवानी स्याच्चौहारो जन्तुनाशनः ।

गुणाः—चौहारस्तद्गुणः प्रोक्तो विशेषात्कृमिनाशनः ॥ ९३ ॥

---

१ ज. झ. ट. कपिवि° । २ ख. झ. यवानिका । ३ ग. °ष्मविषाम° ।

## यवानी (यवानीविशेषः)॥ २२॥

यवानी यावनी तीव्रा तुरुष्को मदकारिणी।

गुणाः—यवानी यावनी रूक्षा ग्राहिणी मादिनी कटुः॥ ९४॥

## (३७) वृक्षाम्लम्।

वृक्षाम्लं तिन्तिडीकं च शाकाम्लं रक्तपूरकम्। अम्लवृक्षोऽम्लशाखः स्यादपरोऽम्लमहीरुहः॥ ९५॥

गुणाः—तिन्तिडीकं च वातघ्नं ग्राह्युष्णं रुचिकृल्लघु।

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

वृक्षाम्लमम्लशाकं स्याच्चुक्राम्लं तिन्तिडीफलम्। शाकाम्लमम्लपूरं च पूराम्लं रक्तपूरकम्॥ १४३॥ चूडाम्लबीजाम्लफलाम्लकं स्यादम्लादिवृक्षाम्लफलं रसाम्लम्। श्रेष्ठाम्लमत्यम्लमथाम्लबीजं फलं च चुक्रादि गजेन्दुसंख्यम्॥ १४४॥

गुणाः—वृक्षाम्लमम्लं कटुकं कषायं सोष्णं कफार्शोघ्नमुदीरयन्ति। तृष्णासमीरोदरहृद्गदादिगुल्मातिसारव्रणदोषनाशि॥ १४५॥

## (३८) अम्लः (अम्लवेतसम्)

अम्लोऽम्लवेतसो भीमो रसाम्लो वीरवेतसः। रक्तस्रावी वेतसाम्लः शतवेधी[1] च भेदकः॥ ९६॥

गुणाः—कषायं कटु रूक्षोष्णमम्लवेतसकं विदुः। तृट्कफानिलजन्त्वर्शोहृद्बाधाश्मरिगुल्मजित्॥ ९७॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अम्लोऽम्लवेतसो वेधी रसाम्लो वीरवेतसः। वेतसाम्लश्चाम्लसारः शतवेधी च वेधकः॥ १४६॥ भीमश्च भेदनो भेदी राजाम्लश्चाम्लभेदनः। अम्लाङ्कुशो रक्तसारः फलाम्लश्चाम्लनायकः॥ १४७॥ सहस्रवेधी वीराम्लो गुल्मकेतुर्धराभिधः। शङ्खमांसादिद्रावी स्याद्द्विधा चैवाम्लवेतसः॥१४८॥

गुणाः—अम्लवेतसमत्यम्लं कषायोष्णं च वातजित्। कफार्शःश्रमगुल्मघ्नमरोचकहरं परम्॥ १४९॥

## (३९) अजमोदा।

अजमोदा बस्तमोदा दीप्यको लोचमर्कटः। खराह्वा कारवी वल्लिर्मोदा हस्तिमयूरका॥ ९८॥

---

१ ग. वातवेधी।

गुणाः—अजमोदा च शूलघ्नी तिक्तोष्णा कफवातजित् । हिक्काध्मानारुचिं हन्ति कृमिजिद्वह्निदीपनी ॥ ९९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अजमोदा खराह्वा च बस्तमोदा च मर्कटी । मोदा गन्धदला हस्तिकारवी गन्धपत्रिका ॥ १५० ॥ मायूरी शिखिमोदा च मोदाढ्या वह्निदीपिका । ब्रह्मकोशी विशाली च हृद्यगन्धोग्रगन्धिका ॥ १५१ ॥ मोदिनी फलमुख्या च विंशत्याख्यासुवाचका ।

गुणाः—अजमोदा कटुरुष्णा रूक्षा कफवातहारिणी रुचिकृत् । स्थूलाध्मानारोचकजठरामयनाशनी चैव ॥ १५२ ॥

## (४०) अजगन्धा ।

अजगन्धा खरपुष्पा बस्तगन्धा विगन्धिका । कारवी[1] बर्बरा गन्धा तुङ्गी पूतिमयूरिका ॥ १०० ॥

गुणाः—अजगन्धा वातहरा वीर्योष्णा तु ज्वरापहा । गुल्माष्ठीलाकफानाहशूलजिद्वह्निकृत्परा ॥ १०१ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

अजगन्धा बस्तगन्धा सुरपुष्पी विगन्धिका । उग्रगन्धा ब्रह्मगर्भा ब्राह्मी पूतिमयूरिका ॥ १५३ ॥

गुणाः—अजगन्धा कटूष्णा स्याद्वातगुल्मोदरापहा । कर्णव्रणार्तिशूलघ्नी पीता चेदञ्जने हिता ॥ १५४ ॥

## (४१) कपित्थः ।

कपित्थोऽथ दधित्थस्तु ग्राही[2] गन्धफलश्च सः । अक्षैरस्यो[3] दधिफलश्चिरपाकी कपिप्रियः ॥ १०२ ॥

गुणाः—*कपित्थमाममस्वर्यं कफघ्नं ग्राहि वातलम् । *कफानिलहरं पक्कं मधुराम्लरसं गुरु ॥ १०३ ॥ श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

मालूरस्तु कपित्थो मङ्गल्यो नीलमल्लिका च दधि । ग्राहिफलश्चिरपाकी ग्रन्थिफलः करभवल्लभश्चैव ॥ १५५ ॥ दन्तशठः कठिनफलः करण्डफलकश्च सप्तदशसंज्ञः ।

गुणाः—कपित्थो मधुराम्लश्च कषायस्तिक्तशीतलः । वृष्यः पित्तानिलं

१ ङ. °वी तूग्रगन्धा च तु° । २ ङ. °ही पत्रः सुपत्रकः । अ° । ३ क. ख. °क्षशाक्रो द° ।

हन्ति संग्राही व्रणनाशनः ॥ १५६ ॥ अन्यच्च—आमं कण्ठरुजं कपित्थमधिकं जिह्वाजडत्वावहं तद्दोषत्रयवर्धनं विषहरं संग्राहकं रोचकम्। पक्वं श्वासवमिश्रमक्लम-हरं हिध्मापनोदक्षमं सर्वं ग्राहि रुचिप्रदं च कथितं सेव्यं ततः सर्वदा ॥ १५७ ॥ * * ॥ १५८ ॥

## ( ४२ ) शर्करा।

शर्करोक्ता तु मीनाण्डी श्वेता मत्स्यण्डिका सिता[2]। अहिच्छत्रा तु सिकता शुद्धा शुभ्रा सितोपला ॥ १०४ ॥

गुणाः—शर्करा शीतवीर्या तु सर्वदाहविनाशनी । रक्तपित्तप्रशमनी छर्दि-मूर्छातृषापहा ॥ १०५ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

शर्करोक्ता तु मीनाण्डी श्वेता मत्स्यण्डिका च सा । अहिच्छत्रा तु सिकता सिता चैव गुडोद्भवा ॥ १५९ ॥

गुणाः—शर्करा मधुरा शीता पित्तदाहश्रमापहा । रक्तदोषहरा भ्रान्तिकृ-मिकोपप्रणाशिनी ॥ १६० ॥

### मधुशर्करा ( शर्कराविशेषः ) ॥ २३ ॥

शर्कराऽन्या मधुभवा माधवी मधुशर्करा । माक्षीकशर्करा प्रोक्ता शर्करा मद-नोद्भवा ॥ १०६ ॥ यवासशर्करा चान्या निर्दिष्टा यावशर्करा । स्वेदनी ह्लादनी रूक्षा कषाया स्वादुपाकिका ॥ १०७ ॥

गुणाः—यवासशर्करा शीता रसे स्वादुर्जरास्रजित् । शर्करा मधुसंभूता छर्द्यतीसारनाशिनी ॥ १०८ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

सितजाऽन्या शर्करजा माधवी मधुशर्करा । माक्षीकशर्करा प्रोक्ता सिताख-ण्डश्च खण्डकः ॥ १६१ ॥

गुणाः—सिताखण्डोऽतिमधुरश्चक्षुष्यश्छर्दिनाशनः । कुष्ठव्रणकफश्वासहिक्का-पित्तास्रदोषनुत् ॥ १६२ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

### यावनाली ( शर्कराविशेषः )॥ २४ ॥

यावनाली हिमोत्पन्ना हिमानी हिमशर्करा । क्षुद्रशर्करिका क्षुद्रा गुडजा[3] जल-बिन्दुजा ॥ १६३ ॥

---

१ ज. °त्वापहं । २ ग. ङ. शिता । ३ झ. ढ. गुडुडा जाल° ।

गुणाः—हिमजा शर्करा गौल्या सोष्णा तिक्ताऽतिपिच्छिला । वातघ्नी सारिका रुच्या दाहपित्तास्रदायिनी ॥ १६४ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

## तवराजशर्करा (शर्कराविशेषः) ॥२५॥

यवासशर्करा त्वन्या सुधा मोदकमोदकः । तवराजः खण्डसारः खण्डजा खण्डमोदकः ॥ १६५ ॥

गुणाः—तवराजोऽतिमधुरः पित्तश्रमतृषापहः । वृष्यो विदाहमूर्छार्तिभ्रान्तिशान्तिकरः सरः ॥ १६६ ॥

साधारणशर्करागुणाः—स्निग्धा पुण्ड्रकशर्करा हितकरी क्षीणे क्षयेऽरोचके चक्षुष्या बलवर्धिनी सुमधुरा रूक्षा च वंशेक्षुजा । वृष्या तृप्तिबलप्रदा श्रमहरा श्यामेक्षुजा शीतला स्निग्धा कान्तिकरी रसालजनिता रक्तेक्षुजा पित्तजित्॥१६७॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

## माध्वी सिता ( शर्कराविशेषः ) ॥२६॥

माध्वी सिता मधूत्पन्ना मधुजा मधुशर्करा । माक्षीकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा ॥ १६८ ॥

गुणाः—यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा । विशेषाद्बलवृष्यं च तर्पणं क्षीणदेहिनाम् ॥ १६९ ॥

## ॥ १ ॥ †*नवसारः ।

करीरपीलुकाष्ठेषु पच्यमानेषु चोद्भवः । क्षारोऽसौ नवसारः स्याच्चूलिकालवणाभिधः ॥ १ ॥ इष्टिकादहने जातं पाण्डुरं लवणं हि तत् । तदुक्तं नवसाराख्यं चूलिकालवणं च तत् ॥ २ ॥

गुणाः—वज्रकक्षारमत्युग्रं तीक्ष्णं क्षारं च लोचनम् । गुल्मोदरं च विष्टम्भं शूलप्रशमनं सरम् ॥३॥ ग्रन्थान्तरे—रसेन्द्रजारणं लोहद्रावणं जठराग्निकृत् । गुल्मप्लीहास्यशोषघ्नं भुक्तमांसादिजारणम् ॥४॥ बिडाख्यं श्वित्रदोषघ्नं चूलिकालवणं मतम् ।

शतपुष्पादिको वर्गो द्वितीयः परिकीर्तितः ।
कायाग्निदीपनो बल्यो वक्त्रसौगन्ध्यतीक्ष्णकृत् ॥

इति रसवीर्यविपाकसहिते राजनिघण्टुयुतधन्वन्तरीयनिघण्टौ शतपुष्पादिर्द्वितीयो वर्गः ॥ २ ॥

---

† नवसारस्य शुद्धिः—"नवसारो भवेच्छुद्धश्चूर्णतोये विपाचितः ।
दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये" ॥

*नवसारस्यापि वर्गान्तेऽत्र संग्रहणं त्रिक्षारसंबद्धत्वादेव ।

# अथ चन्दनादिस्तृतीयो वर्गः ।

## ( १ ) चन्दनम् ।

चन्दनं गन्धसारं च महार्हं श्वेतचन्दनम् । भद्रश्रीस्तु मलयजं गोशीर्षं तिलपर्णकम् ॥ १ ॥

गुणाः—*श्रीखण्डं शीतलं स्वादु तिक्तं पित्तविनाशनम् । रक्तप्रसादनं वृष्यमन्तर्दाहापहारकम् ॥ २ ॥ पित्तास्रविषतृड्दाहकृमिघ्नं गुरु रूक्षणम् । सर्वं सतिक्तमधुरं चन्दनं शिशिरं परम् ॥ ३ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

श्रीखण्डं चन्दनं प्रोक्तं महार्हं श्वेतचन्दनम् । गोशीर्षं तिलपर्णं च मङ्गल्यं मलयोद्भवम् ॥ १ ॥ गन्धराजं सुगन्धं च सर्पावासं च शीतलम् ॥ २ ॥ गन्धाढ्यं गन्धसारं च भद्रश्रीर्भोगिवल्लभम् । बावनं मलयेजं च शीतगन्धोऽङ्कभूह्वयम् ॥ ३ ॥

गुणाः—श्रीखण्डं कटुतिक्तशीतलगुणं स्वादे कषायं कियत्पित्तभ्रान्तिवमिज्वरक्रिमितृषासंतापशान्तिप्रदम् । वृष्यं वक्त्ररुजापहं प्रतनुते कान्तिं तनोर्देहिनां लिप्तं सुप्तमनोजसिन्धुरमदारम्भादिसंरम्भदम् ॥ ४ ॥ श्रेष्ठं कोटरकर्परोपकलितं सुग्रन्थि सद्गौरवं छेदे रक्तमयं तथा च विमलं पीतं च यद्घर्षणे । स्वादस्तिक्तकटुः सुगन्धबहलं शीतं यदल्पं गुणे क्षीणं चार्धगुणान्वितं तु कथितं तच्चन्दनं मध्यमम् ॥ ५ ॥

अन्यच्च—चन्दनं द्विविधं प्रोक्तं बेट्टसुकडिसंज्ञकम् । बेट्टं तु सार्द्रविच्छेदं स्वयं शुष्कं तु सुकडि ॥ ६ ॥ मलयाद्रिसमीपस्थाः पर्वता बेट्टसंज्ञकाः । तज्जातं चन्दनं यत्तु बेट्टवाच्यं क्वचिन्मते ॥ ७ ॥

गुणाः—बेट्टचन्दनमतीव शीतलं दाहपित्तशमनं ज्वरापहम् । छर्दिमोहतृषिकुष्ठतैमिरात्कासरक्तशमनं च तिक्तकम् ॥ ८ ॥ सुकडिचन्दनं तिक्तं कृच्छ्रपित्तास्रदाहनुत् । शैत्यसुगन्धदं चाऽऽर्द्रं शुष्कं लेपे तदन्यथा ॥ ९ ॥

---

* ग्रन्थान्तरे—

‘ चन्दनं सुशिशिरं च विषघ्नं रक्तपित्तशमनं च सुगन्धि ।
तिक्तकं नयनयोर्हितमन्यं शीतलं मृदु गुरु व्रणशोधि ’ ॥

---

१ ख. ‘द्रप्रियं म’ । २ ख. ग. घ. ‘र्षं तैल’ ।

## रक्तचन्दनम् । ( चन्दनविशेषः ) ॥ १ ॥

रक्तचन्दनमप्यन्यल्लोहितं हरिचन्दनम् । रक्तसारं ताम्रसारं निर्दिष्टं क्षुद्रचन्दनम् ॥ ४ ॥

गुणाः—*रक्तचन्दनमप्या[1]हु रक्षोघ्नं तिक्तशीतलम् । रक्तोद्रेकहरं हन्ति पित्तकोपं सुदारुणम् ॥ ५ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

रक्तचन्दनमिदं च लोहितं शोणितं च हरिचन्दनं हिमम् । रक्तसारमथ ताम्रसारकं क्षुद्रचन्दनमथार्कचन्दनम् ॥ १० ॥

गुणाः—रक्तचन्दनमती[2]व शीतलं तिक्तमीक्षणगदास्रदोषनुत् । भूतपित्तकफकासज्वरभ्रान्तिजन्तुवमिजित्तृषापहम् ॥ ११ ॥

## कुचन्दनम् ( चन्दनविशेषः ) ॥ २ ॥

कुचन्दनं पतङ्गं च रक्तकाष्ठं सुरङ्गकम् । पत्राङ्गं पट्टरागं च [3]पट्टरञ्जनमेव च ॥ ६ ॥

गुणा[4]ः—†स्वादु पाकरसे शीतं पतङ्गं नातिशीतलम् । कुचन्दनं तु तिक्तं स्यात्सुगन्धि व्रणरोपणम् ॥ ७ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

पतङ्गं चैव पत्राङ्गं रक्तकाष्ठं सुरङ्गदम् । पत्राढ्यं पत्ररङ्गं च भार्यावृक्षश्च रक्तकः ॥ १२ ॥ लोहितं रङ्गकाष्ठं च रागकाष्ठं कुचन्दनम् । पट्टरञ्जनकं चैव सुरङ्गं च चतुर्दश ॥ १३ ॥

गुणाः—पत्राङ्गं कटुकं रूक्षमम्लं शीतं तु गौल्यकम् । वातपित्तज्वरघ्नं च विस्फोटोन्मादभूतहृत् ॥ १४ ॥

---

* क. पुस्तकेऽयं श्लोको दृश्यते—

‘ रक्तचन्दनमेवं स्याद्वृष्योष्णं शीतलं मृदु ।
चक्षुष्यं रक्तपित्तघ्नं वर्ण्यं लोहितचन्दनम् ॥

† ग. पुस्तकेऽयं श्लोकविशेषो दृश्यते—

‘ स्वादुः पाके रसे शीतं श्लेष्मलं नातिपित्तलम् ।
वातसाधारणे प्रोक्तं मुखरोगेषु शस्यते ’ ॥

---

१ छ. °प्याहुः स्वादु तिक्तं तु शी° । २ ट. °मिहृत्तृ° । ३ क. ख. घ. ङ. पदर° । ४ ख. °णाः—पतङ्गं मधुरं वर्ण्यं तिक्तं पित्तकफापहम् । कु° ।

## कालीयकम् । ( चन्दनविशेषः ) ॥ ३ ॥

कालीयकं[1] पतङ्गं स्यात्तथा नारायणप्रियम् । मलयोत्थं पीतकाष्ठं चतुर्थं[2] हरिचन्दनम् ॥ ८ ॥

गुणाः—कालीयकं पवित्राढ्यं[3] शीतलं रक्तपित्तजित् ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

पीतगन्धं तु कालीयं पीतकं माधवप्रियम् । कालीयकं पीतकाष्ठं बर्बरं पीतचन्दनम् ॥ १५ ॥

गुणाः—पीतं च शीतलं तिक्तं कुष्ठश्लेष्मानिलापहम् । कण्डूविचर्चिकादद्रुकृमिहृत्कान्तिदं परम् ॥ १६ ॥

## बर्बरिकम् । ( चन्दनविशेषः ) ॥ ४ ॥

अथ बर्बरिकं श्वेतं निर्गंधं बर्बरोद्भवम् ।

गुणाः—पित्तासृक्कफदाहघ्नं कृमिघ्नं गुरुरूक्षणम् ॥ ९ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

बर्बरोत्थं बर्बरकं श्वेतबर्बरकं तथा । शीतं सुगन्धि पित्तारिः सुरभिश्चेति सप्तधा ॥ १७ ॥

गुणाः—बर्बरं शीतलं तिक्तं कफमारुतपित्तजित् । कुष्ठकण्डुव्रणान्हन्ति विशेषाद्रक्तदोषजित् ॥ १८ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## हरिचन्दनम् । ( चन्दनविशेषः ) ॥ ५ ॥

हरिचन्दनं सुरार्हं हरिगन्धं चन्द्रचन्दनं दिव्यम् । दिविजं च महागन्धं नन्दनजं लोहितं च नवसंज्ञम् ॥ १९ ॥

गुणाः—हरिचन्दनं तु दिव्यं तिक्तहिमं तदिह दुर्लभं मनुजैः । पित्ताटोपविलेपि च दवथुश्रमशोषमान्द्यतापहरम् ॥ २० ॥

चन्दनसामान्यगुणाः—सर्वाण्येतानि तुल्यानि रसतो वीर्यतस्तथा । गन्धेन तु विशेषः स्यात्पूर्वं श्रेष्ठतमं गुणैः ॥ १० ॥ अन्यच्च—चन्दनानि समानानि रसतो वीर्यतस्तथा । भिद्यन्ते किंतु गन्धेन तत्राऽऽद्यं गुणवत्तरम् ॥ ११ ॥

## ( २ ) कुङ्कुमम् ।

कुङ्कुमं रुधिरं रक्तमसृग्गस्रं च पीतकम् । काश्मीरं चारु बाह्लीकं संकोचं पिशुनं वरम् ॥ १२ ॥

---

१ क. ख. ग. घ. ङ. 'कं तु पीतं स्या' । २ ख. 'र्थं पीतच' । ३ ण. त. पवित्राद्यं ।

गुणाः—*कुङ्कुमं कटुकं तिक्तमुष्णं श्लेष्मसमीरजित् । व्रणदृष्टिशिरोरोगविषहृत्कायकान्तिकृत् ॥ १३ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

ज्ञेयं कुङ्कुममग्निशेखरमसृक्काश्मीरजं पीतकं काश्मीरं रुधिरं वरं च पिशुनं रक्तं शठं शोणितम् । बाह्लीकं घुसृणं वरेण्यमरुणं कालेयकं जागुडं कान्तं वह्निशिखं च केसरवरं गौरं कराक्षीरितम् ॥ २१ ॥

गुणाः—कुङ्कुमं सुरभि तिक्तकटूष्णं कासवातकफकण्ठरुजाघ्नम् । मूर्धशूलविषदोषनाशनं रोचनं च तनुकान्तिकारकम् ॥ २२ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## तृणकुङ्कुमम् ( कुङ्कुमविशेषः ) ॥ ६ ॥

तृणकुङ्कुमं तृणास्रं गन्धितृणं शोणितं च तृणपुष्पम् । गन्धाधिकं तृणोत्थं तृणगौरं लोहितं च नवसंज्ञम् ॥ २३ ॥

गुणाः—तृणकुङ्कुमं कटूष्णं कफमारुतशोफनुत् । कण्डूतिपामाकुष्ठामदोषघ्नं भास्वरं परम् ॥ २४ ॥

## ( ३ ) उशीरम् ।

उशीरं च मृणालं स्यादभयं समगन्धिकम् । रेणप्रियं वीरतरं वीरं वीरणमूलकम् ॥ १४ ॥ अन्यच्च—उशीरं वीरणीमूलं वालकं तृणवालुकम् ।

गुणाः—उशीरं शीतलं तिक्तं दाहक्लान्तिहरं च तत् । वातघ्नं ज्वरतृष्णेहनुद्रक्तं हन्ति योगतः ॥ १५ ॥ उशीरं स्वेददौर्गन्ध्यपित्तघ्नं स्निग्धतिक्तकम् ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

उशीरममृणालं स्याज्जलवासं हरिप्रियम् । मृणालमभयं वीरं वीरणं समग-

*ख पुस्तकेऽयं श्लोको दृश्यते—

'सेव्यं पित्तास्रतृड्दाहस्वेददुर्गन्धिनाशनम् ।
वातघ्नं कुङ्कुमं प्रोक्तं स्वादु पित्तविरोधिकृत्' ॥

तथाच ग. पुस्तके श्लोकौ दृश्येते—

'कुङ्कुमं च भवेत्स्वादु विपाके शीतलं हिमम् ।
तथा श्लेष्महरं प्रोक्तं नातिपित्तकरं भवेत् ॥
कुङ्कुमं कटु तिक्तोष्णं वातश्लेष्मरुजं जयेत् ।
शिरोर्तिव्रणरोगघ्नं विषनुत्कायकान्तिदम्' ॥

१ ङ. °णकुष्ठशि° । २ ग. व्रणप्रियं ।

न्धिकम् ॥ २५ ॥ रणप्रियं वारितरं शिशिरं शितिमूलकम् । वेणागमूलकं[1] चैव जलामोदं सुगन्धिकम् ॥ २६ ॥ सुगन्धिमूलकं शुभ्रं वालकं वसुभूह्वयम् ।
गुणाः—उशीरं शीतलं तिक्तं दाहश्रमहरं परम् । पित्तज्वरार्तिशमनं जल-सौगन्ध्यदायकम् ॥ २७ ॥

## ( ४ ) प्रियङ्गुः ।

प्रियङ्गुः प्रियवल्ली च फलिनी कङ्गुनी प्रिया । वृत्ता गोवन्दनी श्यामा कारम्भा वर्णभेदिनी[2] ॥ १६ ॥
गुणाः—प्रियङ्गुः शीतला तिक्ता मोहदाहविनाशिनी । ज्वरवान्तिहरा रक्तमुद्रिक्तं[3] च प्रसादयेत् ॥ १७ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

प्रियङ्गुः फलिनी श्यामा प्रियवल्ली फलप्रिया । गौरी गोवन्दनी वृत्ता कारम्भा कङ्गुकङ्गुनी ॥ २८ ॥ भङ्गुरा गौरवल्ली च सुभगा पर्णभेदिनी । शुभा पीता च मङ्गल्या श्रेयसी चाङ्कभूमिता ॥ २९ ॥
गुणाः—प्रियङ्गुः शीतला तिक्ता दाहपित्तास्रदोषजित् । वान्तिभ्रान्तिज्वरहरा वक्त्रजाड्यविनाशनी ॥ ३० ॥

## ( ५ ) तूणिः ।

तूणिस्तूणीकमापीतस्तूणिकः[4] कनकस्तथा । कुठेरकः कान्तलको नन्दिवृक्षोऽथ नन्दिकः ॥ १८ ॥
गुणाः—तूणी त्रिदोषहृद्वृष्यकण्डूकुष्ठव्रणापहः । गण्डमालापहरणः संनिपातनिकृन्तनः ॥ १९ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

तूणीकस्तूणिकस्तूणी पीतकः कच्छपस्तथा । नन्दी कुठेरकः कान्तो नन्दीवृक्षो नवाह्वयः ॥ ३१ ॥
गुणाः—नन्दीवृक्षः कटुस्तिक्तः पीतस्तिक्तास्रदाहजित् । शिरोर्तिश्वेतकुष्ठघ्नः सुगन्धिः पुष्टिवीर्यदः ॥ ३२ ॥

---

१ झ. वेणीगं मूं । २ क. ख. ग. ङ. 'भेदनी । ३ झ. 'मुद्रक्तं । ४ क. ङ. तूणिस्तूणीकश्चः पीततूणिकः कच्छकस्तथा । कुटीर' ।

## ( ६ ) रोचना ।

रोचना पिङ्गला पिङ्गा मेध्या गौरी च गोमती । माङ्गल्या वन्दनीयाऽन्या पावनी रुचिरा[1] रुचिः ॥ २० ॥

गुणाः—रोचना पाचनी शीता विषनेत्ररुजो जयेत् । सौभाग्यकरणी भूतग्रहदोषं च नाशयेत् ॥ २१ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

गोरोचना रुचिः शोभा रुचिरा रोचनी शुभा । गौरी च रोचना पिङ्गा मङ्गल्या पिङ्गला शिवा ॥ ३३ ॥ पीता च गोमती गव्या वन्दनीया च काञ्चनी । मेध्या मनोरमा श्यामा रामा भूमिकराह्वया ॥ ३४ ॥

गुणाः—गोरोचना च शिशिरा विषदोषहन्त्री रुच्या च पाचनकरी कृमिकुष्ठहन्त्री । भूतग्रहोपशमनं कुरुते च पथ्या शृङ्गारमङ्गलकरी जनमोहिनी च ॥ ३५ ॥

## ( ७ ) तुरुष्कः ।

तुरुष्को यावनः कल्कः पिण्याकः पिण्डितः कपिः । कपिजः कृत्रिमो धूम्रो धूम्रवर्णश्च सिह्लकः ॥ २२ ॥ सुगन्धिः कृतकश्चैव युक्तियुक्तश्च पिण्डकः । कपितैलमिति ख्यातं तथा पिङ्गलनामकम् ॥ २३ ॥

गुणाः—तुरुष्कः कटुतिक्तोष्णः स्निग्धो वातबलासजित् । स्वादुश्च कटुकः पाके सुरभिर्देवताप्रियः ॥ २४ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

तुरुष्को यावनो धूम्रो धूम्रवर्णः सुगन्धिकः । सिह्लकः सिह्लसारश्च पीतसारः कपिस्तथा ॥ ३६ ॥ पिण्याकः कपिजः कल्कः पिण्डितः पिण्डतैलकः । करेवरः कृत्रिमको लेपनो मुनिभूह्वयः ॥ ३७ ॥

गुणाः—तुरुष्कः सुरभिस्तिक्तः कटुस्निग्धश्च कुष्ठजित् । कफपित्ताश्मरीमूत्राघातभूतज्वरार्तिजित् ॥ ३८ ॥

## ( ८ ) अगरु ( आर्द्रा )

अगरु प्रवरं लोहं कृमिजग्धमनार्यकम् । कृष्णागरु स्यादगरु योगजं विश्वधूपकम्[2] ॥ २५ ॥

---

१ क. ङ. रुचिदा । २ क. ख. ग. घ. ङ. 'प्ररूप' ।

गुणाः—कटु तिक्तोष्णमगरु स्निग्धं वातकफापहम् । श्रुतिनेत्ररुजं हन्ति माङ्गल्यं कुष्ठनुत्परम् ॥ २६ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

स्वादुस्त्वगरुसारः स्यात्सुधूम्यो गन्धधूमजः ॥

गुणाः—स्वादुः कटुकषायोष्णः सधूमामोदवातजित् ॥ ३९ ॥

## कालेयकम् ( अगरुविशेषः ) ॥ ७ ॥

कालेयकं ससारं च पीतवर्णं च शब्दतः ।

गुणाः—वर्णप्रसादनं चैव लघुचन्दनमेव च ॥ २७ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

कृष्णागरु स्यादगरु शृङ्गारं विश्वरूपकम् । शीर्षं कालागरु केश्यं वसुकं कृष्णकाष्ठकम् ॥ ४० ॥ धूपार्हं वल्लुरं गन्धराजकं द्वादशाह्वयम् ।

गुणाः—कृष्णागरु कटूष्णं च तिक्तं लेपे च शीतलम् । पाने पित्तहरं किंचित्त्रिदोषघ्नमुदाहृतम् ॥ ४१ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## काष्ठागरु ( अगरुविशेषः ) ॥ ८ ॥

अन्यागरु पीतकं च लोहं वर्णप्रसादनम् । अनार्यकमसारं च कृमिजंग्धं च काष्ठकम् ॥ ४२ ॥

गुणाः—काष्ठागरु कटूष्णं च लेपे रूक्षं कफापहम् ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## दाहागरु ( अगरुविशेषः ) ॥ ९ ॥

दाहागरु दहनागरु दाहककाष्ठं च वह्निकाष्ठं च । धूपागरु तैलागरु पुरं च पुरमथनवल्लभं चैव ॥ ४३ ॥

गुणाः—दाहागरु कटुकोष्णं केशानां वर्धनं च वर्ण्यं च । अपनयति केशदोषानातनुते संततं च सौगन्ध्यम् ॥ ४४ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## मङ्गल्या ( अगरुविशेषः ) ॥ १० ॥

मङ्गल्या मल्लिका गन्धमङ्गलाऽगरुवाचका ।

गुणाः—मङ्गल्या गुरुशिशिरा गन्धाढ्या योमवाहिका ॥ ४५ ॥

---

१ झ. ढ. 'जघ्नं च ।

## ( ९ ) कस्तूरिका ।

कस्तूरिका मृगमदो मृगनाभिर्मृगाण्डजा । मार्जारी वेधमुख्या[1] च मदनी गन्धचेलिका ॥ २८ ॥

गुणाः—कस्तूरिका रसे तिक्ता कटुः श्लेष्मानिलापहा । विषघ्नी दोषशमनी मुखशोषहरा परा ॥ २९ ॥ अन्यच्च—कस्तूरी सुरभिस्तिक्ता चक्षुष्या मुखरोगजित् । किलासकफदौर्गन्ध्यवातालक्ष्मीमलापहा ॥ ३० ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

कस्तूरी मृगनाभिस्तु मदनी गन्धचेलिका । वेधमुख्या च मार्जाली सुभगा बहुगन्धदा ॥ ४६ ॥ सहस्रवेधी श्यामा स्यात्कामानन्दा मृगाण्डजा । कुरङ्गनाभी ललिता मदो मृगमदस्तथा ॥ ४७ ॥ श्यामली काममोदी च विज्ञेयाऽष्टादशाह्वया । कस्तूरीविशेषः—कपिला पिङ्गला कृष्णा कस्तूरी त्रिविधा क्रमात् । नेपालेऽपि च काश्मीरे कामरूपे च जायते ॥ ४८ ॥ साऽप्येका खरिका ततश्च तिलका ज्ञेया कुलित्थाऽपरा पिण्डाऽन्यापि च नायिकेति च परा या पञ्चभेदाभिधा । सा शुद्धा मृगनाभितः क्रमवशादेषा क्षितीशोचिता पक्षत्यादिदिनत्रयेषु जनिता कस्तूरिका स्तूयते ॥ ४९ ॥ चूर्णाकृतिस्तु खरिका तिलका तिलाभा कौलत्थबीजसदृशी च कुलित्थका च । स्थूला ततः कियदियं किल पिण्डिकाख्या तस्याश्च किंचिदधिका यदि नायिका सा ॥ ५० ॥ कस्तूरीलक्षणम्—स्वादे तिक्ता पिञ्जरा केतकीनां गन्धं धत्ते लाघवं तोलने च । याऽप्सु न्यस्ता नैव वैवर्ण्यमीयात्कस्तूरी सा राजभोग्या प्रशस्ता ॥ ५१ ॥ अपि च—या गन्धं केतकीनामपहरति मदं सिन्धुराणां च धत्ते स्वादे तिक्ता कटुर्वा लघुरथ तुलिता मर्दिता चिक्कणा स्यात् । दाहं या नैति वह्नौ शिमिशिमिति चिरं चर्मगन्धा हुताशे सा कस्तूरी प्रशस्ता वरमृगतनुजा राजते राजभोग्या ॥ ५२ ॥ अन्यच्च कस्तूरीलक्षणम्—बाले जरति च हरिणे क्षीणे रोगिणि च मन्दगन्धयुता । कामातुरे च तरुणे कस्तूरी बहलपरिमला भवति ॥ ५३ ॥ कृत्रिमकस्तूरीलक्षणम्—या स्निग्धा धूमगन्धा वहति विनिहिता पीततां पाथसोऽर्तार्निःशेषं या निविष्टा भवति हुतवहे भस्मसादेव सद्यः । या च न्यस्ता तुलायां कलयति गुरुतां मर्दिता रूक्षतां च ज्ञेया कस्तूरिकेयं खलु कृतमतिभिः कृत्रिमा नैव सेव्या ॥ ५४ ॥

गुणाः—कस्तूरीप्रशंसा—शुद्धो वा मलिनोऽस्तु वा मृगमदः किं जातमे-

---

१ घ. गन्धमुख्या । २ ग. °हा । वक्त्रसौरभ्यजननी हृद्या बस्तिविशोधनी । अ° । ३ ज. °न्ध्यगन्धाल° ।

तावता कोऽप्यस्यानवधिश्चमत्कृतिनिधिः सौरभ्यमेको गुणः । येनासौ स्मरमण्ड-नैकवसतिर्भाले कपोले गले दोर्मूले कुचमण्डले च कुरुते सङ्गं कुरङ्गीदृशाम् ॥ ५५ ॥

## ( १० ) कर्पूरः ।

कर्पूरः शीतलरजः शीताभ्रः स्फटिको हिमः । चन्द्रस्तुषारस्तुहिनः शशीन्दुर्हिमवालुकः ॥ ३१ ॥

गुणाः—कर्पूरं कटु तिक्तं च मधुरं शिशिरं विदुः । तृष्मेदोविषदोषघ्नं चक्षुष्यं मदकारकम् ॥ ३२ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

कर्पूरो घनसारकः सितकरः शीतः शशाङ्कः शिला शीतांशुर्हिमवालुका हिमकरः शीतप्रभः शांभवः । शुभ्रांशुः स्फटिकाभ्रसारमिहिकाताराभ्रचन्द्रेन्द-वश्चन्द्रालोकतुषारगौरकुमुदान्येकादशाऽऽह्वा द्विघाः[१] ॥ ५६ ॥ कर्पूरभेदाः—पोतासो भीमसेनस्तदनु शितकरः शंकरावाससंज्ञः प्रांशुः पिञ्जोऽब्दसारस्तदनु हिमयुता वालुका जूटिका च । पश्चादस्यास्तुषारस्तदुपरि सहिमः शीतलः पैकिकाऽन्या[२] कर्पूरस्येति भेदा गुणरसमहसां वैद्यदृश्येन दृश्याः ॥ ५७ ॥

गुणाः—कर्पूरः शिशिरस्तिक्तः स्निग्धश्चोष्णोऽस्रदाहदः । चिरस्थो दाहदोषघ्नः स धौतः शुभकृत्परः ॥ ५८ ॥ कर्पूरलक्षणानि—शिरो मध्यं तलं चेति कर्पूरस्त्रिविधः स्मृतः । शिरस्तम्भाग्रसंजातं मध्यं पर्णतले तलम् ॥ ५९ ॥ भास्वद्विशदपुलकं शिरोजातं तु मध्यमम् । सामान्यपुलकं स्वच्छं तले चूर्णं तु गौरकम् ॥ ६० ॥ स्तम्भगर्भस्थितं श्रेष्ठं स्तम्भबाह्ये च मध्यमम् । स्वच्छमीषद्धरिद्राभं शुभं तन्मध्यमं स्मृतम् ॥ ६१ ॥ सुदृढं शुभ्ररूक्षं च पुलकं बाह्यजं वदेत् । अपि च—स्वच्छं भृङ्गारपत्रं लघुतरविशदं तोलने तिक्तकं चेत्स्वादे शैत्यं सुहृद्यं बहलपरिमलामोदसौरभ्यदायि । निःस्नेहं दाढर्यपत्रं शुभतरमिति चेद्राजयोग्यं प्रशस्तं कर्पूरं चान्यथा चेद्बहुतरैमशने[३] स्फोटदायि व्रणाय ॥ ६२ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## चीनकः ( कर्पूरविशेषः ) ॥ ११ ॥

चीनकश्चीनकर्पूरः कृत्रिमो धवलः पटुः । मेघसारस्तुषारश्चै[४] द्वीपकर्पूरजः स्मृतः ॥ ६३ ॥

---

१ झ. द्विशः । २ ज. पश्चिकाऽन्या । ट. पश्चिका । ३ झ. ट. रशमने । ४ ज. ट. श्च द्वीप ।

गुणाः—चीनकः कटुतिक्तोष्ण ईषच्छीतः कफापहः। कण्ठदोषहरो मेध्यः पाचनः कृमिनाशनः ॥ ६४ ॥

## ( ११ ) जातिपत्री ( जातिपत्रिका )

जातिपत्री जातिकोशा सुमनःपत्रिकाऽपि च। मालतीपत्रिका चैव प्रोक्ता सा मलनाशिनी ॥ ३३ ॥

गुणाः—जातिपत्री कटूष्णा स्यात्सुरभिः कफनाशनी। वक्त्रदौर्गन्ध्यहृद्वर्ण्या विषहृत्कायशान्तिदा ॥ ३४ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

जातीपत्री जातिकोशः सुमनःपत्रिकाऽपि सा। मालतीपत्रिका पञ्चनाम्नी सौमनसायिनी ॥ ६५ ॥

गुणाः—जातिपत्री कटुस्तिक्ता सुरभिः कफनाशनी। वक्त्रवैशद्यजननी जाड्यदोषनिकृन्तनी ॥ ६६ ॥

## ( १२ ) जातीफलम्। ( जातिः )

*जातीफलं जातिसस्यं शालूकं मालतीफलम्। मदशौण्डं जातिशृङ्गं पुटं सौमनसं फलम् ॥ ३५ ॥

गुणाः—*जातीफलं कषायोष्णं कटु कण्ठामयार्तिजित्। *वातातिसारमेहघ्नं लघु वृष्यं च दीपनम् ॥ ३६ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

*। मज्जासारं जातिसारं पुटं च सुमनःफलम् ॥ ६७ ॥

गुणाः—* * ॥ ६८ ॥

## ( १३ ) कङ्कोलकम्। (कङ्कोलः)

*कङ्कोलकं कृतफलं कोलकं कटुकं फलम्। चूर्णं कन्दफलं द्वीपं मारीचं माधवोचितम् ॥ ३७ ॥

गुणाः—कङ्कोलं कटु तिक्तोष्णं वक्त्रवैरस्यनाशनम्। मुखजाड्यहरं रुच्यं वातश्लेष्महरं परम् ॥ ३८ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

*। विद्वेष्यं स्थूलमरिचं कङ्कोलं माधवोचितम् ॥ ६९ ॥ कङ्कोलं कटुफलं प्रोक्तं मारीचं रुद्रसंमितम्।

---

१ ख. ग. छ. °त्रा सौमनसायनी। २ क. ख. ग. घ. ङ. कटुस्तिक्ता सुर°। ३ क. °क्त्रवैगन्ध्य°। ४ ग. मज्ञासारं।

गुणाः—कङ्कोलं कटु तिक्तोष्णं वक्त्रजाड्यहरं परं। दीपनं पाचनं रुच्यं कफवातनिकृन्तनम् ॥ ७० ॥

## ( १४ ) पूगफलम्। ( पूगम् )

स्यात्पूगफलमुद्वेगं स्रंसि घोण्टाफलं स्मृतम्। चिक्कणं चिक्कणा चिक्का गुर्वाकः खपुरं च तत् ॥ ३९ ॥

गुणाः—भेदि संमोहकृत्पूगं कषायं स्वादु रोचनम्। कफपित्तहरं रूक्षं वक्त्र-क्लेदमलापहम् ॥ ४० ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

पूगस्तु पूगवृक्षश्च क्रमुको दीर्घपादपः। वल्कतरुर्दृढवल्कश्चिक्कणश्च मुनि-द्वयः ॥ ७१ ॥

गुणाः—पूगवृक्षस्य निर्यासो हिमः संमोहनो गुरुः। विपाके सोष्णकक्षारः साम्लो वातघ्नपित्तलः ॥ ७२ ॥ विशेषश्च—पूगं तु चिक्कणी चिक्का चिक्कणं श्लक्ष्णकं तथा। उद्वेगं क्रमुकफलं ज्ञेयं पूगफलं वसु ॥ ७३ ॥

गुणाः—सैरी च मधुरा रुच्या कषायाम्ला कटुस्तथा। पथ्या च कफवातघ्नी सारिका मुखदोषनुत् ॥ ७४ ॥ तैल्वनं मधुरं रुच्यं कण्ठशुद्धिकरं लघु। त्रिदोषशमनं दीप्यं रसालं पाचनं समम् ॥ ७५ ॥ गौल्यं गुहागरं श्लक्ष्णं कषायं कटु पाचनम्। विष्टम्भजठराध्मानहरणं द्रावकं लघु ॥ ७६ ॥

घोण्टा कटुकषायोष्णा कठिना रुचिकारिणी। मलविष्टम्भशमनी पित्तहृ-द्दीपनी च सा ॥ ७७ ॥ पूगीफलं चेडैलसंज्ञकं यत्तत्कोङ्कणेषु प्रथितं सुगन्धि। श्लेष्मापहं दीपनपाचनं च बलप्रदं पुष्टिकरं रसाढ्यम् ॥ ७८ ॥ यत्कोङ्कणे वेल्लिगुणाभिधानकं ग्रामोद्भवं पुगफलं त्रिदोषनुत्। आमा-पहं रोचनरुच्यपाचनं विष्टम्भतुन्दामयहारि दीपनम् ॥ ७९ ॥ चन्द्रापुरोद्भवं पूगं कफघ्नं मलशोधनम्। कटु स्वादु कषायं च रुच्यं दीपनपाच-नम् ॥ ८० ॥ आन्ध्रदेशोद्भवं पूगं कषायं मधुरं रसे। वातजिद्वक्त्रजाड्यघ्नमी-पदम्लं कफापहम् ॥ ८१ ॥ पूगीफलविशेषगुणाः—पूगं संमोहकृत्सर्वं कषायं स्वादु रेचनम्। त्रिदोषशमनं रुच्यं वक्त्रक्लेदमलापहम् ॥८२॥ अपि च—आमं पूगं कषायं मुखमलशमनं कण्ठशुद्धिं विधत्ते रक्तामश्लेष्मपित्तप्रशमनमुदराध्मानहारं सरं च। शुष्कं कण्ठामयघ्नं रुचिकरमुदितं पाचनं रेचनं स्यात्तत्पर्णेनायुतं चेज्झटिति वितनुते पाण्डुवातं च शोषम् ॥ ८३ ॥

---

१ ख. ग. झ. श्यावफलं। २ च. ट. खेरी। ३ ट. °डलिसं। ४ ट. °म्भदामाम°। ५ य. चन्द्रपु°। ६ ज. शोफम्।

## (१५) लवङ्गम् ।

लवङ्गं देवकुसुमं भृङ्गारं[1] शिखरं[2] लवम् । दिव्यं चन्दनपुष्पं च श्रीपुष्पं वारिसंभवम् ॥ ४१ ॥

गुणाः—लवङ्गं कुसुमं हृद्यं शीतलं पित्तनाशनम् । चक्षुष्यं विषहृद्वृष्यं माङ्गल्यं मूर्धरोगहृत् ॥ ४२ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

लवङ्गकलिका दिव्यं लवङ्गं शेखरं लवम् । श्रीपुष्पं देवकुसुमं रुचिरं वारिसंभवम् ॥ ८४ ॥ तीक्ष्णपुष्पं तु भृङ्गाङ्गी गीर्वाणकुसुमं तथा । पुष्पकं चन्दनादि स्याज्ज्ञेयं च द्वादशाह्वयम् ॥ ८५ ॥

गुणाः—लवङ्गं शीतलं तिक्तं चक्षुष्यं[3] भुक्तरोचनम् । वातपित्तकफघ्नं च तीक्ष्णं मूर्धरुजापहम् ॥ ८६ ॥

अपि च—लवङ्गं सोष्णकं तीक्ष्णं विपाके मधुरं हिमम् । वातपित्तकफामघ्नं क्षयकासास्रदोषनुत् ॥ ८७ ॥

## (१६) नलिका ।

नलिका विद्रुमलता कपोतचरणा नली । सुषिरा धमनी शून्या निर्मर्थ्या नर्तकी नटी ॥ ४३ ॥

गुणाः—नलिका रक्तपित्तघ्नी चक्षुष्या विषनाशनी । नलिका वातला तिक्ता गुर्वी च मधुरा हिमा ॥ ४४ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

नलिका विद्रुमलतिका कपोतबाणा नली च निर्मर्थ्या । सुषिरा धमनी स्तुत्या रक्तदला नर्तकी नटी रुद्राः ॥ ८८ ॥

गुणाः—नलिका तिक्तकटुका तीक्ष्णा च मधुरा हिमा । कृमिवातोदरार्त्यर्शः[4]शूलघ्नी मलशोधनी ॥ ८९ ॥

## (१७) मांसी (नलदम्)

मांसी कृष्णजटा हिंस्रा नलदा जटिला मिशी । जटा च पिशिता पेशी क्रव्यादी च तपस्विनी ॥ ४५ ॥

गुणाः—मांसी स्वादुकषाया स्यात्कफपित्तास्रनाशनी । विषमारुतहृद्बल्या त्वचाकान्तिप्रसादनी ॥ ४६ ॥

---

१ क. ख. ङ. भृङ्गारं । २ क. ख. ङ. शिशिरं । छ. शेखरं । ३ ज. °ष्यं भक्त° । ४ ट. °रामार्शः° ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

मांसी तु जटिला मांसी क्रव्यादी पिशिता मिशी । केशनी च जटा हिंस्रा जटामांसी च मांसिनी ॥ ९० ॥ जटाला नलदा मेषी तामसी चक्रवर्तिनी । माता भूतजटा चैव जननी च जटावती ॥ ९१ ॥ मृगभक्षाऽपि चेत्येता एकविंशतिधाऽभिधाः ।

गुणाः—सुरभिस्तु जटामांसी कषाया कटुशीतला । कफहृद्भूतदाहघ्नी पित्तघ्नी मोदकान्तिकृत् ॥ ९२ ॥

## गन्धमांसी (मांसीविशेषः) ॥ १२ ॥

द्वितीया गन्धमांसी स्यात्केशी भूतजटा स्मृता । पिशाची पूतना केशी भूतकेशी च लोमशा ॥ ४७ ॥

गुणाः—मांसीद्वयं कषायं च वर्ण्यं पित्तकफापहम् । रक्षोघ्नं च सुगन्धि स्याद्वातघ्नं केश्यमुत्तमम् ॥ ४८ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

द्वितीया गन्धमांसी च केशी भूतजटा स्मृता । पिशाची पूतना चैव भूतकेशी च लोमशा ॥ ९३ ॥ जटाला लघुमांसी च ख्याता अङ्कमिताह्वयाः ।

गुणाः—गन्धमांसी तिक्तशीता कफकण्ठामयापहा । रक्तपित्तहरा वर्ण्या विषभूतज्वरापहा ॥ ९४ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## आकाशमांसी ( मांसीविशेषः ) ॥ १३ ॥

आकाशमांसी सूक्ष्माऽन्या निरालम्बा खसंभवा । सेवाली सूक्ष्मपत्री च गौरी पर्वतवासिनी ॥ ९५ ॥

गुणाः—अभ्रमांसी हिमा शोफव्रणनाडीरुजापहा । लूतागर्दभजालादिहारिणी वर्णकारिणी ॥ ९६ ॥

## ( १८ ) कुष्ठम् ।

कुष्ठं रोगोऽगदो व्याधिरुत्पलं पाकलं रुजा । वाप्यं वानीरजं रामं कौबेरं पारिभद्रकम् ॥ ४९ ॥

गुणाः—कुष्ठं कटूष्णं तिक्तं स्यात्कफमारुतरक्तजित् । त्रिदोषविषकण्डूंश्च कुष्ठरोगांश्च नाशयेत् ॥ ५० ॥

---

१ ज. पेशी । २ क. ख. ग. °तपित्तजि° ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

कुष्ठं रुजाऽगदो व्याधिरामयं पारिभद्रकम् । रामं वानीरजं वाप्यं ज्ञेयं त्वग्दोषमुत्पलम् ॥ ९७ ॥ कुत्सं च पाटवं चैव पद्मकं मनुसंज्ञकम् ॥

गुणाः—कुष्ठं कटूष्णं तिक्तं स्यात्कफमारुतकुष्ठजित् । विसर्पविषकण्डूतिखर्जूदद्रुघ्नकान्तिकृत् ॥ ९८ ॥

## ( १९ ) रेणुका ।

रेणुका राजपत्री च नन्दिनी कपिला द्विजा । कपिलोला पाण्डुपत्नी स्मृता कौन्ती हरेणुका ॥ ५१ ॥

गुणाः—*रेणुका शिशिराऽत्यन्ता तृष्णां कण्डूं च नाशयेत् । विषघ्नी दाहदौर्बल्यमुन्मूलयति योजिता ॥ ५२ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

रेणुका कपिला कान्ता नन्दिनी महिला द्विजा । राजपुत्री हिमा रेणुः पाण्डुपुत्री हरेणुका ॥ ९९ ॥ सुपर्णी शिशिरा शान्ता कौन्ती वृत्ता च धर्मिणी । कपिलोला हैमवती पाण्डुपत्नी च विंशतिः ॥ १०० ॥

गुणाः—रेणुका तु कटुः शीता खर्जूकण्डूतिहारिणी । तृष्णादाहविषघ्नी च मुखवैमल्यकारिणी ॥ १०१ ॥

## ( २० ) तगरम् ।

तगरं कुटिलं वक्रं दीनं जिह्मं नतं शठम् । कालानुसार्यमनृजु कुञ्चितं नहुषं नृपम् ॥ ५३ ॥

गुणाः—तगरं स्यात्कषायोष्णं स्निग्धं दोषत्रयप्रणुत् । दृक्शीर्षविषदोषघ्नं भूतापस्मारनाशनम् ॥ ५४ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

तगरं कुटिलं वक्रं विनम्रं कुञ्चितं नतम् । शठं च नहुपाख्यं च दद्रुहस्तं च बर्हणम् ॥ १०२ ॥ पिण्डीतगरकं चैव पार्थिवं राजहर्षणम् । कालानुसारकं क्षत्रं दीनं जिह्मं मुनीन्दुधा ॥ १०३ ॥

---

* ग. पुस्तकेऽयं क्षेपकः श्लोको दृश्यते—
 ‘ कौन्ती तिक्ता हिमा तृष्णाविषकुष्ठं कफं जयेत् ।
 पित्तहा वातकोपा च केवला मुखशोधनी ’ ॥

---

१ ज. °त्सं चापा° । ट. °त्सं चापाटलं चै° । २ ङ. भस्मगन्धा । ३ क. ग. घ. ङ. °ण्डुपुत्री स्मृ° । ४ क. °र्बल्यं गुल्माश्मय° । ५ झ. °त् । हृच्छीर्ष° ।

गुणाः—तगरं शीतलं तिक्तं दृष्टिदोषविनाशनम् । विषार्तिशमनं पथ्यं भूतोन्मादभयापहम् ॥ १०४ ॥

## ( २१ ) परिपेलम् ( परिप्लवम् )

परिपेलं प्लवं वन्यं गोपुटं स्यात्कुटन्नटम् । सितपुष्पं दासपुरं गोनर्दं जीर्णपुष्पकम् ॥ ९५ ॥

गुणाः—परिप्लवं सुगन्धि स्यात्प्रस्वेदमलकण्डुजित् । जयेद्वातकफौ चापि मेध्यं कान्तिप्रदं भवेत् ॥ ९६ ॥ अन्यच्च—परिप्लवं वातकफौ जयेन्मेध्यं च कान्तिदम् । कफतृष्णाहरं प्रोक्तमस्रपित्तविनाशनम् ॥ ९७ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

परिपेलं प्लवं धान्यं गोपुटं स्यात्कुटन्नटम् । सितपुष्पं दासपुरं गोमर्दं जीर्णबुध्नकम् ॥ १०५ ॥

गुणाः—परिपेलं कटूष्णं च कफमारुतनाशनम् । व्रणदाहामशूलघ्नं रक्तदोषहरं परम् ॥ १०६ ॥

## ( २२ ) नखम् ।

नखः कररुहः शिल्पी करजोऽथ खुरः शफः । शुक्तिः शङ्खश्चलः कौशी हनुर्नागहनुः सहः ॥ ९८ ॥

गुणाः—नखं कटुकमुष्णं च विषं हन्ति प्रयोजितम् । कुष्ठानि सादयत्येव कफं खण्डयति क्षणात् ॥ ९९ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

नखः कररुहः शिल्पी शुक्तिशङ्खः खुरः शफः । बलः कोशी च करजो हनुर्नागहनुस्तथा ॥ १०७ ॥ पाणिजो बदरीपत्रो धूप्यः पण्यविलासिनी । संधिनालः पाणिरुहः स्यादष्टादशसंज्ञकः ॥ १०८ ॥

गुणाः—नखः स्यादुष्णकटुको विषं हन्ति प्रयोजितः । कुष्ठकण्डूव्रणघ्नश्च भूतविद्रावणः परः ॥ १०९ ॥

## ( २३ ) व्याघ्रनखम् ।

नखमन्यद्व्याघ्रनखं पुटं व्याघ्रायुधं मतम् । अस्त्रं व्याघ्रतलं पादं कूटस्थं वैञ्जकारकम् ॥ ६० ॥

गुणाः—*ग्रहभूतोपशमनं पवित्रं द्वीपिजं नखम् । *व्याघ्रनखस्तु तिक्तोष्णः कषायः कफवातजित् ॥ ६१ ॥ कण्डुकुष्ठव्रणघ्नश्च वर्ण्यः सौगन्ध्यदः परः ।

१ क. 'पुटं गो' । २ ञ. 'ष्णाकरं । ३ क. ङ. कोशी । ४ क. ख. ङ. वक्रनायकम् ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

नखोऽन्यः स्याद्बलनखः कूटस्थश्चक्रनायकः । चक्री चक्रनखस्त्र्यस्रः कालो व्याघ्रनखः स्मृतः ॥ ११० ॥ द्वीपिनखो व्यालनखः खपुटो व्यालपाणिजः । व्यालायुधो व्यालबलो व्यालखड्गश्च षोडश ॥ १११ ॥

गुणाः—** ॥ ११२ ॥

## ( २४ ) स्पृक्का ।

स्पृक्काऽसृग्ब्राह्मणी देवी मालाली कोटिका मता । पञ्चमुष्टिर्देवपुत्री निर्माल्या पिशुना वधूः ॥ ६२ ॥

गुणाः—स्पृक्का शीता सुगन्धा स्यात्तृष्णां मुष्णाति योजिता । विषं हन्ति हिनस्त्येव दाहं देहसमुद्भवम् ॥ ६३ ॥ स्पृक्का सुगन्धा कुष्ठघ्नी दौर्गन्ध्यस्वेदनाशिनी ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

स्पृक्का च देवी पिशुना वधूश्च कोटिर्मनुर्ब्राह्मणिका सुगन्धा । समुद्रकान्ता कुटिला तथा च मालालिका भूतलिका च लघ्वी ॥ ११३ ॥ निर्माल्या सुकुमारा च मालाली देवपुत्रिका । पञ्चगुप्तिरसृक्प्रोक्ता नखपुष्पी च विंशतिः ॥ ११४ ॥

गुणाः—स्पृक्का कटुकषाया च तिक्ता श्लेष्मार्तिकासजित् । श्लेष्ममेहाश्मरीकृच्छ्रनाशनी च सुगन्धदा ॥ ११५ ॥

## ( २५ ) *बोलम् । ( बोलः )

बोलं गन्धरसं पिण्डं निर्लोहं बर्बरं रसम् । गोपकं नालिकं पौरं रसं गन्धरसं विदुः ॥ ६२ ॥

गुणाः—बोलं[2] तिक्तं हिमं रक्तमुद्रिक्तं हन्ति योगतः । कफपित्तामयान्हन्ति प्रदरादिरुजापहम् ॥ ६३ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

बोलं रक्तापहं मुण्डं सुरसं पिण्डकं विषम् । निर्लोहं बर्बरं पिण्डं सौरभं रक्तगन्धकम् ॥ ११६ ॥ रसगन्धं महागन्धं विश्वं च शुभगन्धकम् । विश्वगन्धं गन्धरसं व्रणारिः स्मृतिसंज्ञकम् ॥ ११७ ॥

---

*बोलस्य शुद्धिर्जम्बीरनीरेण कङ्कुष्ठवज्ज्ञेया ।

---

१ क. पौमतं । ग. गोमतं । ण. सौगन्धीनालकं । २ क. ङ. °लं तु कटुतिक्तोष्णं कषायं रक्तदोषनुत् । क° ।

गुणाः—बोलं तु कटु तिक्तोष्णं कषायं रक्तदोषनुत् । कफपित्तामयान्हन्ति प्रदरादिरुजापहम् ॥ ११८ ॥

## ( २६ ) दमनम् । ( दमनः, दमनकम् )

दमनः पाण्डुरागः स्याद्दान्तो गन्धोत्कटा मुनिः । पुण्डरीको ब्रह्मजटा तपस्वी ऋषिपुत्रकः ॥ ६४ ॥

गुणाः—दमनः स्याद्रसे तिक्तो विषघ्नो भूतदोषनुत् । त्रिदोषशमनो हृद्यः कण्डूकुष्ठापहः स्मृतः ॥ ६५ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

अथ दमनकस्तु दमनो दान्तो गन्धोत्कटो मुनिर्जटिलः । दण्डी च पाण्डुरागो ब्रह्मजटा पुण्डरीकश्च ॥ ११९ ॥ तापसपत्रः पत्री पवित्रको देवशेखरश्चैव । कुलपत्रश्च विनीतस्तपस्विपत्रश्च सप्तधात्रीकः ॥ १२० ॥

गुणाः—दमनः शीतलतिक्तः कषायकटुकश्च कुष्ठदोषहरः । द्वंद्वत्रिदोषशमनो विषविस्फोटविकारहरणः स्यात् ॥ १२१ ॥

### दमः ( दमनविशेषः ) ॥ १४ ॥

दमनोऽन्यो दमः शान्त ऋषिर्दमवशान्वितः । क्षमाशान्तिपरः साधुः साधुकः साधुगन्धिकः ॥ ६६ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

अन्यश्च वन्यदमनो वनादिनामा च दमनपर्यायः ।

गुणाः—वीर्यस्तंभनकारी बलदायी चाऽऽमदोषहारी च ॥ १२२ ॥

## ( २७ ) मुरा ।

मुरा गन्धवती दैत्या गन्धाढ्या गन्धमालिनी । सुरभिर्भूरिगन्धा च कुटी गन्धकुटी स्मृता ॥ ६७ ॥

गुणाः—*मुराऽत्यन्तं भवेच्छीता तिक्ता सुरभिगन्धिनी । क्षिणोति क्षतपुञ्जांश्च पित्तशान्तिं नियच्छति ॥ ६८ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

मुरा गन्धवती दैत्या गन्धाढ्या गन्धमादनी । सुरभिर्भूरिगन्धा च कुटी गन्धकुटी तथा ॥ १२३ ॥

---

* क, ङ. पुस्तकयोः श्लोकविशेषोऽयं दृश्यते—

'मुरा तिक्ता कटुः शीता कषाया कफवातजित् ।
श्वासास्रविषदाहार्तिश्रममूर्छातृषापहा ' ॥

गुणाः—मुरा तिक्ता कटुः शीता कषाया कफपित्तहृत् । श्वासासृग्विषदाहार्तिभ्रममूर्छातृषापहा ॥ १२४ ॥

## ( २८ ) स्थौणेयकम् ( स्थौणेयम् )

स्थौणेयकं बर्हिचूडं शुकपुच्छं शुकच्छदम् । विकर्णं शुकबर्हं च हरितं शीर्णरोमकम् ॥ ६९ ॥

गुणाः—स्थौणेयं कफवातघ्नं सुगन्धि कटु तिक्तकम् । पित्तप्रकोपशमनं बलपुष्टिविवर्धनम् ॥ ७० ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

स्थौणेयकं बर्हिशिखं शुकच्छदं मयूरचूडं शुकपुच्छकं तथा । विकीर्णरोमापि च कीरवर्णकं विकर्णसंज्ञं हरितं नवाह्वयम् ॥ १२५ ॥

गुणाः—स्थौणेयं कफपित्तघ्नं सुगन्धि कटुतिक्तकम् । पित्तप्रकोपशमनं बलपुष्टिविवर्धनम् ॥ १२६ ॥

## ( २९ ) चोरकः ( चोरकम् )

*चोरकः शङ्कितश्चण्डा दुष्पत्रः क्षेमको रिपुः । गणहासः कोपनकः कितवः फलचोरकः ॥ ७१ ॥

गुणाः—चोरकः शिशिरोऽत्यन्तं विषरक्तान्तकारकः । कुष्ठकण्डूव्रणान्हन्ति क्षणाद्दोषान्प्रयोगतः ॥ ७२ ॥ चोरकश्चोग्रगन्धश्च तिक्तः कृमिसमीरजित् ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

* । चपलः कितवो धूर्तः पटुर्नीचो निशाचरः ॥ १२७ ॥ गणहासः कोपनकश्चौरकः फलचोरकः । दुष्कुलो ग्रन्थिलश्चैव सुग्रन्थिः पर्णचोरकः॥ १२८ ॥ ग्रन्थिपर्णो ग्रन्थिदलो ग्रन्थिपत्रस्त्रिनेत्रधा ।

गुणाः—चोरकस्तीव्रगन्धोष्णस्तिक्तो वातकफापहः । नासामुखरुजाजीर्णकृमिदोषविनाशनः ॥ १२९ ॥

## ( ३० ) शैलेयम् ।

शैलेयं पलितं वृद्धं जीर्णं कालानुसार्यकम् । स्थविरं च शिलादद्रुः शिलापुष्पं शिलोद्भवम् ॥ ७३ ॥

गुणाः—शैलेयकं हिमं मोक्तं दाहजिद्विषनाशनम् । रक्तदोषहरं चैव कण्डुनिर्मूलनं स्मृतम् ॥ ७४ ॥ शैलेयं तिक्तकं शीतं सुगन्धि कफपित्तजित् । दाहतृष्णावमिश्वासव्रणदोषविनाशनम् ॥ ७५ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

शैलेयं शिलजं वृद्धं शिलापुष्पं शिलोद्भवम् । स्थविरं पलितं जीर्णं तथा कालानुसार्यकम् ॥ १३० ॥ शिलोत्थं च शिलादद्रुः शैलजं गिरिपुष्पकम् । शिलाप्रसूनं सुभगं शैलकं षोडशाह्वयम् ॥ १३१ ॥

गुणाः—शैलेयं शिशिरं तिक्तं सुगन्धि कफपित्तजित् । दाहतृष्णावमिश्वासव्रणदोषविनाशनम् ॥ १३२ ॥

## ( ३१ ) एलवालुकम् ।

* एलावालुकमालूकं वालुकं हरिवालुकम् । एल्वालुकं कपित्थं स्याद्दुर्वर्णं प्रसरं दृढम् ॥ ७६ ॥

गुणाः—एलावालुः सुगन्धिः स्याच्छीतोऽत्यन्तं प्रकीर्तितः । विषविध्वंसनोऽत्युग्रः कण्डूकुष्ठव्रणान्तकृत् ॥ ७७ ॥ †

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

* । एल्वालुकं कपित्थं च दुर्वर्णं प्रसरं दृढम् ॥ १३३ ॥ एलागन्धिकमेलाह्वं गुप्तगन्धि सुगन्धिकम् । एलाफलं च विज्ञेयं द्विसप्ताह्वयमुच्यते ॥ १३४ ॥

गुणाः—एलावालुकमत्युग्रं कषायं कफवातनुत् । मूर्छार्तिज्वरदाहांश्च नाशयेद्रोचनं परम् ॥ १३५ ॥

## ( ३२ ) सरलः ( सरलम् )

सरलः पूतिकाष्ठं च चिडा पित्तद्रुमो मतः । दीपवृक्षः स्निग्धदारुः प्रोक्तो मारीचपत्रकः ॥ ७८ ॥

गुणाः—सरलः स्निग्धतिक्तोष्णः कफमारुतनाशनः । वक्त्रस्रावस्वरभ्रंशनेत्ररोगव्रणान्तकृत् ॥ ७९ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

सरलस्तु पूतिकाष्ठं तुम्बी पीतद्रुरुत्थितोपतरुः । स स्निग्धदारुसंज्ञः स्निग्धो मारीचपत्रको नवधा ॥ १३६ ॥

गुणाः—सरलः कटुतिक्तोष्णः कफवातविनाशनः । त्वग्दोषशोफकण्डूतिव्रणघ्नः कोष्ठशुद्धिदः ॥ १३७ ॥

---

† क. ख. ग. ङ. पुस्तकेषु श्लोकविशेषः—
'एलावालुकमत्युग्रं शोधनं कफवाताजित् ।
मूर्छातिज्वरदाहांश्च नाशयेद्रोचनं परम् ' ॥

---

१ क. ख. ङ. 'त्थं च दुर्वर्णप्र' । २ क. ख. ङ. 'फवातविना' ।

## ( ३३ ) सप्तपर्णः ।

सप्तपर्णः शुक्तिपर्णश्छत्रपर्णः सुपर्णकः । सप्तच्छदो गूढपुष्पस्तथा शाल्मलिपत्रकः ॥ ८० ॥

गुणाः[1]—त्रिदोषशमनो हृद्यः सुरभिर्दीपनः सरः । शूलगुल्मकृमीन्कुष्ठं हन्ति शाल्मलिपत्रकः ॥ ८१ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

सप्तवर्णः पत्रवर्णः शुक्तिपर्णः सुपर्णकः । सप्तच्छदो गुच्छपुष्पोऽयुग्मपर्णो मुनिच्छदः ॥ १३८ ॥ बृहत्त्वग्बहुपर्णश्च तथा शाल्मलिपत्रकः । मदगन्धो गन्धिपर्णो विज्ञेयो वह्निभूमितः ॥ १३९ ॥

गुणाः—सप्तपर्णस्तु तिक्तोष्णस्त्रिदोषघ्नश्च दीपनः । मदगन्धो निरुन्धेऽयं व्रणरक्तामयकृमीन् ॥ १४० ॥

## ( ३४ ) लाक्षा ।

लाक्षा पलंकषा रक्ता दीप्तिश्च कृमिजा जतु । क्षतघ्नी रङ्गमाता च द्रुमव्याधिरलक्तकः ॥ ८२ ॥

गुणाः—लाक्षा तिक्ता कषायोष्णा स्निग्धा शोणितपित्तनुत् । कृमिश्लेष्मव्रणान्हन्ति भूतज्वरार्तिनाशिनी ॥ ८३ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

लाक्षा खदिरका रक्ता रङ्गमाता पलंकषा । जतु च कृमिजा चैव द्रुमव्याधिरलक्तकः ॥ १४१ ॥ पलाशी मुद्रणी दीप्तिर्जन्तुका गन्धमादनी । नीला द्रवरसा चैव पित्तारिर्मुनिभूह्वयः ॥ १४२ ॥

गुणाः—लाक्षा तिक्तकषाया स्याच्छ्लेष्मपित्तार्तिदोषनुत् । विषरक्तप्रशमनी विषमज्वरनाशनी ॥ १४३ ॥

## ( ३५ ) तामलकी ।

तामलक्यजटा ताली तमालं तु तमालिनी । वितुन्नभूता तमकं भूधात्री भ्वामलक्यपि ॥ ८४ ॥

गुणाः—भूधात्री मधुरा तिक्ता वीर्यतः शिशिरा स्मृता । पित्तं हन्ति कफास्रघ्नी दृष्टिदाहविनाशिनी[2] ॥ ८५ ॥ *

---

* ग. पुस्तके श्लोकविशेषः—

' पित्तश्लेष्महरा रुच्या विषदा सुरभिर्लघुः ।
नेत्ररोगप्रशमनी व्रणशूलविनाशिनी ' ॥

---

१ क. ङ. °णाः—सप्तपर्णस्त्रिदोषघ्नः सु° । २ ग. °ज्वरविना° ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

भूम्यामली तमाली च ताली चैव तमालिका । उच्चटा दृढपादी च वितुन्ना च वितुन्निका ॥ १४४ ॥ भूधात्री चारुटा वृष्या विषघ्नी बहुपत्रिका । बहुवीर्या हि भयदा विश्वपर्णी हिमालया ॥ १४५ ॥ अजटा चैव वीरा च स्यादित्येषा नवैकधा ।

गुणाः—भूधात्री तु कषायाम्ला पित्तमेहविनाशनी । शिशिरा मूत्ररोमार्तिशमनी दाहनाशिनी ॥ १४६ ॥

## ( ३६ ) लामज्जकम् ।

* लामज्जकं सुनालं स्यादमृणालं लवं लघु । *इष्टकापथकं शीघ्रं दीर्घमूलं जलाश्रयम् ॥ ८६ ॥

गुणाः—लामज्जकं भवेत्तिक्तं हिमं चात्यन्तमिष्यते । पित्तप्रशान्तिजननं विषरक्तविनाशनम् ॥ ८७ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

* * ॥ १४७ ॥

गुणाः—लामज्जकं हिमं तिक्तं मधुरं वातपित्तजित् । तृड्दाहश्रममूर्छार्तिरक्तपित्तज्वरापहम् ॥ १४८ ॥

## ( ३७ ) पद्मकः ( पद्मकम् )

पद्मको मलयश्चारुः पीतरक्तो[1] मरुद्भवः । सुप्रभः शीतवीर्यश्च पाटलापुष्पवर्णकः ॥ ८८ ॥

गुणाः—पद्मकं शिशिरं स्निग्धं कषायं रक्तपित्तनुत् । गर्भस्थैर्यकरं प्रोक्तं ज्वरच्छर्दिविषापहम् ॥ ८९ ॥ * मोहदाहज्वरभ्रान्तिकुष्ठविस्फोटशान्तिकृत् ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

पद्मकं पीतकं पीतं मालयं शीतलं हिमम् । शुभ्रं केदारजं रक्तं पाटलापुष्पसंनिभम् ॥ १४९ ॥ पद्मकाष्ठं पद्मवृक्षं प्रोक्तं स्याद्द्वादशाह्वयम् ।

गुणाः—पद्मकं शीतलं तिक्तं रक्तपित्तविनाशनम् । * ॥ १५० ॥

## ( ३८ ) धातुकी ( धातकी )

धातकी ताम्रपुष्पी च कुञ्जरा मेघवासिनी । पार्वतीया सुभिक्षा च वह्निपुष्पा च शब्दिता ॥ ९० ॥

---

१ क. ग. ङ. 'रक्तः सुरोद्भ॰' । २ क. ङ. मधुवा॰ ।

गुणाः—धातकी कटुकोष्णा च मदकृद्विषनाशनी । अतिसारहरा गर्भस्थापनी कृमिरक्तनुत् ॥ ९१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

धातकी वह्निपुष्पी च ताम्रपुष्पी च दाहनी । अग्निज्वाला सुभिक्षा च पार्वती बहुपुष्पिका ॥ १५१ ॥ कुमुदा साधुपुष्पी च कुञ्जरा मद्यवासिनी । गुच्छसंघादिपुष्पान्ता ज्ञेया सा लोध्रपुष्पिणी ॥ १५२ ॥ तीव्रज्वाला वह्निशिखा मद्यपुष्पा च विंशतिः ।

गुणाः—धातकी कटुरुष्णा च मदकृद्विषनाशनी । प्रवाहिकातिसारघ्नी विसर्पव्रणनाशनी ॥ १५३ ॥

## ( ३९ ) प्रपौण्डरीकम् ।

प्रपौण्डरीकं चक्षुष्यं पुण्डर्यः पुण्डरीयकम् । सितपुष्पं[1] सुपुष्पं स्याच्छ्रीपुष्पं सानुजानुजम् ॥ ९२ ॥

गुणाः—प्रपौण्डरीकं मधुरं कषायं तिक्तशीतलम् । रक्तपित्तव्रणान्हन्ति ज्वरदाहतृषापहम् ॥ ९३ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

प्रपौण्डरीकं चक्षुष्यं पुण्डर्यं पुण्डरीयकम् । पौण्डर्यं च सुपुष्पं च सानुजं चानुजं स्मृतम् ॥ १५४ ॥

गुणाः—प्रपौण्डरीकं चक्षुष्यं मधुरं तिक्तशीतलम् । पित्तरक्तव्रणान्हन्ति ज्वरदाहतृषापहम् ॥ १५५ ॥

## ( ४० ) कर्चूरम् । ( कर्चूरः )

कर्चूरो गन्धमूलश्च द्राविडः कार्श्यं[2] एव च । वेधमुख्यो दुर्लभश्च कस्यचित्संमतः सठी ॥ ९४ ॥

गुणाः—कर्चूरः कटुतिक्तोष्णो रुच्यो वातबलासजित् । दीपनः प्लीहगुल्मार्शःशमनः कुष्ठकासहा[3] ॥ ९५ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

कर्चूरो द्राविडः कार्शो दुर्लभो गन्धमूलकः । वेधमुख्यो गन्धसारो जटिलश्चाष्टनामकः ॥ १५६ ॥

गुणाः—कर्चूरः कटुतिक्तोष्णः कफकासविनाशनः । मुखवैशद्यजननो गलगण्डादिदोषनुत् ॥ १५७ ॥

---

१ झ. शीतपुष्पं । २ क. कार्षे । ३ क. घ. ङ. ष्ठकेशहा ।

## ( ४१ ) मनःशिला ।

मनःशिला मनोगुप्ता मनोह्वा कुनटी शिला । मनोज्ञा नागजिह्वा च गोला नेपालिका कला ॥ ९६ ॥

गुणाः—मनःशिला कटुस्तिक्ता तथोष्णा विषनाशनी । भूतावेशभयं हन्ति प्रलेपतिलकादिभिः ॥ ९७ ॥ अन्यश्च—मनःशिला सर्वरसायनाग्र्या तिक्ता कटूष्णा कफवातहन्त्री । सत्त्वात्मिका भूतविषाग्निमान्द्यकण्डूतिकासक्षयहारिणी च ॥ ९८ ॥ अश्मरीं मूत्रकृच्छ्रं चेत्यशुद्धा कुरुते शिला । मन्दाग्निं बलवृद्धिं च शुद्धा सर्वरुजापहा ॥ ९९ ॥ दोषाः—मनशिला मन्दबलं करोति जन्तोर्ध्रुवं पाण्डुविपाकहीना । मालानुबन्धं खलु मूत्ररोधं सशर्करं कृच्छ्रगदं करोति ॥ १०० ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

मनःशिला स्यात्कुनटी मनोज्ञा शिला मनोह्वाऽपि च नागजिह्वा । नेपालिका स्यान्मनसश्च गुप्ता कल्याणिका रोगशिला दशाह्वा ॥ १५८ ॥

गुणाः—मनःशिला कटुः स्निग्धा लेखनी विषनाशनी । भूतावेशभयोन्मादहारिणी वश्यकारिणी ॥ १५९ ॥

## ( ४२ ) सिन्दूरम् ।

सिन्दूरं रक्तरेणुश्च नागगर्भं च नागजम् । शृङ्गारभूषणं श्रीमद्वसन्तोत्सवमण्डनम् ॥ १०१ ॥

गुणाः—सिन्दूरमुष्णकटुकं विषदुष्टव्रणापहम् । त्वग्दोषकुष्ठवीसर्पजीर्णज्वरहरं परम् ॥ १०२ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

---

* मनःशिलाभेदशोधनसत्त्वपातनानि—

तत्राऽऽदौ भेदः—मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी कणवीरका । खण्डाख्या चेति तद्रूपं सर्वं तत्परिकथ्यते ॥ श्यामा रक्ता च गौरा च भाराढ्या श्यामिका मता । तेजस्विनी च निर्गौरा ताम्राभा कणवीरका ॥ चूर्णीभूताऽतिरक्ताङ्गी सभारा खण्डपूर्विका । उत्तरोक्तगुणैः श्रेष्ठा भूरिसत्त्वा प्रकीर्तिता ॥

शोधनम्—अगस्त्यपत्रतोयेन भाविता सप्तवासरम् । शृङ्गवेररसैर्वाऽपि विशुध्यति मनःशिला ॥

सत्त्वपातनम्—जयन्तीभृङ्गराजोत्थरक्तागस्त्यरसे शिलाम् । दोलायन्त्रे पचेद्यामं यामं छागोत्थमूत्रकैः ॥ क्षालयेदारनालेन सर्वरोगेषु योजयेत् । अष्टमांशेन किट्टेन गुडगुग्गुलुसर्पिषा ॥ कोष्ठ्यां रुद्ध्वा दृढं ध्माता सत्त्वं मुञ्चेन्मनःशिला ।

+ सिन्दूरशोधनम्—दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदिता बुधैः ।

---

१ ग. ङ. 'क्तवर्णश्च । २ क. ङ. 'वभूषणम् । ३ ग. 'पशीर्षव्रणह' ।

सिन्दूरं नागरेणुः स्याद्रक्तं सीमन्तकं तथा । नागजं नागगर्भं च शोणं वीररजः स्मृतम् ॥ १६० ॥ गणेशभूषणं संध्यारागं शृङ्गारकं स्मृतम् । सौभाग्यमरुणं चैव मङ्गल्यं मनुसंमितम् ॥ १६१ ॥

गुणाः—सिन्दूरं कटुकं तिक्तमुष्णं व्रणविरोपणम् । कुष्ठास्रविषकण्डूतिवीसर्पशमनं परम् ॥ १६२ ॥

सिन्दूरलक्षणम्—सुरङ्गोऽग्निसहः सूक्ष्मः स्निग्धः स्वच्छो गुरुर्मृदुः । सुवर्णकरजः शुद्धः सिन्दूरो मङ्गलप्रदः ॥ १६३ ॥

## गिरिसिन्दूरम् ( सिन्दूरविशेषः ) ॥ १९ ॥

महागिरिषु चाल्पीयान्पाषाणान्तस्थितो रसः । शुष्कः शोणः स निर्दिष्टो गिरिसिन्दूरसंज्ञकः ॥ १०३ ॥

गुणाः—त्रिदोषशमनं भेदि रसबन्धनमग्निभम् । देहलोहकरं नेत्र्यं गिरिसिन्दूरमीरितम् ॥ १०४ ॥

## ( ४३ ) *सौराष्ट्री ।

सौराष्ट्री चामृता सङ्गा काङ्क्षी काक्षी सुराष्ट्रजा । अजिता तुवरी तुल्या मृत्सा मृत्स्ना मृतालकम् ॥ १०५ ॥ अन्यच्च—सौराष्ट्री चामृता काङ्क्षी फटिका मृत्तिका मता । आढकी तुवरी त्वन्या मृत्स्ना मृत्सुरमृत्तिका ॥ १०६ ॥

गुणाः—काङ्क्षी कटुकषाया स्यात्[1]केश्या चैव विषापहा । कण्डूविसर्पश्वित्राणां नाशनी व्रणरोपणी ॥ १०७ ॥ ग्रन्थान्तरे—काङ्क्षी कषाया कटुकाम्लकण्ठ्या केश्या व्रणघ्नी विषनाशनी च । श्वित्रापहा नेत्रहिता त्रिदोषशान्तिप्रदा पारदरञ्जनी च ॥ १०८ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

तुवरी मृच्च सौराष्ट्री मृत्स्ना सङ्गा सुराष्ट्रजा । भूघ्नी मृतालकं कासी मृत्तिका सुरमृत्तिका ॥ १६४ ॥ स्तुत्या काङ्क्षी सुजाता च ज्ञेया चैव चतुर्दश ।

गुणाः—तुवरी तिक्तकटुका कषायाऽम्ला च लेखनी । चक्षुष्या ग्रहणीछर्दिपित्तसंतापहारिणी ॥ १६५ ॥

---

*सौराष्ट्र्युत्पत्तिशोधने—सौराष्ट्रखनिसंभूता मृत्स्ना सा तुवरी मता । वस्त्रेषु लिप्यते याऽसौ मञ्जिष्ठारागबन्धिनी । तस्याः शोधनम्—तुवरी काञ्जिके क्षिप्ता त्रिदिनाच्छुद्धिमृच्छति । क्षाराम्लैर्मर्दिता ध्माता सत्त्वं मुञ्चति निश्चितम् ।

---

1 क. ङ. स्यात्कर्षा चै° ।

## ( ४४ ) *गन्धकः ।

गन्धको गन्धपाषाणो लेलीनो गन्धमादनः । पूतिगन्धो बलिवत्सा[1][2] गन्धाश्मा धातुहा बली ॥ १०९ ॥

गुणाः—गन्धकः कटुतिक्तोष्णस्तीव्रगन्धोऽतिगन्धकृत् । विषघ्नः कुष्ठकण्डु-तिकच्छ्रत्वग्दोषनाशनः[3] ॥ ११० ॥ अन्ये च गन्धकभेदाः—सितः कुष्ठे रसे पीतो रक्तो लोहप्रयोगके । नीलो नानामयोगेषु चतुर्धा गन्धको मतः ॥१११॥ विशेषगुणाः—गन्धाश्माऽतिरसायनः सुमधुरः पाके कटूष्णान्वितः कण्डूकुष्ठविसर्पदोषशमनो दीप्तानलः पाचनः । आमोन्मोचनशोषणो विषहरः सूतेन्द्रवीर्यप्रदो गौरीपुष्पभवस्तथा कृमिहरः सत्त्वात्मकः सूतजित् ॥११२॥ दोषाः—अपाचितो गन्धक एव कुष्ठं करोति तापं विषमं शरीरे । सौख्यं च रूपं च बलं तथौजः शुक्रं निहन्त्येष करोति चास्रम् ॥ ११३ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

गन्धको गन्धपाषाणो गन्धाश्मा गन्धमादनः । पूतिगन्धोऽतिगन्धश्च वटसौगन्धिकस्तथा ॥ १६६ ॥ सुगन्धो दिव्यगन्धश्च गन्धश्च रसगन्धकः । कुष्ठारिः क्रूरगन्धश्च कीटघ्नः शरभूमितः ॥ १६७ ॥

गुणाः—गन्धकः कटुरुष्णश्च तीव्रगन्धोऽतिवह्निकृत् । विषघ्नः कुष्ठकण्डूतिखर्जूत्वग्दोषनाशनः ॥ १६८ ॥ गन्धकभेदाः—गन्धको वर्णतो ज्ञेयो भिन्नो भिन्नगुणाश्रयः । श्वेतः कुष्ठापहारी स्याद्रक्तो लोहप्रयोगकृत् ॥ १६९ ॥ पीतो रसप्रयोगार्हो नीलो वर्णान्तरोचितः ।

---

*गन्धकभेदाः—चतुर्धा गन्धको ज्ञेयो वर्णैः श्वेतादिभिः खलु । श्वेतोऽत्र खटिका प्रोक्तो लेपने गन्धमारणे ॥ तथाऽऽमलकसारः स्याद्यो भवेत्पीतवर्णवान् । शुकपुच्छः स एव स्याच्छ्रेष्ठो रसरसायने ॥ रक्तश्च शुकतुण्डाख्यो धातुवादविधौ वरः । दुर्लभः कृष्णवर्णश्च स जरामृत्युनाशनः ॥

गन्धकशोधनम्—गन्धको द्रावितो भृङ्गरसे क्षिप्तो विशुध्यति । तद्रसैः सप्तधा भिन्नो गन्धकः परिशुध्यति ॥ स्थाल्यां दुग्धं विनिक्षिप्य मुखे वस्त्रं निबध्य च । गन्धकं तत्र निक्षिप्य चूर्णितं सिकताकृति ॥ छादयेत्पृथुदीर्घेण खर्परेणैव गन्धकम् । ज्वालयेत्खर्परस्योर्ध्वे वनच्छाणैस्तथोपलैः । दुग्धे निपतितो गन्धो गलितः परिशुध्यति । इत्थं विशुद्धस्त्रिफलाज्यभृङ्गमध्वन्वितः शाणमितो हि लीढः । गृध्राक्षितुल्यं कुरुतेऽक्षियुग्मं करोति रोगोज्झितदीर्घमायुः ॥

अन्यच्च शोधनम्—लोहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् । तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः ॥ विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिक्षिपेत् । यथा वस्त्राद्विनिःसृत्य दुग्धमध्येऽखिलं पतेत् ॥ एवं स गन्धकः शुद्धो सर्वकर्मोचितो भवेत् ।

---

१ ङ.'बलीव' । २ त. 'लिवासा ग' । ३ त. 'तिकृच्छ्रत्व' ।

## वटसौगन्धिकः ( गन्धकविशेषः ) ॥ १६ ॥

वटसौगन्धिको गन्धो गन्धको गन्धमादनः । लेलीनो गन्धपाषाणो लेलीतश्च निकृन्तकः ॥ ११४ ॥

गुणाः—त्वग्दोषकुष्ठवीसर्पलोहसंहारिसूतहा । रसायनवरो ह्येष कटूष्णो गन्धको मतः ॥ ११५ ॥

## ( ४५ ) अम्बिका ( माचिका )

माचिका प्रथिताऽम्बष्ठा तथाऽम्बाऽम्बालिकाऽम्बिका । अम्बष्ठका कषाया च सा प्रोक्ता मुखवाचिका ॥ ११६ ॥

गुणाः—अम्बिका तु रसे तिक्ता तथोष्णा कफनाशनी । अर्शोघ्नी श्वयथूत्थानपरिपन्थितया स्मृता ॥ ११७ ॥ अन्यच्च—माचिका तु कषाया च कण्ठ्या वातबलासजित् । पित्तप्रकोपशमनी व्रणशोधनरोपणी ॥ ११८ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

अम्वष्ठाऽम्बालिकाऽम्बाला शठाम्बाऽम्बष्ठिकाऽम्बिका । अम्बा च माचिका चैव दृढवल्का मयूरिका ॥ १७० ॥ गन्धपत्री चित्रपुष्पी श्रेयसी मुखवाचिका। छिन्नपत्रा भूरिमल्ली विज्ञेया षोडशाह्वया ॥ १७१ ॥

गुणाः—अम्बष्ठा सा कषायाम्ला कफकण्ठरुजापहा । वातामयबलासघ्नी रुचिकृद्दीपनी परा ॥ १७२ ॥

## ( ४६ ) सिक्थकम् ( सिक्थकः )

सिक्थकं मधुकं सिक्थं मधूच्छिष्टं मधूत्थितम् । मधुशेषं मदनकं मधुजं माक्षिकाश्रयम् ॥ ११९ ॥

गुणाः—सिक्थकं स्निग्धमधुरं भूतघ्नं भग्नसंधिकृत् । हन्ति वीसर्पकण्ड्वादीन्व्रणरोपणमुत्तमम् ॥ १२० ॥ भेदनं पिच्छलं स्वादु कुष्ठवातास्रजिन्मृदु ।

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

सिक्थकं मधुकं सिक्थं मधुजं मधुसंभवम् । मदनकं मधूच्छिष्टं मदनं मक्षिकामलम् ॥ १७३ ॥ क्षौद्रेयं पीतरागं च स्निग्धं माक्षिकजं तथा । क्षौद्रजं मधुशेषं च द्रावकं माक्षिकाश्रयम् ॥ १७४ ॥ मधूषितं च संप्रोक्तं मधूत्थं चोनविंशतिः ।

गुणाः—सिक्थकं कपिलं स्वादु कुष्ठवातार्तिजिन्मृदु । कटु स्निग्धं च लेपेन स्फुटिताङ्गविरोपणम् ॥ १७५ ॥

---

१ ख. पट्टसी।

## ( ४७ ) राळा ।

रालः सर्जरसः शालः क्षणः कलकलोद्भवः । ललनः शालनिर्यासो यक्षधूपोऽग्निवल्लभः ॥ १२१ ॥

गुणाः—रालः स्वादुः कषायोष्णः स्तम्भनो व्रणरोपणः ।
विषादिभूतहन्ता[1] च भग्नसंधानकृन्मतः ॥ १२२ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

रालः सर्जरसश्चैव शालः कनकलोद्भवः । ललनः शालनिर्यासो देवेष्टः शीतलस्तथा ॥ १७६ ॥ बहुरूपः शालरसः सर्जनिर्यासकस्तथा । सुरभिः सुरधूपश्च यक्षधूपोऽग्निवल्लभः ॥ १७८ ॥ कालः कललजः प्रोक्तो नाम्ना सप्तदशाङ्कितः ।

गुणाः—रालस्तु शिशिरः स्निग्धः कषायस्तिक्तसंग्रहः । वातपित्तहरः स्फोटकण्डूतिव्रणनाशनः ॥ १७८ ॥

## (४८) *कसीसम् ।

कासीसं धातुकासीसं केसरं तप्तलोमशम् ।

गुणाः—कासीसं तु कषायोष्णमम्लं वातबलासजित् । विषनेत्ररुजः श्वित्रं हन्ति कुष्ठव्रणानपि ॥ १२४ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

कासीसं धातुकासीसं केसरं तप्तलोमशम् । शोधनं पांशुकं शीसं शुभ्रं सप्ताह्वयं मतम् ॥ १७९ ॥

गुणाः—कासीसं तु कषायं स्याच्छिशिरं विषकुष्ठजित् । खर्जूकृमिहरं चैव चक्षुष्यं कान्तिवर्धनम् ॥ १८० ॥

## पुष्पकासीसम् । ( कासीसविशेषः ) ॥ १७ ॥

* द्वितीयं पुष्पकासीसं वत्सकं च मलीमसम् । * ह्रस्वं नेत्रौषधं योज्यं विषदं नीलमृत्तिका ॥ १२५ ॥

---

*कासीसभेदशोधनमारणानि—कासीसं वालुकं ह्येकं पुष्पदूर्वमथापरम् । गुर्वम्लगुरुधूमाभं सोष्णवीर्यविषापहम् ॥ वालुकं पुष्पकासीसं श्वित्रघ्नं केशरञ्जनम् ।

शोधनमारणे—सकृद्भृङ्गाम्बुना क्लिन्नं कासीसं निर्मलं भवेत् । तुवरी सत्त्ववत्सत्त्वमेतस्यापि समाहरेत् । कासीसं शुद्धिमाप्नोति पुष्पैश्च रजसा स्त्रियाः । बलिना हतकासीसं कान्तं कासीसमारितम् ॥

---

[1] ग. °दिभग्नसंधानप्रह्णोत्सादकरी मता ॥ १२२ ॥

गुणाः—पुष्पादिकासीसमतिप्रशस्तं सोष्णं कषायाम्लमतीव नेत्र्यम् । विषानलश्लेष्मगदव्रणघ्नं श्वित्रक्षयघ्नं कचरञ्जनं च ॥ १२६ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

* । * ॥ १८१ ॥

गुणाः—पुष्पकासीसकं तिक्तं शीतं नेत्रामयापहम् । लेपेनात्यामकुष्ठादि-नानात्वग्दोषनाशनम् ॥ १८२ ॥

## ( ४९ ) *गुग्गुलुः ।

गुग्गुलुः कालनिर्यासो जटायुः कौशिकः पुरः । नक्तंचरः शिवो दुर्गो महिषाक्षः पलंकषा ॥ १२७ ॥

गुणाः—गुग्गुलुः पिच्छलः प्रोक्तः कटुस्तिक्तः कषायवान् । वर्ण्यः स्वर्यो लघुः सूक्ष्मो रूक्षो वातबलासजित् ॥ १२८ ॥ अन्यच्च—गुग्गुलुः प्रथितः स्निग्धः सरोष्णोऽथ कफानिलात् । बस्तिमेदोव्रणान्मेहशोफभूतविकारजित् ॥ १२९ ॥ गुग्गुलुर्विषदस्तीक्ष्णः कषायः पिच्छलः कटुः । वर्ण्यः स्वर्यो लघुर्भेदी स्निग्धो वातबलासजित् ॥ १३० ॥ स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः ।

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

गुग्गुलुर्यवनद्विष्टो भवाभीष्टो निशाटकः । जटालः कालनिर्यासः पुरो भूतहरः शिवः ॥ १८३ ॥ कौशिकः शांभवो दुर्गो यातुघ्नो महिषाक्षकः । देवेष्टो मरुदेश्योऽपि रक्षोहा रूक्षगन्धकः ॥ १८४ ॥ दिव्यस्तु महिषाक्षश्च नामान्येतानि विंशतिः ।

गुणाः—गुग्गुलुः कटुतिक्तोष्णः कफमारुतकासजित् । कृमिवातोदरप्लीहशोफार्शोघ्नो रसायनः ॥ १८५ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## कणगुग्गुलुः । ( गुग्गुलुविशेषः ॥ १८ ॥

गन्धराजः स्वर्णकणः सुवर्णः कणगुग्गुलुः । कनको वंशपीतश्च सुरसश्च पलंकषः ॥ १८६ ॥

गुणाः—कणगुग्गुलुः कटूष्णः सुरभिर्वातनाशनः । शूलगुल्मोदराध्मानकफघ्नश्च रसायनः ॥ १८७ ॥

---

*गुग्गुलुशोधनम्—क्वाथे हि दशमूलस्य चोष्णे प्रक्षिप्य गुग्गुलुम् । आलोड्य वस्त्रपूतं तं चण्डांशुपरिशोषितम् ॥ १ ॥ घृताक्तं पिण्डितं कुर्याच्छुद्धिमायाति गुग्गुलुः । अन्यच्च—दुग्धे वा त्रिफलाक्वाथे दोलायन्त्रे विपाचितः । वाससा गालितो ग्राह्यः सर्वकर्मसु गुग्गुलुः ॥ २ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

## भूमिजः । (गुग्गुलुविशेषः) ॥ १९ ॥

गुग्गुलुश्च तृतीयोऽन्यो भूमिजो दैत्यमेदजः । दुर्गाह्लाद इडाजात आशादिरिपुसंभवः ॥ १८८ ॥ मज्जाजो मेदजश्चैव महिषासुरसंभवः ।

गुणाः—गुग्गुलुर्भूमिजस्तिक्तः कटूष्णः कफवातजित् । उमाप्रियश्च भूतघ्नो मेध्यः सौरभ्यदः सदा ॥ १८९ ॥

## (५०) कुन्दुरुः (कुन्दरः)

कुन्दुरुः स्यात्कुन्दुरुकः शिखरी कुन्द्रगोपुरः । सुकुन्द्रस्तीक्ष्णगन्धश्च पालिन्दो भीषणो बली ॥ १३१ ॥ अन्यच्च—कुन्दरः स्याद्गोपुरकः सौराष्ट्री शिखरी मता ।

गुणाः—कुन्दुरुः कटुकस्तिक्तो वातश्लेष्मामयापहः । * पाने लेपे च शिशिरः प्रदरामयशान्तिकृत् ॥ १३२ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

कुन्दुरुकः सौराष्ट्रः शिखरी कुन्दुरुककुन्दकस्तीक्ष्णः । गोपुरको बहुगन्धः पालिन्दो भीषणश्च दशसंज्ञः ॥ १९० ॥

गुणाः—कुन्दुरुर्मधुरास्तिक्तः कफपित्तार्तिदाहनुत् । * ॥ १९१ ॥

## (५१) श्रीवेष्टकः । (श्रीवेष्टकम्, चाहः)

श्रीवेष्टको धूपवृक्षः क्षीरः शीर्षः[1] स्वरद्रुमः । श्रीवासः पायसश्चाहः क्षीरस्रावस्तथा दधि ॥ १३३ ॥

गुणाः—श्रीवेष्टः स्वादुतिक्तस्तु कषायो व्रणरोपणः । कफपित्तास्रजान्हन्ति ग्रहघ्नः शीर्षरोगनुत् ॥ १३४ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

श्रीवेष्टो वृक्षधूपश्च चीडा गन्धो रसाङ्ककः । श्रीवासः श्रीरसो वेष्टो लक्ष्मीवेष्टस्तु वेष्टकः ॥ १९२ ॥ वेष्टसारो रसावेष्टः क्षीरशीर्षः सुधूपकः । धूपाङ्गस्तिलपर्णश्च सरलाङ्गोऽपि षोडश ॥ १९३ ॥

गुणाः—श्रीवेष्टः कटुतिक्तश्च कषायः श्लेष्मपित्तजित् । योनिदोषरुजाजीर्णव्रणघ्नाध्मानदोषजित् ॥ १९४ ॥

---

[1] क. 'र्षः फलद्रु' ।

## ( ५२ ) सल्लकी ।

सल्लकी वल्लकी ह्लादा सुरभिः सुस्रवा च सा । अश्वमूत्री कुन्दुरुकी गजभक्षा महेरणा ॥ १३५ ॥

गुणाः—सल्लकी स्यात्कषायाऽतिशीता वीर्ये प्रकीर्तिता । बलासं हन्ति पित्तस्य प्रकोपशमनी मता ॥ १३६ ॥ अन्यच्च—सल्लकी सुरभिस्तिक्ता कषाया ग्राहिणी रसा । कुष्ठास्रकफवातार्शोव्रणदोषार्तिनाशनी ॥ १३७ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

सल्लकः सल्लकी सल्ली सुगन्धा सुरभिस्रवा । सुरभिर्गजभक्षा च सुवहा गजवल्लभा ॥ १९५ ॥ गन्धमूला मुखामोदा सुश्रीका जलविक्रमा । ह्रेया कुण्टरिका चैव प्रोक्ता त्र्यस्रफला च सा ॥ १९६ ॥ छिन्नरुहा गन्धफला ज्ञेया चाष्टादशाह्वया ।

गुणाः—सल्लकी तिक्तमधुरा कषाया ग्राहिणी परा । कुष्ठास्रकफवातार्शोव्रणदोषार्तिनाशिनी ॥ १९७ ॥

## ( ५३ ) *कम्पिल्लकः । ( कम्पिल्लम्, कपिल्लकः )

* कम्पिल्लकोऽथ रक्ताङ्गो रेची रेचनकस्तथा । *†रञ्जनो लोहिताङ्गश्च कम्पिल्लो रक्तचूर्णकः ॥ १३८ ॥

गुणाः—*कम्पिल्लको विरेची स्यात्कटूष्णो व्रणनाशनः । गुल्मोदरविबन्धाध्मश्लेष्मक्रिमिविनाशनः ॥ १३९ ॥ ग्रन्थान्तरे—पित्तव्रणाध्मानविबन्धनिघ्नः श्लेष्मोदरार्तिक्रिमिगुल्मवैरी । मूलामशोफव्रणगुल्महारी कम्पिल्लको रेच्यगदापहारी ॥ १४० ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

* * ॥ १९८ ॥

गुणाः—*कफकासार्तिहारी च जन्तुक्रिमिहरो लघुः ॥ १९९ ॥

---

* कम्पिल्लकशुद्धिः—साधारणरसानामिव ज्ञातव्या ।

† राजनिघण्टौ 'रञ्जकः' इति पाठः ।

---

१ ख. 'श्वपुत्री । २ ज. ट. ह्रस्वा । ३ ज. ट. कुञ्जरिका ।

## (५४) *कङ्कुष्ठम् ।

कङ्कुष्ठं कालकुष्ठं च विरङ्गं रङ्गनायकम् । रेचकं पुलकं ह्रासं शोधनं कालपालकम् ॥ १४१ ॥

गुणाः—कङ्कुष्ठं तिक्तकटुकं वीर्ये चोष्णं प्रकीर्तितम् । गुल्मोदावर्तशूलघ्नं रसरञ्जं व्रणापहम् ॥ १४२ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

कङ्कुष्ठं कालकुष्ठं च विरङ्गं रङ्गदायकम्[1] । रेचकं पुलकं चैव शोधकं कालपालकम् ॥ २०० ॥ कङ्कुष्ठं च द्विधा प्रोक्तं तारहेमाभ्रकं तथा ।

गुणाः—कटुकं कफवातघ्नं रेचकं व्रणशूलहृत्[2] ।

## (५५) †भल्लातकः । (अरुष्करम्)

भल्लातकः स्मृतोऽरुष्को[3] दहनस्तपनोऽग्निकः । अरुष्करो वीरतरुर्भल्लातोऽग्निमुखो धनुः ॥ १४३ ॥

गुणाः—भल्लातः कटुतिक्तोष्णो मधुरः कृमिनाशनः । गुल्मार्शोग्रहणीकुष्ठान्हन्ति वातकफामयान् ॥ १४४ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

भल्लातकोऽग्निर्दहनस्तपनोऽरुष्करोऽनलः । कृमिघ्नस्तैलबीजश्च वातारिः स्फोटबीजकः ॥ २०१ ॥ पृथग्बीजो धनुर्बीजो भल्लातो बीजपादपः । वह्निर्वरतरुश्चेति विज्ञेयः षोडशाह्वयः ॥ २०२ ॥

---

* कङ्कुष्ठोत्पत्तिः—हिमवत्पादशिखरे कङ्कुष्ठमुपजायते । तत्रैकं रक्तकालं स्यात्तदन्यदण्डकं स्मृतम् ॥ १ ॥ पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिशेत् । श्यामं पीतं लघु त्यक्तसत्त्वं नेष्टं तथाऽण्डकम् ॥ २ ॥ अन्यच्च—हिमवत्पादशिखरे कङ्कुष्ठमुपजायते । तत्रैकं नालिकाख्यं च तच्चान्यद्रेणुकं मतम् ॥ ३ ॥ पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् । श्यावं श्वेतं पीतलघु त्यक्तसत्त्वं हि रेणुकम् ॥ ४ ॥ केचिद्वदन्ति कङ्कुष्ठं सद्यो जातस्य दन्तिनः । वर्चश्च श्यावपीताभं रेचनं परिकथ्यते ॥ ५ ॥ कतिचित्तेजिवाहानां नालं कङ्कुष्ठसंज्ञितम् । वदन्ति श्वेतपीताभं तदतीव विरेचनम् ॥ ६ ॥

कङ्कुष्ठशोधनम्—कङ्कुष्ठं शुद्धिमायाति त्रेधा शुण्ठ्यम्बुभावितम् । रसे रसायनं श्रेष्ठं निःसत्त्वं बहुवैकृतम् ॥ ७ ॥ सत्वाकर्षोऽस्य न प्रोक्तो यस्मात्सत्त्वमयं हि तत् । अन्यच्च—जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा । शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये ॥

† भल्लातकशोधनम्—भल्लातकानि पक्वानि समानीय क्षिपेज्जले । मज्जन्ति यानि तत्रैव शुद्ध्यर्थं तानि योजयेत् ॥ १ ॥ इष्टकाचूर्णनिकषैर्घर्षणान्निर्विषं भवेत् ।

---

१ क. ख. °ङ्गदाय° । २ क. °घ्नं सरजन्तुव्र° । ३ क. ग. °तो रुक्षो द° ।

गुणाः—भल्लातकः कटुस्तिक्तः कषायोष्णः कृमीञ्जयेत् । कफवातोदरानाहमेहदुर्नामनाशनः ॥ २०३ ॥ अन्यच्च—भल्लातस्य फलं कषायमधुरं कोष्णं कफार्तिश्रमश्वासानाहविबन्धशूलजठराध्मानक्रिमिध्वंसनम् । तन्मज्जा च विशोषदाहशमनी पित्तापहा तर्पणी वातारोचकहारिदीप्तिजननी पित्तापहा त्वञ्जसा ॥ २०४ ॥

## ( ५६ ) *तुत्थम् ।

तुत्थं कर्परिकातुत्थममृतासङ्गमेव च । मयूरग्रीवकं चान्यच्छितिकण्ठं च तुत्थकम् ॥ १४५ ॥ द्वितीयं कर्परीतुत्थं कर्परीतुत्थकं तथा । नेत्रनैर्मल्यकारि स्यात्तत्तुत्थममृतोपमम् ॥ १४६ ॥

गुणाः—तुत्थकं दृष्टिरोगघ्नं शीतं श्वित्रविनाशनम् । विषवेगप्रशमनं प्रशस्तं कथ्यते बुधैः ॥ १४७ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

तुत्थं नीलाश्मजं नीलं हरिताश्मं च तुत्थकम् । मयूरग्रीवकं चैव ताम्रगर्भामृतोद्भवम् ॥ २०५ ॥ मयूरतुत्थं संप्रोक्तं शिखिकण्ठं दशाह्वयम् ।

गुणाः—तुत्थं कटु कषायोष्णं श्वित्रनेत्रामयापहम् । विषदोषेषु सर्वेषु प्रशस्तं वान्तिकारकम् ॥ २०६ ॥ तुत्थभेदो राजनिघण्टौ—द्वितीयं खर्परीतुत्थं खर्परीरसकं तथा । चक्षुष्यममृतोत्पन्नं तुत्थं खर्परिका तु षट् ॥ २०७ ॥

गुणाः—खर्परी कटुका तिक्ता चक्षुष्या च रसायनी । त्वग्दोषशमनी रुच्या दीप्या पुष्टिविवर्धनी ॥ २०८ ॥

## ( ५७ ) †हेममाक्षिकम् ।

हेममाक्षिकमावर्तं तापिजं धातुमाक्षिकम् । ताप्यं च माक्षिकं धातु मधुधातु विनिर्दिशेत् ॥ १४८ ॥

---

* तुत्थोत्पत्तिः—पीत्वा हलाहलं वान्तं पीतामृतगरुत्मता । विषेणामृतयुक्तेन गिरौ मरकताह्वये ॥१॥ तद्वान्तं हि घनीभूतं संजातं सस्यकं खलु । मयूरकण्ठसच्छायं भाराढ्यमिति शस्यते ॥२॥

तुत्थशोधनं मारणं च—सस्यकं शुद्धिमाप्नोति रक्तवर्गेण भावितम् । स्नेहवर्गेण संसिद्धं सप्तवारमदूषितम् ॥ ३ ॥ दोलायन्त्रेण सुस्विन्नं सस्यकं प्रहरत्रयम् । गोमहिष्यजमूत्रेषु शुद्धं स्यात्पञ्चखर्परम् ॥४॥ लकुचद्रावगन्धाश्मटङ्कणेन समन्वितम् । निरुध्य मूषिकामध्ये म्रियते कौक्कुटैः पुटैः ॥५॥

अन्यच्च तुत्थशोधनम्—विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः । दशांशं टङ्कणं दत्त्वा पचेल्लघुपुटे ततः ॥ ६ ॥ पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये ।

† माक्षिकोत्पत्तिशोधनमारणानि—

तत्राऽऽदावुत्पत्तिः—सुवर्णशैलप्रभवो विष्णुना काञ्चनो रसः । तापीकिरातचीनेषु यवनेषु विनिर्मितः ॥ ताप्यः सूर्यांशुसंतप्तो माधवे मासि दृश्यते । मधुरः काञ्चनाभासो साम्लो रजतसंनिभः ॥

गुणाः—माक्षिकं कटु तिक्तोष्णं रसायनमनुत्तमम् । बस्तिरोगहरं हन्यादर्शःशोफोदरक्षयान् ॥ १४९ ॥ त्रिदोषशमनं वृष्यं चक्षुष्यं च विषापहम् । मन्दानलत्वं बलहानिमुग्रां विष्टम्भतां नेत्ररुजं च कुष्ठम् । करोति मालां व्रणपूर्विकां च माक्षीकधातुर्गुरुरप्यपक्कः ॥ १५० ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

माक्षिकं चैव माक्षीकं पीतकं धातुमाक्षिकम् । तापिजं ताप्यकं ताप्यमापीतं पीतमाक्षिकम् ॥ २९ ॥ आवर्तं मधुधातुः स्यात्क्षौद्रधातुस्तथाऽपरः । प्रोक्तं माक्षिकधातुश्च वाणभूर्हेममाक्षिकम् ॥ २१० ॥

गुणाः—माक्षिकं मधुरं तिक्तमल्पं कटु कफापहम् । भ्रमहृल्लासमूर्छार्तिश्वासकासविषापहम् ॥ २११ ॥ अन्यच्च—माक्षिकं द्विविधं प्रोक्तं हेमाह्वं तारमाक्षिकम् । भिन्नवर्णविशेषत्वाद्रसवीर्यादिकं पृथक् ॥ २१२ ॥ तारवादादिके तारमाक्षिकं च प्रशस्यते । देहे हेमादिकं शस्तं रोगहृद्बलपुष्टिदम् ॥ २१३ ॥

## ( ५८ ) †अञ्जनम् ।

अञ्जनं मेचकं कृष्णं सौवीरं च सुवीरजम् । कपोतं यामुनेयं च स्रोतोजं सारितं तथा ॥ १५१ ॥

गुणाः—सौवीरमञ्जनं प्रोक्तमत्यन्तं शिशिरं बुधैः । विषहिध्माविकारघ्नमक्षिरोगविषापहम् ॥ १५२ ॥ शीतं नीलाञ्जनं प्रोक्तं कटुतिक्तकषायकम् । चक्षुष्यं कफवातघ्नं विषघ्नं च रसायनम् ॥ १५३ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

अञ्जनं यामुनं कृष्णं नादेयं मेचकं तथा । स्रोतोजं वृकमदं नीलं सौवीरं च सुवीरजम् ॥ २१४ ॥ तथा नीलाञ्जनं चैव चक्षुष्यं वारिसंभवम् । कपोतकं च कापोतं संप्रोक्तं शत्रुभूमितम् ॥ २१५ ॥

---

माक्षिको द्विविधो हेममाक्षिकस्तारमाक्षिकः । तत्राऽऽद्यं माक्षिकं कान्यकुब्जोत्थं स्वर्णमाक्षिकम् ॥ तपतीतीरसंभूतं पञ्चवर्णं सुवर्णवत् ।

शोधनम्-एरण्डतैलसंयुक्तं सिद्धं शुध्यति माक्षिकम् । सिद्धं वा कदलीकन्दतोयेन घटिकाद्वयम् ॥ तप्तं क्षिप्तं वराक्काथे शुद्धिमायाति माक्षिकम् ।

मारणम्—मातुलुङ्गाम्लगन्धाभ्यां पिष्टं मूषोदरे स्थितम् । पञ्चकोलपुटे ध्मातं म्रियते माक्षिकं खलु ॥ विधाय गोलं लवणाख्ययन्त्रे पचेद्दिनार्धं मृदुवह्निना च । स्वतः सुशीतं परिचूर्ण्य सम्यग्वल्लोन्मितं व्योषविडङ्गयुक्तम् ॥ संसेवितं क्षौद्रयुतं निहन्ति जरां सरोगामपमृत्युमेव । दुःसाध्यरोगानपि सप्तवासैर्नैतेन तुल्योऽस्ति सुधारसोऽपि ॥

† अञ्जनस्य शुद्धिः—अञ्जनानि विशुध्यन्ति भृङ्गराजनिजद्रवैः । मनोह्वासत्त्ववत्सत्त्वमञ्जनानां समाहरेत् ॥

गुणाः—शीतं नीलाञ्जनं प्रोक्तं कटुतिक्तं कषायकम् । चक्षुष्यं कफवातघ्नं विषघ्नं च रसायनम् ॥ २१६ ॥

## ( ५९ ) समुद्रफेनम् । (समुद्रफेनः) ( धातुफेनम् )

समुद्रफेनं फेनं च शुष्काशुष्कं[1] पयोधिजम् । विद्यादुदधिफेनं च प्रोक्तं सागरजं मलम् ॥ १५४ ॥

गुणाः—समुद्रफेनः शिशिरः कर्णपाकनिवारणः । लेखनो नेत्ररोगाणां हिमो विषविनाशनः ॥ १५५ ॥ चक्षुष्यो रक्तपित्तघ्नो गुल्मप्लीहहरः स्मृतः ।*

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

समुद्रफेनं फेनश्च वार्धिफेनं पयोधिजम् । सुफेनमब्धिडिण्डीरं सामुद्रं सप्तनामकम् ॥ २१७ ॥

गुणाः—समुद्रफेनं शिशिरं कषायं नेत्ररोगनुत् । कफकण्ठामयघ्नं च रुचिकृत्कर्णरोगहृत् ॥ २१८ ॥

## ( ६० ) चक्षुष्या । ( नीलाञ्जनम् )

चक्षुष्या दृक्प्रसादा च सैव प्रोक्ता कुलत्थिका । कुलाली लोचनहिता कुम्भकारी मलापहा ॥ १५६ ॥

गुणाः—हिमा प्रोक्ता कषाया च विषं स्थावरजङ्गमम् । छिनत्ति[2] योजिता सम्यङ्नेत्रस्रावाननेकशः ॥ १५७ ॥ सा च विस्फोटकण्ड्वार्तिव्रणदोषनिबर्हिणी ।

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

कुलत्था दिक्प्रसादा च चक्षुष्याऽथ कुलत्थिका । कुलाली लोचनहिता कुम्भकारी मलापहा ॥ २१९ ॥

गुणाः—कुलत्थिका तु चक्षुष्या कषाया कटुका हिमा । विषविस्फोटककण्डूतिव्रणदोषनिबर्हिणी ॥ २२० ॥

## रसाञ्जनम् । ( चक्षुष्याविशेषः ) ॥ २० ॥

रसाञ्जनं तार्क्ष्यशैलं रसजातं रसोद्भवम् । रसगर्भं रसाग्र्यं च दार्वीक्वाथसमुद्भवम् ॥ १५८ ॥

गुणाः—रसाञ्जनं हिमं तिक्तं रक्तपित्तकफापहम् । हिध्माश्वासहरं वर्ण्यं

---

* क. ङ. पुस्तकयोः श्लोकविशेषो दृश्यते—
' समुद्रफेनमुष्णं स्यात्पाचनं लघु लेखनम् ।
चक्षुष्यं कफवातघ्नं गुल्मप्लीहापहं मतम् ' ॥

---

१ क. शुक्लफेनं । २ क. ङ. निहन्ति ।

मुखरोगविषापहम् ॥ १५९ ॥ रसाञ्जनं रसे चोष्णं चक्षुष्यं तिक्तकं कटु। रक्तपित्तविषच्छर्दिहिक्काघ्नं हृत्प्रसादनम् ॥ १६० ॥ अन्यच्च—रसाञ्जनं च पीताभं विषवक्त्रगदापहम्। श्वासहिध्माहरं वर्ण्यं वातपित्तास्रनाशनम्॥१६१॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

रसाञ्जनं रसोद्भूतं रसगर्भं रसाग्रजम्। कृतकं बालभैषज्यं दार्वीक्वाथोद्भवं तथा ॥ २२१ ॥ रसजातं तार्क्ष्यशैलं ज्ञेयं वर्याञ्जनं तथा। रसनाभं चाग्निसारं द्वादशाह्वं च कीर्तितम् ॥ २२२ ॥ रीत्यां तु ध्मायमानायां तत्किट्टं तु रसा-ञ्जनम्। तदभावे तु कर्तव्यं दार्वीक्वाथसमुद्भवम् ॥ २२३ ॥

## ( ६१ ) पुष्पाञ्जनम्। ( रीती )

पुष्पाञ्जनं पुष्पकेतुः कौसुम्भं कुसुमाञ्जनम्। रीतिजं रीतिकुसुमं रीतिपुष्पं च पौष्पिकम् ॥ १६२ ॥

गुणाः—पुष्पाञ्जनं हिमं हन्ति हिक्कामत्यन्तदुस्तराम्। अक्षिरोगचयं हन्या-द्विषं निर्विषतां नयेत् ॥ १६३ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

पुष्पाञ्जनं पुष्पकेतुः कौसुम्भं कुसुमाञ्जनम्। रीतिकं रीतिकुसुमं रीतिपुष्पं च पौष्पिकम् ॥ २२४ ॥

गुणाः—पुष्पाञ्जनं हिमं प्रोक्तं पित्तहिक्कामदाहनुत्। नाशयेद्विषकासार्तिं सर्वनेत्रामयापहम् ॥ २२५ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

## स्रोतोञ्जनम्। ( पुष्पाञ्जनविशेषः ) ॥ २१ ॥

स्रोतोञ्जनं वारिभवं तथाऽन्यत्स्रोतोद्भवं स्रोतनदीभवं च। सौवीरसारं च कपोतसारं वल्मीकशीर्षं मुनिसंमिताह्वम् ॥ २२६ ॥

गुणाः—स्रोतोञ्जनं शीतकटु कषायं कृमिनाशनम्। रसाञ्जनं रसे योग्यं स्तनवृद्धिकरं परम् ॥ २२७ ॥ स्रोतोञ्जनलक्षणम्—वल्मीकशिखराकारं भिन्न-नीलाञ्जनप्रभम्। घर्षे च गैरिकावर्णं श्रेष्ठं स्रोतोञ्जनं च तत् ॥ २२८ ॥

---

१ छ. °घ्नं हृत्प्रसा°। २ क्ष. त. जयेत्। ३ क्ष. घर्मे।

## *शिलाजतु । ( पुष्पाञ्जनविशेषः ) ॥ २२ ॥

शिलाजतु स्यादतिथिः शैलेयं गिरिजाश्मजम् । जत्वश्मजं चाश्मजं तु प्रोक्तं धातुजमद्रिजम् ॥ १६५ ॥

गुणाः—*शिलाजतु भवेत्तिक्तं कटूष्णं च रसायनम् । *मेहोन्मादाश्मरीशोफकुष्ठापस्मारनाशनम् ॥१६६॥ क्षयशोकोदरार्शांसि हन्ति बस्तिरुजो जयेत् ।

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

शिलाजतु स्यादश्मोत्थं शैलं गिरिजमश्मजम् । अश्मलाक्षाऽश्मजतुकं जत्वश्मकमिति स्मृतम् ॥ २२९ ॥

गुणाः—* । * ॥ २३० ॥

## +गैरिकम् । ( पुष्पाञ्जनविशेषः ) ॥ २३ ॥

गैरिकं रक्तधातुः स्यात्ताम्रधातुर्गवेधुकम् । पाषाणगैरिकं चैव द्वितीयं स्वर्णगैरिकम् ॥ १६७ ॥ पाषाणगैरिकं प्रोक्तं कठिनं ताम्रवर्णकम् ।

गुणाः—विषदो गैरिकः स्निग्धः कषायो मधुरो हिमः । चक्षुष्यो रक्तपित्तघ्नश्छर्दिहिध्माविषापहः ॥ १६८ ॥ अन्यच्च-गैरिकं दाहपित्तास्रकफहिक्काविषापहम् । चक्षुष्यमन्यत्तद्वल्यं विशेषाज्ज्वरनाशनम् ॥ १६९ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

गैरिकं रक्तधातुः स्याद्गिरिधातुर्गवेधुकम् । धातुः सुरङ्गधातुश्च गिरिजं गिरिमृद्भवम् ॥ २३१ ॥

गुणाः—*गैरिकं मधुरं शीतं कषायं व्रणरोपणम् । *विस्फोटार्शोऽग्निदाहघ्नं वरं स्वर्णादिकं शुभम् ॥ २३२ ॥

## सुवर्णगैरिकम् । ( स्वर्णगैरिकम् । पुष्पाञ्जनविशेषः ) ॥ २४ ॥

सुवर्णगैरिकं चान्यत्ततो रक्तरजो विदुः । अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम् ॥ १७० ॥

---

*शिलाजतुशोधनम्—शिलाजतु समानीय सूक्ष्मं खण्डं विधाय च । निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः ॥ १ ॥ मर्दयित्वा ततो नीरं गृह्णीयाद्वस्त्रगालितम् । स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः ॥ २ ॥ उपरिस्थं घनं यत्स्यात्तत्क्षिपेदन्यपात्रके । एवं पुनः पुनर्नीतं द्विमासाभ्यां शिलाजतु ॥ ३ ॥ भवेत्कार्यक्षमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत् । निर्धूमं च ततः शुद्धं सर्वकर्मसु योजयेत् ॥ ४ ॥

+ गैरिकशुद्धिः—आम्लक्षारगवांमूत्रैर्गैरिकं विमलं धमेत् । क्रमाद्रक्तं च पीतं च सत्त्वं पतति शोधनात् ॥ १ ॥ अन्यच्च—साधारणरसानामिव शोधनं ज्ञेयम् ।

गुणाः—स्वादु स्निग्धं हिमं नेत्र्यं कषायं रक्तपित्तजित् । हिध्मावमिविषघ्नं च रक्तघ्नं स्वर्णगैरिकम् ॥ १७१ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

सुवर्णगैरिकं चान्यत्स्वर्णधातुः सुरक्तकम् । संध्याभ्रं बभ्रुधातुश्च शिलाधातुः षडाह्वयम् ॥ २३३ ॥

गुणाः—* । * ॥ २३४ ॥

## ( ६२ ) कतकम् ।

कतकं छेदनीयश्च कतं कतफलं मतम् । अम्बुप्रसादनफलं श्लक्ष्णं नेत्रविकारजित् ॥ १७२ ॥

गुणाः—कतकं शीतलं प्राहुस्तृष्णाविषविनाशनम् । नेत्रोत्थरोगविध्वंसि विधिनाऽञ्जनयोगतः ॥ १७३ ॥ कतकस्य फलं तिक्तं चक्षुष्यं पित्तलं मृदु । वारिप्रसादनं कृच्छ्रशर्करामश्मरीं जयेत् ॥ १७४ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

कतकोऽम्बुप्रसादश्च कतस्तिक्तफलस्तथा । रुच्यस्तु च्छेदनीयश्च ज्ञेयो गुडफलः स्मृतः ॥ २३५ ॥ प्रोक्तः कतफलस्तिक्तमरीचश्च नवाह्वयः ॥ २३६ ॥

गुणाः—कतकः कटुतिक्तोष्णश्चक्षुष्यः कृमिदोषनुत् । रुचिकृच्छूलदोषघ्नो बीजमम्बुप्रसादनः ॥ २३७ ॥

## ( ६३ ) लोध्रः । ( लोध्रम् )

लोध्रो रोध्रः शाबरकस्तिल्वकस्तिलकस्तरुः । तिरीटकः काण्डहीनो भिल्ली शम्बरपादपः ॥ १७५ ॥

गुणाः—लोध्रः शीतः कषायश्च हन्ति तृष्णामरोचकम् । विषविध्वंसनः प्रोक्तो रूक्षो ग्राही कफापहः ॥ १७६ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

लोध्रो रोध्रो भिल्लतरुर्भिल्लकः काण्डकीलकः । तिरीटो लोध्रको ध्वक्षः शम्बरो हस्तिरोध्रकः ॥ २३८ ॥ तिलकः काण्डहीनश्च शाबरो हेमपुष्पकः । भिल्ली शाबरकश्चैव ज्ञेयः पञ्चदशाह्वयः ॥ २३९ ॥

### क्रमुकः ( लोध्रविशेषः ) ॥ २९ ॥

क्रमुकः पट्टिकारोध्रो वल्कलः स्थूलवल्कलः । जीर्णपर्णो बृहत्पर्णः पट्टी लाक्षाप्रसादनः ॥ १७७ ॥

गुणाः—*लोध्रयुग्मं कषायं तु शीतं वातकफास्रजित् । * चक्षुष्यं विपहृत्तत्र विशिष्टो वल्करोध्रकः ॥ १७८ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

क्रमुकः पट्टिकारोध्रः कल्करोध्रो बृहद्दलः । जीर्णबुध्नो बृहद्वल्को जीर्णपत्रोऽक्षिभेषजः ॥ २४० ॥ शाबरः श्वेतरोध्रश्च मार्जनो बहलत्वचः । पट्टी लाक्षाप्रसादश्च वल्कलो बाणभूरुहः ॥ २४१ ॥

लोध्रद्वयगुणाः— * । * ॥ २४२ ॥

## ( ६४ ) *शङ्खः ।

शङ्खो वारिभवः कम्बुर्जलदो दीर्घनिस्वनः । सुस्वरो दीर्घनादश्च धवलः श्रीविभूषणः ॥ १७९ ॥

गुणाः—शङ्खः स्वादुः कटुः पाके वीर्ये चोष्णः प्रकीर्तितः । परिणामं जयेच्छूलं चक्षुष्यो रक्तपित्तजित् ॥ १८० ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

शङ्खो ह्यर्णोभवः कम्बुर्जलजः पावनध्वनिः । कुटिलोऽन्तर्महानादः कम्बुपूतः सुनादकः ॥ २४३ ॥ सुस्वरो दीर्घनादश्च बहुनादो हरिप्रियः । एवं षोडशधा ज्ञेयो धवलो मङ्गलप्रदः ॥ २४४ ॥

गुणाः—शङ्खः कटुरसः शीतः पुष्टिवीर्यबलप्रदः । गुल्मशूलहरः श्वासनाशनो विषदोषनुत् ॥ २४५ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

### क्षुल्लकः । ( शङ्खविशेषः ) ॥ २६ ॥

क्षुल्लकः क्षुद्रशङ्खः स्याच्छम्बूको नखशङ्खकः ।

गुणाः—क्षुल्लकः कटुकस्तिक्तः शूलहारी च दीपनः ॥ २४६ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

### कृमिशङ्खः । ( शङ्खविशेषः ) ॥ २७ ॥

कृमिशङ्खः कृमिजलजः कृमिवारिरुहश्च जन्तुकम्बुश्च ।

गुणाः—कथितो रसवीर्याद्यैः कृतधीभिः शङ्खसदृशोऽयम् ॥ २४७ ॥

---

* शङ्खस्य शुद्धिर्जम्बीरनीरेण कङ्कुष्ठवज्ज्ञेया ।

---

१ ङ. 'ल्कलोध्र' । २ क. ङ. शीतः । ३ ग. 'णामोत्थशूलघ्नश्चक्षु' ।

## वर्गेतराणि—

## ( १ ) *बहुला ।

बहुला च बलाऽनन्ता भद्रा पातालवासिनी । मुखरागकरी सौम्या अमृता त्वमृतोद्भवा ॥ १ ॥ कामदा कामजननी जीवन्ती यावनीप्रिया । आमोदजननी हृद्या देवानां दानवप्रिया ॥ २ ॥ ताम्बूलवल्ली ताम्बूली देहदा श्रमभञ्जनी नागवल्ली च नागाह्वा रञ्जनी तीक्ष्णमञ्जरी ॥ ३ ॥

गुणाः—ताम्बूलं कटु तिक्तमुष्णमधुरं क्षारं कषायान्वितं वातघ्नं कफनाशनं कृमिहरं दुर्गन्धिनिर्णाशनम् । वक्त्रस्याऽऽभरणं विशुद्धिकरणं कामाग्निसंदीपनं ताम्बूलस्य सखे ! त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः ॥ ४ ॥ *कृष्णं पर्णं तिक्तमुष्णं कषायं धत्ते दाहं वक्त्रजाड्यं मलं च । * शुभ्रं पर्णं श्लेष्मवातामयघ्नं पथ्यं रुच्यं दीपनं पाचनं च ॥ ५ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

अथ भवति नागवल्ली ताम्बूली फणिलता च सप्तशिरा । पर्णलता फणिवल्ली भुजगलता भक्ष्यपत्री च ॥ ६ ॥ सा श्रीवाटाम्लादिवाटादिनानाग्रामस्तोमस्थानभेदाद्विभिन्ना । एकाऽप्येषां देशमृत्स्नाविशेषान्नानाकारं याति कार्ये गुणे च ॥ ७ ॥

गुणाः—नागवल्ली कटुस्तीक्ष्णा तिक्ता पीनसवातजित् । कफकासहरा रुच्या दाहकृद्दीपनी परा ॥ ८ ॥

†श्रीवाटी मधुरा तीक्ष्णा वातपित्तकफापहा । रसाढ्या सरसा रुच्या विपाके शिशिरा स्मृता ॥ ९ ॥ स्यादम्लवाटी कटुकाम्लतिक्ता तीक्ष्णा तथोष्णा मुखपाककर्त्री । विदाहपित्तास्रविकोपनी च विष्टम्भदा वातनिबर्हणी च ॥ १० ॥ †सतसा मधुरा तीक्ष्णा कटुरुष्णा च पाचनी । गुल्मोदराध्मानहरा रुचिकृद्दीपनी परा ॥ ११ ॥ *गुहागरे सप्तशिरा प्रसिद्धा तत्पर्णजूर्णाऽतिरसाऽतिरुच्या । सुगन्धितीक्ष्णा मधुराऽतिहृद्या संदीपनी पुंस्त्वकराऽतिबल्या ॥ १२ ॥ नाम्नाऽन्याऽम्लसरा सुतीक्ष्णमधुरा रुच्या हिमा दाहनुत्पित्तोद्रेकहरा सुदीपनकरी बल्या मुखामोदिनी । स्त्रीसौभाग्यविवर्धनी मदकरी राज्ञां सदा वल्लभा गुल्माध्मानविबन्धजिच्च कथिता

---

* ( १४ ) चतुर्दशसंख्यामितपूगीफलसंबद्धत्वादत्र वर्गान्ते बहुलायाः संग्रहः ।

† श्रीवाटी=सिरिवाडीपान इति ख्यातस्य । + अम्लवाटी=अंबाडेपर्ण इति ख्यातस्य । † सतसा=सातसीपर्णम् । * अडगरपर्णमितिख्यातस्य ।

† अम्लसरा=अंगरापर्णमितिख्यातम् ।

---

१ ट. °षा दोषमृ° । २ ज. ट. कायं । झ. ढ. कार्ये । ३ झ. ढ. गुणैश्च । ३ ट. °न्धपित्तकफहा सा ।

सा मालवे तु स्थिता ॥ १३ ॥ अन्ध्रे *पटुलिका नाम कषायोष्णा कटुस्तथा। मलापकर्षा कण्ठस्य पित्तकृद्वातनाशनी ॥१४॥ †व्हेसणीया कटुस्तीक्ष्णा हृद्या दीर्घदला च सा। कफवातहरा रुच्या कटुर्दीपनपाचनी॥१५॥अन्यच्च—सद्यस्त्रोटितभक्षितं मुखरुजाजाड्यावहं दोषकृद्दाहारोचकरक्तदायि मलकृद्विष्टम्भि वान्तिप्रदम्। यद्भूयो जलपानपोषितरसं तच्चेच्चिरात्रोटितं ताम्बुलीदलमुत्तमं च रुचिकृद्वर्ण्यं त्रिदोषार्तिनुत् ॥ १६ ॥

❊ ❊ ॥ १७ ॥

शिरापर्णं तु शैथिल्यं कुर्यात्तस्यास्त्रहृद्रसः। शीर्णं त्वग्दोषदं तस्य भक्षिते च क्षितं सदा ॥ १८ ॥ अनिधाय मुखे पर्णं पूगं खादति यो नरः। मतिभ्रंशो दरिद्री स्यादन्ते स्मरति नो हरिम् ॥ १९ ॥

## ( २ ) *चूर्णम्।

गुणाः—चूर्णं चार्जुनवृक्षजं कफहरं गुल्मघ्नमर्काह्वयं शोफघ्नं कुटजं करञ्जजनितं वातापहं रुच्यदम्। पित्तघ्नं †जलजं बलाग्निरुचिदं शैलाह्वयं पित्तदं स्फाटिक्यं दृढदन्तपङ्क्तिजननं शुक्त्यादिजं रूक्षदम् ॥ २० ॥ ताम्बूललक्षणम्—पर्णाधिक्ये दीपनी रङ्गदात्री चूर्णाधिक्ये रूक्षदा कृच्छ्रदात्री। साराधिक्ये $खादिरे शोषदात्री चूर्णाधिक्ये पित्तकृत्पूतिगन्धा ॥ २१ ॥

## ( ३ ) जिङ्गिणी।

जिङ्गिणी झिञ्झिणी ज्ञेया मोदकी गुडमञ्जरी। पार्वतेया सुनिर्घोषा तथा मदनमञ्जरी ॥ २२ ॥

गुणाः—वातघ्नी मधुरोष्णा च व्रणघ्नी योनिशोधनी। जिङ्गिणी कटुका पाके तथाऽतीसारनाशनी ॥ २३ ॥

( राजनिघण्टौ जिङ्गिण्याः पर्यायशब्दा गुणाश्च न दृश्यन्ते )

## ( ४ ) * ×कपर्दिका।

❊ कपर्दिका वराटश्च कपर्दश्च वराटिका। चराचरश्चरो वर्यो बालक्रीडनकश्च सः ॥ २४ ॥

* पटुलिका=पोटकुलीपर्णमिति ख्यातम्। † व्हेसणीया=घोरसमुद्रदेशपर्णमिति ख्यातम्।

* चूर्णस्याप्यत्र संग्रहणं पूगीफलसंबद्धत्वात्। † जलजम्=मौक्तिकम्। $ काथ इति ख्याते।

* कपर्दिकायाः ( ६१ )एकषष्टिमितस्य शङ्खस्य च परस्परसंबद्धत्वेनात्र संग्रहः।

+कपर्दिकायाः शुद्धिः—जम्बीरनीरेण कङ्कुष्ठवज्ज्ञेया। अन्यच्च—वराटाः काञ्जिके स्विन्ना यामार्धाच्छुद्धिमाप्नुयुः।

१ ज. ट. 'कृद्बल्यं त्रि'।

गुणाः—*कपर्दः कटुतिक्तोष्णः कर्णशूलव्रणापहः । * गुल्मशूलामयघ्नश्च नेत्रदोषनिकृन्तनः ॥२५॥ ग्रन्थान्तरे—परिणामादिशूलघ्नी ग्रहणीक्षयनाशनी । कटूष्णा दीपनी वृष्या नेत्र्या वातकफापहा ॥ २६ ॥ रसेन्द्रजारणे प्रोक्ता बीडद्रव्येषु शस्यते । तदन्ये तु वराटाः स्युर्गुरवः श्लेष्मपित्तलाः ॥ २७ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

* । चराचरश्चरो वर्यो बालक्रीडनकश्च सः ॥ २८ ॥

गुणाः— * । * ॥ २९ ॥

## ( ५ ) * * मृत्तिका ।

*मृन्मृत्तिका प्रशस्ता सा मृत्सा मृत्स्नेति चेष्यते ॥ ३० ॥

गुणाः—ग्रन्थान्तरे—मृत्तिका पावनी प्रोक्ता रससिद्धिविधायिका । दंशादिसर्वशोफानां हन्त्री लेपेन योजिता ॥ ३१ ॥

राजनिघण्टौ भूम्यादिर्द्वितीयो वर्गः— ॥ * ॥ ३२ ॥

## ( ६ ) * * पर्वतः ।

पर्वतः शिखरी शृङ्गी सानुमांश्च गिरिर्मतः । नगेन्द्रः क्ष्मावलः श्रीमानश्मराशिः शिलोच्चयः ॥ ३३ ॥

ग्रन्थान्तरे गुणाः—अद्रौ हितकरो वासो यथा खलु तपस्विनाम् । यक्ष्मभाजां जनानां तु शैलवासस्तथा भवेत् ॥ ३४ ॥

राजनिघण्टौ भूम्यादिर्द्वितीयो वर्गः—

अथ गिरिधरणीध्रगोत्रभूभृच्छिखरिशिलोच्चयशैलसानुमन्तः । क्षितिभृदगनगावनीधराद्रिस्थिरककुधराश्च धराधरो धरश्च ॥ ३५ ॥ अहार्यः पर्वतो ग्रावा कटकी प्रस्थवानपि । शृङ्गी च वृक्षवांश्चेति शब्दाः शैलार्थवाचकाः ॥ ३६ ॥

चन्दनादिरयं वर्गस्तृतीयः परिकीर्तितः ।
श्रीमतां भोगिनामर्हः प्रायो गन्धगुणाश्रयः ॥

इति रसवीर्यविपाकसहिते राजनिघण्टुयुतधन्वन्तरीयनिघण्टौ
तृतीयो वर्गः ॥ ३ ॥

---

* * मृत्तिकायाः पर्वतस्यचाप्यत्र संग्रहः कङ्कुष्ठसंबद्धत्वेन

# अथ करवीरादिश्चतुर्थो वर्गः—

## ( १ ) *करवीरः । ( उपविषम् )

करवीरोऽश्वहाऽश्वघ्नो हयमारोऽश्वमारकः । श्वेतकुन्दः[1] श्वेतपुष्पः प्रतिहासोऽश्वमोहकः ॥ १ ॥ द्वितीयो रक्तपुष्पश्च चण्डको लेगुडस्तथा[2] । चण्डातको गुल्मकश्च[3] प्रचण्डः करवीरकः ॥ २ ॥

गुणाः—करवीरः कटुस्तिक्तो वीर्ये चोष्णो[4] ज्वरापहः । चक्षुष्यः कुष्ठकण्डूघ्नः प्रलेपाद्विषमन्यथा ॥ ३ ॥ करवीरद्वयं तिक्तं सविषं कुष्ठजित्कटु ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

करवीरो महावीरो हयमारोऽश्वमारकः । हयघ्नः प्रतिहासश्च शतकुन्दोऽश्वरोधकः ॥ १ ॥ हयारिर्वीरकः कन्दुः शकुन्दः श्वेतपुष्पकः । अश्वान्तकस्तथाऽश्वघ्नो नखराह्वोऽश्वनाशकः ॥ २ ॥ स्थूलादिकुमुदः प्रोक्तो दिव्यपुष्पो हैरप्रियः[5] । गौरीपुष्पः सिद्धपुष्पस्त्रिकराह्वः प्रकीर्तितः ॥ ३ ॥

गुणाः—करवीरः कटुस्तीक्ष्णः कुष्ठकण्डूतिनाशनः । व्रणार्तिविषविस्फोटशमनोऽश्वमृतिप्रदः ॥ ४ ॥ रक्तकरवीरकोऽन्यो रक्तप्रसवो गणेशकुसुमश्च । चण्डीकुसुमः क्रूरो भूतद्रावी रविप्रियो मुनिभिः ॥ ५ ॥

गुणाः—रक्तस्तु करवीरः स्यात्कटुस्तीक्ष्णो विशोधकः । त्वग्दोषव्रणकण्डूतिकुष्ठहारी विषापहः ॥ ६ ॥ पीतकरवीरकोऽन्यः पीतप्रसवः सुगन्धिकुसुमश्च । कृष्णस्तु कृष्णकुसुमश्चतुर्विधोऽयं गुणे तुल्यः ॥ ७ ॥

## ( २ ) चक्रमर्दः । ( चक्रमर्दकः )

चक्रमर्दस्त्वेडगजो मेषाक्षिकुसुमस्तथा । प्रपुन्नाटस्तरवटश्चक्राह्वश्चक्रिका तथा ॥ ४ ॥ अन्यच्च—चक्रमर्दस्त्वेडगजो मेषाक्षोऽण्डगजस्तथा । प्रपुन्नाटः प्रपुन्नाडश्चक्री व्यावर्तकस्तथा ॥ ५ ॥

गुणाः—चक्रमर्दः कटूष्णः स्यात्प्रोक्तो वातकफापहः । दद्रुकण्डूहरः कान्तिसौकुमार्यकरो मतः ॥ ६ ॥

---

*करवीरशोधनम्—हयारिर्विषवच्छोध्यो गोदुग्धे दोलकेन तु । करवीरद्वयं नेत्ररोगकुष्ठव्रणापहम् ॥ १ ॥ लघूष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ।

---

१ क. ग. घ. ङ. शतकुन्दः । २ क. ङ. लकुड° । ३ क. ङ. गुणक° । ४ ग. °र्येणोष्णो । ५ ज. हरिप्रियः ।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

स्याच्चक्रमर्दोऽण्डगजो गजाख्यो मेषाह्वयश्चैडगजोऽण्डहस्ती। व्यावर्तकश्चक्रगजश्च चक्री पुन्नाडपुन्नाटविमर्दकाश्च ॥ ८ ॥ दद्रुघ्नश्चक्रमर्दः स्याच्चक्राह्वः शुकनाशनः। दृढबीजः प्रपुन्नाटः खर्जूघ्नश्चोनविंशतिः ॥ ९ ॥

गुणाः—चक्रमर्दः कटुस्तीव्रमेदोवातकफापहः। व्रणकण्डूतिकुष्ठार्तिदद्रुपामादिदोषनुत् ॥ १० ॥

## ( ३ ) *धत्तूरः। ( धस्तुरः, उपविषम्, कृचिका )

धत्तूरः कनको धूर्तो देवता कितवः शठः। उन्मत्तको मदनकः[1] कालिश्च हरवल्लभः ॥ ७ ॥

गुणाः—धत्तूरः कटुरुष्णश्च कान्तिकारी व्रणार्तिनुत्। कुष्ठानि हन्ति लेपेन प्रभावेण ज्वरं जयेत् ॥ ८ ॥ त्वग्दोषकृच्छ्रकण्डूतिज्वरहारी भ्रमावहः।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

धत्तूरः कितवो धूर्त उन्मत्तः कनकाह्वयः। शठो मातुलकः श्यामो मदनः शिवशेखरः ॥ ११ ॥ खर्जूघ्नः कालपुष्पश्च खलः कण्टफलस्तथा। मोहनः कलभोन्मत्तः शैवश्चाष्टादशाह्वयः ॥ १२ ॥

गुणाः—धत्तूरः कटुरुष्णश्च कान्तिकारी व्रणार्तिनुत्। त्वग्दोषखर्जुकण्डूतिज्वरहारी भ्रमप्रदः ॥ १३ ॥ कृष्णधत्तूरकः सिद्धः कनकः सचिवः शिवः। कृष्णपुष्पो विषारातिः क्रूरधूर्तश्च कीर्तितः ॥ १४ ॥ राजधत्तूरकश्चान्यो राजधूर्तो महाशठः। निस्त्रैणिपुष्पको भ्रान्तो राजस्वर्णः षडाह्वयः ॥ १५ ॥ सितनीलकृष्णलोहितपीतप्रसवाश्च सन्ति धत्तूराः। सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमः स्यात् ॥ १६ ॥

## ( ४ ) †कलिकारी ( कलिकारिका ) ( उपविषम् )

×कलिकारी तु हलिनी विशल्या गर्भपातिनी। लाङ्गल्याऽग्निमुखी सीरी दीप्ता नक्तेन्दुपुष्पिका ॥ ९ ॥

---

*धत्तूरशोधनम्—धत्तूरबीजं गोमूत्रे चतुर्यामोषितं पुनः। कण्डितं निस्तुषं कृत्वा योगेषु विनियोजयेत् ॥ १ ॥

† कलिकारीशोधनम्—लाङ्गली शुद्धिमायाति दिनं गोमूत्रसंस्थिता।

× गुणाः—कलिकारी सरा कुष्ठशोफार्शोव्रणशूलनुत्। तीक्ष्णोष्णकृमिनुल्लध्वी पित्तला गर्भपातिनी।

---

[1] क. ख. ग. 'दकरः कालि'।

गुणाः—लाङ्गली कटुरुष्णा च कफवातविनाशनी। तिक्ता सारा च श्वयथुगर्भशल्यव्रणापहा ॥ १० ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

कलिकारी लाङ्गलिनी हलिनी गर्भपातिनी। दीप्ता विशल्याऽग्निमुखी हली नक्तेन्दुपुष्पिका ॥ १७ ॥ विद्युज्ज्वालाऽग्निजिह्वा च व्रणहृत्पुष्पसौरभा। स्वर्णपुष्पा वह्निशिखा स्यादेषा षोडशाह्वया ॥ १८ ॥

गुणाः—कलिकारी कटूष्णा च कफवातनिकृन्तनी । गर्भान्तःशल्यनिष्कासकारिणी सारिणी परा ॥ १९ ॥

## ( ५ ) भृङ्गराजः।

भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । भृङ्गारको भृङ्गरेणुर्भृङ्गारः केशरञ्जनः ॥ ११ ॥

गुणाः—भृङ्गराजः समाख्यातस्तिक्तोष्णो रूक्ष एव च। कफशोफामपाण्डुत्वग्घृद्रोगविषनाशनः ॥ १२ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

मार्कवो भृङ्गराजश्च भृङ्गाह्वः केशरञ्जनः। पितृप्रियो रङ्गकश्च केश्यः कुन्तलवर्धनः ॥ २० ॥ पीतोऽन्यः स्वर्णभृङ्गारो हरिवासो हरिप्रियः । देवप्रियो वन्दनीयः पावनश्च षडाह्वयः ॥ २१ ॥ नीलस्तु भृङ्गराजोऽन्यो महानीलस्तु नीलकः। महाभृङ्गो नीलपुष्पः श्यामलश्च षडाह्वयः ॥ २२ ॥

गुणाः—भृङ्गराजास्तु चक्षुष्यास्तिक्तोष्णाः केशरञ्जनाः । कफशोफविषघ्नाश्च तत्र नीलो रसायनः ॥ २३ ॥

## ( ६ ) अर्कः*। ( उपविषम् )

अर्कः सूर्याह्वयः पुष्पी विक्षीरोऽथ विकीरणः। जम्भलः क्षीरपर्णी स्यादास्फोटो भास्करो रविः ॥ १३ ॥

गुणाः—अर्कस्तिक्तो भवेदुष्णः शोधनः परमः स्मृतः। कण्डूव्रणहरो हन्ति जन्तुसंततिमुद्धताम् ॥ १४ ॥ अर्कस्तु कटुरुष्णश्च वातहृद्दीपनः सरः। शोफव्रणहरः कण्डूकुष्ठप्लीहकृमीञ्जयेत् ॥ १५ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

---

* अर्कक्षीरशोधनम्—पञ्चगव्येषु शुद्धं तु देयमर्कद्वयं तथा । अर्कद्वयं सरं वातकुष्ठकण्डूविषापहम्। विहन्ति प्लीहगुल्मार्शोयकृच्छ्लेष्मोदरकृमीन्।

---

१ म °ग्घृत्क्लेशवयसां हितः।

अर्कः क्षीरदलः पुष्पी प्रतापः क्षीरकाण्डकः । विक्षीरो भास्करः क्षीरी खर्जुघ्नः शिवपुष्पकः ॥ २४ ॥ भञ्जनः क्षीरपर्णी स्यात्सविता च विकीरणः । सूर्याह्वश्च सदापुष्पो रविरास्फोटकस्तथा ॥ २५ ॥ तूलफलः शुकफलो विंशत्येकसमाह्वयः ।

गुणाः—अर्कस्तु कटुरुष्णश्च वातजिद्दीपनीयकः ॥ २६ ॥ शोफव्रणहरः कण्डूकुष्ठकृमिविनाशनः ।

## राजार्कः । ( अर्कविशेषः ) ॥ १ ॥

राजार्को वसुकोऽत्यर्को[1] मन्दारो गणरूपकः । एकाष्ठीलः सदापुष्पी स चालर्कः प्रतापनः ॥ १६ ॥ राजार्कः कटुतिक्तोष्णो वीर्यमेदोविषापहः । वातकुष्ठव्रणान्हन्ति शोफकण्डूविसर्पनुत् ॥ १८ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

राजार्को वसुकोऽलर्को मन्दारो गणरूपकः । काष्ठीलश्च सदापुष्पो ज्ञेयोऽत्र वसुसंमितः ॥ २७ ॥

गुणाः—राजार्कः कटुतिक्तोष्णः कफमेदोविषापहः । वातकुष्ठव्रणान्हन्ति शोफकण्डूविसर्पनुत् ॥ २८ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

## शुक्लार्कः । ( अर्कविशेषः ) ॥ २ ॥

शुक्लार्कस्तपनः श्वेतः प्रतापश्च सितार्ककः । सुपुष्पः शङ्करादिः स्यादत्यर्को वृत्तमल्लिका ॥ २९ ॥

गुणाः—श्वेतार्कः कटुतिक्तोष्णो मलशोधनकारकः । मूत्रकृच्छ्रास्रशोफार्तिव्रणदोषविनाशनः ॥ ३० ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

## श्वेतमन्दारः । ( अर्कविशेषः ) ॥ ३ ॥

श्वेतमन्दारकस्त्वन्यः पृथ्वी कुरबकः स्मृतः । दीर्घपुष्पः सितालर्को दीर्घात्यर्कः शराह्वयः ॥ ३१ ॥

गुणाः—श्वेतमन्दारकोऽत्युष्णस्तिक्तो मलविशोधनः । मूत्रकृच्छ्रव्रणान्हन्ति कृमीनत्यन्तदारुणान् ॥ ३२ ॥

---

१ क. °कोऽध्यर्को ।

## ( ७ ) बुकः । ( बकः )

बुको वसुक इत्युक्तः शिवाह्वः शिवशेखरः । महापाशुपतश्चैव सुव्रतः शिवमल्लिका ॥ १९ ॥

गुणाः—वसुकः कटुतिक्तोष्णः श्लेष्मोद्धूर्तकफापहः । व्रणान्समस्तान्हरति प्रलेपादिप्रयोजितः ॥ २० ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

बकः पाशुपतः शैवः शिवपिण्डश्च सुव्रतः । वसुकश्च शिवाङ्कश्च शिवेष्टः क्रमपूरकः ॥ ३३ ॥ शिवमल्ली शिवाह्लादः शाम्भवो रविसंमितः ।

गुणाः—पित्तदाहकफश्वासश्रमहारी च दीपनः ॥ ३४ ॥

## ( ८ ) काकमाची ।

काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी । कट्वी कटुफला चैव रसायनवरा स्मृता ॥ २१ ॥

गुणाः—काकमाची त्रिदोषघ्नी रसा स्वर्या सतिक्तका । हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ॥ २२ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

काकमाची ध्वाङ्क्षमाची वायसाह्वा च वायसी । सर्वतिक्ता बहुफला कट्फला च रसायनी ॥ ३५ ॥ गुच्छफला काकमाता स्वादुपाका च सुन्दरी । वरा विद्रावणी[2] चैव मत्स्याक्षी कुष्ठनाशनी ॥ ३६ ॥ तिक्तिका बहुतिक्ता च नाम्नामष्टादश स्मृताः ।

गुणाः—काकमाची कटुस्तिक्ता रसोष्णा कफनाशनी । शूलार्शःशोफदोषघ्नी कुष्ठकण्डूतिहारिणी ॥ ३७ ॥

### काकजङ्घा ( काकमाचीविशेषः ) ॥ ४ ॥

काकजङ्घा ध्वाङ्क्षजङ्घा काकपादा तु लोमशा । पारावतपदी दासी नदीकान्ता प्रचीबला ॥ २३ ॥

गुणाः—काकजङ्घा च तिक्तोष्णा रक्तपित्तज्वरापहा । कृमिदोषहरी वर्ण्या विषदोषहरा मता ॥ २४ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

---

१ ङ. छ. 'तव्यथाप' । २ झ. ढ. चन्द्राविणी ।

काकजङ्घा ध्वाङ्क्षजङ्घा काकाह्वा साऽथ वायसी। पारावतपदी दासी नदीकान्ता तु लोमशा ॥ ३८ ॥

गुणाः—काकजङ्घा तु तिक्तोष्णा कृमिव्रणकफापहा। बाधिर्याजीर्णजिज्जीर्णविषमज्वरहारिणी ॥ ३९ ॥

## काकनासा ( काकनासिका ) ( काकमाचीविशेषः ) ॥ ५ ॥

काकनासा ध्वाङ्क्षनासा काकतुण्डफला च सा। सुरङ्गी तस्करस्नायुर्ध्वाङ्क्षतुण्डफला मता ॥ २५ ॥

गुणाः—काकतुण्डी भवेत्तिक्ता कटूष्णा व्रणशोधनी। अतिविद्धं शोधयन्ती तैलपाके हितावहा ॥ २६ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

काकनासा ध्वाङ्क्षनासा काकतुण्डा च वायसी। सुरङ्गी तस्करस्नायुर्ध्वाङ्क्षतुण्डा सुनासिका ॥ ४० ॥ वायसाह्वा ध्वाङ्क्षवल्ली काकाक्षी ध्वाङ्क्षनासिका। काकप्राणा च विज्ञेया स्यादित्येषा त्रयोदश ॥ ४१ ॥

गुणाः—काकनासा तु मधुरा शिशिरा पित्तहारिणी। रसायनी दार्ढ्यकरी विशेषात्पलितापहा ॥ ४२ ॥

## *काकादनी ( उपविषम् ) ( काकमाचीविशेषः ) ॥ ६ ॥

काकादनी काकपीलुः काकणन्ती च रक्तिका। वक्त्रशल्या ध्वाङ्क्षनखी दुर्मोहा काकणन्तिका ॥ २७ ॥

गुणाः—काकणन्तिश्च तिक्तोष्णा वातश्लेष्महरा मता। ग्रहदोषहरा केश्या वृष्या चोर्ध्वगदापहा ॥ २८ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

काकादनी काकपीलुः काकशिम्बी च रक्तला[1]। ध्वाङ्क्षादनी वक्त्रशल्या दुर्मोहा वायसादनी ॥ ४३ ॥ काकतुण्डी ध्वाङ्क्षनखी वायसी काकदन्तिका। ध्वाङ्क्षदन्तीति विज्ञेयास्तिस्रश्च दशधाऽभिधाः ॥ ४४ ॥

गुणाः—काकादनी कटूष्णा च तिक्ता दिव्यरसायनी। वातदोषहरा रुच्या पलितस्तम्भिनी परा ॥ ४५ ॥

---

*काकादनीशोधनम्—गुञ्जा काञ्जिकसंस्विन्ना प्रहराच्छुध्यति ध्रुवम्। गुञ्जा लघुर्हिमा रूक्षा भेदिनी श्वासकासजित् ॥ १ ॥ कृष्णाकृष्णकुष्ठकण्डूश्लेष्मपित्तव्रणापहा।

---

१ ङ. छ. काकशिम्बी।

## चूडामणिः । (काकमाची विशेषः)॥ ७॥

चूडामणिः शीतपाकी शिखण्डी कृष्णला मता । उच्चटा ताम्रिका गुञ्जा चटकी काकसाह्वया ॥ २९ ॥

गुणाः—गुञ्जा रूक्षा तथा तिक्ता वीर्योष्णा च प्रकीर्तिता । विषवैषम्यजन्तुघ्नी रोगग्रामभयापहा ॥ ३० ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

गुञ्जा चूडामणिः सौम्या शिखण्डी कृष्णलाऽरुणा । ताम्रिका शीतपाकी स्यादुच्चटा कृष्णचूडिका ॥ ४६ ॥ रक्ता च रक्तिका चैव काम्भोजी भिल्लभूषणी । वन्याऽश्ममलचूडा च विज्ञेया षोडशाह्वया ॥ ४७ ॥

## श्वेतकाम्भोजी । ( काकमाचीविशेषः ) ॥ ८ ॥

अपरा श्वेतकाम्भोजी श्वेतगुञ्जा भिरीटिका । काकादनी काकपीलुर्वक्त्र[1]शल्या सितोच्चटा ॥ ३१ ॥

गुञ्जाद्वयगुणाः—गुञ्जाद्वयं च शीतोष्णं बीजवान्ति[2]क[3]रं[4] शिफा । शूलघ्नी विषहृत्पत्रं वश्ये श्वेता प्रशस्यते ॥ ३२ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

द्वितीया श्वेतकाम्भोजी श्वेतगुञ्जा भिराटिका । काकादनी काकपीलुर्वक्त्रशल्या षडाह्वया ॥ ४८ ॥

गुञ्जाद्वयगुणाः—गुञ्जाद्वयं तु तिक्तोष्णं बीजं वान्तिकरी शिफा । शू[5]लघ्नं विषहृत्पत्रं वश्ये श्वेता च शस्यते ॥ ४९ ॥

## ( ९ ) मूलकम् ।

मूलकं हरिपर्णं च मृत्तिकाक्षारमेव च । नीलकन्दं महाकन्दं रु[6]चिष्यं हस्तिदन्तकम् ॥ ३३ ॥

गुणाः—मूलकं गुरु विष्टम्भि तीक्ष्णमामत्रिदोषनुत् । तदेव स्विन्नं स्निग्धं च कटूष्णं कफवातनुत् ॥ ३४ ॥ त्रिदोषशमनं शुष्कं विषदोषहरं लघु ।

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

मूलकं नीलकण्ठं च मूलाह्वं दीर्घमूलकम् । भूक्षारं कन्दमूलं स्याद्धस्तिदन्तं सितं तथा ॥ ५० ॥ शङ्खमूलं हरित्पर्णं रुचिरं दीर्घकन्दकम् । कुञ्जरक्षारमूलं च मूलस्यैते त्रयोदश ॥ ५१ ॥

---

१ क. 'वैक्रश' । २ त. 'न्तिहरा शि' । ३ क. ङ. 'करी शि' । ४ ञ. 'रं हि तत् । शू' । ५ ट. शूलघ्नी । ६ ण. रोचिष्यं ।

गुणाः—मूलकं तीक्ष्णमुष्णं च कटूष्णं ग्राहि दीपनम् । दुर्नामगुल्महृद्रोगवातघ्नं रुचिदं गुरु ॥ ५२ ॥

## चाणाख्यमूलकम् ( मूलकविशेषः ) ॥ ९ ॥

चाणाख्यमूलकं चान्यच्छालेयं मरुसंभवम् । शालामर्कटकं मिश्रं विष्णुगुप्तं मतं तथा ॥ ३५ ॥

गुणाः—चाणाख्यं मूलकं तिक्तं कटूष्णं रुच्यदीपनम् । कफवातकृमीन्गुल्मं नाशयेद्ग्राहकं परम् ॥ ३६ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

चाणाख्यमूलकं चान्यच्छालेयं विष्णुगुप्तकम् । स्थूलमूलं महाकन्दं कौटिल्यं मरुसंभवम् ॥ ५३ ॥ शालामर्कटकं मिश्रं ज्ञेयं चैव नवाभिधम् ।

गुणाः—चाणाख्यमूलकं सोष्णं कटुकं रुच्यदीपनम् । कफवातकृमीन्गुल्मं नाशयेद्ग्राहकं गुरु ॥ ५४ ॥

## *गृञ्जनम् । ( आटवीमूलकम् ) ( मूलकविशेषः ) ॥ १० ॥

तृतीयं मूलकं चान्यन्निर्दिष्टं तच्च गृञ्जनम् । पीतकं मधुरं स्वादु तच्च नारदकन्दकम् ॥ ३७ ॥

गुणाः—आटवीमूलकं तिक्तं विपाके कटुकं तथा । पित्ताविरोधी कफहा गुरुः स्याद्वातनाशनम् ॥ ३८ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

गृञ्जनं शिखिमूलं च यवनेष्टं च वर्तुलम् । ग्रन्थिमूलं शिखाकन्दं कन्दं डिण्डीरमोदकम् ॥ ५५ ॥

गुणाः—गृञ्जनं कटुकोष्णं च कफवातरुजापहम् । रुच्यं च दीपनं हृद्यं दुर्गन्धं गुल्मनाशनम् ॥ ५६ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## पिण्डमूलम् । ( मूलकविशेषः ) ॥ ११ ॥

पिण्डमूलं गजाण्डं च पिण्डकं पिण्डमूलकम् ।

गुणाः—पिण्डमूलं कटूष्णं च गुल्मवातादिदोषनुत् ॥ ५७ ॥

मूलकविशेषगुणाः—सोष्णं तीक्ष्णं च तिक्तं मधुरकटुरसं मूत्रदोषापहारि श्वासार्शःकासगुल्मक्षयनयनरुजानाभिशूलामयघ्नम् । कण्ठ्यं बल्यं च रुच्यं मल-

---

* क्वचित्पुस्तके 'गृञ्जरम्' इति पाठो दृश्यते । तथा च 'गर्जरम्' इत्यपि पाठो दृश्यते ।

---

१ छ. 'गुप्तं मलं त' । ग. 'गुप्तसमं त' । २ छ. मलं ।

विकृतिहरं मूलकं बालकं स्यादुष्णं जीर्णं च शोफप्रदमुदितमिदं दाहपित्तास्रदायि ॥५८॥ आमं संग्राहि रुच्यं कफपवनहरं पक्वमेतत्कटूष्णं भुक्तेः प्राग्भक्षितं चेत्सपदि वितनुते पित्तदाहास्रकोपम् । भुक्त्या सार्धं तु जग्धं हितकरबलकृद्देसवारेण तच्चेत्पक्वं हृद्रोगशूलप्रशमनमुदितं शूलरुग्घारि मूलम् ॥ ५९ ॥

## ( १० ) शिग्रुः ।

शिग्रुर्हरितशाकश्च शिग्रुको[1] लघुपत्रकः । अवदंशक्षमो दंशः प्रोक्तो मूलकपर्ण्यपि ॥ ३९ ॥ सौभाञ्जनस्तीक्ष्णगन्धो मुखभङ्गो[2]ऽथ शिग्रुकः । श्वेतकः श्वेतमरिचो रक्तको मधुशिग्रुकः ॥ ४० ॥

गुणाः—†शिग्रुस्तिक्तः कटुश्चोष्णः कफशोफसमीरजित् । कृम्यामविषमेदोघ्नो विद्रधिप्लीहगुल्मनुत् ॥ ४१ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

शिग्रुर्हरितशाकश्च शाकपत्रः सुपत्रकः । उपदंशक्षमो दंशो ज्ञेयः कोमलपत्रकः ॥ ६० ॥ बहुमूलो दंशमूलस्तीक्ष्णमूलो दशाह्वयः ।

गुणाः—शिग्रुश्च कटुतिक्तोष्णस्तीक्ष्णो वातकफापहः । मुखजाड्यहरो रुच्यो दीपनो व्रणदोषनुत् ॥ ६१ ॥

शोभाञ्जनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः । मुखामोदः कृष्णशिग्रुश्चक्षुष्यो रुचिरञ्जनः ॥ ६२ ॥

गुणाः—शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा । जन्तुवातार्तिशूलघ्नश्चक्षुष्यो रोचनः परः ॥ ६३ ॥ श्वेतशिग्रुः सुतीक्ष्णः स्यान्मुखभङ्गः सिताह्वयः । सुमूलः श्वेतमरिचो रोचनो मधुशिग्रुकः ॥ ६४ ॥

गुणाः—श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानलनिकृन्तनः । अङ्गव्यथाहरो रुच्यो दीपनो मुखजाड्यनुत् ॥ ६५ ॥ रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः । सुगन्धकेसरः सिंहो मृगारिश्च प्रकीर्तितः ॥ ६६ ॥

गुणाः—रक्तशिग्रुर्महावीर्यो मधुरश्च रसायनः । शोफाध्मानसमीरार्तिपित्तश्लेष्मापसारकः ॥ ६७ ॥

## ( ११ ) सर्षपः ।

सर्षपः शुभ्रगौरस्तु सिद्धार्थो भूतनाशनः । कटुस्नेहो ग्रहघ्नस्तु कटुको राजिकाफलः ॥ ४२ ॥

---

† ख. पुस्तकेऽयं पाठो दृश्यते—
'सौभाञ्जनद्वयं तीक्ष्णं कटु स्वादूष्णपिच्छलम् । सक्षारं वातशोफघ्नं दृष्टिमान्द्यहरं सरम्' ॥

---

[1] झ. दीर्घको । [2] झ. 'खभृङ्गोऽ' । घ. 'खसंशोधकः शुकः' ।

गुणाः—गौरसर्षपकोऽत्युष्णो रक्षोघ्नः कफवातजित् । कृम्यामकण्डुकुष्ठघ्नः श्रुतिशीर्षानिलार्तिजित् ॥४२॥ तद्वद्रक्तस्तु सिद्धार्थस्तिक्तः स्निग्धोष्णकः कटुः।

राजनिघण्टौ शाल्यादिः षोडशो वर्गः--

तीक्ष्णकश्च दुराधर्षो रक्षोघ्नः कुष्ठनाशनः । सिद्धप्रयोजनः सिद्धसाधनः सितसर्षपः ॥ ६८ ॥

गुणाः—सिद्धार्थः कटुतिक्तोष्णो वातरक्तग्रहापहः । त्वग्दोषशमनो रुच्यो विषभूतव्रणापहः ॥ ६९ ॥

## राजक्षवकः । ( सर्षपविशेषः ) ॥ १२ ॥

राजक्षवक इत्युक्ता राजिका कृष्णसर्षपा । क्षुधाभिजनकश्चैव सा चोक्ता राजसर्षपः ॥ ४३ ॥

गुणाः—राजिका कटुतिक्तोष्णा कृमिश्लेष्महरा परा । रुचिष्या पित्तला प्रोक्ता दृष्टिबस्तिप्रदूषणी ॥ ४४ ॥ अन्यच्च-राजिका तु कफवातहारिणी रोचिकाऽग्निजननी च कथ्यते। कण्ठरुक्कृमिविनाशिनी तथा उष्णवीर्यमुपहन्ति शूलिनाम् ॥ ४५ ॥

विशेषगुणाः—कृमिः स्निग्धोष्णकुष्ठघ्नः कटुको रसपाकतः । तद्गुणा राजिका रुच्या तद्गुणोऽन्योऽपि सर्षपः ॥ ४६ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

राजक्षवकः कृष्णस्तीक्ष्णफला राजराजिका राज्ञी । सा कृष्णसर्षपाख्या विज्ञेया राजसर्षपाख्या च ॥ ७० ॥

गुणाः—राजसर्षपकस्तिक्तः कटूष्णो वातशूलनुत् । पित्तदाहप्रदो गुल्मकण्डूकुष्ठव्रणापहः ॥ ७१ ॥

## ( १२ ) भूतृणः ( भूतिः )

भूतृणो रोहिषो भूतिर्भूतिकोऽथ कुटुम्बकः । मालातृणः प्रलम्बश्च च्छत्रोऽतिच्छत्रकस्तथा ॥ ४७ ॥

गुणाः—भूतृणो लघुरुष्णश्च रूक्षः श्लेष्मामयापहः । अस्य प्रयोगः सहसा हन्ति जन्तून्समुद्धतान् ॥४८॥ अन्यच्च—भूतृणः कटुतिक्तश्च वातसंताननाशनः। हन्ति भूतग्रहावेशान्विषदोषांश्च दारुणान् ॥ ४९ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

भूतृणो रोहिषो भूतिर्भूतिकोऽथ कुटुम्बकः । मालातृणः सुमाली च

च्छत्रोऽतिच्छत्रकस्तथा ॥ ७२ ॥ गुह्यबीजः सुगन्धश्च गुंलालः पुंस्त्वविग्रहः । बधिरश्चातिगन्धश्च शृङ्गरोहः शरेन्दुकः ॥ ७३ ॥

गुणाः—भूतृणं कटु तिक्तं च वातसंतापनाशनम् । हन्ति भूतग्रहावेशान्विषदोषांश्च दारुणान् ॥ ७४ ॥ सुगन्धभूतृणश्चान्यः सुरसः सुरभिस्तथा । गन्धतृणः सुगन्धश्च मुखवासः षडाह्वयः ॥ ७५ ॥

गुणाः—गन्धतृणं सुगन्धि स्यादीषत्तिक्तं रसायनम् । स्निग्धं मधुरशीतं च कफपित्तश्रमापहम् ॥ ७६ ॥

## ( १३ ) सुरसा (सुरसः)

सुरसा तुलसी ग्राम्या सुरभी बहुमञ्जरी । अपेतराक्षसी गौरी भूतघ्नी देवदुन्दुभिः ॥ ५० ॥

गुणाः—तुलसी लघुरुष्णा च रूक्षा कफविनाशनी । कृमिदोषं निहन्त्येषा रुचिकृद्वह्निदीपनी ॥ ५१ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

तुलसी सुभगा तीव्रा पावनी विष्णुवल्लभा । सुरेज्या सुरसा ज्ञेया कायस्था सुरदुन्दुभी ॥ ७७ ॥ सुरभिर्बहुपत्री च मञ्जरी सा हरिप्रिया । अपेतराक्षसी श्यामा गौरी त्रिदशमञ्जरी ॥ ७८ ॥ भूतघ्नी पूतपत्री च ज्ञेया चैकोनविंशतिः ।

गुणाः—तुलसी कटुतिक्तोष्णा तुलसी श्लेष्मवातजित् । जन्तुभूतकृमिहरा रुचिकृद्वातशान्तिकृत् ॥ ७९ ॥ कृष्णा तु कृष्णतुलसी श्वेता लक्ष्मीः सिताह्वया ।

## ( १४ ) जम्बीरः ।

जम्बीरः खरपत्रश्च फणी चोक्तः फणिज्जकः । मरुत्तको मरुबको मरुर्मरुबकस्तथा ॥ ५२ ॥

गुणाः—फणिज्जको हिमस्तिक्तो रूक्षः कफविनाशनः । रक्तहारी तथा हन्ति सुघोरं कृत्रिमं विषम् ॥ ५३ ॥ मरुबकः कफहरो रुच्यो मुखसुगन्धकृत् ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

मरुवः खरपत्रस्तु गन्धपत्रः फणिज्जकः । बहुवीर्यः शीतलकः सुराह्वश्च समीरणः ॥ ८० ॥ जम्बीरः प्रस्थकुसुमो ज्ञेयो मरुबकस्तथा । आजन्मसुरभिपत्रो मरीचश्च त्रयोदश ॥ ८१ ॥ द्विधा मरुबकः प्रोक्तो श्वेतश्चैव सितेतरः । श्वेतो भेषजकार्ये स्यादपरः शिवपूजने ॥ ८२ ॥

---

१ ट. गुच्छालः । ज. गुच्छवृशूरवि ।

गुणाः—मरुवः कटुतिक्तोष्णः कृमिकुष्ठविनाशनः । विड्बन्धाध्मानशूलघ्नो मान्द्यत्वग्दोषनाशनः ॥ ८३ ॥

## ( १५ ) कुठेरकः । ( कुठेरः )

कुठेरकस्तु वैकुण्ठः क्षुद्रपर्णोऽर्जकस्तथा । वटपत्रः कुठेरोऽन्यः पर्णासो बिल्वगन्धकः[१] ॥ ९४ ॥

गुणाः—*अर्जकः शीतलस्तिक्तः श्लेष्मामयविनाशनः । द्विविधं च विषं हन्याद्दुष्टरक्तविनाशनः ॥ ९५ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

अर्जकः क्षुद्रतुलसी क्षुद्रपर्णो मुखार्जकः । उग्रगन्धश्च जम्बीरः कुठेरश्च कठिञ्जरः ॥ ८४ ॥ सितार्जकस्तुवैकुण्ठो वटपत्रः कुठेरकः । जम्बीरो गन्धबहुलः सुमुखः कटुपत्रकः ॥ ८५ ॥

## शालुकः । ( कुठेरकविशेषः ) ॥ १३ ॥

कुठेरकस्तृतीयोऽन्यः शालुकः कृष्णशालुकः । कृष्णार्जकः कालमालः करालः कृष्णमल्लिका ॥ ९६ ॥

गुणाः—*त्रयोऽर्जकाः कटूष्णाः स्युः कफवातामयापहाः । * नेत्रामयहरा रुच्याः सुखप्रसवकारकाः ॥ ९७ ॥ कृत्रिमं च विषं हन्यू रक्तदोषविनाशनाः ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

कृष्णार्जकः कालमालो मालूकः कृष्णमालुकः । स्यात्कृष्णमल्लिका प्रोक्ता गरघ्नो वनबर्बरः ॥ ८६ ॥

गुणाः—* । * ॥ ८७ ॥

## ( १६ ) सुमुखः ।

सुमुखः सुप्रशस्तश्च[२] गरघ्नः कटुपत्रकः । दोषोत्क्लेशी सुवक्त्रश्च स्वास्यः सुवदनो मतः ॥ ९८ ॥

---

* ख. पुस्तकेऽयं श्लोको दृश्यते—
'कुठेरकाः सुगन्धाः स्युः कटुपाकरसाः स्मृताः ।
पित्तघ्ना लघुरूक्षाश्च तीक्ष्णोष्णाः पित्तवर्धनाः' ॥

---

१ क. गन्धाबिल्वकः । २ क. 'प्रसन्नश्च । ख. 'प्रसिद्धश्च ।

गुणाः—*पित्तकृत्पार्श्वशूलघ्नः सुमुखः समुदाहृतः । कफानिलविषश्वासका-सदौर्गन्ध्यनाशनः ॥ ५९ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

वनबर्बरिकाऽन्या तु सुगन्धिः सुप्रसन्नकः । दोषोत्क्लेशी विषघ्नश्च सुमुखः सूक्ष्मपत्रकः ॥ ८८ ॥ निद्रालुः शोफहारी च सुवक्त्रश्च दशाह्वयः ।

गुणाः—वनबर्बरिका चोष्णा सुगन्धो कटुका च सा । पिशाचवान्तिभूतघ्नी घ्राणसंतर्पणी परा ॥ ८९ ॥

## ( १७ ) आसुरी ।

आसुरी राजिका राजी कृष्णका रक्तसर्षपः । तीक्ष्णगन्धा चातितीक्ष्णा क्षुवकः क्षवकः क्षवः ॥ ६० ॥

गुणाः—राजिका कटुतिक्तोष्णा कुष्ठघ्नी कफगुल्मजित् । निद्राकरी शोफ-हरी ग्रहकारी च सा स्मृता ॥ ६१ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

आसुरी राजिका राजी रक्तिका रक्तसर्षपः । तीक्ष्णगन्धा मधुरिका क्षवकः क्षुवकः क्षवः ॥ ९० ॥

गुणाः—आसुरी कटुतिक्तोष्णा वातप्लीहार्तिशूलनुत् । दाहपित्तप्रदा हन्ति कफगुल्मकृमिव्रणान् ॥ ९० ॥

## ( १८ ) काण्डीरः । ( काण्डरी )

* काण्डीरः काण्डकटुको नासासंवेदनः पटुः । *उग्रकाण्डस्तोयवल्ली[1] कारवल्ली सुकाण्डकः ॥ ६२ ॥

गुणाः—*काण्डीरः कटुतिक्तोष्णः सरो दुष्टव्रणार्तिजित् । *लूतागुल्मोदर-प्लीहशूलमन्दाग्निनाशनः ॥ ६३ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

गुणाः—* * ॥ ९३ ॥

* * ॥ ९२ ॥

---

* क. ङ. पुस्तकयोर्विशेषपाठः—
'निद्राकरः शोफहरो रुचिकारी स च स्मृतः ।
सुमुखोऽरुचिकृच्छ्रघ्नो वातश्लेष्मविषापहः' ॥

---

१ क. ग. 'स्तोमव'।

## ( १९ ) जलपिप्पली । ( जलभूः )

जलपिप्पल्यभिहिता शारदी तोयपिप्पली। मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥ ६४ ॥

गुणाः—जलपिप्पलिका तिक्ता कषाया कफपित्तजित् । श्वासास्रविषदाहार्तिभ्रममूर्छातृषापहा ॥ ६५ ॥

( राजनिघण्टौ जलपिप्पल्याः पर्यायशब्दा गुणाश्च न दृश्यन्ते )

## ( २० ) रसोनः ।

रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् । महाकन्दो रसोनोऽन्यो गृञ्जनो दीर्घपत्रकः ॥ ६६ ॥

गुणाः—रसोन उष्णः कटुपिच्छिलश्च स्निग्धो गुरुः स्वादुरसोऽतिबल्यः । वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसंधानकरः सुतीक्ष्णः॥ ६७ ॥ तथाच—हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकृच्छ्रशोफान् । दुर्नामकुष्ठानिलसादजन्तुकफामयान्हन्ति महारसोनः ॥ ६८ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् । भूतघ्नश्चोग्रगन्धश्च लशुनः शीतमर्दकः[2] ॥ ९४ ॥

गुणाः—रसोनोऽम्लरसोनः स्याद्गुरूष्णः कफवातनुत् । अरुचिकृमिहृद्रोगशोफघ्नश्च रसायनः ॥ ९५ ॥ रसोनोऽन्यो महाकन्दो गृञ्जनो दीर्घपत्रकः। पृथुपत्रः स्थूलकन्दो यवनेष्टो बले हितः ॥ ९६ ॥

गुणाः—गृञ्जनस्य मधुरं कटु कन्दं नालमप्युपदिशन्ति कषायम् । पत्रसंचयमुशन्ति च तिक्तं सूरयो लवणमस्थि वदन्ति ॥ ९७ ॥

## ( २१ ) गृञ्जरम् । ( गर्जरम् )

गर्जरं पिङ्गलं मूलं पीतकं मूलकं तथा । स्वादुमूलं सुपीतं च नागरं पीतमूलकम् ॥ ६९ ॥

गुणाः—गर्जरं मधुरं रुच्यं किंचित्कटु कफापहम्। आध्मानकृमिशूलघ्नं दाहपित्तज्वरापहम् ॥ ७० ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

गर्जरं पिङ्गमूलं च पीतकं च सुमूलकम् । स्वादुमूलं सुपीतं च नारङ्गं पीतमूलकम् ॥ ९८ ॥

---

१ ङ. छ. 'फवातजि' । २ ज. शीतपूर्वकः । झ. ढ. शितपूर्वकः ।

गुणाः—गर्जरं मधुरं रुच्यं किंचित्कटु कफापहम् । आध्मानकृमिशूलघ्नं दाहपित्ततृषापहम् ॥ ९९ ॥

## ( २२ ) पलाण्डुः । (ऊलिः, कन्दर्पः)

पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषणः । हरितोऽन्यः पलाण्डुश्च लतार्को दुर्द्रुमः स्मृतः ॥ ७१ ॥

गुणाः—पलाण्डुस्तद्गुणो नान्यो विपाके मधुरस्तु सः । कफं करोति नो पित्तं केवलोऽनिललनाशनः ॥ ७२ ॥ ऊलिः पञ्चरसाऽपि स्याद्गुरूष्णा चाम्लवर्जिता । वायुशोफारुचिश्लेष्मकृमिहृद्रोगनाशनी ॥ ७३ ॥ पलाण्डुः कटुको बल्यो गुरुर्वातास्रपित्तजित् । अन्यः क्षीरपलाण्डुश्च वृष्यो मधुरपिच्छलः ॥ ७४ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

पलाण्डुस्तीक्ष्णकन्दश्च उल्ली च मुखदूषणः । शूद्रप्रियः कृमिघ्नश्च दीपनो मुखगन्धकः ॥ १०० ॥ बहुपत्रो विश्वगन्धो रोचनो रुद्रसंज्ञकः । श्वेतकन्दश्च तत्रैको हारिद्रोऽन्य इति द्विधा ॥ १०१ ॥

गुणाः—पलाण्डुः कटुको बल्यः कफपित्तहरो गुरुः । वृष्यश्च रोचनः स्निग्धो वान्तिदोषविनाशनः ॥ १०२ ॥ अन्यो राजपलाण्डुः स्याद्यवनेष्टो नृपाह्वयः । राजप्रियो महाकन्दो दीर्घपत्रश्च रोचकः ॥ १०३ ॥ नृपेष्टो नृपकन्दश्च महाकन्दो नृपप्रियः । रक्तकन्दश्च राजेष्टो नामान्यत्र त्रयोदश ॥ १०४ ॥

गुणाः—पलाण्डुर्नृपपूर्वः स्याच्छिशिरः पित्तनाशनः । कफहृद्दीपनश्चैव बहुनिद्राकरस्तथा ॥ १०५ ॥

## ( २३ ) कदली ।

कदली सुकुमारा च रम्भा स्वादुफला मता । दीर्घपत्रा च निःसारा मोचा हस्तिविषाणिका ॥ ७५ ॥

गुणाः—कदली मधुरा शीता रम्या पित्तहरा मृदुः । कदल्यास्तु फलं स्वादु कषायं नातिशीतलम् । रक्तपित्तहरं वृष्यं रुच्यं कफकरं गुरु ॥ ७६ ॥ कन्दस्तु वातलो रूक्षः शीतोऽसृक्कृमिकुष्ठनुत् ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

कदली सुफला रम्भा सुकुमारा सकृत्फला । मोचा गुच्छफला हस्ति-

---

१ ग. घ. °षकः । ह° । २ ग. °द्रुमो मतः । ३ त. उलिः । ४ ट. उष्णी । ५ क. ख. ग. ङ. भानुफला ।

विषाणी गुच्छदन्तिका ॥ १०६ ॥ काष्ठीरसा च निःसारा राजेष्टा बाल-कप्रिया । उरुस्तम्भा भानुफला वनलक्ष्मीश्च षोडश ॥ १०७ ॥

गुणाः—बालं फलं मधुरमल्पतया कषायं पित्तापहं शिशिररुच्यमथापि नालम् । पुष्पं तदप्यनुगुणं क्रमिहारि कन्दं पर्णं च शूलशमकं कदलीभवं स्यात् ॥ १०८ ॥ अपि च—रम्भापक्कफलं कषायमधुरं बल्यं च शीतं तथा पित्तं चास्रविमर्दनं गुरुतरं पथ्यं च मन्दानले । सद्यः शुक्रविवृद्धिदं क्लमहरं तृष्णापहं कान्तिदं दीप्ताग्नौ सुखदं कफामयकरं संतर्पणं दुर्जरम् ॥ १०९ ॥

## काष्ठकदली ( कदलीविशेषः ) ॥ १४ ॥

द्वितीया काष्ठकदली श्वेता रानकदल्यपि । विषघ्नी कदली चापि पाषाण-कदली तथा ॥ ७८ ॥ पाठान्तरे—द्वितीया काष्ठकदली श्वेता वनकदल्यपि । विषघ्नी स्वादुकदली पाषाणकदली तथा ॥ ७९ ॥

गुणाः—*स्यात्काष्ठकदली रुच्या रक्तपित्तहरा हिमा । * गुरुर्मन्दाग्निज-ननी दुर्जरा मधुरा परा ॥ ८० ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

काष्ठकदली सुकाष्ठा वनकदली काष्ठिका शिलारम्भा । दारुकदली फलाढ्या वनमोचा चाश्मकदली च ॥ ११० ॥

गुणाः—* * ॥ १११ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

## गिरिकदली ( कदलीविशेषः ) ॥ १५ ॥

गिरिकदली गिरिरम्भा पर्वतमोचाऽप्यरण्यकदली च । बहुबीजा वनरम्भा गिरिजा गजवल्लभाऽभिहिता ॥ ११२ ॥

गुणाः—गिरिकदली मधुरहिमा बलवीर्यविवृद्धिदायिनी रुच्या । तृट्पित्त-दाहशोषप्रशमनकर्त्री च दुर्जरा च गुरुः ॥ ११३ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

## सुवर्णकदली ( कदलीविशेषः ) ॥ १६ ॥

अन्या सुवर्णकदली सुवर्णरम्भा च कनकरम्भा च । पीता सुवर्णमोचा चम्पकरम्भा सुरम्भिका सुभगा ॥ ११४ ॥ हेमफला स्वर्णफला कनकस्तम्भा च पीतरम्भा च । गौरा च गौररम्भा काञ्चनकदली सुरप्रिया षड्भूः॥११५॥

---

१ क्ष. काष्ठिरसा ।

गुणाः—सुवर्णमोचा मधुरा हिमा च स्वल्पाशने दीपनकारिणी च । तृष्णापहा दाहविमोचनी च कफावहा वृष्यकरी गुरुश्च ॥ ११६ ॥

## ( २४ ) सिन्दुवारः ।

*सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः । नीलपुष्पः शीतसहो निर्गुण्डी नीलसिन्दुका ॥ ८१ ॥

गुणाः—निर्गुण्डी कटुतिक्तोष्णा कृमिकुष्ठरुजापहा । वातश्लेष्मप्रशमनी प्लीहगुल्मारुचीर्जयेत् ॥ ८२ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

*स्थिरसाधनको नेता सिद्धकश्चार्थसिद्धकः ॥ ११७ ॥

गुणाः—सिन्दुवारः कटुस्तिक्तः कफवातक्षयापहः । कुष्ठकण्डूतिशमनः शूलहृत्कासिद्धिदः ॥ ११८ ॥

## ( २५ ) शेफालिका । ( शेफाली )

शेफालिकाऽन्या निर्गुण्डी वनजा नीलमञ्जरी । शुक्लाऽन्या श्वेतसुरसा भूतकेशी च कथ्यते ॥ ८३ ॥

गुणाः—कृष्णसंज्ञो विषघ्नश्च पवित्रो गिरिसिन्दुकः ।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

सुगन्धाऽन्या शीतसहा निर्गुण्डी नीलसिन्दुकः । सिन्दुकश्छपिका भूतकेशीन्द्राणी च नीलिका ॥ ११९ ॥

गुणाः—कटूष्णा नीलनिर्गुण्डी तिक्ता रूक्षा च कासजित् । श्लेष्मशोफसमीरार्तिप्रदराध्मानहारिणी ॥ १२० ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

### शुक्लाङ्गी । ( शेफालिकाविशेषः ) ॥ १७ ॥

शेफालिका तु सुवहा शुक्लाङ्गी शीतमञ्जरी प्रोक्ता । अपराजिता च विजया वातारिर्भूतकेशी च ॥ १२१ ॥

गुणाः—शेफालिः कटुतिक्तोष्णा रूक्षा वातक्षयापहा । स्यादङ्गसंधिवातघ्नी गुदवातादिदोषनुत् ॥ १२२ ॥

---

१ ट. °फापहा । २ क. ग. सिन्धुकः सिन्धुवा° । ३ ङः सीतसिन्धुका । ४ झ. ढ. °कश्चापि° ।

## ( २६ ) अश्वक्षुरकः । ( अश्वक्षुरा । अश्वक्षुरिका । )

अश्वक्षुरः श्वेतपुष्पी श्वेता च गिरिकर्णिका । कटभी श्वेतनामा च श्वेतस्पन्दाऽपराजिता ॥ ८४ ॥ नीलपुष्पा महाश्वेता गिरिकर्णी गवादनी । वल्ली चात्युग्रगन्धा च नीलस्पन्दा प्रकीर्तिता ॥ ८५ ॥

गुणाः—गिरिकर्णीद्वयं तिक्तं पित्तोपद्रवनाशनम् । चक्षुष्यं विषदोषघ्नं त्रिदोषशमनं च तत् ॥ ८६ ॥ गिरिकर्णी हिमा तिक्ता पित्तोपद्रवनाशिनी । विषनेत्रविकारांश्च हन्ति कुष्ठरुजापहा ॥ ८७ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

अश्वक्षुराऽद्रिकर्णी च कटभी दधिपुष्पिका । गर्दभी सितपुष्पी च श्वेतस्पन्दाऽपराजिता ॥ १२३ ॥

गुणाः—गिरिकर्णी हिमा तिक्ता पित्तोपद्रवनाशिनी । चक्षुष्या विषदोषघ्नी त्रिदोषशमनी च सा ॥ १२४ ॥ नीलपुष्पी महानीला स्यान्नीला गिरिकर्णिका । गवादनी व्यक्तगन्धा नीलस्पन्दा षडाह्वया ॥ १२५ ॥

गुणाः—नीलाद्रिकर्णी शिशिरा सतिक्ता रक्तातिसारज्वरदाहहन्त्री । विच्छर्दिकोन्मादमदभ्रमार्तिश्वासातिकासामयहारिणी च ॥ १२६ ॥

## ( २७ ) जन्तुकारी ( जन्तुकारा )

जन्तुकारी जन्तुकृष्णा जतुका रञ्जनी स्मृता । जननी चैव संहर्षा जन्तुका चक्रवर्तिनी ॥ ८८ ॥

गुणाः—जन्तुका शिशिरा तिक्ता रक्तदोषनिबर्हणी । पित्तोपशमनी हन्ति विषयोगं प्रयोगतः ॥ ८९ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

जन्तुका जन्तुकारी च जननी चक्रवर्तिनी । तिर्यक्फला निशान्धा च बहुपत्रा सुपत्रिका ॥ १२७ ॥ राजकृष्णा जनेष्टा च कपिकच्छूफलोपमा । रञ्जनी सूक्ष्मवल्ली च भ्रमरी कृष्णवल्लिका ॥ १२८ ॥ विज्जुल्लिका वृक्षरुहा ग्रन्थिपर्णी सुवल्लिका । तरुवल्ली दीर्घफला एकविंशतिसंज्ञका ॥ १२९ ॥

गुणाः—जन्तुका शिशिरा तिक्ता रक्तपित्तकफापहा । दाहतृष्णावमिघ्नी च रुचिकृद्दीपनी परा ॥ १३० ॥

---

१ क. ख. ग. °श्वखुरः । २ क. ङ. °टभिः श्वे° । ३ क. ख. प. ङ. °पुष्पी म° । ४ क. ख. ग. ङ. °वादिनी । ५ क. ङ. रक्तपित्तकफापहा । ख. ग. रक्तपित्तविषापहा । ६ ट. राजवृक्षा ।

## ( २८ ) पद्मचारिणी ( पद्मचारटी )

पद्मचारिण्यतिचरा पद्मा पद्मवतीति च । चारटी गन्धमूला च लक्ष्मीः श्रेष्ठा सुपुष्करा ॥ ९० ॥

गुणाः—पद्मा सुगन्धा तिक्ता च मोहापस्मारनाशनी ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

पद्मिनी सा तु पद्माह्वा चारटी पद्मचारिणी । सुगन्धमूलाऽम्बुरुहा लक्ष्मीः श्रेष्ठा सुपुष्करा ॥ १३१ ॥ रम्या पद्मवती चातिचरा स्थूलरुहा स्मृता । ज्ञेया पुष्करिणी चैव पुष्कराद्या च पर्णिका ॥ १३२ ॥ पुष्करादियुता नाडी प्रोक्ता पञ्चदशाह्वया ।

गुणाः—स्थलादिपद्मिनी गौल्या तिक्ता शीता च वान्तिनुत् । रक्तपित्तहरा मेहभूतातीसारनाशनी ॥ १३३ ॥

## ( २९ ) गृष्टिः ( वाराही )

गृष्टिर्विष्वक्सेनकान्ता वाराही गृष्टिका च सा । माधवी सौकरी कान्तिः कान्ता च वनमालिनी ॥ ९२ ॥

गुणाः—कान्ता सौकरिका तिक्ता कुष्ठक्रिमिगरार्तिजित्[1] । वाराह्याः कफहा कन्दः कटुको रसपाकतः[3] । हिमकुष्ठक्रिमिहरो हृद्यो बल्यो रसायनः ॥ ९३ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

स्याद्वाराही सूकरी क्रोडकन्या गृष्टिर्विष्वक्सेनकान्ता वराही । कौमारी स्याद्ब्रह्मपत्री त्रिनेत्रा क्रौडी कन्या गृष्टिका माधवेष्टा ॥ १३४ ॥ सूकरकन्दः क्रोडो वनवासी कुष्ठनाशनो वन्यः । अमृतश्च महावीर्यो महौषधिः शबरकन्दश्च ॥ १३५ ॥ वराहकन्दो वीरश्च ब्राह्मकन्दः सुकन्दकः । वृद्धिदो व्याधिहन्ता च वसुनेत्रमिताह्वयाः ॥ १३६ ॥

गुणाः—वराही तिक्तकटुका विषपित्तकफापहा । कुष्ठमेहक्रिमिहरा वृष्या बल्या रसायनी ॥ १३७ ॥

## ( ३० ) मांसरोहिणी । ( मांसरोहिका )

* मांसरोहिण्यतिरुहा वृत्ता चर्मकसा[4] च सा । विकसा मांसरोहा च रुहा रक्ता प्रकीर्तिता ॥ ९४ ॥

---

१ ङ. ढ. स्थलपद्मी तु । २ ट. वातनु° । ३ क. ख. ग. ङ. °तः । कुष्ठमेदक्रिमिहरो वृष्यो ब° । ४ ग. °कषा च । त. °कशा च ।

गुणाः—विकसा कटुका तिक्ता तथोष्णा स्वरसादनुत् । रसायनप्रयोगाच्च सर्वरोगहरा मता ॥ ९५ ॥ कषाया ग्राहिणी वर्ण्या रक्तपित्तप्रसादनी ।

सामान्यगुणाः—*रोहिणीयुगुलं शीतं कषायं कृमिनाशनम् । *कण्ठशुद्धिकरं रुच्यं वातदोषनिषूदनम् ॥ ९६ ॥

राजनिघण्टौ चन्दनादिर्द्वादशो वर्गः—

* । विकसा मांसरोही च ज्ञेया मांसरुहा मुनिः ॥ १३८ ॥ अन्या मांसी सदामांसी मांसरोहा रसायनी । सुलोमा लोमकरणी रोहिणी मांसरोहिका ॥ १३९ ॥

गुणाः—* । * ॥ १४० ॥

## ( ३१ ) वन्दका ।

वन्दका स्याद्वृक्षरुहा शेखरी कामरूपका । वृक्षादनी तरुरुहा कामिनी पद्मरूपिणी ॥ ९७ ॥

गुणाः—वन्दकः शीतलः पाके ग्राही स्याद्व्रणरोपणः ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

वन्दाकः पादपरुहा शिखरी तरुरोहिणी । वृक्षादनी वृक्षरुहा कामवृक्षश्च शेखरी ॥ १४१ ॥ केशरूपा तरुरुहा तरुस्था गन्धमोहिनी । कामिनी तरुभुक्[1]श्यामा द्रुपदी षोडशाह्वया ॥ १४२ ॥

गुणाः—वन्दाकस्तिक्तशिशिरः कफपित्तश्रमापहः । वश्यादिसिद्धिदो वृष्यः कषायश्च रसायनः ॥ १४३ ॥

## ( ३२ ) सुवर्चला । ( आदित्यभक्ता )

सुवर्चलाऽऽदित्यकान्ता सूर्यभक्ता सुखोद्भवा । मण्डूकपर्णी मण्डूकी वरदाऽऽदित्येवल्ल्यपि[2] ॥ ९८ ॥

गुणाः—आदित्यभक्ता कटुका तथोष्णा स्फोटकापहा । सरस्वती सरा स्वर्या रसायनविधौ हिता ॥ ९९ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

आदित्यभक्ता वरदाऽर्कभक्ता सुवर्चला सूर्यलताऽर्ककान्ता । मण्डूकपर्णी सुरसंभवा च सौरिः सुतेजोऽर्कहिता रवीष्टा ॥ १४४ ॥ मण्डूकी सत्यनाम्नी स्यादेषा मार्तण्डवल्लभा । विक्रान्ता भास्करेष्टा च भवेदष्टादशाह्वया ॥ १४५ ॥

---

१ झ. ढ. 'रुरुवश्या' । २ क. ङ. 'त्यपर्ण्यपि ।

गुणाः—आदित्यभक्ता शिशिरा सतिक्ता कटुस्तथोग्रा कफहारिणी च । त्वग्दोषकण्डूव्रणकुष्ठभूतग्रहोग्रशीतज्वरनाशिनी च ॥ १४६ ॥

## ब्राह्मी (सुवर्चलाविशेषः) ॥ १८ ॥

ब्राह्मी सोमा विनिर्दिष्टा दिव्यतेजा महौषधी । कपोतवेगा त्वष्टा च सैव ब्रह्मसुवर्चला ॥ १०० ॥

गुणाः—ब्राह्मी सोमा रसे तिक्ता शोफपाण्डुज्वरापहा । दीपनी कुष्ठ-कण्डूघ्नी प्लीहवातबलासजित् ॥ १०१ ॥

अन्यच्च—ब्राह्म्यायुष्या हिमा मेध्या कषाया तिक्तका लघुः । स्वर्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित् ॥ १०२ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

ब्राह्मी सरस्वती सौम्या सुरश्रेष्ठा सुवर्चला । कपोतवेगा वैधात्री दिव्यतेजा महौषधी ॥ १४७ ॥ स्वायंभुवी सोमलता सुरेज्या ब्रह्मकन्यका । मण्डूकमाता मत्स्याक्षी मण्डूकी सुरसा तथा ॥ १४८ ॥ मध्या वीरा भारती च वरा च परमेष्ठिनी । दिव्या च शारदी चेति ज्ञेयाऽर्णवकराह्वया ॥ १४९ ॥

गुणाः—ब्राह्मी हिमा कषाया च तिक्ता वातास्रपित्तजित् । बुद्धिं प्रज्ञां च मेधां च कुर्यादायुष्यवर्धनी ॥ १५० ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

## क्षुद्रपत्रा ( सुवर्चलाविशेषः ) ॥ १९ ॥

ब्राह्मी तु क्षुद्रपत्राऽन्या लघुब्राह्मी जलोद्भवा ।

गुणाः—ब्राह्मी तिक्तरसोष्णा च सरा वातामशोफजित् ॥ १५१ ॥

## ( ३३ ) नाकुली ।

नाकुली सर्पगन्धा च सुगन्धा भोगिगन्धिका । सैव सर्पसुगन्धा च तथा[3] विरिजपत्रिका ॥ १०३ ॥

गुणाः—नाकुली कटुरुष्णा स्यात्तिक्ताऽपि परिकीर्तिता । मूषकस्य विषं हन्ति कृमिदोषविनाशिनी ॥ १०४ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

नाकुली सर्पगन्धा च सुगन्धा रक्तपत्रिका । ईश्वरी नागगन्धा चाप्यहिभुक्स्वरसा तथा ॥ १५२ ॥ सर्पादनी व्यालगन्धा ज्ञेया चेति दशाह्वया ।

१ क. ङ. °गन्धीति त° । २ क. ङ. °था च रितिप° । छ. ण. °था चिरितिप° । ३ त. चिरिजपत्रिका ।

## ( ३४ ) महासुगन्धा ।

*अन्या महासुगन्धा च सुवहा गन्धनाकुली । सर्पाक्षी नकुलेष्टा च च्छेत्राकी विषमर्दिनी ॥ १०५ ॥

गुणाः—सर्पाक्षी कटुका तिक्ता तथा च कृमिरोगजित् । वृश्चिकोद्भवसर्पादि-विषघ्नी व्रणरोपणी ॥ १०६ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

* । सर्पाक्षी फणिहन्त्री च नकुलाढ्याऽहिभुक्च सा ॥ १५३ ॥ विष-मर्दनिका चाहिमर्दिनी विषमर्दिनी । महाहिगन्धाऽहिलता ज्ञेया सा द्वादशा-ह्वया ॥ १५४ ॥

गुणाः—नाकुलीयुगुलं तिक्तं कटूष्णं च त्रिदोषजित् । अनेकविषविध्वंसि किंचिच्छ्रेष्ठं द्वितीयकम् ॥ १५५ ॥

## ( ३५ ) वृद्धदारुकः ।

*वृद्धदारुक आवेगी जुङ्गको दीर्घवालुकः[3] । वृद्धः कोटरपुष्पी स्यादजान्त्री छागलान्त्र्यपि ॥ १०७ ॥

गुणाः—वृद्धदारुः कटुस्तिक्तस्तथोष्णः कफवातजित् । श्वयथुकृमिमेहा-स्रवातोदरहरः परः ॥ १०८ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

* । वृद्धः कोटरपुष्पी स्यादजान्त्री छागलान्त्रिका ॥ १५६ ॥ जीर्णदारु-र्द्वितीया स्याज्जीर्णा फञ्जी सुपुष्पिका । अजरा सूक्ष्मपत्रा च विज्ञेया च षडाह्वया ॥ १५७ ॥

गुणाः—वृद्धदारुद्वयं गौल्यं पिच्छिलं कफवातहृत् । बल्यं कासामदोषघ्नं द्वितीयं स्वल्पवीर्यदम् ॥ १५८ ॥

## ( ३६ ) रक्तपादी ।

रक्तपादी शमीपत्रा समङ्गाऽञ्जलिकारिका । नमस्कारी गन्धकारी स्पर्शसं-कोचपर्णिका ॥ १०९ ॥

गुणाः—*रक्तपादी कटुः शीता पित्तातीसारनाशनी । *शोफदाहश्रमश्वास-व्रणकुष्ठकफास्रनुत् ॥ ११० ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

रक्तपादी शमीपत्रा स्पृका खादिरपत्रिका । संकोचनी समङ्गा च नमस्कारी

---

१ ङ. छ. झ. च्छत्राक्षी । २ क. ङ. लघ्वी । ३ ण. त. जीर्णवालुकः ।

प्रसारिणी ॥ १५९ ॥ लज्जालुः सप्तपर्णी स्यात् खदिरी गण्डमालिका । लज्जा च लज्जिका चैव स्पर्शलज्जाऽस्नरोधिनी ॥ १६० ॥ रक्तमूला ताम्रमूला स्वगुप्ताऽञ्जलिकारिका । नाम्नां विंशतिरित्युक्ता लज्जायास्तु भिषग्वरैः ॥ १६१ ॥

गुणाः—* । * ॥ १६२ ॥

लज्जालुर्वैपरीत्याऽन्या अल्पक्षुपबृहद्दला । वैपरीत्यादिलज्जालुर्ह्यभिधाने प्रयोजयेत् ॥ १६३ ॥

गुणाः—लज्जालुर्वैपरीत्याह्वा कटुरुष्णा कफामनुत् । रसे नियामिका चैव नानाविज्ञानकारिका ॥ १६४ ॥

## ( ३७ ) विश्वग्रन्थिः ।

रक्तपाद्यपरा प्रोक्ता विश्वग्रन्थिस्त्रिपाद्यपि । हंसपादी हंसपदी घृतमण्डलिका च सा ॥ १११ ॥

गुणाः—रक्तप्रसादनी शीता दाहवीसर्पनाशिनी । वर्णप्रारोपणी हंसपदिका हंसपादिका ॥ ११२ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

रक्तपाद्यपरा प्रोक्ता त्रिपदा हंसपादिका । घृतमण्डलिका ज्ञेया विश्वग्रन्थिस्त्रिपादिका ॥ १६५ ॥ विपादी कीटमारी च हेमपादी मधुस्रवा । कर्णाटी ताम्रपात्री च विक्रान्ता सुवहा तथा ॥ १६६ ॥ ब्रह्मादनी पदाङ्गी च शीताङ्गी सुतपादुका । संचारिणी च पदिका प्रह्लादी कीलपादिका ॥ १६७ ॥ गोधापदी च हंसाङ्घ्रिर्धार्तराष्ट्रपदी तथा । हंसपादी च विज्ञेया नाम्ना चैषा शराक्षिधा ॥ १६८ ॥

गुणाः—हंसपादी कटूष्णा स्याद्विषभूतविनाशिनी । भ्रान्त्यपस्मारदोषघ्नी विज्ञेया च रसायनी ॥ १६९ ॥

## ( ३८ ) शङ्खपुष्पी ।

शङ्खपुष्पी कम्बुपुष्पी शङ्खाह्वा कम्बुमालिनी[1] । तिलकी[2] शङ्खकुसुमा मेध्या वनविलासिनी ॥ ११३ ॥

गुणाः—शङ्खिनी कटुतिक्तोष्णा कासपित्तबलासजित् । विषापस्मारभूतादीन्हन्ति मेध्या रसायनी ॥ ११४ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

---

१ क. ड. शङ्खमालिनी । २ क. ख. ड. तिरीटी ।

शङ्खपुष्पी सुपुष्पी च शङ्खाह्वा कम्बुमालिनी । सितपुष्पी कम्बुपुष्पी मेध्या वनविलासिनी ॥ १७० ॥ चिरिण्टी शङ्खकुसुमा भूलग्ना शङ्खमालिनी । इत्येषा शङ्खपुष्पी स्यादुक्ता द्वादशनामभिः ॥ १७१ ॥

गुणाः—शङ्खपुष्पी हिमा तिक्ता मेधाकृत्स्वरकारिणी । ग्रहभूतादिदोषघ्नी वशीकरणसिद्धिदा ॥ १७२ ॥

## विष्णुक्रान्ता । (शङ्खपुष्पीविशेषः) ॥ २० ॥

विष्णुक्रान्ता नीलपुष्पी सतीना छर्दिका तथा । शुक्लपुष्पा भूमिलग्ना ह्रस्वा सा शङ्खपुष्पिका ॥ ११५ ॥ सूक्ष्मपत्रान्तरा ज्ञेया सर्पाक्षी रक्तपुष्पिका ।

गुणाः—*विष्णुक्रान्ता कटुस्तिक्ता कफवातामयापहा ।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

विष्णुक्रान्ता हरिक्रान्ता नीलपुष्पाऽपराजिता । नीलक्रान्ता सतीना च विक्रान्ता छर्दिका च सा ॥ १७३ ॥

गुणाः—* ॥

## ( ३९ ) तन्दुलीयकः । (तन्दुली)

तण्डुलीयक उद्दिष्टस्तण्डुलस्तण्डुलीयकः । भण्डीरस्तण्डुलीबीजो मेघनादो घनस्वनः ॥ ११६ ॥

गुणाः—तण्डुलीयो विषघ्नश्च रूक्षः शीततरुः शुचिः । मधुरो रसपाकाभ्यां रक्तपित्तापघातकः ॥ ११७ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

तण्डुलीयस्तु भण्डीरस्तण्डुली तण्डुलीयकः । ग्रन्थिलो बहुवीर्यश्च मेघनादो घनस्वनः ॥ १७४ ॥ सुशाकः पथ्यशाकश्च स्फूर्जथुः स्वनिताह्वयः । वीरस्तण्डुलनामा च पर्यायाश्च चतुर्दश ॥ १७५ ॥

गुणाः—तण्डुलीयस्तु शिशिरो मधुरो विषनाशनः । रुचिकृद्दीपनः पथ्यः पित्तदाहभ्रमापहः[1] ॥ १७६ ॥

## ( ४० ) कासमर्दः ।

कासमर्दोऽरिमर्दश्च कासारिः कर्कशस्तथा । कालः[2] कनक इत्युक्तः स च स्यात्कासमर्दकः ॥ ११८ ॥

गुणाः—कासमर्दः सुतिक्तः स्यान्मधुरः कफवातजित् । विशेषतः पित्तहरः पाचनः कण्ठशोधनः ॥ ११९ ॥

---

१ ङ. छ. ॰पित्तप्रदाहकः । २ त. कालकण्टकः ।

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

कासमर्दोऽरिमर्दश्च कासारिः कासमर्दकः । कालः कनक इत्युक्तो जारणो दीपकश्च सः ॥ १७७ ॥

गुणाः—कासमर्दः सतिक्तोष्णो मधुरः कफवातजित् । अजीर्णकासपित्तघ्नः पाचनः कण्ठशोधनः ॥ १७८ ॥

## ( ४१ ) इक्षुः ।

इक्षुः कर्कोटको वंशः कान्तारो वेणुनिस्वनः । इक्षुरन्यः पौण्ड्रकस्तु रसालः सुकुमारकः ॥ १२० ॥

गुणाः—इक्षुः सरो गुरुः स्निग्धो बृंहणः कफमूत्रजित् । वृष्यः शीतः पवनजिद्भुक्ते वातप्रकोपनः ॥ १२१ ॥ अन्यः करकशाली स्यादिक्षुयोनीक्षुवालिका । तथाऽन्यश्चेक्षुगन्धः स्यादिक्षुरः कोकिलाक्षकः ॥ १२२ ॥

गुणाः—अतीव मधुरो मूले मध्ये मधुर एव च । अग्रे त्वचि च विज्ञेय इक्षूणां लवणो रसः॥१२३॥ इक्षुयुग्मं रसे स्वादु पित्तघ्नं वृष्यशीतलम् । ग्रन्थान्तरे—गुरु श्लेष्मप्रदं वातरक्तपित्तविनाशनम् । शर्करासमवीर्यस्तु दन्तनिष्पीडितो रसः ॥ १२४ ॥ गुरुर्विदाही विष्टम्भी यन्त्रकस्तु प्रकीर्तितः । पक्को गुरू रसः स्निग्धः सुतीक्ष्णः कफवातनुत् ॥ १२५ ॥ इक्षुविशेषगुणाः—वृष्यः शीतोष्णपित्तं शमयति मधुरो बृंहणं श्लेष्मकारी स्निग्धो हृद्योऽथ बल्योऽप्यतिश्रमनपरो मूत्रशुद्धिं करोति । मेदोवृद्धिं विधत्ते शमयति च मलं तर्पणं चेन्द्रियाणां दन्तैर्निष्पीड्य साक्षादमृतमयरसं भक्षयेदिक्षुदण्डम् ॥ १२६ ॥ भक्षयेदिक्षुकं काले भोजनस्याग्रतो नरः । स्वभावान्मधुरो ह्येष भुक्ते वातप्रकोपनः ॥ १२७ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

इक्षवः पञ्चधा प्रोक्ता नानावर्णगुणान्विताः । सितः पुण्ड्रः करङ्केक्षुः कृष्णो रक्तश्च ते क्रमात् ॥ १७९ ॥ इक्षुः कर्कटको वंशः कान्तारः सुकुमारकः । असिपत्रो मधुतृणो वृष्यो गुडतृणो नव ॥ १८० ॥ श्वेतेक्षुस्तु सितेक्षुः स्यात्काष्ठेक्षुर्वंशपत्रकः । सुवंशः पाण्डुरेक्षुश्च काण्डेक्षुर्धवलेक्षुकः ॥ १८१ ॥

गुणाः—सितेक्षुः कठिनो रुच्यो गुरुश्च कफमूत्रकृत् । दीपनः पित्तदाहघ्नो विपाके कोष्णदः स्मृतः ॥ १८२ ॥ पुण्ड्रकस्तु रसालः स्याद्रसेक्षुः सुकुमारकः । कर्बुरो मिश्रवर्णश्च नेपालेक्षुश्च सप्तधा ॥ १८३ ॥

गुणाः—पुण्ड्रोऽतिमधुरः शीतः कफकृत्पित्तनाशनः । दाहश्रमहरो रुच्यो

---

१ त. इक्षुरसो गु॰ । २ ट. वृष्यो ।

रसे संतर्पणः परः ॥ १८४ ॥ अन्यः `करङ्कशालिः स्यादिक्षुवाटीक्षुवाटिका । यावनी चेक्षुयोनिश्च रसाली रसदालिका ॥ १८५ ॥

गुणाः—करङ्कशालिर्मधुरः शीतलो रुचिकृन्मृदुः । पित्तदाहहरो वृष्यस्तेजोबलविवर्धनः ॥ १८६ ॥ कृष्णेक्षुरिक्षुरः प्रोक्तः श्यामेक्षुः कोकिलाक्षकः । श्यामवंशः श्यामलेक्षुः कोकिलेक्षुश्च कथ्यते ॥ १८७ ॥

गुणाः—कृष्णेक्षुरुक्तो मधुरश्च पाके स्वादुः सुहृद्यः कटुको रसाढ्यः । त्रिदोषहारी श्रमवीर्यदश्च सुबल्यदायी बहुवीर्यदायी ॥ १८८ ॥ रक्तेक्षुः सूक्ष्मपत्रश्च शोणो लोहित उत्कटः । मधुरो ह्रस्वमूलश्च लोहितेक्षुश्च कीर्तितः ॥ १८९ ॥

गुणाः—लोहितेक्षुश्च मधुरः पाके स्याच्छीतलो मृदुः । पित्तदाहहरो वृष्यस्तेजोबलविवर्धनः ॥ १९० ॥ इक्षुमूलं त्विक्षुनेत्रं तच्च मोरटकं तथा । वंशनेत्रं वंशमूलं मोरटं वंशपूरकम् ॥ १९२ ॥

गुणाः—मूलादूर्ध्वं तु मधुरा मध्येऽतिमधुरास्तथा । इक्षवस्तेऽग्रभागेषु क्रमाल्लवणनीरसाः ॥ १९२ ॥

इक्षुत्रयगुणाः—अभुक्ते पित्तहाश्चैते भुक्ते वातप्रकोपनाः । भुक्तमध्ये गुरुतरा इतीक्षूणां गुणास्त्रयः ॥ १९३ ॥ वृष्यो रक्तास्रपित्तश्रमशमनपटुः शीतलः श्लेष्मदोऽल्पः स्निग्धो हृद्यश्च रुच्यो रचयति च मुदं मूत्रशुद्धिं विधत्ते । कान्तिं देहस्य दत्ते बलमति कुरुते बृंहणं तृप्तिदायी दन्तैर्निष्पीड्य काण्डं मृदुयतिरसितो मोहनश्चेक्षुदण्डः ॥ १९४ ॥ अन्यच्च—पीयूषोपमितं त्रिदोषशमनं स्याद्दन्तनिष्पीडितं तद्वच्चेत्कृहयन्त्रजं तदपरं श्लेष्मानिलघ्नं कियत् । एतद्वातहरं तु वातजननं जाड्यप्रतिश्यायदं प्रोक्तं पर्युषितं कफानिलकरं पानीयमिक्षूद्भवम् ॥ १९५ ॥ मधुरं लवणक्षारं स्निग्धं सोष्णं रुचिप्रदम् । वृष्यं वातकफघ्नं च यावनालेक्षुजं जलम् ॥ १९६ ॥ पक्केक्षुरसः स्निग्धः स्यात्कफवातनाशनोऽतिगुरुः । अतिपाकेन विदाहं तनुते पित्तास्रदोषशोषांश्च ॥ १९७ ॥

## गुडः ॥ २१ ॥

* गुडः स्यादिक्षुसारश्च मधुरो रसपाकजः ।

गुणाः—गुडः समधुरः क्षारो गुरूष्णः कफवातनुत् । अहितः पित्तरक्ते च जीर्णश्चैव रसायनः ॥ १२८ ॥ गुडोऽभिष्यन्दिमधुरो बृंहणः कफकारकः । गुरुः शुक्रकरश्चैव पित्तलश्च विशेषतः ॥ १२९ ॥

---

१ अ. ढ. समवीर्यदश्च ।

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

* । शिशुप्रियः सितादिः स्यादरुणो रसजः स्मृतः ॥ १९८ ॥

गुणाः—पित्तघ्नः पवनार्तिजिद्रुचिकरो हृद्यस्त्रिदोषापहः संयोगेन विशेषतो ज्वरहरः संतापशान्तिप्रदः । विण्मूत्रामयशोधनोऽग्निजननः पाण्डुप्रमेहान्तकः स्निग्धः स्वादुतरो लघुः श्रमहरः पथ्यः पुराणो गुडः ॥ १९९ ॥

## ( ४२ ) काशः ( कासः )

काशः काण्डेक्षुरुद्दिष्टः काकेक्षुर्वायसेक्षुकः । इक्ष्वारिकेक्षुकाण्डश्च स चैवेक्षुरकः स्मृतः ॥ १३० ॥ श्वेतचामरपुष्पश्च तथेक्षुकुसुमश्च सः ।

गुणाः—काशः स्वादू रसे तिक्तो विपाके वीर्यतो हिमः । तर्पणो बलकृद्वृष्यः श्रमशोषभयापहः । काशद्वयं च पित्तास्रकृच्छ्रजिन्मधुरं हिमम्॥ १३१ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

काशः काण्डेक्षुरिक्ष्वारिः काकेक्षुर्वायसेक्षुकः । इक्षुरश्चेक्षुकाण्डश्च शारदः सितपुष्पकः ॥ २०० ॥ नादेयो दर्भपत्रश्च लेखनी काण्डकाण्डकः । कण्ठालङ्कारकश्चैव ज्ञेयः पञ्चदशाह्वयः ॥ २०१ ॥

गुणाः—काशश्च शिशिरो गौल्यो रुचिकृत्पित्तदाहनुत् । तर्पणो[2] बलकृद्वृष्य आमशोषक्षयापहः ॥ २०२ ॥ अन्यो[3]ऽशिरी मिशिर्गुण्डा अश्वालो[4] नीरजः शरः ।

गुणाः—मिशिर्मधुरशीतः स्यात्पित्तदाहक्षयापहः ॥ २०३ ॥

## ( ४३ ) मुञ्जः ( मुञ्जकः )

मुञ्जः क्षुरः स्थूलदर्भो बाणाह्वो ब्रह्ममेखलः ।

गुणाः—मुञ्जोऽनुष्णो विसर्पास्रमूत्रबस्त्यक्षिरोगनुत्[5] । बाणाह्वो मधुरः शीतः पित्तदाहतृषापहः ॥ १३२ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

मुञ्जो मौञ्जीतृणाख्यः स्याद्ब्रह्मण्यस्तेजनाह्वयः । वानीरजो मुञ्जनकः शारी दर्भाह्वयश्च सः ॥२०४॥ दूरमूलो दृढतृणो दृढमूलो बहुप्रजः । रञ्जनः शत्रुभङ्गश्च स्याच्चतुर्दशसंज्ञकः ॥ २०५ ॥

गुणाः—मुञ्जस्तु मधुरः शीतः कफपित्तजदोषजित् । ग्रहरक्षासु दीक्षासु पावनो भूतनाशनः ॥ २०६ ॥

---

१ क. ॰येदो हि॰ । २ झ. ढ. दर्पणो । ३ ढ. ॰न्योऽशीरी । ४ झ. ढ. अश्वालो । ५ क. ग. ॰गजित् ।

## ( ४४ ) मृदुदर्भः।

मृदुदर्भः कुशो बर्हिः शुचिचीरः सुवृत्तकः। खरोऽन्यः पृथुलः शीरी गुन्द्रा च नीरजः स्मृतः ॥ १३३ ॥

गुणाः—दर्भयुग्मं पवित्रं स्यान्मूत्रकृच्छ्रघ्नशीतलम्। रक्तपित्तप्रशमनं केवलं पित्तनाशनम् ॥ १३४ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

सितदर्भो ह्रस्वकुम्भः पूतो यज्ञियपत्रकः। वज्रो ब्रह्मपवित्रश्च तीक्ष्णो यज्ञस्य भूषणः ॥ २०७ ॥ सूचीमुखः पुण्यतृणो वह्निपूतस्तृणो द्विषद्।

गुणाः—यज्ञमूलं हिमं रुच्यं मधुरं पित्तनाशनम्। रक्तज्वरतृषाश्वासकामलादोषशोषकृत् ॥ २०८ ॥ कुशोऽल्पः शरपत्रश्च हरिदर्भः पृथुच्छदः। शारी च रूक्षदर्भश्च दीर्घपत्रः पवित्रकः ॥ २०९ ॥

गुणाः—दर्भौ द्वौ च गुणे तुल्यौ तथाऽपि च सितोऽधिकः। यदि श्वेतकुशाभावस्तवपरं योजयेद्भिषक् ॥ २१० ॥

## ( ४५ ) शरः।

*शरो बाण इषुः काण्ड उत्कटः सायकः क्षुरः। स्थूलोऽन्य इक्षुकः प्रोक्त इक्षुरश्चापि नामतः ॥ १३५ ॥

गुणाः—*शरद्वयं स्यान्मधुरं सतिक्तं कोष्णं कफभ्रान्तिमदापहारि। *बलं च वीर्यं च करोति नित्यं निषेवितं वातकरं च किंचित् ॥ १३६ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

*। इक्षुरः क्षुरिकापत्रो विशिखश्च दशाभिधः ॥ २११ ॥ स्थूलोऽन्यः स्थूलशरो महाशरः स्थूलसायकमुखाख्यः। इक्षुरकः क्षुरपत्रो बहुमूलो दीर्घमूलको मुनिभिः ॥ २१२ ॥

गुणाः—*। * ॥ २१३ ॥

## ( ४६ ) वंशः ( पुनर्वसू )

वंशो वेणुर्यवफलः कार्मुकस्तृणकेतुकः। त्वक्सारः शतपर्वा च मस्करः कीचकस्तथा ॥ १३७ ॥

गुणाः—वंशस्त्वाम्लः कषायश्च कटुतिक्तश्च शीतलः। मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहास्रनाशनः ॥ १३८ ॥ वंशो व्रणास्रसंहारो भेदनः सकषायकः। वंशश्च शूलकफकृद्विष्टम्भी श्लेष्मवातलः ॥ १३९ ॥

---

१ क. ख. ड. 'चिर्नीरोऽथ मृ'। २ 'ङ. छ. स चान्यः पृ'।

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

वंशो यवफलो वेणुः कर्मारस्तृणकेतुकः । मस्करः शतपर्वा च कण्टालुः कण्टकी तथा ॥ २१४ ॥ महाबलो दृढग्रन्थिर्दृढपत्रो धनुर्द्रुमः । धनुष्यो दृढकाण्डश्च विज्ञेयो बाणभूमितः ॥ २१५ ॥ अन्यस्तु रन्ध्रवंशः स्यात्त्वक्सारः कीचकाह्वयः । मस्करो वादनीयश्च सुषिराख्यः षडाह्वयः ॥ २१६ ॥

गुणाः—वंशौ त्वम्लौ कषायौ च किंचित्तिक्तौ च शीतलौ । मूत्रकृच्छ्रप्रमेहार्शःपित्तदाहास्रनाशनौ ॥ २१७ ॥ विशेषो रन्ध्रवंशस्तु दीपनोऽजीर्णनाशनः । रुचिकृत्पाचनो हृद्यः शूलघ्नो गुल्मनाशनः ॥ २१८ ॥

## वंशाग्रम् । ( वंशाङ्कुरः ) ॥ २२ ॥

वंशाग्रं तु करीरः स्याद्वंशाङ्कुरपरुः स्मृतः ।

गुणाः—पित्तास्रदाहकृच्छ्रघ्नं रुचिकृत्पर्व निर्गुणम् ॥ १४० ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

वंशाग्रं तु करीरो वंशाङ्कूरश्च यवफलाङ्कूरः । तस्य ग्रन्थिस्तु परुः पर्व तथा काण्डसंधिश्च ॥ २१९ ॥

गुणाः—करीरं कटु तिक्ताम्लं कषायं लघु शीतलम् । पित्तास्रदाहकृच्छ्रघ्नं रुचिकृत्पर्व निर्गुणम् ॥ २२० ॥

## ( ४७ ) नलः ।

नडो नटो नलश्चैव स च पोटगलः स्मृतः । धमनो नर्तको रन्ध्री शून्यमध्यो बिभीषणः ॥ १४१ ॥

गुणाः—नलः शीतः कषायश्च पित्तमूत्रविनाशनः ।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

नलो नडो नलश्चैव कुक्षिरन्ध्रोऽथ कीचकः । वंशान्तरश्च धमनः शून्यमध्यो बिभीषणः ॥ २२१ ॥ छिद्रान्तो मृदुपत्रश्च रन्ध्रपत्रो मृदुच्छदः । नालवंशः पोटगल इत्यस्याऽऽह्वास्त्रिपञ्चधा ॥ २२२ ॥

गुणाः—नलः शीतकषायश्च मधुरो रुचिकारकः । रक्तपित्तप्रशमनो दीपनो वीर्यवृद्धिदः ॥ २२३ ॥

## महानलः ( नलविशेषः ) ॥ २३ ॥

*अन्यो महानलो वन्यो देवनालोत्तमो नलः । * स्थूलनालः स्थूलदण्डः सुरनालः सुरद्रुमः ॥ १४२ ॥

गुणाः—नलः स्यादधिको वीर्ये शस्यते रसकर्मणि।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

*। *॥ २२४॥

गुणाः—देवनालोऽतिमधुरो वृष्य ईषत्कषायकः। नलः स्यादधिको वीर्ये शस्यते रसकर्मणि॥ २२५॥

## (४८) दूर्वा।

नीलदूर्वा स्मृता शष्पं शाद्वलं हरितं तथा। शतपर्वा शीतवीर्या शतवल्ल्यपि शीतला॥ १४३॥ श्वेतदूर्वा तु गोलोमी श्वेतदण्डा सिता लता। सहस्रवीर्याऽनन्ता च दुर्मरा भार्गवी रुहा॥ १४४॥

गण्डदूर्वा* च गण्डाली तीव्रा मत्स्याक्षिकाऽपि च। वैही नाडी कलापश्च वारुणी शकुलाक्षिका॥ १४५॥

दूर्वात्रयगुणाः—दूर्वा शीता कषाया च रक्तपित्तकफापहा। अनुपत्रा कषाया च शीतला श्लेष्मवातला॥ १४६॥ अन्यच्च—दर्भः शरो नलश्चैव तथा दूर्वात्रयं समम्। स्वादुतिक्तकषायाणि पित्तश्लेष्महराणि च॥ १४७॥ दाहतृष्णास्रवीसर्परक्तपित्तापहानि च॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

स्यान्नीलदूर्वा हरितं च शांभवी श्यामा च शान्ता शतपर्विकाऽमृता। पूता शतग्रन्थिरनुष्णवल्लिका शिवा शिवेष्टाऽपि च मङ्गला जया॥ २२६॥ सुभगा भूतहन्त्री च शतमूला महौषधी। अमृता विजया गौरी शान्ता स्यादेकविंशतिः॥ २२७॥

गुणाः—नीलदूर्वा तु मधुरा तिक्ता शिशिररोचनी। रक्तपित्तातिसारघ्नी कफवातज्वरापहा॥ २२८॥ स्याद्गोलोमी श्वेतदूर्वा सिताख्या चण्डा भद्रा भार्गवी दुर्मरा च। गौरी विघ्नेशानकान्ताऽप्यनन्ता श्वेता दिव्या श्वेतकाण्डा प्रचण्डा॥ २२९॥ सहस्रवीर्या च सहस्रकाण्डा सहस्रपर्वा सुरवल्लभा च। शुभा सुपर्वा च सितच्छदा च स्वच्छा च कच्छान्तरुहाऽब्धिहस्ताः॥ २३०॥

गुणाः—श्वेतदूर्वाऽतिशिशिरा मधुरा वान्तिपित्तजित्। आमातीसारकासघ्नी रुच्या दाहतृषापहा॥ २३१॥ मालादूर्वा वल्लिदूर्वाऽलिदूर्वा मालाग्रन्थिर्ग्रन्थिला ग्रन्थिदूर्वा। मूलग्रन्थिर्वल्लरी ग्रन्थिमूला रोहत्पर्वा पर्ववल्ली सिताख्या॥२३२॥

---

* 'गण्डदूर्वा' हरयाळी, गांडीहरेळी इति ख्याता।

---

१ क. ग. घ. ङ. छ. ण. त. शाड्वलं। २ क. 'वल्ली च शी'। ३ क. ख. ग. ह. शिता। ४ ण. वाह्ली।

गुणाः—वल्लिदूर्वा सुमधुरा तिक्ता च शिशिरा च सा । पित्तदोषप्रशमनी कफवान्तितृषापहा ॥ २३३ ॥ गण्डाली स्याद्गण्डदूर्वाऽतितीव्रा मत्स्याक्षी स्याद्वारुणी मीननेत्रा । श्यामग्रन्थिर्ग्रन्थिला ग्रन्थिपर्णी सूचीपत्रा श्यामकाण्डा जलस्था ॥ २३४ ॥ शकुलाक्षी कलाया च चित्रा पञ्चदशाह्वया ।

गुणाः—गण्डदूर्वा तु मधुरा वातपित्तज्वरापहा । शिशिरा द्वंद्वदोषघ्नी भ्रमतृष्णाश्रमापहा ॥ २३५ ॥

दूर्वासाधारणगुणाः—दूर्वाः कषाया मधुराश्च शीताः पित्ततृषारोचकवान्तिहन्त्र्यः । सदाहमूर्छाग्रहभूतशान्तिश्लेष्मश्रमध्वंसनतृप्तिदाश्च ॥ २३६ ॥

## ( ४९ ) पुण्डरीकम् ।

पुण्डरीकं श्वेतपद्मं सिताब्जं श्वेतवारिजम् । *हरिनेत्रं शरत्पद्मं शारदं शंभुवल्लभम् ॥ १४८ ॥

गुणाः—*पुण्डरीकं हिमं तिक्तं मधुरं पित्तनाशनम् । दाहघ्नमस्रशोषघ्नं पिपासाभ्रमनाशनम् ॥ १४९ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

पुण्डरीकं श्वेतपत्रं सिताब्जं श्वेतवारिजम् । * ॥ २३७ ॥

गुणाः—*दाहास्रश्रमदोषघ्नं पिपासादोषनाशनम् ॥ २३८ ॥

## ( ५० ) सौगन्धिकम् ।

सौगन्धिकं नीलपद्मं भद्रं कुवलयं कुंजम् । इन्दीवरं तामरसं कुवलं कुड्मलं मतम् ॥ १५० ॥

गुणाः—*नीलाब्जं शीतलं स्वादु सुगन्धि पित्तनाशनम् । *रुच्यं रसायने श्रेष्ठं देहदार्ढ्यं च कैश्यदम् ॥ १५१ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

उत्पलं नीलकमलं नीलाब्जं नीलपङ्कजम् । नीलपद्मं च बाणाह्वं नीलादिकमलाभिधम् ॥ २३९ ॥

गुणाः— * । * ॥ २४० ॥

## ( ५१ ) रक्तपद्मम् ।

रक्तपद्मं तु नलिनं पुष्करं कमलं नलम् । राजीवं स्यात्कोकनदं शतपत्रं सरोरुहम् ॥ १५२ ॥

---

१ ज. 'ष्मभ्रम' । २ क. ग. ङ. कुद्दम् ।

गुणाः—पाके रक्तोत्पलं शीतं तिक्तं च मधुरं रसे । भिनत्ति पित्तसंतापौ ध्वंसयत्यस्रजां रुजम् ॥ १५३ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

कोकनदमरुणकमलं रक्ताम्भोजं च शोणपद्मं च । रक्तोत्पलमरविन्दं रविप्रियं रक्तवारिजं वसवः ॥ २४१ ॥

गुणाः—कोकनदं कटुतिक्तं मधुरं शिशिरं च रक्तदोषहरम् । पित्तकफवातशमनं संतर्पणकारणं वृष्यम् ॥ २४२ ॥ कमलानि—पाथोजं कमलं नभं च नलिनाम्भोजाम्बुजन्माम्बुजं श्रीपद्माम्बुरुहाब्जपद्मजलजान्यम्भोरुहं सारसं । पङ्केजं सरसीरुहं च कुटपं पाथोरुहं पुष्करं वार्जं तामरसं कुशेशयकजे कञ्जारविन्दे तथा ॥ २४३ ॥ शतपत्रं विसकुसुमं सहस्रपत्रं महोत्पलं वारिरुहम् । सरसिजसलिलजपङ्केरुहराजीवानि वेदवह्निमितानि ॥ २४४ ॥

गुणाः—कमलं शीतलं स्वादु रक्तपित्तश्रमार्तिनुत् । सुगन्धि भ्रान्तिसंतापशान्तिदं तर्पणं परम् ॥ २४५ ॥

## कुमुदम् । ( पुण्डरीकविशेषः ) ॥ २४ ॥

कुमुदं श्वेतजलजमब्जमम्भोजमम्बुजम् । पङ्कजं चारविन्दं च कह्लारं च कुशेशयम् ॥ १५४ ॥

गुणाः—*कुमुदं शीतलं स्वादु पाके तिक्तं कफापहम् । *रक्तदोषहरं दाहश्रमपित्तप्रशान्तिकृत् ॥ १५५ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

धवलोत्पलं तु कुमुदं कह्लारं कैरवं च शीतलकम् । शशिकान्तमिन्दुकमलं चन्द्राब्जं चन्द्रिकाम्बुजं च नव ॥ २४६ ॥

गुणाः— * । * ॥ २४७ ॥

नीलोत्पलमुत्पलकं कुवलयमिन्दीवरं च कन्दोत्थम् । सौगन्धिकं सुगन्धं कुड्मलकं चासितोत्पलं नवधा ॥ २४८ ॥

गुणाः—नीलोत्पलमतिस्वादु शीतं सुरभि सौख्यकृत् । पाके तु तिक्तमत्यन्तं रक्तपित्तापहारकम् ॥ २४९ ॥ उत्पलिनी कैरविणी कुमुद्वती कुमुदिनी च चन्द्रेष्टा । कुवलयिनीन्दीवरिणी नीलोत्पलिनी च विज्ञेया ॥ २५० ॥

गुणाः—उत्पलिनी हिमतिक्ता रक्तामयहारिणी च पीत्तघ्नी । तापकफकासतृष्णाश्रमवमिशमनी च विज्ञेया ॥ २५१ ॥

## क्षुद्रमुत्पलम् । ( पुण्डरीकाविशेषः ) ॥ २९ ॥

ईषच्छीतं विदुः पद्ममीषन्नीलमथोत्पलम् । ईषद्रक्तं तु नलिनं क्षुद्रं तच्चोत्पलत्रयम् ॥ १५६ ॥

गुणाः—उत्पलस्य त्रयं स्वादु कषायं पित्तजिद्धिमम् ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

ईषच्छ्वेतं पद्मं नलिनं च तदुक्तमीषदारक्तम् । उत्पलमीषन्नीलं त्रिविधमितीदं भवेत्कमलम् ॥ २५२ ॥

गुणाः—उत्पलादिरयं दाहरक्तपित्तप्रसादनः । पिपासादाहहृद्रोगच्छर्दिमूर्छाहरो गणः ॥ २५३ ॥

## ( ५२ ) पद्मिनी ।

पद्मिनी स्यात्कुटपिनी नलिनी च कुमुद्वती । पलाशिनी पद्मवती वनखण्डा सरोरुहा ॥ १५७ ॥

गुणाः—पद्मिनी शिशिरा रूक्षा कफपित्तहरा स्मृता ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

पद्मिनी नलिनी प्रोक्ता कुटपिन्यब्जिनी तथा । इत्थं तत्पद्मपर्यायनाम्नी ज्ञेया प्रयोगतः ॥ २५४ ॥

गुणाः—पद्मिनी मधुरा तिक्ता कषाया शिशिरा परा । पित्तकृमिशोषवान्तिभ्रान्तिसंतापशान्तिकृत् ॥ २५५ ॥

## ( ५३ ) पद्मबीजम् ।

पद्मबीजं तु पद्माक्षं गालोड्यं पद्मकर्कटी । भेडा क्रौञ्चादनी क्रौञ्चो नोपाकश्चैव कन्दली ॥ १५९ ॥

गुणाः—स्वादु तिक्तं पद्मबीजं गर्भस्थापनमुत्तमम् । रक्तपित्तप्रशमनं किंचिन्मारुतकृद्भवेत् ॥ १६० ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

पद्मबीजं तु पद्माक्षं गालोड्यं कन्दली च सा । भेडा क्रौञ्चादनी क्रौञ्चा श्यामा स्यात्पद्मकर्कटी ॥ २५६ ॥

गुणाः—पद्मबीजं कटु स्वादु पित्तच्छर्दिहरं परम् । दाहास्रदोषशमनं पाचनं रुचिकारकम् ॥ २५७ ॥

---

१ ग. नामतश्चैव पद्मकम् । छ. नायक । ण. ताप्यक ।

## ( ५४ ) बिसम् ( मृणालम् )

बिसं मृणालं बिसिनी मृणाली स्यान्मृणालिका । मृणालकं पद्मनालं तण्डुलं नलिनीरुहम् ॥ १६१ ॥

गुणाः—अविदाहि बिसं प्रोक्तं रक्तपित्तप्रसादनम् । विष्टम्भि मधुरं रूक्षं दुर्जरं वातकोपनम् ॥ १६२ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

मृणालं पद्मनालं च मृणाली च मृणालिनी । बिसं च पद्मतन्तुश्च बिसिनी नलिनीरुहम् ॥ २५८ ॥

गुणाः—मृणालं शिशिरं तिक्तं कषायं पित्तदाहजित् । मूत्रकृच्छ्रविकारघ्नं रक्तवान्तिहरं परम् ॥ २५९ ॥

## ( ५५ ) पद्ममूलम् ( मूलम् )

पद्ममूलं तु शालूकं सकलं करहाटकम् । शालिनं पद्मकन्दं च जलालूकं निगद्यते ॥ १६३ ॥

गुणाः—पद्मकन्दः कषायः स्यात्स्वादे तिक्तो विपाकतः । शीतवीर्योऽस्रपित्तोत्थरोगभङ्गाय कल्पते ॥ १६४ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

पद्मकन्दस्तु शालूकं पद्ममूलं कटाह्वयम् । शालीनं च जलालूकं स्यादित्येवं षडाह्वयम् ॥ २६० ॥

गुणाः—शालूकं कटु विष्टम्भि रूक्षं रुच्यं कफापहम् । कषायं कासपित्तघ्नं तृष्णादाहनिवारणम् ॥ २६१ ॥

## ( ५६ ) पद्मकेसरम् ( केसरम् )

पद्मकेसरमापीतं किञ्जल्कं किञ्जमेव च । मकरन्दं तथा तुङ्गं गौरं काञ्चनकं च तत् ॥ १६५ ॥

गुणाः—तृषाघ्नं शीतलं रूक्षं पित्तरक्तक्षयापहम् । पद्मकेसरमेवोक्तं पित्तघ्नं सकषायकम् ॥ १६६ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

किञ्जल्कं मकरन्दं च केसरं पद्मकेसरम् । किञ्जं पीतं परागं च तुङ्गं चाम्पेयकं नव ॥ २६२ ॥

गुणाः—किञ्जल्कं मधुरं रूक्षं कटु चास्य व्रणापहम् । शिशिरं रुच्यपित्तघ्नं तृष्णादाहनिवारणम् ॥ २६३ ॥

## वर्गेतराणि—

### (१) बलामोटा।

बलामोटा सूक्ष्ममूला हरिता च जया स्मृता। विजया च जयन्ती च तथा चैवापराजिता ॥ १ ॥

गुणाः—विषघ्नी तिक्तकटुका कफपित्तसमीरजित्। अपराजिता केशरुहा तथा चैव नियोजिता ॥ २ ॥ विजया नागदमनी निःशेषविषनाशनी। विषमोहप्रशमनी महायोगेश्वरीति च ॥ ३ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

जयन्ती तु बलामोटा हरिता च जया तथा। विजया सूक्ष्ममूला च विक्रान्ता चापराजिता ॥ १ ॥

गुणाः—ज्ञेया जयन्ती गलगण्डहारी तिक्ता कटूष्णाऽनिलनाशनी च। भूतापहा कण्ठविशोधनी च कृष्णा तु सा तत्र रसायनी स्यात् ॥ २ ॥

### (२) सोमवल्ली।

सोमवल्ली यज्ञनेत्री सोमक्षीरी द्विजप्रिया।

गुणाः—सोमवल्ली त्रिदोषघ्नी कटुस्तिक्ता रसायनी ॥ ४ ॥

राजनिघण्टौ गुडूच्यादिस्तृतीयो वर्गः—

सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता। सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया ॥ ३ ॥ सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यया।

गुणाः—सोमवल्ली कटुः शीता मधुरा पित्तदाहनुत्। तृष्णाविशोषशमनी पावनी यज्ञसाधनी ॥

### (३) पोतकी।

पोतकी पोतका प्रोक्ता मत्स्या काली सुरङ्गिका।

गुणाः—पोतकी शीतला स्निग्धा श्लेष्मला वातपित्तजित् ॥ ५ ॥

### (४) अर्शोघ्नः।*

अर्शोघ्नः सूरणः कन्दः कन्दार्हः कन्दवर्धनः। दुर्नामारिः सुवृत्तिश्च वातारिः कन्दसूरणः ॥ ६ ॥

* अर्शोघ्नस्यास्य, अस्मिन्नेव वर्गे पूर्वं गतेनैकोनत्रिंशन्मितेन (२९) गृष्टिना सह संबद्धत्वेनात्र संग्रहः कृतः।

१ ज. मदगन्धयुक्ता।

गुणाः—सूरणः कटुको रुच्यो दीपनः पाचनस्तथा । कृमिदोषहरो वातशूलगुल्मास्रदोषनुत् ॥ ७ ॥ श्वासं कासं च च्छर्दिं च निवारयति सेवितः ।

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

कण्डूलः सूरणः कन्दी सुकन्दी स्थूलकन्दकः । दुर्नामारिः सुवृत्तश्च वातारिः कन्दसूरणः ॥ ५ ॥ अर्शोघ्नस्तीव्रकन्दश्च कन्दार्हः कन्दवर्धनः । बहुकन्दो रुच्यकन्दः सूरकन्दस्तु षोडश ॥ ६ ॥

गुणाः—सूरणः कटुकरुच्यदीपनः पाचनः कृमिकफानिलापहः । श्वासकासवमनार्शसां हरः शूलगुल्मशमनोऽस्रदोषनुत् ॥ ७ ॥ *सितसूरणस्तु वन्यो वनकन्दोऽरण्यसूरणो वनजः । स श्वेतसूरणाख्यो वनकन्दः कण्डुलश्च सप्ताख्यः ॥८॥

गुणाः—श्वेतसूरणको रुच्यः कटूष्णः कृमिनाशनः । गुल्मशूलादिदोषघ्नः स चारोचकहारकः ॥ ९ ॥

करवीरादिको वर्गश्चतुर्थः समुदाहृतः ।
नानाव्याधिप्रशमनो नानाद्रव्यसमाश्रयः ॥ ४ ॥

इति रसवीर्यविपाकसहिते राजनिघण्टुयुतधन्वन्तरीयनिघण्टौ करवीरादिश्चतुर्थो वर्गः ॥ ४ ॥

---

## अथाऽऽम्रादिः पञ्चमो वर्गः—

### ( १ ) †आम्रः । ( पूर्वाभाद्रपदा )

आम्रश्चूतो रसालश्च कीरेष्टो मदिरासखः । कामाङ्गः सहकारश्च परपुष्टो मदोद्भवः ॥ १ ॥ अन्यच्च—आम्रो रसालो माकन्दः कामाङ्गः पिकबान्धवः । वनपुष्पोत्सवश्चूतः परपुष्टो मदोद्भवः ॥ २ ॥ मधुश्चूतो मधुफलः सुफलो मदिरासखः । वसन्तपादपोऽसौ तु सहकारोऽतिसौरभः ॥ ३ ॥

गुणाः—बालं कषायं कट्वम्लं रूक्षं वातास्रपित्तकृत् । संपूर्णमाम्रमम्लं च रक्तपित्तकफप्रदम् ॥ ४ ॥ हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् । कषायानु-

---

*'सितसूरणः' पांढरासुरण इति ख्याते ।

† क्वचित्पुस्तके ग्रन्थान्तरम्—

'अपुष्पफलवानाम्रः पुष्पितश्चूत उच्यते ।
पुष्पैः फलैश्च संयुक्तः सहकारः स उच्यते ' इति ।

---

१ ट. °षकृत् । २ झ. °कन्दोऽकूल° । ३ क. ख. ङ. °सखा । का° । ४ क. ख. घ. ङ. महोत्सवः । ग. मदोत्सवः ।

रसं स्वादु वातघ्नं बृंहणं गुरु ॥ ५ ॥ पित्तावरोधिसंपक्कमाम्रं शुक्रविवर्धनम् । मधुरं बृंहणं बल्यं गुरु विष्टम्भ्यजीर्णकृत् ॥ ६ ॥ सहकाररसो हृद्यः सुरभिः स्निग्धरोचनः । त्वङ्मूलपल्लवं ग्राहि कषायं कफपित्तजित् ॥ ७ ॥ पक्काम्रं सकषायाम्लं भेदनं कफवातजित् । हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम्॥ ८ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

आम्रः कामशरश्चूतो रसालः कामवल्लभः । कामाङ्गः सहकारश्च कीरेष्टो माधवद्रुमः ॥ १ ॥ भृङ्गाभीष्टः सीधुरसो मधूली कोकिलोत्सवः । वसन्तदूतोऽम्लफलो मदाढ्यो मन्मथालयः ॥ २ ॥ मध्वावासः सुमदनः पिकरागो नृपप्रियः । प्रियाम्बुः कोकिलावासः स प्रोक्तस्त्रिकराह्वयः ॥ ३ ॥

गुणाः—आम्रः कषायाम्लरसः सुगन्धिः कण्ठामयघ्नोऽग्निकरश्च बालः । पित्तप्रकोपानिलरक्तदोषप्रदः पटुत्वादिरुचिप्रदश्च ॥ ४ ॥

अपि च—बालं पित्तानिलकफकरं तच्च बद्धास्थि तादृक्पक्कं दोषत्रितयशमनं स्वादु पुष्टिं गुरुं च । दत्ते धातुप्रचयमधिकं तर्पणं कान्तिकारि ख्यातं तृणाश्रमशमकृतौ चूतजातं फलं स्यात् ॥ ५ ॥

## क्षुद्राम्रः । ( आम्रविशेषः ) ॥ २ ॥

क्षुद्राम्रः[3] स्यात्कृमितरुर्लाक्षावृक्षो जतुद्रुमः । सुकोशको घनस्कन्धः कोशाम्रश्च सुरक्तकः ॥ ९ ॥

गुणाः—कोशाम्रोऽम्लः कटुः पाके वीर्योष्णोऽथानिलापहः । कफपित्तकरो रुच्यः कुष्ठघ्नो रक्तशोधनः ॥ १० ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

कोशाम्रश्च घनस्कन्धो वनाम्रो जतुपादपः । क्षुद्राम्रश्चेति रक्ताम्रो लाक्षावृक्षः सुरक्तकः ॥ ६ ॥

गुणाः—कोशाम्रमम्लमनिलापहरं कफार्तिपित्तप्रदं गुरु विदाहविशोफकारि । पक्कं भवेन्मधुरमीषदपारमम्लं पट्वादियुक्तरुचिदीपनपुष्टिबल्यम् ॥ ७ ॥

## राजाम्रः ( आम्रविशेषः ) ॥ २ ॥

राजाम्र उक्त आम्रान्तो मन्मथोद्भवनस्तथा । टङ्को नीलकपित्थोऽन्यो राजपुत्रो नृपात्मजः ॥ ११ ॥

१ ख. °र्णनुत् । २ क. ङ. °चकः । त्व° । ३ ख. ङ. क्षुद्राम्र उक्तः कोशाम्रो लाक्षावृक्षः सरक्तकः । जन्तुवृक्षो घनस्कन्धः कृमिवृक्षः सुकोशकः । सु° । छ. क्षुद्रोऽन्य उक्तः कोशाम्रो लाक्षावृक्षः सुरक्तकः । सु° ।

गुणाः—राजाम्रयुगुलं चाम्लमुष्णवीर्यं च पित्तलम्।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

राजाम्रोऽन्यो राजफलः स्मराम्रः कोकिलोत्सवः। मधुरः कोकिलानन्दः कामेष्टो नृपवल्लभः॥ ८॥ अन्यो महाराजचूतो महाराजाम्रकस्तथा। स्थूलाम्रो मन्मथावासष्टङ्को नीलकपित्थकः॥ ९॥ कामायुधः कामफलो राजपुत्रो नृपात्मजः। महाराजफलः कामो महाचूतस्त्रयोदश॥ १०॥ तस्यापि श्रेष्ठतोऽन्याम्रो रसालो बद्धपूर्वकः। ज्ञेयश्चक्रलताम्रश्च मध्वाम्रः शितजाम्रकः॥ ११॥ वनेज्यो मन्मथानन्दो मदनेच्छाफलो मुनिः।

गुणाः—राजाम्राः कोमलाः सर्वे कट्वम्लाः पित्तदाहदाः। सुपक्काः स्वादुमाधुर्याः पुष्टिवीर्यबलप्रदाः॥ १२॥ राजाम्रेषु त्रिषु प्रोक्तं साम्यमेव रसाधिकम्। गुणाधिकं तु विज्ञेयं पर्यायादुत्तरोत्तरम्॥ १३॥

अपि च—बालं राजफलं कफास्रपवनश्वासार्तिपित्तप्रदं मध्यं तादृशमेव दोषबहुलं भूयः कषायाम्लकम्। पक्कं चेन्मधुरं त्रिदोषशमनं तृष्णाविदाहश्रमश्वासारोचकमोचकं गुरु हिमं वृष्यातिचूताह्वयम्॥ १४॥ आम्रत्वचा कषाया च मूलं सौगन्धितादृशम्। रुच्यं संग्राहि शिशिरं पुष्पं तु रुचिदीपनम्॥ १५॥

## ( २ ) आम्रातकः। ( आम्रातः )

आम्रातकः पीतनकः कपिचूतोऽम्लवाटकः। *शृङ्गी कपी रसाढ्यश्च तनुक्षीरः कपिप्रियः॥ १२॥

गुणाः—आम्रातकफलं वृष्यं पित्तास्रकफवह्निकृत्। शीतं कषायं मधुरं किंचिन्मारुतकृद्गुरु॥ १३॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

आम्रातकः पीतनकः कपिचूतोऽम्लवाटकः। *॥ १६॥

गुणाः—आम्रातकं कषायाम्लमामं हृत्कण्ठहर्षणम्। पक्कं तु मधुराम्लाख्यं स्निग्धं पित्तकफापहम्॥ १७॥

## ( ३ ) जम्बीरः। ( जम्बीरम् )

जम्बीरो जम्भलो जम्भः प्रोक्तो दन्तशठस्तथा। गम्भीरो वक्त्रशोधी च रोचनो दन्तहर्षणः॥ १४॥

गुणाः—तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणः। वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तलम्॥ १५॥

---

१ ज. ट. 'श्चक्रालुता'। २ च. ट. 'ध्वाम्रोऽशि'। ३ ट. वनेष्टो। ४ ङ. छ. 'वातकः।

अन्यच्च—जम्बीरं गुरु नात्यम्लं वातश्लेष्मविबन्धहृत् ॥ १६ ॥ कटुकमधुरमम्लं सुप्रतीतं रसे स्याद्रुचिकरमुदराग्नेस्तर्पणं चातिसारि। हरति कफसमीरौ पित्तमाहन्ति वीर्यकरणमपि न हृद्यं रक्तपित्तं तनोति ॥ १७ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

जम्बीरो दन्तशठो जम्भो जम्भीरजम्भलौ चैव। रोचनको मुखशोधी जाड्यारिर्जन्तुजिन्नवधा ॥ १८ ॥

गुणाः—जम्बीरस्य फलं रसेऽम्लमधुरं वातापहं पित्तकृत्पथ्यं पाचनरोचनं बलकरं वह्नेर्विवृद्धिप्रदम्। पक्वं चेन्मधुरं कफार्तिशमनं पित्तास्रदोषापनुद्वर्ण्यं वीर्यविवर्धनं च रुचिकृत्पुष्टिप्रदं तर्पणम् ॥ १९ ॥

## मधुजम्बीरः ( जम्बीरविशेषः ) ॥ ३ ॥

अन्यो मधुजम्बीरो मधुजम्बीरफलश्चान्यः। *शङ्खद्रावी शर्करकः पित्तद्रावी च षट्संज्ञः ॥ १८ ॥

गुणाः—*मधुरो मधुजम्बीरो शिशिरः कफपित्तजित्। *शोषघ्नस्तर्पणो वृष्यः श्रमघ्नः पुष्टिकारकः ॥ १९ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

अन्यो मधुजम्बीरो मधुजम्भो मधुरजम्भलश्चैव। * ॥ २० ॥

गुणाः—*। * ॥ २१ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

## निम्बूकः ( जम्बीरविशेषः ) ॥ ४ ॥

निम्बूकः स्यादम्लजम्बीरकाख्यो वह्निर्दीप्यो वह्निबीजोऽम्लसारः। दन्ताघातः शोधनो जन्तुमारी निम्बूकः स्याद्रोचनो रुद्रसंज्ञः ॥ २२ ॥

गुणाः—निम्बूफलं प्रथितमम्लरसं कटूष्णं गूल्मामवातहरमग्निविवृद्धिकारि। चक्षुष्यमेतदथ कासकफार्तिकण्ठविच्छर्दिहारि परिपक्वमतीव रुच्यम् ॥ २३ ॥

## ( ४ ) नारङ्गः ( नारङ्गम् )

नारङ्गस्त्वक्सुगन्धश्च नागरङ्गो मुखप्रियः। स चैरावतिकः प्रोक्तो योगी वक्त्राधिवासनः ॥ २० ॥

गुणाः—आम्लं समधुरं हृद्यं विषदं भक्तरोचनम्[1]। वातघ्नं दुर्जरं प्रोक्तं[2] नारङ्गस्य फलं गुरु ॥ २१ ॥

---

१ ग. भुक्तरोचनम्। २ क. ख. ङ. °म्। दुर्जरं वातशमनं ना°।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

नारङ्गः स्यान्नागरङ्गः सुरङ्गस्त्वग्गन्धश्चैरावतो वक्त्रवासः । योगी रङ्गो योगरङ्गः सुरङ्गो गन्धाढ्योऽयं गन्धपत्रो रवीष्टः ॥ २४ ॥

गुणाः—नारङ्गं मधुरं चाम्लं गुरूष्णं चैव रोचनम् । वातामक्रिमिशूलघ्नं श्रमहृद्बलरुच्यकम् ॥ २५ ॥

## ( ५ ) बीजपूर्णः ( बीजपूरकम् )

बीजपूर्णो बीजपूरः केसरी फलपूरकः । बीजकः केसराम्लश्च मातुलुङ्गः सुपूरकः ॥ २२ ॥ वराम्लो वीजको लुङ्गो रुचको मध्यकेसरः । क्रिमिघ्नो गन्धकुसुमः केसरी सिन्धुपादपः ॥ २३ ॥

गुणाः—श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम् । लघूष्णं दीपनं हृद्यं मातुलिङ्गमुदाहृतम् ॥ २४ ॥ त्वक्तिक्ता दुर्जरा तस्य वातक्रिमिकफापहा । स्वादु शीतं गुरु स्निग्धं मांसमारुतपित्तजित् ॥ २५ ॥ मेध्यं शूलार्तिच्छर्दिघ्नं कफारोचकनाशनम् । दीपनं लघु संग्राहि गुल्मार्शोघ्नं तु केसरम् ॥ २६ ॥ पित्तमारुतकृद्बल्यं पित्तलं बद्धकेसरम् । हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ॥ २७ ॥ शूलाजीर्णविबन्धेषु मन्दाग्नौ कफमारुते । अपचीश्वासकासेषु रसस्तस्योपयुज्यते ॥ २८ ॥ रसोऽतिमधुरो हृद्यो वीर्यपित्तानिलापहः । कफकृद्दुर्जरा पाके मातुलिङ्गजटा कटुः ॥ २९ ॥ मूलं चैव क्रिमीन्हन्ति पुष्पबीजं च गुल्मजित् । अन्यच्च—चेतोहारी रसेन प्रथयति कटुतामम्लतां चापि धत्ते हृद्रोगोदानगुल्मश्वसनकफहरः प्लीहकोपापहन्ता । वीर्यादर्शांसि कासग्रहणिमपहरत्याग्निकृत्पाचनोऽयं संधत्ते रक्तपित्तं परिणतिसमये केसरो मातुलिङ्ग्याः ॥ ३० ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

बीजपूरो बीजपूर्णः पूर्णबीजस्तु केसरः । बीजकः केसरोऽम्लश्च मातुलिङ्गः सुपूरकः ॥ २६ ॥ रुचको बीजफलको जन्तुघ्नो दन्तुरत्वचः । पूरको रोचनफलो द्विदेवमुनिसंमितः ॥ २७ ॥

गुणाः—बीजपूरफलमम्लकटूष्णं श्वासकासशमनं पचनं च । कण्ठशोधनपरं लघु हृद्यं दीपनं च रुचिकृत्पवनं च ॥ २८ ॥ तथा च—बालं पित्तमरुत्कफास्रकरणं मध्यं च तादृग्विधं पक्वं वर्णकरं च हृद्यमथ तत्पुष्णाति पुष्टिं बलम् । शूलाजीर्णविबन्धमारुतकफश्वासार्तिमन्दाग्निजित्कासारोचकशोफशान्तिदमिदं

---

१ ज. वरिष्ठः । २ ङ. छ. बीजपूरकः । ३ क. ङ. °ण्णाहृत्कण्ठ° । ४ क. ङ. लघुप्रदी° । ५ क. ङ. रुच्यं । ६ क. ख. °त्तनुत् । ७ क. अरुचिश्वा° । ८ ख. °यो विषपि° । ९ ण. °हकालेयह° ।

स्यान्मातुलिङ्गं सदा ॥ २९ ॥ अन्यच्च—त्वक्तिक्ता दुर्जरा स्यात्कृमिकफपवनध्वंसिनी स्निग्धमुष्णं मध्यं शूलार्तिपित्तप्रशमनमखिलारोचकघ्नं च गौल्यम् । वातार्तिघ्नं कटूष्णं जठरगदहरं केसरं दीप्यमम्लं बीजं तिक्तं कफार्शःश्वयथुशमकरं बीजपूरस्य पथ्यम् ॥ ३० ॥

## मधुकर्कटी । ( बीजपूर्णविशेषः ) ॥ ५ ॥

बीजपूर्णोऽपरः प्रोक्तो मधुरो मधुकर्कटी । मधुवल्ली च विज्ञेया वर्धमाना महाफला ॥ ३१ ॥

गुणाः—मधुकर्कटिका स्वादुः शीता पित्तास्रजिद्गुरुः । एषा त्रिदोषजिद्वृष्या रुचिकृच्चैव दुर्जरा ॥ ३२ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

अथ मधुरबीजपूरो मधुपर्णी मधुरकर्कटी मधुवल्ली । मधुकर्कटी मधुरफला महाफला वर्धमाना च ॥ ३१ ॥

गुणाः—मधुकर्कटी मधुरा शिशिरा दाहनाशिनी । त्रिदोषशमनी रुच्या वृष्या च गुरुदुर्जरा ॥ ३२ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

## वनबीजपूरकः । ( बीजपूर्णविशेषः ) ॥ ६ ॥

वनबीजपूरकोऽन्यो वनजो वनपूरकश्च वनबीजः । अत्यम्ला गन्धाढ्या वनोद्भवा देवदूती च ॥ ३३ ॥ पीता च देवदासी देवेष्टा मातुलिङ्गिका चैव । पवनी महाफला च स्यादियमिति वेदभूमिमिता ॥ ३४ ॥

गुणाः—अम्लः कटूष्णो वनबीजपूरो रुचिप्रदो वातविनाशनश्च । स्यादम्लदोषः कृमिनाशकारी कफापहः श्वासनिषूदनश्च ॥ ३५ ॥

## ( ६ ) आम्लिका ।

अम्लिका चुक्रिका चुक्रा साम्ला शुक्ताऽथ शुक्तिका । अम्लिका चिञ्चिका चिञ्चा तित्तिडीका सुतित्तिडी ॥ ३३ ॥

गुणाः—अम्लिकायाः फलं चाम्लमत्यन्तं पित्तकृल्लघु । रक्तकृद्वातशमनं बस्तिशुद्धिकरं परम् ॥ ३४ ॥ पक्वं तु मधुराम्लं च भेदि विष्टम्भि वातजित् । त्वग्भस्म स्यात्कषायोष्णं कफघ्नं त्वनिलापहम् ॥ ३५ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

१ ट. °मुक्तं म° । २ ज. स्यादामदो° । ३ क. ° मत्युष्णं पि° ।

चिञ्चा तु चुक्रिका चुक्रा साम्लिका शाकचुक्रिका। अम्ली सुतिन्तिडी चाम्ला चुक्रिका च नवाभिधा ॥ ३६ ॥

गुणाः—चिञ्चाऽत्यम्ला भवेदामा पक्का तु मधुराम्लिका। वातघ्नी पित्तदाहास्रकफदोषप्रकोपनी ॥ ३७ ॥

तथाच—अम्लिकायाः फलं त्वाममत्यम्लं लघु पित्तकृत्। पक्वं तु मधुराम्लं स्याद्भेदि विष्टम्भवातजित् ॥ ३८ ॥ पक्वचिञ्चाफलरसो मधुराम्लो रुचिप्रदः। शोफपाककरो लेपाद्व्रणदोषविनाशनः ॥ ३९ ॥ चिञ्चापत्रं च शोफघ्नं रक्तदोषव्यथापहम्। तस्य शुष्कत्वचाक्षारं शूलमन्दाग्निनाशनम् ॥ ४० ॥ अम्लसारम्—अम्लसारस्तु शाकाम्लं चुक्राम्लं चाम्लचुक्रिका। चिञ्चाम्लमम्लचूडश्च चिञ्चासारोऽपि सप्तधा ॥ ४१ ॥

गुणाः—अम्लसारस्त्वतीवाम्लो वातघ्नः कफदाहकृत्। साम्येन शर्करामिश्रो दाहपित्तकफार्तिनुत् ॥ ४२ ॥

## क्षुद्राम्लिका (अम्लिकाविशेषः) ॥ ७ ॥

क्षुद्राम्लिका तु चाङ्गेरी लोणिका[1] चाम्ललोणिका[2]। लोला लोणा चतुष्पर्णी सैव दन्तशठा मता ॥ ३६ ॥

गुणाः—चाङ्गेरी कफवातघ्नी ग्राहिण्युष्णा च पित्तकृत्। अम्ला क्षुद्राम्लिका प्रोक्ता स्वादूष्णा सकषायका ॥ ३७ ॥ ग्रहण्यर्शोविकारघ्नी आमवातकफे हिता।

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

क्षुद्राम्लिका तु चाङ्गेरी चुक्राह्वा चुक्रिका च सा। लोणाम्लिका चतुष्पर्णी लोणा लोडाम्लपत्रिका ॥ ४३ ॥ अम्बष्ठाऽम्लवती चैव अम्ला दन्तशठा मता। शस्त्राङ्गा चाम्लपत्री च ज्ञेया पञ्चदशाह्वया ॥ ४४ ॥

गुणाः—क्षुद्राम्ली च रसे साम्ला सोष्णा सा वह्निवर्धनी। रुचिकृद्ग्रहणीदोषदुर्नामघ्नी कफापहा ॥ ४५ ॥

## (७) आरुकम्। (आरुकः)

*आरुकं वीरसेनं तु वीरं वीरानकं तथा। विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम् ॥ ३८ ॥

गुणाः—आरुकाणि च हृद्यानि मेहार्शो[3]नाशनानि च।

---

१ क. ङ. लोटिका. । २ क. ङ. °लोटिका । झ. त. °लोहिका । ३ क. °नि महार्शो° । ख. °नि मोहार्शो° ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

* । तच्च विद्याच्चतुर्जाति[1] पत्रपुष्पादिभेदतः ॥ ४६ ॥

गुणाः—अरुकाणि च सर्वाणि मधुराणि हिमानि च । अर्शप्रमेहगुल्मास्र-दोषविध्वंसनानि च ॥ ४७ ॥

## ( ८ ) भवम् ।

*भैवं भव्यं भविष्यं च भावनं वक्त्रशोधनम् । तथा पिच्छलबीजं च तच्च रोमफलं मतम् ॥ ३९ ॥

गुणाः—*भव्यमम्लं च वातघ्नं पिच्छलं वक्त्रशोधनम् ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

* । तथा पिच्छलबीजं च तच्च रोमफलं मतम् ॥ ४८ ॥

गुणाः—भव्यमम्लं कटूष्णं च बालं वातकफापहम् । पक्कं तु मधुराम्लं च रुचिकृत्समशूलहृत् ॥ ४७ ॥

## ( ९ ) तिन्दुकः ।

*तिन्दुको नीलसारश्च कालस्कन्धोऽतिमुक्तकः । स्फूर्जकः स्फूर्जनस्तुष्टः स्यन्दनो रामणो रवः ॥ ४० ॥ द्वितीयतिन्दुकः ×काकतिन्दुर्मर्कटतिन्दुकः । काकेन्दुकश्च विख्यातः कपीलुः[4] काकतिन्दुकः ॥ ४१ ॥

गुणाः—†आमं कषायं संग्राहि तिन्दुकं वातकोपनम् । विपाके गुरु संपक्कं मधुरं कफपित्तजित् ॥ ४२ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

* । स्फूर्जको रामणश्चैव स्फूर्जनः स्यन्दनाह्वयः ॥ ५० ॥

गुणाः—तिन्दुकस्तु कषायः स्यात्संग्राही वातकृत्परः । पक्कस्तु मधुरः स्निग्धो दुर्जरः श्लेष्मलो गुरुः ॥ ५१ ॥ तिन्दुकोऽन्यः काकपीलुः काकाण्डः काकतिन्दुकः । काकस्फूर्जश्च काकाण्डः कलाह्वः काकबीजकः ॥ ५२ ॥

---

* ग. पुस्तकेऽयं गुणपाठविशेषः—

'हृद्यं स्वादु कषायाम्लं भव्यमास्यविशोधनम्'।

'पित्तश्लेष्महरं ग्राहि गुरु विष्टम्भि शीलितम्' इति ।

× 'कांटेटेंबुरु' इति ख्याते ।

† क. ख. ङ. पुस्तकेष्वयं पाठः—

'तिन्दुकद्वयमामं च कषायं ग्राहि वातकृत् ।

सुपक्कं गुरु पाके तु मधुरं कफवातजित्' इति ।

---

१ ज. झ. तत्र । २ ज. झ. 'र्जातीः प' । ३ ग. भव्यं भाव्यं भवि' । ४ क. ङ. कुपिलुः । ग. पीलूकः । घ. कुपिलः ।

गुणाः—तिन्दुकश्च कषायोऽम्लो गुरुर्वातविकारकृत्। पक्वस्तु मधुरः किंचित्कफकृत्पित्तवान्तिहृत् ॥ ५३ ॥

## ( १० ) विकङ्कतः । ( विकङ्कतम्, विशाखा )

विकङ्कतो मृदुफलो ग्रन्थिलः स्वादुकण्टकः। गोपघोटः[1] काकपादो व्याघ्रपादोऽथ किङ्किणी ॥ ४३ ॥

गुणाः—गोपघोटा रसे तिक्ता शीतला शोफनाशनी। हन्ति श्लेष्माणमत्युग्रमुद्रक्तं हन्ति योगतः ॥ ४४ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

विकङ्कतो व्याघ्रपादो ग्रन्थिलः स्वादुकण्टकः। कण्टपादो बहुफलो गोपघोटा स्रुवद्रुमः ॥ ५४ ॥ मृदुफलो दन्तकाष्ठो यज्ञियो ब्रह्मपादपः। पिण्डरोहिणकः पूतः किङ्किणी च त्रिपञ्चधा ॥ ५५ ॥

गुणाः—विकङ्कतोऽम्लो मधुरः पाकेऽतिमधुरो लघुः। दीपनः कामलास्रघ्नः पाचनः पित्तनाशनः ॥ ५६ ॥

## ( ११ ) मधुकः । ( मधुकम्, रेवती )

मधुको मधुवृक्षस्तु[2] मधुष्ठीलो मधुस्रवः। गुडपुष्पो लोध्रपुष्पो वानप्रस्थोऽथ माधवः ॥ ४५ ॥

गुणाः—*मधुकं मधुरं शीतं पित्तदाहश्रमापहम्। *वातलं न तु दोषघ्नं वीर्यपुष्टिविवर्धनम् ॥ ४६ ॥ बृंहणीयमहृद्यं च मधूककुसुमं गुरु। वातपित्तोपशमनं फलं तस्योपदिश्यते ॥ ४७ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

मधुको मधुवृक्षः स्यान्मधुष्ठीलो मधुस्रवः। गुडपुष्पो लोध्रपुष्पो वानप्रस्थश्च माधवः ॥ ५७ ॥

गुणाः—* * ॥ ५८ ॥

## जलदः । ( मधुकविशेषः ) ॥ ८ ॥

मधुकोऽन्यो द्वितीयस्तु जलदो दीर्घपत्रकः। ह्रस्वपुष्पः फलस्वादुः गौडिकोऽथ मधूलिका ॥ ४८ ॥ अन्यो जलमधूकस्तु मधुपुष्पो जलाख्यकः। रसपुष्पो दीर्घपत्रो[3] गोरङ्गो मधुपुष्पिकः ॥ ४९ ॥

गुणाः—ज्ञेयो जलमधूकस्तु मधुरो व्रणनाशनः। वृष्यो वान्तिहरः शीतो बलकारी रसायनः ॥ ५० ॥

---

१ ङ. छ. गोपकण्टः। २ क. ङ. 'वृक्षः स्यान्मधु'। ३ ग. 'त्रो गौरिकाख्यो मधूलिकः। गु'।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

अन्यो जलमधूको मङ्गल्यो दीर्घपत्रको मधुपुष्पः। क्षौद्रप्रियः पतङ्गः कीरेष्टो गैरिकाक्षश्च ॥ ५९ ॥

गुणाः—मधूकपुष्पं मधुरं च वृष्यं हृद्यं हिमं पित्तविदाहहारि। फलं च वातामयपित्तनाशि ज्ञेयं मधूकद्वयमेवमेतत् ॥ ६० ॥

## ( १२ ) पीलुः ( पीलुकः )

पीलुः शीतः सहस्रांशी धानी गुडफलोऽपि च । विरेचनफलः शाखी श्यामः करभवल्लभः ॥ ५१ ॥

गुणाः—रक्तपित्तहरः पीलुः फलं कटु विपाकि च। अर्शोघ्नं बस्तिशमनं सस्नेहं कफवातजित् ॥ ५२ ॥ पीलुजं च रसं स्वादु गुल्मार्शोघ्नं तु तीक्ष्णकम् ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

पीलुः शीतः सहस्रांशी धानी गुडफलस्तथा। विरेचनफलः शाखी श्यामः करभवल्लभः ॥ ६१ ॥

गुणाः—अङ्काह्वः कटुकः पीलुः कषायो मधुराम्लकः । सरः स्वादुश्च गुल्मार्शःशमनो दीपनः परः ॥ ६२ ॥ अन्यश्चैव बृहत्पीलुर्महापीलुर्महाफलः। राजपीलुर्महावृक्षो मधुपीलुः षडाह्वयः ॥ ६३ ॥

गुणाः—मधुरस्तु महापीलुर्वृष्यो विषविनाशनः। पित्तप्रशमनो रुच्य आमघ्नो दीपनीयकः ॥ ६४ ॥

## ( १३ ) खर्जूरी । ( खर्जूरम् )

खर्जूरी तु खरस्कन्धा कषाया मधुराग्रजा । दुष्प्रधर्षा दुरारोहा निःश्रेणी स्वादुमस्तका ॥ ५३ ॥

गुणाः—क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु । रसे पाके च मधुरं खर्जूरं रक्तपित्तजित् ॥ ५४ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

खर्जूरी तु खरस्कन्धा दुष्प्रधर्षा दुरारुहा। निःश्रेणी च कषाया च यवनेष्टा हरिप्रिया ॥ ६३ ॥

गुणाः—खर्जूरी तु कषाया च पक्का गौल्यकषायका। पित्तघ्नी कफदा चैव कृमिकृद्वृष्यबृंहणी ॥ ६६ ॥

---

१ क. ङ. ॰रा रसा। दु॰।

## दीप्या ( पिण्डखर्जूरिका ) ( खर्जूरीविशेषः ) ॥ ९ ॥

* दीप्या च पिण्डखर्जूरी स्थलपिण्डा मधुस्रवा । *फलपुष्पा स्वादुपिण्डा हयभक्षा रसाभिधा ॥ ५५ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

* * ॥ ६७ ॥

तथाऽन्या राजखर्जूरी राजपिण्डा नृपप्रिया । मुनिखर्जूरिका वन्या राजेष्टा रिपुसंमिता ॥ ६८ ॥

गुणाः—पिण्डखर्जूरिकायुग्मं गौल्यं स्वादे हिमं गुरु । पित्तदाहार्तिश्वासघ्नं श्रमहृद्वीर्यवृद्धिदम् ॥ ६९ ॥ अन्यच्च—दाहघ्नी मधुराऽस्रपित्तशमनी तृष्णार्तिदोषापहा शीता श्वासकफश्रमोदयहरा संतर्पणी पुष्टिदा । वह्नेर्मान्द्यकरी गुरुर्विषहरा हृद्या च दत्ते बलं स्निग्धा वीर्यविवर्धनी च कथिता पिण्डाख्यखर्जूरिका ॥ ७० ॥ मधुखर्जूरी त्वन्या मधुकर्कटिका च कोककर्कटिका । कण्टकिनी मधुफलिका माध्वी मधुरा च मधुरखर्जूरी ॥ ७१ ॥

गुणाः—मधुखर्जूरी मधुरा वृष्या संतापपित्तशान्तिकरी । शिशिरा च जन्तुकरी बहुवीर्यविवर्धनं तनुते ॥ ७२ ॥ भूखर्जूरी भुक्ता वसुधाखर्जूरिका च भूमिखर्जूरी ॥

गुणाः—भूखर्जूरी मधुरा शिशिरा च विदाहपित्तहरा ॥ ७३ ॥

## ( १४ ) द्राक्षा ।

*द्राक्षा चारुफला कृष्णा प्रियाला तापसप्रिया । काश्मीरिका विनिर्दिष्टा रसाला करमर्दिका ॥ ५६ ॥

गुणाः—द्राक्षा हृद्यरसा स्वर्या मधुरा स्निग्धशीतला । रक्तपित्तज्वरश्वासतृष्णादाहक्षयापहा ॥ ५७ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

* । गुच्छफला रसाला च ज्ञेयाऽमृतफला च सा ॥ ७४ ॥

गुणाः—द्राक्षाऽतिमधुराऽम्ला च शीता पित्तार्तिदाहजित् । मूत्रदोषहरा रुच्या वृष्या संतर्पणी परा ॥ ७५ ॥

## उत्तरापथिका ( द्राक्षाविशेषः ) ॥ १० ॥

उत्तरापथिका प्रोक्ता कपिला सा फलोत्तमा । स्वादुपाका मधुरसा मृद्वीका गोस्तनी स्मृता ॥ ५८ ॥

---

१ क. ङ. व. 'हश्रमाप' । २ क. हारहूरा ।

गुणाः—मृद्वीका मधुरा स्निग्धा सिता वृष्या तु लोमनी। रक्तानिलश्वासकासभ्रमतृष्णाज्वरापहा ॥ ५९ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

अन्या कपिलद्राक्षा मृद्वीका गोस्तनी च कपिलफला। अमृतरसा दीर्घफला मधुवल्ली मधुफला मधूली च ॥ ७६ ॥ हरिता च हारहूरा सुफला मृद्वी हिमोत्तरापथिका। हैमवती शतवीर्या काश्मीरी गजराजमहिगणिता ॥ ७७ ॥

गुणाः—गोस्तनी मधुरा शीता हृद्या च मदहर्षणी। दाहमूर्छाज्वरश्वासतृषाहृल्लासनाशिनी ॥ ७८ ॥ अन्या सा †काकलीद्राक्षा जम्बुका च फलोत्तमा। लघुद्राक्षा च निर्बीजा सुवृत्ता रुचिकारिणी ॥ ७९ ॥

गुणाः—शिशिराश्वासहृल्लासनाशिनी जनवल्लभा। द्राक्षाविशेषगुणाः—द्राक्षाबालफलं कटूष्णविषदं पित्तास्रदोषप्रदं मध्यं चाम्लरसं रसान्तरगते रुच्यातिवह्निप्रदम्। पक्वं चेन्मधुरं तथाऽम्लसहितं तृष्णास्रपित्तापहं पक्वं शुष्कतमं श्रमार्तिशमनं संतर्पणं पुष्टिदम् ॥ ८० ॥ अपरं च—शीता पित्तास्रदोषं दमयति मधुरा स्निग्धपाकाऽतिरुच्या चक्षुष्या श्वासकासश्रमवमिशमनी शोफतृष्णाज्वरघ्नी। दाहाध्मानभ्रमादीनपनयति परा तर्पणी पक्वशुष्का द्राक्षा सुक्षीणवीर्यानपि मदनकलाकेलिदक्षान्विधत्ते ॥ ८१ ॥

## ( १५ ) आक्षोडः। ( अक्षोडः )

आक्षोडः पार्वतीयश्च फलस्नेहो गुडाश्रयः। कीरेष्टः कर्परालश्च स्वादुमज्जा पृथुच्छदः ॥ ६० ॥

गुणाः—आक्षोडकः स्वादुरसो मधुरः पुष्टिकारकः। पित्तश्लेष्महरो रूक्षः स्निग्धोष्णो गुरुर्बृंहणः ॥ ६१ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

अक्षोटः पार्वतीयश्च फलस्नेहो गुडाशयः। कीरेष्टः कन्दरालश्च मधुमज्जा बृहच्छदः ॥ ८२ ॥

गुणाः—अक्षोटो मधुरो बल्यः स्निग्धोष्णो वातपित्तजित्। रक्तदोषप्रशमनः शीतलः कफकोपनः ॥ ८२ ॥

## ( १६ ) परूषकम्।

परूषकं परु प्रोक्तं [1]नीलवर्णं [2]परावरम्। परिमण्डल[3]मध्यास्थि परूषं चापि नामतः ॥ ६१ ॥

† 'खिसमिस' 'बिनदाना' 'बेदाणा' इति ख्याता।

१ छ. ण. नीलपर्णं। २ ङ. छ झ. ण. परापरम्। ३ °मल्पास्थि।

गुणाः—परूषकफलं चाम्लं वातघ्नं पित्तकृद्गुरु। तदेव पक्कं मधुरं वातपित्तनिबर्हणम् ॥ ६३ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

परूषकं नीलपर्णं गिरिपीलु परावरम्। नीलमण्डलमल्पास्थि परुषं च परुस्तथा ॥ ८४ ॥

गुणाः—परूषमम्लं कटुकं कफार्त्तिजिद्वातापहं तत्फलमेव पित्तदम्। सोष्णं च पक्कं मधुरं रुचिप्रदं पित्तापहं शोफहरं च पीतम् ॥ ८५ ॥

## (१७) तूलम्।

तूलं तूदं च यूपं च क्रमुकं ब्रह्मकाष्ठकम्। ब्रह्मदारु ब्राह्मणेष्टं ब्रह्मण्यं ब्रह्मचारिणम् ॥ ६४ ॥

गुणाः—तूलस्य च फलं स्वादु बलवर्णाग्निवृद्धिकृत्। तूलं तु मधुराम्लं स्याद्वातपित्तहरं परम् ॥ ६५ ॥ दाहप्रशमनं वृष्यं कषायं कफनाशनम्।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

तूलं तूदं ब्रह्मकाष्ठं ब्राह्मणेष्टं च यूपकम्। ब्रह्मदारु सुपुष्पं च सुरूपं नीलवृन्तकम् ॥ ८६ ॥ क्रमुकं विप्रकाष्ठं च मृदुसारं द्विभूमितम्

गुणाः—तूलं तु मधुराम्लं स्याद्वातपित्तहरं सरम्। * ॥ ८७ ॥

## (१८) पालेवतम्।

पालेवतं रैवतकं[2] ज्ञेयमारेवतं तथा। महापालेवतं चोक्तं रक्तपालेवतं तथा ॥ ६६ ॥ पालेवतं सितं पुष्पैस्तिन्दुकाभफलं मतम्। अन्यन्माणवकं ज्ञेयं महापालेवतं तथा ॥ ६७ ॥

गुणाः—पालेवतं तु मधुरं स्निग्धं हृद्यं समीरजित्।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

पारेवतं तु रैवतमारेवतकं च किंच रैवतकम्। मधुफलममृतफलाख्यं पारेवतकं च सप्ताह्वम् ॥ ८८ ॥

गुणाः—पारेवतं तु मधुरं क्रमिवातहारि वृष्यं तृषाज्वरविदाहहरं च हृद्यम्। मूर्छाभ्रमश्रमविशोषविनाशकारि स्निग्धं च रुच्यमुदितं बहुवीर्यदायि ॥ ८९ ॥ महापारेवतं चान्यत्स्वर्णपारेवतं तथा। साम्राणिजं[3] खारिकं च रक्तरैवतकं च तत् ॥ ९० ॥ बृहत्पारेवतं प्रोक्तं द्वीपजं द्वीपखर्जुरी।

---

१ क ङ. 'त्तलं गुरु। २ क. ङ. दैवतकं। ३ ज. सम्राडनी।

गुणाः—महापारेवतं गौल्यं बलकृत्पुष्टिवर्धनम् । वृष्यं मूर्छाज्वरघ्नं च पूर्वोक्तादधिकं गुणैः ॥ ९१ ॥

## ( १९ ) तालः । ( तालम्, ताड: )

तालो ध्वजद्रुमः प्रांशुर्दीर्घस्कन्धो दुरारुहः । तृणराजो दीर्घतरुर्लेख्यपत्रो द्रुमेश्वरः ॥ ६८ ॥

गुणाः—फलं स्वादुरसं पाके तालजं गुरु पित्तजित्[1] । तद्बीजं स्वादु पाके तु मूलं स्याद्रक्तपित्तजित् ॥ ६९ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

तालस्तालद्रुमः पत्री दीर्घस्कन्धो ध्वजद्रुमः । तृणराजो मधुरसो मदाढ्यो दीर्घपादपः ॥ ९२ ॥ चिरायुस्तरुराजश्च गजभक्षो दृढच्छदः । दीर्घपत्रो गुच्छपत्रोऽप्यासवद्रुश्च षोडश ॥ ९३ ॥

गुणाः—तालश्च मधुरः शीतपित्तदाहश्रमापहः । सरश्च कफपित्तघ्नो मदकृद्दाहशोषनुत् ॥ ९६ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

## श्रीतालः । ( तालविशेषः ) ॥ ११ ॥

श्रीतालो मधुतालश्च लक्ष्मीतालो मृदुच्छदः । विशालपत्रो लेखार्हो मषीलेख्यदलस्तथा ॥ ९५ ॥ शिरालपत्रकश्चैव याम्योद्भूतो नवाह्वयः ।

गुणाः—श्रीतालो मधुरोऽत्यन्तमीषच्चैव कषायकः । पित्तजित्कफकारी च वातमीषत्प्रकोपयेत् ॥ ९४ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

## हिन्तालः । ( तालविशेषः ) ॥ १२ ॥

हिन्तालः स्थूलतालश्च वल्कपत्रो बृहद्दलः । गर्भस्रावी लतातालो भीषणो बहुकण्टकः ॥ ९७ ॥ स्थिरपत्रो द्विधालेख्यः शिरापत्रः स्थिराङ्घ्रिपः । अम्लसारो बृहत्तालः स्याच्चतुर्दशधाभिधः ॥ ९८ ॥

गुणाः—हिन्तालो मधुराम्लश्च कफकृत्पित्तदाहनुत् । श्रमतृष्णापहारी च शिशिरो वातदोषनुत् ॥ ९९ ॥

## माडः ( तालविशेषः ) ॥ १३ ॥

* माडो माडद्रुमो दीर्घो ध्वजवृक्षो वितानकः । मद्यद्रुमो मोहकारी मदद्रुर्ऋजुरङ्कधा ॥ ७० ॥

---

१ क. ङ. 'त् । बीजं तु स्वादुपाके स्यान्मूलं तु रक्त' ।

गुणाः—माडस्तु शिशिरो रुच्यः कषायः पित्तदाहकृत् । तृष्णापहो मरुत्कारी श्रमहृच्छ्लेष्मकारकः ॥ ७० ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

* । * ॥ १०० ॥

गुणाः—* । * ॥ १०१ ॥

## ( २० ) प्रियालः ( प्रियालम्, प्रियालकः )

प्रियालोऽथ खरस्कन्धश्चारो[1] बहुलवल्कलः । स्नेहबीजश्चापवटो ललनस्तापसप्रियः ॥ ७२ ॥

गुणाः—वातपित्तहरं वृष्यं प्रियालं गुरु शीतलम् । चारस्य च फलं पक्कं स्वाद्वम्लं दुर्जरप्रियम् ॥ ७३ ॥ चारमज्जा समधुरा वृष्या पित्तानिलापहा ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

चारः खद्रुः खरस्कन्धो ललनश्चारकस्तथा । बहुवल्कः प्रियालश्च नवद्रुस्तापसप्रियः ॥ १०२ ॥ स्नेहबीजश्चापवटो भक्षबीजः करेन्दुधा ।

गुणाः—चारस्य च फलं पक्कं वृष्यं गौल्याम्लकं गुरु । तद्बीजं मधुरं वृष्यं पित्तदाहार्तिनाशनम् ॥ १०३ ॥

## ( २१ ) नारिकेलः ( नाडिकेलः, नालिकेरकम् )

नारिकेलो रसफलः सुतुङ्गः[2] कूर्चशेखरः । तालवृक्षो दृढफलो लाङ्गली दाक्षिणात्यकः ॥ ७४ ॥

गुणाः—नारिकेलं गुरु स्निग्धं पित्तलं स्वादु शीतलम् । बलमांसप्रदं वृष्यं बृंहणं बस्तिशोधनम् ॥ ७४ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

नारिकेलो रसफलः सुतुङ्गः कूर्चशेखरः । दृढनीलो नीलतरुर्मङ्गल्योच्चतरुस्तथा ॥ १०४ ॥ तृणराजः स्कन्धतरुर्दाक्षिणात्यो दुरारुहः । लाङ्गली त्र्यम्बकफलस्तथा दृढफलस्थितिः ॥ १०५ ॥

गुणाः—नारिकेलो गुरुः स्निग्धः शीतः पित्तविनाशनः । अर्धपक्कस्तृषाशोषशमनो दुर्जरः परः ॥ १०६ ॥ नालिकेरसलिलं लघु बल्यं शीतलं च मधुरं गुरु पाके । पित्तपीनसतृषाश्रमदाहशान्ति शोषशमनं सुखदायि ॥ १०७ ॥ पक्कमेतदपि किंचिदिहोक्तं पित्तकारि रुचिदं मधुरं च । दीपनं बलकरं गुरु वृष्यं वीर्यवर्धनमिदं तु वदन्ति ॥ १०८ ॥

---

१ क. ख. ङ. 'रो हि बहुव' । २ क. ङ. सुगन्धः ।

*खुबरं नालिकेरस्य स्निग्धं गुरु च दुर्जरम् । दाहविष्टम्भदं रुच्यं बलवीर्यविवर्धनम् ॥ १०९ ॥

× मधुनारिकेरकोऽन्यो माध्वीकफलश्च मधुफलोऽशितजफलः । माक्षिकफलो मृदुफलो बहुकूर्चो ह्रस्वफलश्च वसुगणिताह्वः ॥ ११० ॥

गुणाः—मधुरं मधुनालिकेरमुक्तं शिशिरं दाहतृषार्तिपित्तहारि । बलपुष्टिकरं च कान्तिमग्र्यां कुरुते वीर्यविवर्धनं च रुच्यम् ॥ १११ ॥ अपि च—माध्वीकं नारिकेरीफलमतिमधुरं दुर्जरं जन्तुकारि स्निग्धं वातातिसारश्रमशमनमथ ध्वंसनं वह्निदीप्तेः । आमश्लेष्मप्रकोपं जनयति कुरुते चारुकान्तिं बलं च स्थैर्यं देहस्य धत्ते घनमदनकलावर्धनं पित्तनाशम् ॥ ११२ ॥

## ( २२ ) वटः ( मघा )

वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः[३] । क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः ॥ ७६ ॥

गुणाः—वटः शीतः कषायश्च स्तम्भनो[४] रूक्षणात्मकः । तथा तृष्णाच्छर्दिमूर्च्छारक्तपित्तविनाशनः ॥ ७७ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

स्यादथ वटो जटालो न्यग्रोधो रोहिणोऽवरोही च । विटपी रक्तफलश्च स्कन्धरुहो मण्डली महाच्छायः ॥ ११३ ॥ शृङ्गी यक्षावासो यक्षतरुः पादरोहिणो नीलः । क्षीरी शिफारुहः स्याद्बहुपादः स तु वनस्पतिर्नवभूः ॥ ११४ ॥

गुणाः—वटः कषायो मधुरः शिशिरः कफपित्तजित् । ज्वरदाहतृषामोहव्रणशोफापहारकः ॥ ११५ ॥

†नदीवटो यज्ञवृक्षः सिद्धार्थो वटको वटी । अमरा सङ्गिनी चैव क्षीरकाष्ठा च कीर्तिता ॥ ११६ ॥

गुणाः—वटी कषायमधुरा शिशिरा पित्तहारिणी । दाहतृष्णाश्रमश्वासविच्छर्दिशमनी परा ॥ ११७ ॥

## ( २३ ) पिप्पलः । ( अश्वत्थः ) (पुष्यम्)

पिप्पलः केशवावासश्चलपत्रः पवित्रकः । मङ्गल्यः श्यामलोऽश्वत्थो बोधि-

---

* ' खुबरम् ' खोबरें इति ख्यातम् । + ' मधुनारिकेरकः ' मोहाचा नारळ इति ख्याते ।
† ' नदीवटः ' नदीवड इति ख्याते ।

---

१ ज. खर्जूरं । ट. खर्बूरं । २ ज. ट. 'लोऽक्षित' । ३ ग. द्रुमः । ४ क. ङ. 'नो रूक्षणो गुरुः । त' ।

वृक्षो गजाशनः ॥ ७८ ॥ श्रीमान्क्षीरद्रुमो विप्रः शुभदः श्यामलच्छदः । पिप्पलो गुह्यपत्रस्तु सेव्यः सत्यः शुचिद्रुमः ॥ ७९ ॥ चैत्यद्रुमो वन्यवृक्षश्चन्द्रकरमिताह्वयः ।

गुणाः—अश्वत्थोऽपि स्मृतस्तद्वद्रक्तपित्तकफापहः ॥ ८० ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

अश्वत्थश्चाच्युतावासश्चलपत्रः पवित्रकः । शुभदो बोधिवृक्षश्च याज्ञिको गजभक्षकः ॥ ११८ ॥ श्रीमान्क्षीरद्रुमो विप्रो मङ्गल्यः श्यामलश्च सः । पिप्पलो गुह्यपत्रश्च सेव्यः सत्यः शुचिद्रुमः । चैत्यद्रुमो धर्मवृक्षश्चन्द्रकरमिताह्वयः ॥ ११९ ॥

गुणाः—पिप्पलः सुमधुरस्तु कषायः शीतलश्च कफपित्तविनाशी । रक्तदाहशमनः स हि सद्यो योनिदोषहरणः किल पक्वः ॥१२०॥ अन्यच्च—अश्वत्थवृक्षस्य फलानि पक्वान्यतीव हृद्यानि च शीतलानि । कुर्वन्ति पित्तास्रविषार्तिदाहं[1] विच्छर्दिशोषारुचिदोषनाशम् ॥ १२१ ॥ अश्वत्थी लघुपत्री स्यात्पवित्रा ह्रस्वपत्रिका । पिप्पलिका वनस्था च क्षुद्रा चाश्वत्थसंनिभा ॥ १२२ ॥

गुणाः—अश्वत्थिका तु मधुरा कषाया चास्रपित्तजित् । विषदाहप्रशमनी गुर्विण्या हितकारिणी ॥ १२३ ॥

## ( २४ ) प्लक्षः । ( उत्तरा )

प्लक्षः कपीतनः शृङ्गी सुपार्श्वश्चारुदर्शनः । प्लवको गर्दभाण्डश्च कमण्डलुवटप्लवः ॥ ८१ ॥

गुणाः—प्लक्षः कटुकषायश्च शीतलो रक्तपित्तजित् । मूर्छाश्रमप्रलापांश्च[2] हरेत्प्लक्षो विशेषतः ॥ ८२ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

प्लक्षः कपीतनः क्षीरी सुपार्श्वोऽथ कमण्डलुः । शृङ्गी वरोहशाखी च गर्दभाण्डः कपीतकः ॥ १२४ ॥ दृढप्ररोहः प्लवकः प्लवङ्गश्च महाबलः । प्लक्षश्चैवापरो ह्रस्वः सुशीतः शीतवीर्यकः ॥ १२५ ॥ पुण्ड्रो महावरोहश्च ह्रस्वपर्णस्तु पिम्परिः । भिदुरो मङ्गलच्छायो ज्ञेयो नेत्रकराभिधः ॥ १२६ ॥

गुणाः—प्लक्षः कटुकषायश्च शिशिरो रक्तदोषजित् । मूर्छाभ्रमप्रलापघ्नो ह्रस्वपक्षो विशोपकः ॥ १२७ ॥

## ( २५ ) जम्बूः ( रोहिणी )

जम्बूः सुरभिपत्रा च राजजम्बूर्महाफलः । सुरभी स्यान्महाजम्बूर्महा-

१ ज. 'दाहवि' । २ ङ. छ. 'छाश्रम' ।

स्कन्धा प्रकीर्तिता ॥ ८३ ॥ वेतसी काकजम्बूश्च नादेयी शीतवल्लभा । भ्रमरेष्टा नीलवर्णा द्वितीया जम्बुरुच्यते ॥ ८४ ॥

जम्बूद्वयगुणाः—जाम्बवं वातलं ग्राहि स्वाद्वम्लं कफवातजित् । हृत्कण्ठघर्षणं चान्यत्कषायं क्षुद्रजाम्बवम् ॥ ८५ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

जम्बूस्तु सुरभिपत्रा नीलफला श्यामला महास्कन्धा । राजार्हा राजफला शुकप्रिया मेघमोदिनी नवाह्वा ॥ १२८ ॥

गुणाः—जम्बूः कषायमधुरा श्रमपित्तदाहकण्ठार्तिशोषशमनी कृमिदोषहन्त्री । श्वासातिसारकफकासविनाशनी च विष्टम्भिनी भवति रोचनपाचनी च ॥ १२९ ॥ महाजम्बू राजजम्बूः स्वर्णमाता महाफला । शुकप्रिया कोकिलेष्टा महानीला बृहत्फला ॥ १३० ॥

गुणाः—महाजम्बूरुष्णा समधुरकषाया श्रमहरा निरस्यत्यास्यस्थं झटिति जडिमानं स्वरकरी । विधत्ते विष्टम्भं शमयति च शोषं वितनुते श्रमातीसारार्तिं श्वसितकफकासप्रशमनम् ॥ १३१ ॥ ×काकजम्बूः काकफला नादेयी काकवल्लभा । भृङ्गेष्टा काकनीला च ध्वांक्षजम्बूर्घनप्रिया ॥ १३२ ॥

गुणाः—काकजम्बूः कषायाम्ला पाके तु मधुरा गुरुः । दाहश्रमातिसारघ्नी वीर्यपुष्टिबलप्रदा ॥ १३३ ॥ अन्या च *भूमिजम्बूर्ह्रस्वफला भृङ्गवल्लभा ह्रस्वा । भूजम्बूर्भ्रमरेष्टा पिकभक्षा काष्ठजम्बूश्च ॥ १३४ ॥

गुणाः—भूमिजम्बूः कषाया च मधुरा श्लेष्मपित्तनुत् । हृद्या संग्राहिहृत्कण्ठदोषघ्नी वीर्यपुष्टिदा ॥ १३५ ॥

## ( २६ ) उदुम्बरः ( कृत्तिका )

*उदुम्बरः क्षीरवृक्षो हेमदुग्धः सदाफलः । अपुष्पफलसंबन्धो यज्ञाङ्गः शीतवल्कलः ॥ ८६ ॥

गुणाः—*उदुम्बरं कषायं स्यात्पक्वं तु मधुरं हिमम् । *कृमिकृत्पित्तरक्तघ्नं मूर्छादाहतृषापहम् ॥ ८७ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

*। कालस्कन्धो यज्ञयोग्यो यज्ञियः सुप्रतिष्ठितः ॥ १३६ ॥ शीतवल्को जन्तुफलः पुष्पशून्यः पवित्रकः । सौम्यः शीतफलश्चेति मधुसंज्ञः समीरितः ॥ १३७ ॥

× काकजम्बूः 'नदीतीरजांबू' इति ख्याते ।
* भूमिजम्बूः 'क्षुद्रजंबू' इति ख्याते ।

१ क. छ: 'फपित्तजि' ।

गुणाः—* * ॥ १३८ ॥

अपि च—औदुम्बरं फलमतीव हिमं सुपक्कं पित्तापहं च मधुरं श्रमशोफहारि । आमं कषायमतिदीपनरोचनं च मांसस्य वृद्धिकरमस्रविकारकारि ॥ १३९ ॥ नद्युदुम्बरिका चान्या लघुपत्रफला तथा । लघुहेमदुघा प्रोक्ता लघुपूर्वसदाफला ॥ १४० ॥ लघ्वाद्युदुम्बराह्वा स्याद्धाणाह्वा च प्रकीर्तिता ।

गुणाः—रसवीर्यविपाकेषु किंचिन्न्यूना च पूर्वतः ॥ १४१ ॥

## ( २७ ) काकोदुम्बरिका ।

काकोदुम्बरिका फल्गू राजिफल्गुः शिवाटिका । फल्गुनी फलसंभारी मलयूश्वित्रभेषजा ॥ ८८ ॥

गुणाः—काकोदुम्बरिका ग्राहिकण्डूकुष्ठव्रणापहा । रक्तपित्तहरा शोफपाण्डुश्लेष्महरा च सा ॥८९॥ अन्यच्च—काकोदुम्बरिका शीता पाके गौल्याऽम्लिका कटुः । त्वग्दोषरक्तपित्तघ्नी तत्फलं चातिसारहृत् ॥ ९० ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

कृष्णोदुम्बरिका चान्या खरपत्री च राजिका । उदुम्बरी च कठिना कुष्ठघ्नी फल्गुवाटिका ॥१४२॥ अजाक्षी फल्गुनी चैव मलयूश्वित्रभेषजा । काकोदुम्बरिका चैव ध्वाङ्क्षनाम्नी त्रयोदश ॥ १४३ ॥

गुणाः—काकोदुम्बरिका शीता पक्का गौल्याऽम्लिका कटुः । त्वग्दोषपित्तरक्तघ्नी तद्वल्कं चातिसारजित् ॥ १४४ ॥ उदुम्बरत्वचा शीता कषाया व्रणनाशिनी । गुर्विणी गर्भसंरक्षे हिता स्तन्यप्रदायिनी ॥ १४५ ॥

## ( २८ ) क्षीरी ( क्षीरिका, क्षीरिणी )

क्षीरी चोक्तस्तु राजन्यः स क्षीरशुक्लको नृपः । राजादनो दृढस्कन्धः कपीष्टः प्रियदर्शनः ॥ ९१ ॥

गुणाः—राजादनो रसे स्वादुः पाकेऽम्लः शीतलस्तथा । रुचिकारी भवेद्वातनाशनश्च प्रकीर्तितः ॥ ९२ ॥ * राजादनी तु मधुरा पित्तहृद्गुरुतर्पणी । * वृष्या स्थौल्यकरी हृद्या सुस्निग्धा मेहनाशकृत् ॥ ९३ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

राजादनो राजफलः क्षीरवृक्षो नृपद्रुमः । निम्बबीजो मधुफलः कपीष्टो माधवोद्भवः ॥ १४६ ॥ क्षीरी गुच्छफलः प्रोक्तः शुकेष्टो राजवल्लभः । श्रीफलोऽथ दृढस्कन्धः क्षीरशुक्लस्त्रिपञ्चधा ॥ १४७ ॥

---

१ ग. 'लकान्तारी ।

गुणाः— * । * ॥ १४८ ॥

## ( २९ ) श्लेष्मातकः ।

श्लेष्मातकः कर्बुदारः पिच्छलो लेखसाटकः । शेलुः शैलुर्बाहुवीरः शापितो द्विजकुत्सितः ॥ ९४ ॥

गुणाः—श्लेष्मातको हिमः स्वादुः स्याद्रूक्षः पिच्छलः शुचिः ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

श्लेष्मातको बाहुवीरः पिच्छलो द्विजकुत्सितः । शेलुः शीतफलः शीतः शाकटः कर्बुदारकः ॥ १४८ ॥ भूतद्रुमो गन्धपुष्पः ख्यात एकादशाह्वयः ।

गुणाः—श्लेष्मातकः कटुहिमो मधुरः कषायः स्वादुश्च पाचनकरः कृमिशूलहारी । आमास्रदोषफलरोधबहुव्रणार्तिविस्फोटशान्तिकरणः कफकारकश्च ॥ १४९ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

### भूकर्बुदारः ( श्लेष्मातकविशेषः ) ॥ १४ ॥

भूकर्बुदारकश्चान्यः क्षुद्रश्लेष्मातकस्तथा । भूशेलुर्लघुशेलुश्च पिच्छलो लघुपूर्वकः ॥ १५० ॥ लघुशीतः सूक्ष्मफलो लघुभूतद्रुमश्च सः ।

गुणाः—भूकर्बुदारो मधुरः कृमिदोषविनाशनः । वातप्रकोपनः किंचित्सशीतः स्वर्णमात्रकः ॥ १५१ ॥

## ( ३० ) शमी ( धनिष्ठा )

शमी शङ्कुफला तुङ्गा केशहन्त्री शिवाफला । ईशानी शंकरी लक्ष्मीर्मङ्गल्या पापनाशिनी ॥ ९५ ॥

गुणाः—शमीफलं गुरु स्वादु रूक्षोष्णं केशनाशनम् ।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

शमी शान्ता तुङ्गा कचरिपुफला केशमथनी शिवेशा नौर्लक्ष्मीस्तपनतनुनष्टा शुभकरी । हविर्गन्धा मेध्या दुरितशमनी शङ्कुफलिका सुभद्रा मङ्गल्या सुरभिरथ शापापशमनी ॥ १५२ ॥ भद्राऽथ शंकरी ज्ञेया केशहन्त्री शिवाफला । सुपत्रा सुखदा चैव ज्ञेया पञ्चदशाह्वया ॥ १५३ ॥

गुणाः—शमी रूक्षा कषाया च रक्तपित्तातिसारजित् । तत्फलं तु गुरु स्वादु तिक्तोष्णं केशनाशनम् ॥ १५४ ॥ द्वितीया तु शमी शान्ता शुभा भद्राऽपराजिता । जया च विजया चैव पूर्वोक्तगुणसंयुता ॥ १५५ ॥

---

१ ख. 'टकम् । शे' । २ ख. 'लुर्बहुवीरः शा' ।

## ( ३१ ) बदरम् ( कोलम् )

बदरं कोलकं कोलं सौवीरं फेनिलं कुहम् । कर्कन्धुकं गुडफलं बालेष्टं फलशैशिरः ॥ ९६ ॥

गुणाः—कर्कन्धुकोलबदरमम्लं वातकफापहम् । पक्कं पित्तानिलहरं स्निग्धं च मधुरं रसे ॥९७॥ पुरातनं तृट्शमनमामघ्नं दीपनं लघु । सौवीरबदरं स्निग्धं मधुरं वातपित्तजित् ॥ ९८ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

बदरो बदरी कोलः कर्कन्धूः फेनिलः स्मृतः। सौवीरको गुडफलो बालेष्टः फलशैशिरः ॥ १५६ ॥ दृढबीजो वृत्तफलः कण्टकी वक्रकण्टकः । सुबीजः सुफलः स्वच्छः स प्रोक्तः स्मृतिसंमितः ॥ १५७ ॥

गुणाः—बदरं मधुरं कषायमम्लं परिपक्कं मधुराम्लमुष्णमेतत् । कफकृत्पचनातिसाररक्तश्रमशोषार्तिविनाशनं च रुच्यम् ॥ १५८ ॥ बदरस्य पत्रलेपो ज्वरदाहविनाशनः । त्वचा विस्फोटशमनी बीजं नेत्रामयापहम् ॥ १५९ ॥ राजबदरो नृपेष्टो नृपबदरो राजवल्लभश्चैव । पृथुफलस्तनुबीजो मधुरफलो राजकोलश्च ॥ १६० ॥

गुणाः—राजबदरः समधुरः शिशिरो दाहार्त्तिपित्तवातहरः । वृष्यश्च वीर्यवृद्धिं कुरुते शोषश्रमं हरते ॥ १६१ ॥ भूबदरी क्षितिबदरी वल्लीबदरी च बदरिवल्ली च । बहुफलिका लघुबदरी बदरफली सूक्ष्मबदरी च ॥ १६२ ॥

गुणाः—भूबदरी मधुराऽम्ला कफवातविकारहारिणी पथ्या । दीपनपाचनकर्त्री किंचित्पित्तास्रकारिणी रुच्या ॥ १६३ ॥ सूक्ष्मफलो बदरोऽन्यो बहुकण्टः सूक्ष्मपत्रको दुस्पर्शः । मधुरः शबराहारः शिखिप्रियश्चैव निर्दिष्टः ॥ १६४ ॥

गुणाः—लघुबदरं मधुराम्लं पक्कं कफवातनाशनं रुच्यम् । स्निग्धं तु जन्तुकारकमीषत्पित्तार्तिदाहशोषघ्नम् ॥ १६५ ॥

## ( ३२ ) करीरः ( करीरम् )

करीरो गूढपत्रश्च शाकपुष्पो मृदुफलः । ग्रन्थिलस्तीक्ष्णसारश्च चक्रकस्तीक्ष्णकण्टकः ॥ ९९ ॥

गुणाः—वातश्लेष्महरं रुच्यं कटूष्णं गुदकीलजित् । करीरमाध्मानकरं रुचि-

---

१ ख. सरम् । २ क. ड. गुच्छपत्रश्च ।

कृत्स्वादुतिक्तकम् ॥ १०० ॥ अन्यच्च—करीराक्षकपीलूनि त्रीणि स्तन्यफलानि च । स्वादुतिक्तकटूष्णानि कफवातहराणि च ॥ १०१ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

निष्पत्रकः करीरश्च करीरग्रन्थिलस्तथा । क्रकरो गूढपत्रश्च करकस्तीक्ष्णकण्टकः ॥ १६६ ॥

गुणाः—करीरमाध्मानकरं कषायं कटूष्णमेतत्कफकारि भूरि । श्वासानिलारोचकसर्वशूलविच्छर्दिखर्जूव्रणदोषहारि ॥ १६७ ॥

## ( ३३ ) करमर्दकम् ।

करमर्दकमाविग्नं सुषेणं पाणिमर्दकम् । कराम्लं करमर्दं च कृष्णपाकफलं मतम् ॥ १०२ ॥

गुणाः—अम्लं तृष्णापहं रुच्यं पित्तकृत्करमर्दकम् । पक्वं च मधुरं शीतं रक्तपित्तहरं मतम् ॥ १०३ ॥

राजनिघण्टावाम्रादिरेकादशो वर्गः—

करमर्दः सुषेणश्च कराम्लः करमर्दकः । आविग्नः पाणिमर्दश्च कृष्णपाकफलो मुनिः ॥ १६८ ॥

गुणाः—करमर्दः सतिक्ताम्लो बालो दीपनदाहकः । पक्वस्त्रिदोषशमनोऽरुचिघ्नो विषनाशनः ॥ १६९ ॥

## ( ३४ ) कदम्बः । ( नीपकः ) ( शततारका )

कदम्बो वृत्तपुष्पश्च नीपस्तु ललनाप्रियः । कादम्बर्यङ्कवृक्षोऽन्यः सुवासः कर्णपूरकः ॥ १०४ ॥ धाराकदम्बः प्रावृष्यः कादम्बर्यो हरिप्रियः । नीपो धूलिकदम्बोऽन्यः सुवासो वृत्तपुष्पकः ॥ १०५ ॥

गुणाः—कदम्बस्तु कषायः स्याद्रसे शीतो गुणेऽपि च । व्रणसंरोहणश्चापि कासदाहविषापहः ॥ १०६ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

कदम्बो वृत्तपुष्पश्च सुरभिर्ललनाप्रियः । कादम्बर्यः[1] सिन्धुपुष्पो मदाढ्यः कर्णपूरकः ॥ १७० ॥

गुणाः—कदम्बस्तिक्तकटुकः कषायो वातनाशनः । शीतलः कफपित्तार्ति[2]नाशनः शुक्रवर्धनः ॥१७१॥ धाराकदम्बः प्रावृष्यः पुलकी भृङ्गवल्लभः । मेघागमप्रियो नीपः प्रावृषेण्यः कदम्बकः ॥ १७२ ॥ धूलीकदम्बः क्रमुकप्रसूनः

१ ङ. छ. 'म्बर्यः सिन्धुपुष्पो मदाढ्यः क' । २ ङ. 'त्तानां ना' ।

परागपुष्पो बलभद्रसंज्ञकः। वसन्तपुष्पो मकरन्दवासो भृङ्गप्रियो रेणुकदम्बकोऽष्टौ ॥ १७३ ॥ भूमिकदम्बो भूनिम्बो भूमिजो भृङ्गवल्लभः । लघुपुष्पो वृत्तपुष्पो विषघ्नो व्रणहारकः ॥ १७४ ॥

कदम्बत्रयगुणाः—त्रिकदम्बाः कटुवर्ण्या विषशोफहरा हिमाः । कषायास्तिक्तपित्तघ्ना वीर्यवृद्धिकराः पराः ॥ १७५ ॥

## ( ३५ ) करञ्जः ।

करञ्जो नक्तमालश्च पूतिकश्चिरिबिल्वकः । घृतपर्णः करञ्जोऽन्यः प्रकीर्यो गौर एव च ॥ १०७ ॥

गुणाः—करञ्जश्चोष्णतिक्तः स्यात्कफपित्तास्रदोषजित् । व्रणप्लीहकृमीन्हन्ति भूतघ्नो योनिरोगहा ॥ १०८ ॥ चिरबिल्वः करञ्जश्च तीव्रो वातकफापहः ।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

करञ्जो नक्तमालश्च पूतिकश्चिरबिल्वकः । पूतिपर्णो[1] वृद्धफलो रोचनश्च प्रकीर्यकः ॥ १७६ ॥

गुणाः—करञ्जः कटुरुष्णश्च चक्षुष्यो वातनाशनः । तस्य स्नेहोऽतिस्निग्धश्च वातघ्नः स्थिरदीप्तिदः ॥ १७७ ॥ अन्यो घृतकरञ्जः स्यात्प्रकीर्यो घृतपर्णकः। स्निग्धपत्रस्तपस्वी च विषारिश्च विरोचनः ॥ १७८ ॥

गुणाः—घृतकरञ्जः कटूष्णो वातहृद्व्रणनाशनः। सर्वत्वग्दोषशमनो विषस्पर्शत्रिनाशनः ॥ १७९ ॥

### उदकीर्यः । ( करञ्जविशेषः ) ॥ १५ ॥

उदकीर्यस्तृतीयोऽन्यः षड्ग्रन्थो हस्तिचारिणी । मदहस्तिनिका रोही हस्तिरोहणकः प्रियः ॥ १०९ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

प्रकीर्यो रजनीपुष्पः सुमनाः पूतिकर्णिकः । पूतिकरञ्जः कैडर्यः कलिमालश्च सप्तधा ॥ १८० ॥

### अङ्गारवल्लिका ( करञ्जविशेषः ) ॥ १६ ॥

अङ्गारवल्लिकाऽम्बष्ठा[2] काकघ्नी काकभाण्डिका[3] । वायव्या कालिमकाभेदा बाक्यवल्ल्यपि चोच्यते ॥ ११० ॥

गुणाः—*महाकरञ्जस्तिक्तोष्णः कटुको विषनाशनः। *कण्डूविचर्चिकाकुष्ठत्वग्दोषव्रणनाशनः ॥ १११ ॥

---

१ ढ. पूतिपत्रकः। २ क. ङ. 'वल्ली शाम्ब'। ग. 'वल्ली शार्ङ्गेष्टा काक'। ३ क. ख. ङ. करभाण्डिका।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

ज्ञेयो महाकरञ्जोऽन्यः षड्ग्रन्थो हस्तिचारिणी । उदकीर्यो विषघ्नी च काकघ्नी मदहस्तिनी ॥ १८१ ॥ अङ्गारवल्ली शार्ङ्गेष्टा मधुसत्ता वमायिनी(?) । हस्तिरोहणकश्चैव ज्ञेयो हस्तिकरञ्जकः॥ १८२ ॥ सुमनाः काकभाण्डी च मदमत्तश्च षोडश ।

गुणाः— * । * ॥ १८३ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

## गुच्छकरञ्जः ( करञ्जविशेषः ) ॥ १७ ॥

अन्यो गुच्छकरञ्जः स्निग्धदलो गुच्छपुच्छको नन्दी । गुच्छी च मातृनन्दी सानन्दो दन्तधावनो वसवः ॥ १८४ ॥

गुणाः—करञ्जः कटुतिक्तोष्णो विषवातार्तिनाशनः । कण्डूविचर्चिकाकुष्ठस्पर्शत्वग्दोषनाशनः ॥ १८५ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

## रीठाकरञ्जः ( करञ्जविशेषः ) ॥ १८ ॥

रीठाकरञ्जकस्त्वन्यो गुच्छलो गुच्छपुष्पकः । रीठा गुच्छफलोऽरिष्टो मङ्गल्यः कुम्भबीजकः ॥ १८६ ॥ प्रकीर्यः सोमवल्कश्च फेनिलो रुद्रसंज्ञकः ।

गुणाः—रीठाकरञ्जस्तिक्तोष्णः कटुस्निग्धश्च वातजित् । कफघ्नः कुष्ठकण्डूतिविषविस्फोटनाशनः ॥ १८७ ॥

## ( ३६ ) शिरीषः ।

शिरीषो मृदुपुष्पश्च भण्डिकः[1] शङ्खिनीफलः । कपीतनः शुकतरुः श्यामवर्णः शुकप्रियः ॥ ११२ ॥

गुणाः—तिक्तोष्णो विषहा वर्ण्यस्त्रिदोषशमनो लघुः । शिरीषः कुष्ठकण्डूघ्नस्त्वग्दोषश्वासकासहा ॥ ११३ ॥

राजनिघण्टौ प्रभद्रादिनवमो वर्गः—

शिरीषः शीतपुष्पश्च भण्डिको मृदुपुष्पकः । शुकेष्टो बर्हिपुष्पश्च विषहन्ता सुपुष्पकः ॥ १८८ ॥ उद्दानकः शुकतरुर्ज्ञेयो लोमशपुष्पकः । कपीतनः कलिङ्गश्च श्यामलः शङ्खिनीफलः ॥ १८९ ॥ मधुपुष्पस्तथा वृत्तपुष्पः सप्तदशाह्वयः ॥

गुणाः—शिरीषः कटुकः शीतो विषवातहरः परः । पामा[2]सृक्कुष्ठकण्डूतित्वग्दोषस्य विनाशनः ॥ १९० ॥

---

१ क. ङ. मण्डकः । २ ज. 'मार्शः कुष्ठ' ।

## ( ३७ ) अर्जुनः ( स्वाती )

अर्जुनः ककुभः पार्थश्चित्रयोधी धनंजयः । वीरान्तकः किरीटी च नदीसर्जोऽपि पाण्डवः ॥ ११४ ॥

गुणाः—*ककुभस्तु कषायोष्णः कफघ्नो व्रणनाशनः । *पित्तश्रमतृषार्तिघ्नो मारुतामयकोपनः ॥ ११५ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

अर्जुनः शम्बरः पार्थश्चित्रयोधी धनंजयः । वैरान्तकः किरीटी च गाण्डीवी शिवमल्लकः ॥ १९१ ॥ सव्यसाची नदीसर्जः कर्णारिः कुरुवीरकः । कौन्तेय इन्द्रसूनुश्च वीरद्रुः कृष्णसारथिः ॥ १९२ ॥ पृथाजः फाल्गुनो धन्वी ककुभश्चैकविंशतिः ॥

गुणाः—* * ॥ १९३ ॥

## ( ३८ ) वेतसः ( पूर्वाषाढा )

*वेतसो निचुलः मोक्तो वञ्जुलो दीर्घपत्रकः । *कैलनो मञ्जरीनम्रः सुषेणो गन्धपुष्पकः ॥ ११६ ॥ नादेयी मेघपुष्पोऽन्यो जलकामो निकुञ्जकः । जलौकःसंवृतश्चैव विदुलो जलवेतसः ॥ ११७ ॥

गुणाः—वेतसस्य द्वयं शीतं रक्षोघ्नं व्रणशोधनम् । रक्तपित्तहरं तिक्तं सकषायं कफापहम् ॥ ११८ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

* । * ॥ १९४ ॥

गुणाः—वेतसः कटुकः स्वादुः शीतो भूतविनाशनः । पित्तप्रकोपनो रुच्यो विज्ञेयो दीपनः परः ॥ १९५ ॥

## ( ३९ ) वरुणः ।

*वरुणः श्वेतपुष्पश्च तिक्तशाकः कुमारकः । श्वेतद्रुमो गन्धवृक्षस्तमालो मारुतापहः ॥ ११९ ॥

गुणाः—वरुणः शीतवातघ्नस्तिक्तो विद्रधिजन्तुजित् । तथा च कटुरुष्णश्च रक्तदोषहरः परः ॥ १२० ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

* । श्वेतद्रुमः साधुवृक्षस्तमालो मारुतापहः ॥ १९६ ॥

---

१ क. ङ. पार्थः क्षत्रयो° । २ क. ङ. कलञ्जो । ३ क. ङ. वञ्जुलो । ४ क. ख. झ. °फावह° ।

गुणाः—वरुणः कटुरुष्णश्च रक्तदोषहरः परः । शीर्षवातहरः स्निग्धो दीप्यो विद्रधिवातजित् ॥ १९७ ॥

## ( ४० ) शिंशपा ।

शिंशपा तु महाश्यामा कृष्णसारा स्मृता गुरुः । कुशिंशपाऽन्या कपिला भस्मगर्भा वसादनी ॥ १२१ ॥

गुणाः—कटूष्णं कण्डुदोषघ्नं बस्तिरोगविनाशनम् । शिंशपायुगुलं वर्ण्यं हिक्काशोफौ विसर्जयेत् ॥ १२२ ॥ पित्तदाहप्रशमनं बल्यं रुचिकरं परम् ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

शिंशपा तु महाश्यामा कृष्णसारा च धूम्रिका । तीक्ष्णसारा च धीरा च कपिला कृष्णशिंशपा ॥ १९८ ॥

गुणाः—श्यामादिशिंशपा तिक्ता कटूष्णा कफवातनुत् । नष्टाजीर्णहरा दीप्या शोफातीसारहारिणी ॥ १९९ ॥ शिंशपाऽन्या श्वेतपत्रा सिताह्वादिश्च शिंशपा । श्वेतादिशिंशपा तिक्ता शिशिरा पित्तदाहनुत् ॥ २०० ॥ कपिला शिंशपा चान्या पीता कपिलशिंशपा । सारिणी कपिलाक्षी च भस्मगर्भा कुशिंशपा ॥ २०१ ॥

गुणाः—कपिला शिंशपा तिक्ता शीतवीर्या श्रमापहा । वातपित्तज्वरघ्नी च च्छर्दिहिक्काविनाशिनी ॥ २०२ ॥

साधारणशिंशपात्रयगुणाः—शिंशपात्रितयं वर्ण्यं हिमशोफविसर्पजित् । पित्तदाहप्रशमनं बल्यं रुचिकरं परम् ॥ २०३ ॥

## ( ४१ ) सर्जकः ( सर्जः )

सर्जको बस्तकर्णश्च कर्षायश्चिरपत्रकः । सस्यसंवरकः शूरः सर्जोऽन्यः शाल उच्यते ॥ १२३ ॥

गुणाः—कुष्ठकण्डूकृमिश्लेष्मवातपित्तरुजा जयेत् । सर्जयुग्मं कषायं स्याद्वर्ण्यं रूक्षं कफापहम् ॥ १२४ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

सर्जः सर्जरसः शालः कालकूटो रजोद्भवः । वल्लीवृक्षश्चीरपर्णो रालः काश्योंऽजकर्णकः ॥ २०४ ॥ बस्तकर्णः कषायी च ललनो गन्धवृक्षकः । वंशश्च शालनिर्यासो दिव्यसारः सुरेष्टकः ॥ २०५ ॥ शूरोऽग्निवल्लभश्चैव यक्षधूपः सुसिद्धकः ।

---

१ ग. °र्भा च सा° । २ ख. °षायो वीर° । ३ ट. °पः ससि° ।

गुणाः—सर्जस्तु कटुतिक्तोष्णो हिमः स्निग्धोऽतिसारजित् । पित्तास्रदोष-कुष्ठघ्नः कण्डूविस्फोटवातजित् ॥ २०६ ॥

## अशनः ( सर्जकविशेषः ) ॥ १९ ॥

अशनस्तु महासर्जः सौरिर्बन्धूकपुष्पकः । प्रियको बीजकः श्यामः सुनीलः प्रियशालकः ॥ १२५ ॥

गुणाः—बीजकः सकषायश्च कफपित्तास्रनाशनः ।

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

असनस्तु महासर्जः सौरिर्बन्धूकपुष्पकः । प्रियको बीजवृक्षश्च नीलकः प्रियशालकः ॥ २०७ ॥

गुणाः—असनः कटुरुष्णश्च तिक्तो वातार्तिदोषनुत् । सारको गलदोषघ्नो रक्तमण्डलनाशनः ॥ २०८ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

## नीलबीजः ( सर्जकविशेषः ) ॥ २० ॥

द्वितीयो नीलबीजः स्यान्नीलपत्रः सुनीलकः । नीलद्रुमो नीलसारो नील-निर्यासको रसैः ॥ २०९ ॥

गुणाः—बीजवृक्षौ कटू शीतौ कषायौ कुष्ठनाशनौ । सारकौ कण्डुदद्रुघ्नौ श्रेष्ठस्तत्रासितस्तयोः ॥ २१० ॥

## ( ४२ ) शाल्मली ( शाल्मलः, ज्येष्ठा )

शाल्मली वेष्टकः पिच्छा निर्यासः स च शाल्मलः । मोचस्रावो मोचरसो मोचनिर्यासकस्तथा ॥ १२६ ॥ शाल्मली रक्तपुष्पा तु कुक्कुटी चिरजीविका । पिच्छिला चूलिनी मोचा कण्टकाढ्या सुपूरणी ॥ १२७ ॥

गुणाः—शाल्मली शीतला स्निग्धा शुक्रश्लेष्मविवर्धनी । तद्रसस्तद्गुणो ग्राही स च मोचरसः स्मृतः ॥ १२६ ॥ शाल्मली पिच्छला वृष्या बल्या मधुरसा तथा । कषायस्तद्रसो ग्राही पुष्पं तद्वत्तथा फलम् ॥ १२९ ॥

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

शाल्मलिश्चिरजीवी स्यात्पिच्छलो रक्तपुष्पकः । कुक्कुटी तूलवृक्षश्च मोचाख्यः कण्टकद्रुमः ॥ २११ ॥ रक्तफलो रम्यपुष्पो बहुवीर्यो यमद्रुमः । दीर्घद्रुमः स्थूलफलो दीर्घायुस्तिथिभिर्मितः ॥ २१२ ॥

गुणाः—शाल्मलिः पिच्छिलो वृष्यो बल्यो मधुरशीतलः । कषायश्च लघुः

स्निग्धः शुक्रश्लेष्मविवर्धनः ॥ २१३ ॥ तद्रसस्तद्गुणो ग्राही कषायः कफनाशनः । पुष्पं तद्वच्च निर्दिष्टं फलं तस्य तथाविधम् ॥ २१४ ॥ मोचरसो मोचस्तु मोचस्रावश्च मोचनिर्यासः । पिच्छलसारः सुरसः शाल्मलिवेष्टश्च मोचसारश्च ॥ २१५ ॥

गुणाः—मोचरसस्तु कषायः कफवातहरो रसायनो योगात् । बलपुष्टिवर्णवीर्यप्रज्ञायुर्देहसिद्धिदो ग्राही ॥ २१६ ॥

## रोहितकः ( रोहितः ) ( शाल्मलीविशेषः ) ॥ २१ ॥

रोहीतको रोहितको रोही दाडिमपुष्पकः । कुशाल्मलिः शाल्मलिको रोचनः कूटशाल्मलिः ॥ १३० ॥

गुणाः—रोहीतको यकृत्प्लीहगुल्मोदरहरः सरः । शुष्को रोहितकश्चैव कटूष्णमुभयं स्मृतम् ॥ १३१ ॥ कर्णरोगहरं चैव विषवेगविनाशनम् ।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

रोहीतको रोहितकश्च रोहितः कुशाल्मलिर्दाडिमपुष्पसंज्ञकः । सदाप्रसूनः स च कूटशाल्मलिर्विरोचनः शाल्मलिको नवाह्वयः ॥ २१७ ॥

सप्ताह्वः श्वेतरोहितः सितपुष्पः सिताह्वयः । सिताङ्गः शुक्लरोहितो लक्ष्मीवाञ्जनवल्लभः ॥ २१८ ॥

गुणाः—रोहितकौ कटुस्निग्धौ कषायौ च सुशीतलौ । क्रिमिदोषव्रणप्लीहरक्तनेत्रामयापहौ ॥ २१९ ॥

## (४३) मुष्ककः ( मुष्कः )

मुष्कको मोक्षको मुष्टिर्मूषको मुश्चकस्तथा । क्षारश्रेष्ठो गोलकश्च द्विविधः श्वेतकृष्णकः ॥ १३२ ॥

गुणाः—वातश्लेष्महरः क्षारश्रेष्ठो ग्राही च गुल्मनुत् ।

राजनिघण्टावाम्रादिरेकादशो वर्गः—

मुष्कको मोचको मुष्को मोक्षको मुश्चकस्तथा । गोलीढो मेहनश्चैव क्षारवृक्षश्च पाटलिः ॥ २२० ॥ विषापहो जटालश्च वनवासी सुतीक्ष्णकः । श्वेतः कृष्णश्च स द्वेधा स्यात्त्रयोदशसंज्ञकः ॥ २२१ ॥

गुणाः—मुष्ककः कटुकोऽम्लश्च रोचनः पाचनः परः । प्लीहगुल्मोदरार्तिघ्नो द्विधा तुल्यगुणान्वितः ॥ २२२ ॥

---

१ अ. ढ. 'छिमणवी' ।

## ( ४४ ) इरिमेदः ।

इरिमेदोऽरिमेदश्च गोधास्कन्धोऽरिमेदकः । अहिमेदोऽहिमारश्च[1] पूतिमेदोऽहिमारकः ॥ १३३ ॥

गुणाः—मुखरोगहरः शीतो रक्तामस्तम्भकारकः ।

राजनिघण्टौ शाल्मल्यादिरष्टमो वर्गः—

इरिमेदोऽरिमेदश्च गोधास्कन्धोऽरिमेदकः । अहिमेदोऽहिमारश्च पूतिमेदोऽहिमेदकः ॥ २२३ ॥

गुणाः—अहिमेदः कषायोष्णस्तिक्तो भूतविनाशकः । शोफातिसारकासघ्नो विषवीसर्पनाशनः ॥ २२४ ॥

## ( ४५ ) मल्लिका ।

मल्लिका शीतभीरुश्च मदयन्ती प्रमोदिनी । मदनीया गवाक्षी च भूपघष्टपदी तथा ॥ १३४ ॥

गुणाः—मल्लिकोष्णा कटुः स्वादे[4] दारयत्यास्यजान्गदान् । संत्रासयति नेत्रोत्थरुजः पित्तसमीरजित् ॥ १३५ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

मल्लिका मद्रवल्ली तु गौरी च वनचन्द्रिका । शीतभीरुः प्रिया सौम्या नारीष्टा गिरिजा सिता ॥ २२५ ॥ मल्ली च दमयन्ती च चन्द्रिका मोदिनी मनुः ।

गुणाः—मल्लिका कटुतिक्ता स्याच्चक्षुष्या मुखपाकनुत् । कुष्ठविस्फोटकण्डूतिविषव्रणहरा परा ॥ २२६ ॥

मल्लिका *मोदिनी चान्या वटपत्रा कुमारिका । सुगन्धाढ्या वृत्तपुष्पा मुक्ताभा वृत्तमल्लिका ॥ २२७ ॥

गुणाः—नेत्ररोगापहन्त्री स्यात्कटूष्णा वृत्तमल्लिका । व्रणघ्नी गन्धबहुला दारयत्यास्यजान्गदान् ॥ २२८ ॥

## ( ४६ ) वार्षिकी ।

वार्षिकी त्रिपुटा त्र्यस्रा सुरूपा सुभगा प्रिया । श्रीमती षट्पदानन्दा सुवर्षा मुक्तबन्धना ॥ १३६ ॥

गुणाः—श्रीमती षट्पदानन्दा सुगन्धा पित्तनाशिनी ।

---

* 'मोदिनी' बटमोगरा इति ख्याते ।

---

१ क. ङ. 'दोऽरिमा' । २ झ. त. 'श्च मेदः प्रत्यरिमेदकः । ३ छ. झ. भूतपर्ण्यप' । ४ क. ख. 'दे हरत्यर्शादिका व्यथाः । सं' ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

वार्षिकी त्रिपुटा त्र्यस्रा सुरूपा सुलभा प्रिया । श्रीवल्ली षट्पदानन्दा मुक्तबन्धा नवाभिधा ॥ २२९ ॥

गुणाः—वार्षिकी शिशिरा हृद्या सुगन्धिः पित्तनाशनी । कफवातविषस्फोटकृमिदोषामनाशनी ॥ २३० ॥

## (४७) जाती ( हस्तः )

जाती मनोज्ञा सुमना राजपुत्री प्रियंवदा । मालती हृद्यगन्धा च चेतिका [1]तैलभाविनी ॥ १३७ ॥

गुणाः—मालती कफपित्तास्यरुक्पाकव्रणकुष्ठजित् । चक्षुष्यो मुकुलस्तस्यास्तत्पुष्पं कफ[2]वातजित् ॥ १३८ ॥ सुगन्धि च मनोज्ञं च सर्वश्रेष्ठतमं मतम् ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

जाती सुरभिगन्धा स्यात्सुमना तु सुरप्रिया । केतकी सुकुमारा तु संध्यापुष्पा मनोहरा ॥ २३१ ॥ राजपुत्री मनोज्ञा च मालती तैलभाविनी । जनेष्टा हृद्यगन्धा च नामान्यस्याश्चतुर्दश ॥ २३२ ॥

गुणाः—मालती शीततिक्ता स्यात्कफघ्नी मुखपाकनुत् । कुड्मलं नेत्ररोगघ्नं व्रणविस्फोटकुष्ठनुत् ॥ २३३ ॥

## ( ४८ ) वासन्ती ।

वासन्ती प्रहसन्ती च सुवसन्ता वसन्तजा । शोभना शीतसंवासा सेव्या भ्रमरबान्धवा ॥ १३९ ॥

गुणाः—वासन्ती शीतला हृद्या सुगन्धा स्वेदनाशनी ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

वासन्ती प्रहसन्ती वसन्तजा माधवी महाजातिः । शीतसहा मधुबहुला वसन्तदूती च नवनाम्नी ॥ २३४ ॥

गुणाः—वासन्ती शिशिरा हृद्या सुरभिः श्रमहारिणी । धम्मिल्लामोदिनी मन्दमदनोन्मादददायिनी ॥ २३५ ॥

## ( ४९ ) ग्रैष्मी ।

ग्रैष्मी तु सुरभिः कान्ता सुगन्धा वनमालिनी । सुकुमारा शिखरिणी [3]नेपाली वनमालिका* ॥ १४० ॥

---

* क. ख. पुस्तकयोरधिकमिदं श्लोकार्धं दृश्यते—
'वनमाली सुगन्धा च सुकुमारा च मोदिनी' इति ॥

---

१ ख. तिलभाविनी । २ क. ख. ङ. 'फपित्तजि' । ३ ख. नेवाली ।

गुणाः—नेपालिका रसे तिक्ता वीर्ये चोष्णा प्रकीर्तिता । वातपित्तरुजां नेत्ररोगाणां नाशनी मता ॥ १४१ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

वनमल्लिकाऽतिमोदा ग्रैष्मी ग्रीष्मोद्भवा च सा । सप्तला सुकुमारा च सुरभी सूचिमल्लिका ॥ २३६ ॥ सुगन्धा शिखरिणी स्यान्नेवाली चेन्दुभूह्वया ।

गुणाः—वनमल्लिकाऽतिशैत्या सुरभिः सर्वरोगहृत् ॥ २३७ ॥

## (५०) चम्पकः ( आश्लेषा )

चम्पकः सुकुमारश्च सुरभिः शीतलश्च सः । चाम्पेयो हेमपुष्पश्च काञ्चनः षट्पदातिथिः ॥ १४२ ॥

गुणाः—†चम्पकः कथितः शीतो वीर्येऽतिकटुको रसे । हृद्यः सुगन्धि-विषहा कफपित्तविनाशनः ॥ १४३ ॥

चम्पकविशेषगुणाः—चम्पकप्रसवमिष्टसुगन्धं भूसुरामरमहीपतियोग्यम् । वातपित्तशमनं च सुगन्धि स्वर्णवर्णमपि षट्पदं[२]याति ॥ १४४ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

चम्पकः स्वर्णपुष्पश्च चाम्पेयः शीतलच्छदः[१] । सुभगो भृङ्गमोही च शीतलो भ्रमरातिथिः ॥ २३८ ॥ सुरभिर्दिव्यपुष्पश्च स्थिरगन्धोऽतिगन्धकः । स्थिर-पुष्पो हेमपुष्पः पीतपुष्पस्तथाऽपरः ॥ २३९ ॥ हेमाह्वः सुकुमारस्तु वनदीपोऽ-ष्टभूह्वयः । तत्कलिका गन्धफली बहुगन्धा गन्धमोदिनी त्रेधा ॥ २४० ॥

गुणाः—चम्पकः कटुकस्तिक्तः शिशिरो दाहनाशनः । कुष्ठकण्डूव्रणहरो गुणाढ्यो राजचम्पकः ॥ २४१ ॥ क्षुद्रादिचम्पकस्त्वन्यः संज्ञेयो नागच-म्पकः । फणिचम्पकनागाह्वश्चम्पको वनजः शराः ॥ २४२ ॥

गुणाः—वनचम्पकः कटूष्णो वातकफध्वंसनो वर्ण्यः । चक्षुष्यो व्रणरोपी वह्निस्तम्भं करोति योगगुणात् ॥ २४३ ॥

## ( ५१ ) तरणी ( तरुणी )

तरणी रामतरणी कर्णिका चारुकेसरा । सहा कुमारी गन्धाढ्या द्विरे-फगणसंमता ॥ १४५ ॥

गुणाः—तरणी श्लेष्म[३]पित्तघ्नी ग्राहिणी शीतलाऽग्नि[४]जित् ।

---

† क. ख. ङ. पुस्तकेष्वयं पाठो दृश्यते—
" चम्पकः कटुकः शीतः कफपित्तविषापहः ।
हृत्सुगन्धिश्च पित्तघ्नो विशेषाद्राजचम्पकः " इति ।

---

१ क. ख. घ. ङ. °लच्छदः । चा° । २ झ. °पदं दधाति । ३ क. °ष्मवातघ्नी । ४ ङ. छ. °ग्निकृत् ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

तरणी सहा कुमारी गन्धाढ्या चारुकेसरा भृङ्गेष्टा । रामतरणी तु सुदला बहुपत्रा भृङ्गवल्लभा च दशाह्वा ॥ २४४ ॥

गुणाः—तरणी शिशिरा स्निग्धा पित्तदाहज्वरापहा । मधुरा मुखपाकघ्नी तृष्णाविच्छर्दिवारिणी ॥ २४५ ॥ महती तु राजतरणी महासहा वर्ण्यपुष्पकोऽम्लानः । अमिलातकः सुपुष्पः सुवर्णपुष्पश्च सप्ताह्वः ॥ २४६ ॥

गुणाः—विज्ञेया राजतरणी कषाया कफकारिणी । चक्षुष्या हर्षदा हृद्या सुरभिः सुरवल्लभा ॥ २४७ ॥

## ( ५२ ) कुब्जकः ।

कुब्जको भद्रतरणी बृहत्पुष्पाऽतिकेसरा । महासहा कण्टकाढ्या नीलालिकुलसंकुला ॥ १४६ ॥

गुणाः—कुब्जकः सुरभिः स्वादुः कषायस्तु रसायनः । त्रिदोषशमनो वृष्यः शीतः संग्रहणोऽपरः ॥ १४७ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

कुब्जको भद्रतरणी वृत्तपुष्पोऽतिकेसरः । महासहः कण्टकाढ्यः खर्वोऽलिकुलसंकुलः ॥ २४८ ॥

गुणाः—कुब्जकः सुरभिः शीतो रक्तपित्तकफापहः । पुष्पं तु शीतलं वर्ण्यं दाहघ्नं वातपित्तजित् ॥ २४९ ॥

## ( ५३ ) यूथिका ।

यूथिका बालपुष्पा तु पुष्पगन्धा गुणोज्ज्वला । गैणिका चारुमोदा च शिखण्डी स्वैर्णयूथिका ॥ १४८ ॥ *सुवर्णयूथा हरिणी पीतिका पीतयूथिका । प्रोक्ताऽन्या शङ्खधवला नामतः शङ्खयूथिका ॥ १४९ ॥

गुणाः—यूथिकायुगुलं स्वादु शर्कराघ्नं सुगन्धि च ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

यूथिका गणिकाऽम्बष्ठा मागधी बालपुष्पिका । मोदनी बहुगन्धा च भृङ्गानन्दा गजाह्वया ॥ २५० ॥ अन्या यूथी सुवर्णाह्वा सुगन्धा हेमयूथिका । युवतीष्टा व्यक्तगन्धा शिखण्डी नागपुष्पिका ॥ २५१ ॥ हरिणी पीतयूथी च पीतिका कनकप्रभा । मनोहरा च गन्धाढ्या प्रोक्ता सा मनुसंमिता ॥ २५२॥

---

* ' सुवर्णयूथा ' सोनजुवी, पिंवळीजुवी, इति ख्याते ।

---

१ क. ख. घ. 'को देवत' । २ क. 'त्पुष्पोऽति' । ३ क. ङ. कर्णिका । ४ ङ. स्वर्णपुष्पिका ।

गुणाः—यूथिकायुगुलं स्वादु शिशिरं शर्करार्तिनुत् । पित्तदाहतृषाहारी नानात्वग्दोषनाशनम् ॥ २५३ ॥ सितपीतनीलमेचकनाम्न्यः कुसुमेन यूथिकाः कथिताः ।

गुणाः—तिक्तहिमपित्तकफामयज्वरघ्न्यो व्रणादिदोषहराः ॥ २५४ ॥ सर्वासां यूथिकानां तु रसवीर्यादिसाम्यता । सुरूपं तु सुगन्धाढ्यं स्वर्णयूथ्या विशेषतः ॥ २५५ ॥

## ( ५४ ) कुन्दः । ( कुन्दा )

कुन्दः सुमकरन्दश्च सदापुष्पो मनोहरः । अट्टहासो भृङ्गसुहृच्छुक्लः शाल्योदनोपमः ॥ १५० ॥

गुणाः—कुन्दस्य कुसुमं हृद्यं स्वल्पगन्धि मनोहरम् ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

कुन्दस्तु मकरन्दश्च महामोदो मनोहरः । मुक्तापुष्पः सदापुष्पस्तारपुष्पोऽट्टहासकः ॥ २५६ ॥ दमनो वनहासश्च मनोज्ञो रुद्रसंमितः ।

गुणाः—कुन्दोऽतिमधुरः शीतः कषायः कैश्यभावनः । कफपित्तहरश्चैव सरो दीपनपाचनः ॥ २५७ ॥

## ( ५५ ) शतपत्री । ( शतपत्रा )

* शतपत्री तु सुमना सुशीता शिववल्लभा । * सौम्यगन्धा शतदला सुवृत्ता शतपत्रिका ॥ १५१ ॥

गुणाः—*शतपत्रा हिमा तिक्ता कषाया कुष्ठनाशनी । * मुखस्फोटहरा रुच्या सुरभिः पित्तदाहनुत् ॥ १५२ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

* । * ॥ २५८ ॥ * । * ॥ २५९ ॥

## ( ५६ ) अतिमुक्तः । ( अतिमुक्तकः )

अतिमुक्तः कार्मुकश्च मण्डनो भ्रमरोत्सवः । अविमुक्तो माधवी च सुवसन्तः पराश्रयः ॥ १५३ ॥

गुणाः—अतिमुक्तं सुगन्धि स्याद्धृद्यमुक्तं सुमण्डनम् ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

सैवातिमुक्तकाख्या पुण्ड्रकनाम्नी च काचिदुक्ताऽन्या । मदनी भ्रमरानन्दा कामकान्ता च पञ्चाख्या ॥ २६० ॥

गुणाः—अतिमुक्तः कषायः स्याच्छिशिरः श्रमनाशनः । पित्तदाहज्वरोन्मादहिकाच्छर्दिनिवारणः ॥ २६१ ॥

## ( ५७ ) बकुलः ।

बकुलः सीधुगन्धश्च मद्यगन्धो विशारदः । मधुगन्धो गूढपुष्पः शीर्षकेसरकस्तथा ॥ १५४ ॥

गुणाः—बकुलोद्भवपुष्पं च सुपक्कं च सुगन्धि च । मधुरं च कषायं च स्निग्धं संग्राहि बाकुलम् ॥ १५५ ॥ स्थिरीकरं च दन्तानां विशदं तत्फलं गुरु ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

बकुलस्तु सीधुगन्धः स्त्रीमुखमधुदोहलश्च मधुपुष्पः । सुरभिर्भ्रमरानन्दः स्थिरकुसुमः केसरश्च शारदिकः ॥ २६२ ॥ करकः सिद्धासंज्ञो विशारदो गूढपुष्पको धन्वी । मदनो मद्यामोदश्चिरपुष्पश्चेति सप्तदशसंज्ञः ॥ २६३ ॥

गुणाः—बकुलः शीतलो हृद्यो विषदोषविनाशनः । मधुरश्च कषायश्च मदाढ्यो हर्षदायकः ॥ २६४ ॥ तथा च—बकुलकुसुमं च रुच्यं क्षीराढ्यं सुरभि शीतलं मधुरम् । स्निग्धकषायं कथितं मलसंग्राहकं चैव ॥ २६५ ॥

## ( ५८ ) किङ्किरातः ( सुरङ्गी ) ( विशाखा )

किङ्किरातः किङ्किराटः पीतकः पीतभद्रकः । हेमगौरो विप्रलम्भी षट्पदानन्दवर्धनः ॥ १५६ ॥

गुणाः—सुरङ्गी च भवेदुष्णा तिक्ता कफविनाशनी । अर्शसां निचयं हन्ति शोफसंघातनाशनी ॥ १५७ ॥ किङ्किरातोद्भवं पुष्पं सुगन्धि हर्षपुष्टिदम् ।

## ( ५९ ) तिलकः ।

तिलकः पूर्णकः श्रीमान्क्षुरकश्छत्रपुष्पकः । मुखमण्डनको रेची पुण्ड्रश्चित्रो विशेषकः ॥ १५६ ॥

गुणाः—तिलकत्वक्कषायोष्णा पुंस्त्वघ्नी दन्तरोगजित् ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

तिलको विशेषकः स्यान्मुखमण्डनकश्च पुण्ड्रकः पुण्ड्रः । स्थिरपुष्पश्छिन्नरुहो दग्धरुहो रेचकश्च मृतजीवी ॥ २६६ ॥ तरुणीकटाक्षकामो वासन्तः सुन्दरोऽभीष्टः । भालविभूषणसंज्ञो विज्ञेयः पञ्चदशनामा ॥ २६७ ॥

---

१ ख. °लः शीतग° । २ ख. ग. °ष्पः सिंहके° । ३ क. घ. विषदं फलमुच्यते । ४ झ. ढ. सिधा तु सं° । ५ क. ङ. पुष्पकः ।

गुणाः—तिलको मधुरः स्निग्धो वातपित्तकफापहः । वलपुष्टिकरो हृद्यो लघुर्मेदोविवर्धनः ॥ २६८ ॥ तिलकत्वक्कषायोष्णा पुंस्त्वघ्नी दन्तदोषनुत् । क्रिमिशोफव्रणान्हन्ति रक्तदोषविनाशनी ॥ २६९ ॥

## ( ६० ) अशोकः ।

अशोकः शोकनाशश्च विचित्रः कर्णपूरकः । विशोको रक्तको रागी चित्रः[१] षट्पदमञ्जरी ॥ १५९ ॥

गुणाः—अशोकः शीतलश्चार्शःक्रिमीन्हन्ति प्रयोजितः । अपचीं नाशयत्येव सर्वव्रणविनाशनः ॥ १५८ ॥ अशोको मधुरो हृद्यः संधानीयः सुगन्धिकः ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

अशोकः शोकनाशः स्याद्विशोको वञ्जुलद्रुमः । मधुपुष्पोऽपशोकश्च कङ्केलिः कलिकस्तथा ॥ २७० ॥ रक्तपल्लवकश्चित्रो विचित्रः कर्णपूरकः । सुभगः स्मराधिवासो दोषहारी प्रपल्लवः ॥२७१॥ रागी तरुर्हेमपुष्पो रामावामाङ्घ्रिघातकः । पिण्डीपुष्पो नटश्चैव पल्लवद्रुर्द्वि(र्द्वा)विंशतिः ॥ २७२ ॥

गुणाः—अशोकः शिशिरो हृद्यः पित्तदाहश्रमापहः । गुल्मशूलोदराध्माननाशनः क्रिमिकारकः ॥ २७३ ॥

## ( ६१ ) किंशुकः ( पूर्वा )

किंशुको वातपोथश्च रक्तपुष्पोऽथ याज्ञिकः । त्रिपर्णो रक्तपुष्पश्च पूतद्रुर्ब्रह्मवृक्षकः ॥ १६१ ॥ क्षारश्रेष्ठः पलाशश्च बीजस्नेहः समिद्वरः ।

गुणाः—क्षारश्रेष्ठः क्रिमिघ्नश्च संग्राही दीपनः सरः ॥ १६२ ॥ प्लीहगुल्मग्रहण्यर्शोवातश्लेष्मविनाशनः । किंशुकस्यापि कुसुमं सुगन्धि मधुरं च यत् । बीजं तु कटुकं स्निग्धमुष्णं क्रिमिबलासजित् ॥ १६३ ॥

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

पलाशः किंशुकः पर्णो वातपोथोऽथ याज्ञिकः । त्रिपर्णो वक्रपुष्पश्च पूतद्रुर्ब्रह्मवृक्षकः ॥ २७४ ॥ ब्रह्मोपनेता काष्ठद्रुः पर्यायाश्च दश स्मृताः ।

गुणाः—पलाशस्तु कषायोष्णः क्रिमिदोषविनाशनः । तद्बीजं पामकण्डूतिदद्रुत्वग्दोषनाशकृत् ॥२७५॥ तस्य पुष्पं च सोष्णं च कण्डूकुष्ठार्तिनाशनम् । रक्तः पीतः सितो नीलः कुसुमैस्तु विभज्यते ॥ २७६ ॥ किंशुकैर्गुणसाम्येऽपि सितो विज्ञानदः स्मृतः ।

---

१ इ. चित्रस्तु बकम ।

## वर्गेतराणि—

### ( १ ) केतकीद्वयम् ।

केतकी सूचिकापुष्पो जम्बूकः क्रकचच्छदः ।सुवर्णकेतकी चान्या लघुपुष्पा सुगन्धिनी ॥ १ ॥

गुणाः—केतकी कटुका पाके लघुतिक्ता कफापहा ।

राजनिघण्टौ करवीरादिर्दशमो वर्गः—

केतकी तीक्ष्णपुष्पा च विफला धूलिपुष्पिका । मेध्या कण्टदला चैव शिवद्विष्टा नृपप्रिया ॥ १ ॥ क्रकचा दीर्घपत्रा च स्थिरगन्धा तु पांसुला । गन्धपुष्पेन्दुकलिका दलपुष्पा त्रिपञ्चधा ॥ २ ॥ स्वर्णादिकेतकी त्वन्या ज्ञेया सा हेमकेतकी । कनकप्रसवा पुष्पी हैमी छिन्नरुहा तथा ॥ ३ ॥ विष्टरुहा स्वर्णपुष्पी कामखड्गदला च सा ।

गुणाः—केतकीकुसुमं वर्ण्यं केशदौर्गन्ध्यनाशनम् ॥ ४ ॥ हेमाभं मदनोन्मादवर्धनं सौख्यकारि च । तस्य स्तनोऽतिशिशिरः कटुः पित्तकफापहः ॥५॥ रसायनकरो बल्यो देहदार्ढ्यकरः परः ।

### ( २ ) गणेरुका ( गणेरुकः )

गणेरुका कर्णिकारः कर्णिश्च गणकारिका ।

गुणाः—गणेरुः शोधनी शोफश्लेष्मास्रव्रणकुष्ठजित् ॥ २ ॥

### ( ३ ) सागः ( शाकः )

सागः करच्छदो भूमिसहो दीर्घच्छदो मतः ।

गुणाः—सागः श्लेष्मानिलास्रघ्नो गर्भसंधानदो हिमः ॥ ३ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

शाकः क्रकचपत्रः स्यात्खरपत्रोऽतिपत्रकः । महीसहः श्रेष्ठकाष्ठः स्थिरसा च गृहद्रुमः ॥ ६ ॥

गुणाः—शाकस्तु सारसः प्रोक्तः पित्तदाहश्रमापहः । कफघ्नं मधुरं रुच्यं कषायं शाकवल्कलम् ॥ ७ ॥

### ( ४ ) धवः ।

धवो नन्दितरुर्गौरी शकटाक्षो धुरन्धुरी ।

गुणाः—धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः ॥ ४ ॥

राजनिघण्टौ प्रभद्रादिर्नवमो वर्गः—

धवो दृढतरुर्गौरः कषायो मधुरत्वचः । शुक्लवृक्षः पाण्डुतरुर्धवलः पाण्डुरो नव ॥ ८ ॥

गुणाः—धवः कषायः कटुकः कफघ्नोऽनिलनाशनः । पित्तप्रकोपनो रुच्यो विज्ञेयो दीपनः परः ॥ ९ ॥

आम्रादिरयमुद्दिष्टो वर्गश्रेष्ठस्तु पञ्चमः ।
हर्षणो गन्धसौरम्यफलत्वक्पुष्पसंश्रयः ॥ ५ ॥

इति रसवीर्यविपाकसहिते राजनिघण्टुयुतधन्वन्तरीय-
निघण्टावाम्रादिः पञ्चमो वर्गः ॥ ५ ॥

---

# अथ सुवर्णादिः षष्ठो वर्गः—

## ( १ ) * सुवर्णम् ।

सुवर्णं कनकं रुक्मं शातकुम्भं च काञ्चनम् । जाम्बूनदं जातरूपं हिरण्यं हेम हाटकम् ॥ १ ॥ चामीकरं चारुरत्नं तपनीयं च पीतकम् । श्रीकेतनं भूषणार्हं चारुरूपं च तत्स्मृतम् ॥ २ ॥

गुणाः—वीर्यं विधत्ते हरते च रोगान्करोति सौख्यं प्रबलेन्द्रियत्वम् ।

---

*सुवर्णादिशोधनम्—तत्राऽऽदौ लोहाष्टकम्—शुद्धं लोहं कनकरजतं भानुलोहाश्मसारं पूतीलोहं द्वितयमुदितं नागवङ्गाभिधानम् । मिश्रं लोहं त्रितयमुदितं पित्तलं कांस्यवर्तं धातुर्लोहे लुहिरिति मतः सोऽपि तस्यार्थवाची ॥ अन्यच्च—स्वर्णं रूप्यं च ताम्रं च रङ्गं यशोद एव च । सीसं लोहं च सप्तैते धातवो गिरिसंभवाः ॥

लोहशोधनम्—गोजले काञ्जिके तक्रे तैले कौलोत्थके तथा । सप्तधाऽऽताप्य निर्वाप्य सत्यं लोहं विशुध्यति ॥

सुवर्णशोधनम्—पत्तलीकृतपत्राणि हेम्नो वह्नौ प्रतापयेत् । निषिञ्चेत्तत्प्रतप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रे च कुलत्थानां कषाये तु त्रिधा त्रिधा । एवं हेम्नः परेषां च धातूनां शोधनं भवेत् ॥

सुवर्णमारणम्—सुवर्णपत्राणि विमर्द्य सूतमिश्राण्यथो काञ्चनमूलवारिणा । लिप्तानि गन्धेन सहाऽऽशु भस्मी भवन्ति सप्तत्रितयात्पुटानाम् ॥

सुवर्णभस्मगुणाः—एतद्भस्म सुवर्णजं कटु घृतोपेतं द्विगुञ्जोन्मितं लीढं हन्ति नृणां क्षयामिसदनं श्वासं च कासारुची । ओजोधातुविवर्धनं बलकरं पाण्ड्वामयध्वंसनं पथ्यं सर्वविषापहं गदहरं दुष्टग्रहण्यार्तिहृत् ॥

---

१ ङ. छ. तापनम् ।

शुक्रस्य शुद्धिं बलवर्णवीर्यमोजश्च पुष्टिं प्रददाति हेम ॥ ३ ॥ दोषाः—बलं च वीर्यं हरते नराणां रोगव्रजान्पोषयतीह काये । असौख्यदं तच्च सदैवमेवं रुक्मं सदोषं मरणं करोति ॥ ४ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

स्वर्णं सुवर्णकनकोज्ज्वलकाञ्चनानि कल्याणहाटकहिरण्यमनोहराणि । गाङ्गेयगैरिकमहारजताग्निवीर्यरुक्माग्निहेमतपनीयकभास्कराणि ॥ १ ॥ जाम्बूनदाष्टापदजातरूपपिञ्जानचामीकरकर्बुराणि । कार्तस्वरापिञ्जरभर्मभूरितेजांसि दीप्तानलपीतकानि ॥ २ ॥ मङ्गल्यसौमेरवशातकुम्भशृङ्गारचन्द्राजरजाम्बवानि । आग्नेयनिष्काग्निशिखानि चेति नेत्राब्धिनिर्धारितनाम हेम ॥३॥ सुवर्णजातिः—तच्चैकं रसवेधजं तदपरं जातं स्वयं भूमिजं किंचान्यद्बहुलोहसंकरभवं चेति त्रिधा काञ्चनम् । तत्राऽऽद्यं किल पीतरक्तमपरं रक्तं ततोऽन्यत्तथा मैरालं तदतिक्रमेण तदिदं स्यात्पूर्वपूर्वोत्तमम् ॥ ४ ॥

गुणाः—स्वर्णं स्निग्धकषायतिक्तमधुरं दोषत्रयध्वंसनं शीतं स्वादु रसायनं च रुचिकृच्चक्षुष्यमायुष्प्रदम् । प्रज्ञावीर्यबलस्मृतिस्वरकरं कान्तिं विधत्ते तनोः संधत्ते दुरितक्षयं श्रियमिदं धत्ते नृणां धारणात् ॥ ५ ॥ दाहे च रक्तमथ यच्च सितं छिदायां काश्मीरकान्ति च विभाति निकाषपट्टे । स्निग्धं च गौरवमुपैति च यत्तुलायां जात्या तदेव कनकं मृदु रक्तपीतम् ॥ ६ ॥

## (२) †रौप्यम् ।

रौप्यं सौधं सितं तारं रजतं तप्तरूपकम् । शुभ्रं कुप्यं वसुश्रेष्ठं रुचिरं श्वेतकं मतम् । ५ ॥ चन्द्रहासं चन्द्रवपुश्चन्द्रभूति महावसु[1] । वाक्यलं श्रेष्ठमिच्छन्ति रश्मिजालं तथाऽपरम् ॥ ६ ॥

गुणाः—तारं च तारयति रोगसमुद्रपारं देहस्य सौख्यकरणं पलितं बलिं च । वर्ण्यं विषघ्नममलं हरति प्रसह्य वृष्यं पुनर्नवकरं कुरुते चिरायुः ॥ ७ ॥ दोषाः—अपक्वतारं प्रकरोति तापं विड्बन्धनं यच्छति शुक्रनाशम् । अपाटवं वीर्यबलप्रहानिदं महागदान्पोषयति प्रसिद्धम् ॥ ८ ॥

---

†रौप्यभेदाः—सहजं खनिसंभूतं कृत्रिमं च त्रिधोदितम् । रजतं पूर्वपूर्वं हि स्वगुणैरुत्तरोत्तरम् ॥ १ ॥

रौप्यशुद्धिः—सुवर्णशोधनवज्ज्ञेया ।

रौप्यमारणम्—माक्षिकेण दरदेन संयुतं सूक्ष्मरौप्यदलसंचयं पुटेत् । द्वित्रवारमथ भस्मतां व्रजेत्पातकौघ इव शंकरस्मृतेः ॥ २ ॥

---

[1] ख. घ. महाशुभम् । म. महासुधा ।

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

रौप्यं शुभ्रं वसुश्रेष्ठं रुचिरं चन्द्रलोहकम्। श्वेतकं तु महाशुभ्रं रजतं तप्तरूपकम् ॥ ७ ॥ चन्द्रभूतिः सितं तारं कलधौतेन्दुलोहकम्। कुप्यं धौतं तथा सौधं चन्द्रहासं मुनीन्दुकम् ॥ ८ ॥

गुणाः—रौप्यं स्निग्धं कषायाम्लं विपाके मधुरं सरम्। वातपित्तहरं रुच्यं वलीपलितनाशनम् ॥ ९ ॥ दाहच्छेदनिकाशेषु सितं स्निग्धं च यद्गुरु। सुघर्षेऽपि च वर्णाढ्यमुत्तमं तदुदीरितम् ॥ १० ॥

## ( ३ ) *ताम्रम्।

ताम्रं म्लेच्छमुखं शुल्वं रक्तकं रक्तधातुकम्। उदुम्बरं त्र्यम्बकं च विद्यात्वाष्ट्रं च नामतः ॥ ९ ॥

गुणाः—गुल्मं च कुष्ठं च गुदामयं च शूलानि शोफोदरपाण्डुरोगान्। उत्क्लेशभेदभ्रममोहदाहान्निहन्ति सम्यङ्मृतमेव शुल्बम्॥ १० ॥ दोषाः—शुल्बं तनौ नयति शोषमशेषधातुं रोगान्करोति विविधांश्च निहन्ति कान्तिम्। कुष्ठं रुजं च विषमं कुरुते विशेषात्पाकेन हीनमिह वान्तिविरेचकारि ॥ ११ ॥ हन्त्यायुरुच्चैः कुरुतेऽतितापं मूर्छां विधत्ते हरते च शुक्रम्। नानागदानां च सहायकर्ताऽशुद्धश्च शुल्बोऽत्र च जीवहर्ता ॥ १२ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

---

*ताम्रभेदशुद्धिमारणानि—

तत्राऽऽदौ ताम्रभेदः—म्लेच्छं नैपालकं चेति तयोर्नैपालमुत्तमम्। नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते ॥ अस्य शुद्धिः—सुवर्णवज्ज्ञेया।

ताम्रमारणम्—सूक्ष्मं शुल्बदलं विलिप्य बलिभिर्दुग्धेन वह्नौ धृतं सद्यो मुक्तिकलङ्कितद्वलिपुटैः स्याद्भस्म दुग्धात्रिभिः। आम्ले वासरयुग्ममेव सुदृढं संस्वेदितं दोलया वान्त्यादीन्सहजाञ्जहाति पुटितं पञ्चामृतैः सप्तभिः ॥ रसेन ताम्रस्य दलानि लिप्त्वा गन्धेन ताम्राद्द्विगुणेन पश्चात्। वस्त्रेण बद्ध्वाऽथ समुद्रजेन क्षारद्वयेनापि च वेष्टनीयम् ॥ मृदा च संलिप्य पुटं ददीत दलानि ताम्रस्य विचूर्णयेत्तु। धत्तूरचित्रार्द्रकटुत्रयं च विमर्दयेत्तत्त्रिदिनप्रमाणम् ॥ कलाप्रमाणेन विषं च दत्त्वा वल्लं ददीतास्य च वातशूले।

सोमनाथीताम्रम्—शुल्वतुल्येन सूतेन बलिना तत्समेन च। तदर्धांशेन तालेन शिलया च तदर्धया ॥ विधाय कज्जलं श्लक्ष्णं भिन्नकज्जलसंनिभम्। यन्त्राध्यायविनिर्दिष्टवालुकायन्त्रगं पचेत् ॥ कज्जलीं ताम्रपत्राणि पर्यायेण विनिक्षिपेत्। विपचेद्यामपर्यन्तं स्वाङ्गशीतं समुद्धरेत् ॥ तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितं तल्लीढं परिणामशूलमुदरं शूलं च पाण्डुज्वरौ। गुल्मप्लीहयकृत्क्षयाग्निसदनं मेहं च शूलामयं दुष्टां च ग्रहणीं हरेद्ध्रुवमिदं तत्सोमनाथाभिधम् ॥

---

१ ट. रसम्।

ताम्रं म्लेच्छमुखं शुल्वं तपनेष्टमुदुम्बरम् । त्र्यम्बकं चारविन्दं च रविलौहं रविप्रियम् ॥ ११ ॥ रक्तं नेपालकं चैव रक्तधातुः करेन्दुधा ।

गुणाः—ताम्रं सुपक्वं मधुरं कषायं तिक्तं विपाके कटु शीतलं च । कफापहं पित्तहरं विबन्धशूलघ्नपाण्डूदरगुल्मनाशि ॥ १२ ॥ घनघातसहं स्निग्धं रक्तपत्रामलं मृदु । शुद्धाकरसमुत्पन्नं ताम्रं शुभमसंकरम् ॥ १३ ॥

## ( ४ ) **त्रपु ।

त्रपु त्रपुकमानीलं रङ्गं वङ्गं च पिच्चटम् । गुरु श्रेष्ठं सलवणं सुरटी[1] नीलिका घनम् ॥ १३ ॥

गुणाः—त्रपुसं तिक्तमुष्णं च रूक्षं श्लेष्मविघातकृत् । पित्तप्रकोपशमनं विकारं कृमिजं जयेत् ॥ १४ ॥ सतिक्तं लवणं भेदि पाण्डुत्वकृमिवातजित् । लेखं च पित्तलं किंचित्त्रपु सीसं च तद्गुणम् ॥ १५ ॥ दोषाः—पाकेन हीनौ खलु नागवङ्गौ दुष्टानि गुल्मानि तथा विकुष्ठम् । पाण्डुप्रमेहापचिवातशोफभगंदरश्वित्रकिलासकुष्ठम् ॥ १६ ॥ मेहाश्मरीविद्रधिमुख्यरोगानतीव नित्यं कुरुतो बलादौ । विषोपमौ रक्तविकारवृन्दं क्षयं च कृच्छ्राणि कफज्वरं च ॥ १७ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

त्रपु त्रपुसमाण्डूकं वङ्गं च मधुरं हिमम् । कुरूप्यं पिच्चटं रङ्गं पूतिगन्धं दशाह्वयम् ॥ १४ ॥

गुणाः—त्रपुसं कटुतिक्तहिमं कषायलवणं सरं च मेहघ्नम् । कृमिदाहपाण्डुशमनं कान्तिकरं तद्रसायनं चैव ॥ १५ ॥ श्वेतं लघु मृदु स्वच्छं स्निग्धमुष्णापहं हिमम् । सूतपत्रकरं[4] कान्तं त्रपु श्रेष्ठमुदाहृतम् ॥ १६ ॥

## ( ५ ) *रीतिका । ( पित्तलम्[5] )

रीतिका काकतुण्डी च द्विविधं पित्तलं भवेत् । रीतिस्तु लोहकः पिङ्गः

---

* *त्रपुभेदशुद्धिमारणानि—

तत्राऽऽदौ त्रपुभेदः—खुरकं मिश्रकं चेति द्विविधं वङ्गमुच्यते । खुरं तत्र गुणैः श्रेष्ठं मिश्रकं त्वहितं मतम् । अस्य शुद्धिः—सुवर्णवज्ज्ञेया ।

मारणम्—पलाशद्रवयुक्तेन वङ्गपत्राणि लेपयेत् । तालेन पुटितं पश्चान्म्रियते नात्र संशयः ॥ भल्लाततैलसंलिप्तं वङ्गं वस्त्रेण वेष्टितम् । चिञ्चापिप्पलपालाशकाष्ठाग्नौ याति पञ्चताम् ॥

* पित्तलद्वयशोधनमारणे—

---

१ ग. °णं स्वर अष्टीलि° । २ ख. खरटी । ङ.छ. किरीटी । ण. खेरटी । ३ ज. ट. °पुषमात्पूर्कं । ४ ज. सूत्रपात्रकरं । ट. सूत्रप° । ५ क. ग. रीतिः पुलो° ।

कपिलोहं सुवर्णकम् ॥ १८ ॥ आरं सैंहलकश्चैव निष्ठुरो दारुकण्टकः । *राजरीतिः स्मृता राज्ञी राजपुत्री[1] महेश्वरी ॥ १९ ॥ ब्रह्माणी ब्रह्मरीतिश्च कपिला पिङ्गलाऽपि च ॥

पित्तलद्वयगुणाः—रीतिद्वयं पाण्डुसमीरणघ्नं रूक्षं सरं क्रिमिहरं लवणं विषघ्नम् । वृष्यं वलीपलितनाशनमुग्रमायुर्वृद्धिं करोति सहसा च रसायनाड्यम् ॥ २० ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

रीतिः क्षुद्रसुवर्णं सिंहलकं पिङ्गलं च पित्तलकम् । लौहितकमारकुट्टं पिङ्गललोहं च पीतकं नवधा ॥ १७ ॥ राजरीतिः काकतुण्डी राजपुत्री महेश्वरी । ब्राह्मणी ब्रह्मरीतिश्च कपिला पिङ्गलाऽपि च ॥

गुणाः—रीतिकायुगुलं तिक्तं शीतलं लवणं रसे । शोधनं पाण्डुवातघ्नं क्रिमिप्लीहार्तिपित्तजित् ॥ १८ ॥ शुद्धा स्निग्धा मृदुः शीता सुरङ्गा सूत्रपत्रिणी । हेमोपमा शुभा स्वच्छा जन्या रीतिः प्रकीर्तिता ॥ १९ ॥

## ( ६ ) †सीसकम् ।

सीसकं नागमुरगं कृष्णोरगभुजङ्गमाः । यवनेष्टं विशिष्टं च[2] योगीष्टं चीनपिष्टकम्[3] ॥ २१ ॥

गुणाः—नागो हि नागसममेव बलं ददाति व्याधीन्विनाशयति चाऽऽयुरलं करोति । प्रधानधातोरपि वर्धनश्च भुजङ्गराजो हरते च मृत्युम् ॥ २२ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

सीसकं तु जडं सीसं यवनेष्टं भुजङ्गमम् । योगीष्टं नागपुरगं कुवङ्गं परि-

---

तत्राऽऽदावनयोः शोधनं तु ताम्रवज्ज्ञेयम् ।

मारणं— निम्बूरसशिलागन्धवेष्टिता पुटिताऽष्टधा । रीतिरायाति भस्मत्वं ततो योज्या यथाक्रमम् । ताम्रवन्मारणं चास्याः कृत्वा सर्वत्र योजयेत् ।

* राजरीतिः– 'सोनपितळ' इति ख्याते ।

† सीसकभेदशुद्धिमारणानि—

सीसकभेदः—द्रुतद्रवं महाभारं छेदे कृष्णं समुज्ज्वलम् । पूतिगन्धं बहिः कृष्णं शुद्धं सीसमतोऽन्यथा ।

अस्य शुद्धिः सुवर्णवज्ज्ञेया ।

मारणम्—मनःशिलागन्धयुताटरूषतोयप्लुतं नागदलं त्रिमृष्टम् । त्रिभिः पुटैः कुम्भमितैः प्रयाति भस्मत्वमेतत्प्रवदन्ति तज्ज्ञाः ॥

---

१ ङ. छ राजपत्नी । ख. राजपत्री । २ क. ङ. °ष्टं च निपीतकम् । ३ ख. चीरपिष्टकम् । ग. वीरपिष्टकः ।

पिष्टकम्[१] ॥ २० ॥ मृदु कृष्णायसं पद्मं तारशुद्धिकरं स्मृतम् । सिरावृत्तं च वङ्गं स्याच्चीनपिष्टं च षोडश ॥ २१ ॥

गुणाः—सीसं तु वङ्गतुल्यं स्याद्रसवीर्यविपाकतः । उष्णं च कफवातघ्नम-र्शोघ्नं गुरु लेखनम् ॥ २२ ॥ स्वर्णे नीलं मृदु स्निग्धं निर्मलं च सुगौरवम् । रौप्यसंशोधनं क्षिप्रं सीसकं च तदुत्तमम् ॥ २३ ॥

## ( ७ ) *कांस्यम् ।

कांस्यं लोहं निजं घोषं प्रकाशं कांस्यकं बलम् । घोषपुष्पं च पठितं शब्दैः पर्यायवाचकैः ॥ २३ ॥

गुणाः—कांस्यं तिक्तोष्णरूक्षं च लघुलेखि प्रकीर्तितम् । अञ्जनादिप्रयुक्तं च दिव्यदृष्टिप्रदायकम् ॥ २४ ॥ अन्यच्च-निःसंशयं हन्ति समस्तरोगान्घोषं नृणां स्याद्दृढदेहकर्तृ । कामस्य वृद्धिं कुरुते बलासं यकृन्निहन्त्याशु बलं करोति ॥ २५ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशोवर्गः—

कांस्यं सौराष्ट्रिकं घोषं कंसीयं वह्निलोहकम् । दीप्तं लोहं घोरपुष्पं दीप्तकं सुमनाह्वयम् ॥ २४ ॥

गुणाः—कांस्यं तु तिक्तमुष्णं चक्षुष्यं वातकफविकारघ्नम् । रूक्षं कषायरुच्यं लघु दीपनपाचनं पथ्यम् ॥ २५ ॥ श्वेतं दीप्तं मृदु ज्योतिः शब्दाढ्यं स्निग्ध-निर्मलम् । घनाग्निसहसूत्राङ्गं कांस्यमुत्तममीरितम् ॥ २६ ॥

## ( ८ ) **लोहम् ।

लोहं शस्त्रं घनं पिण्डं तीक्ष्णं पारशवं शिवम् । अयः कृष्णायसं वीरं भ्रमरं कृष्णलोहकम् ॥ २७ ॥ मुण्डं तीक्ष्णं च कान्तं च त्रिप्रकारमयः स्मृतम् ।

---

*कांस्यशोधनमारणे—तप्तकांस्यं गव्यमूत्रे वापितं परिशुध्यति । म्रियते गन्धतालाभ्यां निरुद्धं पञ्चभिः पुटैः ॥

**लोहशोधनमारणे—लोहशोधनं तु सुवर्णवज्ज्ञेयम् । सूक्ष्मांशानि कृतानि चूर्णमयसः पिष्ट्वा बलिर्हिङ्गुलादार्द्रे सप्त पुटानि तस्य दहने विन्यस्य मूषोदरे । पश्चाच्छ्रीफलकोजलेन पुटितस्यास्यैव शृङ्गाम्बुना भस्मीभावमुपैति वारितरणं त्रिःसप्तधा पावके ॥

भस्मगुणाः—एतत्स्यादपुनर्भवं हि भसितं लोहस्य दिव्यामृतं सम्यक्सिद्धरसायनं त्रिकटुकं वल्लाज्यमध्वन्वितम् । हन्याभिष्कमिदं जरामरणजं व्याधिं च सद्योभवां दिष्टं श्रीगिरिशेन कालयवने भूत्यै पुरा तत्पितुः ॥

---

[१] झ. ढ. 'पिष्टिक' ।

मृदु कण्टं कडारं च त्रिविधं मुण्डमुच्यते ॥ २७ ॥ खरसारं च हर्तालं तालं वल्लं च वज्जरम् । काललोहाभिधानं च षड्विधं तीक्ष्णमुच्यते ॥ २८ ॥ भ्रामरं चुम्बकं चैव रञ्जकालोचके तथा । एवं चतुर्विधं कान्तं रोमकान्तं च पञ्चमम् ॥ २९ ॥

गुणाः—कषायं शोफशूलार्शःकुष्ठपाण्डुप्रमेहजित् । लोहं तिक्तोष्णरूक्षं स्यात्पाण्डुरोगहरं परम् ॥ ३० ॥ कफपित्तापहं पुंसां रसायनमनुत्तमम् ॥ ३० ॥ अन्यच्च—आयुः प्रदाता बलवीर्यकर्ता रोगापहर्ता मदनस्य कर्ता । अयःसमानो न हि कश्चिदन्यो रसायनं श्रेष्ठतमं वदन्ति ॥ ३१ ॥ दोषाः—दोषकारि गदकारि चाऽऽयसं चेदशुद्धमतिसंस्कृतं ध्रुवम् । पाटवं न तनुते शरीरके दारुणां हृदि रुजं करोति च ॥ ३२ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

*अयस्कान्तं कान्तलोहं कान्तं स्याल्लोहकान्तिकम् । कान्तायसं कृष्णलोहं महालोहं च सप्तधा ॥ २७ ॥ अपि च—स्याद्भ्रामकं तदनु चुम्बकरोमकाख्यं स्याच्छेदकाख्यमिति तच्च चतुर्विधं स्यात् । कान्ताश्मलोहगुणवृद्धि यथाक्रमेण दार्ढ्याङ्गकान्तिकचकार्ष्ण्यविरोगदायि ॥ २८ ॥ मुण्डं मुण्डायसं लोहं दृषत्सारं शिलात्मजम् । अश्मजं कृमिलोहं च आरं कृष्णायसं नव ॥ २९ ॥ तीक्ष्णं शस्त्रायसं शस्त्रं पिण्डं पिण्डायसं शठम् । आयसं निशितं तीव्रं लोहखड्गं च मुण्डजम् ॥ ३० ॥ अयश्चित्रायसं प्रोक्तं चीनजं च त्रिपञ्चधा ।
गुणाः—लोहं रूक्षोष्णतिक्तं स्याद्वातपित्तकफापहम् । प्रमेहपाण्डुशूलघ्नं तीक्ष्णं मुण्डाधिकं स्मृतम् ॥ ३१ ॥

अयस्कान्तगुणाः—अयस्कान्तविशेषाः स्युर्भ्रामकाश्चुम्बकादयः । रसायनकराः सर्वे देहसिद्धिकराः पराः ॥ ३२ ॥ न सूतेन विना कान्तं न कान्तेन विना रसः । सूतकान्तसमायोगाद्रसायनमुदीरितम् ॥ ३३ ॥

## वर्तलोहम् ( लोहविशेषः ) ॥ १ ॥

वर्तलोहं वट्टलोहं वर्तकं लोहमेव च । वर्तुलोहं च विख्यातं पञ्चलोहं च नीलिका ॥ ३३ ॥

---

*अयस्कान्तम् 'लोहचुंबक' इति ख्याते ।

*वर्तलोहशोधनमारणे—द्रुतमश्वजले क्षिप्तं वर्तलोहं विशुध्यति । म्रियते गन्धतालाभ्यां पुटितं वर्तलोहकम् ॥

गुणाः—वर्तलोहं हिमं विद्यादम्लं कटुकमेव च। रूक्षं कफविकारघ्नं हन्यात्पित्तोद्भवा रुजः ॥ ३४ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

वर्तलोहं वर्ततीक्ष्णं वर्तकं लोहसंकरम्। नीलिका नीललोहं च लोहजं वट्टलोहकम् ॥ ३४ ॥

गुणाः—इदं लोहं कटूष्णं च तिक्तं च शिशिरं तथा। कफहृत्पित्तशमनं मधुरं दाहमेहनुत् ॥ ३५ ॥

## लोहोच्छिष्टम्। ( लोहविशेषः ) ॥ २ ॥

लोहोच्छिष्टं च मण्डूरं किट्टं चैव मलोद्भवम् । लोहोत्थं लोहनिर्यासमयःशिष्टं च कीर्तितम् ॥ ३५ ॥

गुणाः—आमवातहरणं च शोभनं पाण्डुमेहगदनाशनाग्रजम् । दुष्टकुष्ठपवनास्रवातजित्स्याज्जरामितवलीविनाशनम् ॥ ३६ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

लोहकिट्टं तु किट्टं स्याल्लोहचूर्णमयोमलम्। लोहजं कृष्णचूर्णं च कार्ष्ण्यं लोहमलं तथा ॥ ३६ ॥

गुणाः—लोहकिट्टं तु मधुरं कटूष्णं कृमिवातनुत्। पक्तिशूलं मरुच्छूलं मेहगुल्मार्तिशोफनुत् ॥ ३७ ॥

समस्ताशोधितधातुदोषाः—स्वर्णं सम्यगशोधितं श्रमकरं खेदावहं दुःसहं रौप्यं जाठरजाड्यमान्द्यजननं ताम्रं वमिभ्रान्तिदम् । नागं च त्रपु चाङ्गदोषदमयो गुल्मादिदोषप्रदं तीक्ष्णं शूलकरं च कान्तमुदितं कौष्ण्यामयस्फोटदम् ॥ ३८ ॥ विशुद्धिहीनौ यदि मुण्डतीक्ष्णौ क्षुधापहौ गौरवगुल्मदायकौ। कांस्यायसं क्लेदकतापकारकं रीत्यौ च संमोहनशोषदायके ॥ ३९ ॥

---

*मण्डूरकरणम्—अक्षाङ्गारैर्धमेत्किट्टं लोहजं तद्रवां जलैः । सेचयेत्तत्ततप्तं तत्सप्तवारं पुनः पुनः ॥ चूर्णयित्वा ततः क्वाथैर्द्विगुणैस्त्रिफलाभवैः । आलोड्य भर्जयेद्वह्नौ मण्डूरं जायते वरम् ॥

† 'आयुर्वेदविज्ञाने'—ध्मायमानस्य लोहस्य मलं मण्डूरमुच्यते ।

---

१ झ. 'मयोच्छिष्टं। २ ज. ट. कार्ष्यम' ।

## ( ९ ) *पारदः ( रसः )

**पारदो रुद्ररेतश्च †रसलोहं महारसम् । रसेन्द्रं चपलं भूतं पारदीयं रसोत्तमम् ॥ ३७ ॥**

---

**पारदभेदशोधनमारणानि**— तत्राऽऽदौ—रसो रसेन्द्रः सूतश्च पारदो मिश्रकस्तथा । तदाप्रभृति कूपस्थं तद्रेतः पञ्चधाऽभवत् ॥ सूतोऽशुद्धतया गुणं न कुरुते कुष्ठाग्निमान्द्यक्रिमींश्छर्द्यारोचकजाड्यदाहमरणं धत्ते नृणां सेवनात् । शुद्धः स्यात्सकलामयैकशमनो यो योगवाही मृतो युक्त्या षड्गुणगन्धयुग्गदहरो वेगेन धात्वादिभुक् ॥ मूर्छातो गदहृत्तदैव खगतिं धत्ते विबद्धोऽर्थदः स्याद्भस्माऽऽमयवार्धकादिहरणं दृक्पुष्टिकान्तिप्रदम् । वृष्यं मृत्युविनाशनं बलकरं कान्ताजनानन्दनं शार्दूलातुलसत्त्वकृत्क्रमभुजां योगानुसारि स्फुटम् ॥ मूर्छित्वा हरति रुजं बन्धनमनुभूय मुक्तिदो भवति । अमरीकरोति मृतः कोऽन्यः करुणाकरः सूतात् ॥

**पारदकञ्चुकशोधनम्**—मलेन मूर्छां दहनेन दाहं विषेण मृत्युं वितनोति सूतः । मलादिदोषत्रयमेतदत्र नैसर्गिकं शुद्धिमतोऽभिधास्ये ॥ नागो वङ्गो मलो वह्निश्चाञ्चल्यं च गिरिर्विषम् । पारदे कञ्चुकाः सप्त सन्ति नैसर्गिका इमे ॥ रक्तेष्टिकानिशाधूमसारोर्णाभस्मचूर्णकम् । जम्बीरद्रवसंयुक्तं नागदोषापनुत्तये ॥ विशालाङ्कोलमूलस्य चूर्णं तु सह कन्यया । शनैः शनैः स्वहस्तेन वङ्गदोषविमुक्तये ॥ राजवृक्षस्य मूलं च चूर्णेन सह कन्यया । मलदोषापनुत्त्यर्थं चित्रको वह्निदूषणम् ॥ चाञ्चल्यं कृष्णधत्तूरो गिरिं हन्ति कटुत्रयम् । त्रिफला विषनाशाय कन्यकासप्तकञ्चुकान् ॥

***पारदशोधनम्**— दुग्धोर्णाग्रहधूमसाररजनीरक्तेष्टिकाकाञ्जिकैः पिष्ट्वा व्योषकुमारिकानलवरानिम्बूद्रवैर्नीसरम् ॥ व्योषाद्यम्बुनि दोलया रचितया स्विन्नं सुताम्राङ्घ्रियुक्पिष्टं भाण्डतले जलाश्रयगतं सूतं समभ्युद्धरेत् ॥ लवणसलिलदोलायन्त्रमध्ये दिनैकं भुजगनयनविश्वाभृङ्गवन्ध्याद्रवेण । क्वथितदहनतोये काञ्जिके स्वेदितः स्यात्पुटमरिचसशा(शशी)गृक्षारतुल्यारनाले ॥

**पारदभस्मसेवनम्**—रसेन्द्रं सेवयेन्नित्यं चतुर्गुञ्जाप्रमाणतः । आज्येन मरिचैः सार्धं सेवयेच्च रसेश्वरम् ॥ दशभिः पिप्पलीभिर्वा मधुना सह सेवयेत् । यथा जलगतं तैलं तत्क्षणादेव सर्पति ॥ एवमौषधमङ्गेषु विसर्पत्यनुपानतः ॥ पित्ते शर्करया मले च पयसा वाते च कृष्णासमं दद्याच्छ्लेष्मणि शृङ्गबेरसलिलैर्जम्बीरनीरैर्ज्वरे । रक्तोत्थे मधुना प्रवाहरुधिरे स्यान्मेघनादोदकैर्दद्या चाथ कृतातिसारविकृतौ रोगारिसंज्ञं रसम् ॥ गव्यं सुदुग्धं सलिलार्धकेन शृतं कृतं पानजलं सुशीतलम् । खण्डेन वा शर्करया समेतं रसेन्द्रभोक्ता प्रपिबेत्सदैव ॥ गुडेन सूतं मरिचाज्ययुक्तं स्निग्धोष्णभोजी दधिभुक्सदैव । नवप्रतिश्यायहरं च सूतकं विशेषतो दुष्टकफस्य पाचनम् ॥ चूर्णीकृतां माषविदारियष्टिकां सशर्करां सूतनृपेण युक्ताम् । प्रमथ्य दुग्धेन पिबेन्निरन्तरं स्त्रीणां शतं कामयते स कामी ॥ मुस्तामृताचन्दनधान्यवीरणं शुण्ठीकषायं मधुशर्करान्वितम् । लिहन्प्रभाते विनिहन्ति नित्यं श्वासं च कासं कफरक्तपित्तम् ॥ प्रातर्निपीतो मधुना रसेन्द्रः स वारितः स्थौल्यहरोऽचिरेण । भक्तस्य मण्डं पिबतः ससूतं कोष्ठं हरेत्स्थौल्यहरोऽचिरेण । सठी तिक्ता व्याघ्री सुरभिमगधा पर्पटवरी दुरालम्भा पथ्या तदनु वरणं रोहिणि वचा । गुडूची त्रायन्ती वरशतगुरुर्भार्गितगरं सठीत्याद्यो वर्गः सकलगदहृत्सूतसहितः । भार्ङ्गीगुडव्योषरसेन्द्रहिङ्गुयुक्तः कषायस्तिलकृष्णजातः । शूलान्निहन्याद्दृढरक्तगुल्मान्नष्टं च पुष्पं कुरुतेऽङ्गनानाम् ॥

† आयुर्वेदविज्ञाने—रसायनार्थिभिर्लोकैः पारदो रस्यते यतः । अतो रस इति प्रोक्तः स च धातुरपि स्मृतः ॥

गुणाः—पारदः क्रिमिकुष्ठघ्न आयुष्यो दृष्टिदः परः । सुबल्यः सकषायश्च मूर्छितोऽसौ गदापहः ॥ ३८ ॥ दोषाः—संस्कारहीनं खलु सूतराजं सेवेत यस्तस्य करोति बाधाम् । देहस्य नाशं विदधाति नूनं कुष्ठादिदोषाञ्जनयेन्नराणाम् ॥ ४० ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

पारदो रसराजश्च रसनाथो महारसः । रसश्चैव महातेजा रसलोहो रसोत्तमः ॥ ३९ ॥ सूतराट्चपलो जैत्रः शिवबीजं शिवस्तथा । अमृतं च रसेन्द्रः स्याल्लोकेशो धूर्तरः प्रभुः ॥ ४१ ॥ रुद्रजो हरतेजश्च रसधातुरचिन्त्यजः । खेचरश्चामरः प्रोक्तो देहदो मृत्युनाशनः ॥ ४२ ॥ स्कन्धः स्कन्धांशकः सूतो देवो दिव्यरसस्तथा । प्रोक्तो रसायनश्रेष्ठो यशोदस्त्रित्रिधाह्वयः॥ ४३ ॥

गुणाः—पारदः सकलरोगनाशनः षड्रसो निखिलयोगवाहकः । पञ्चभूतमय एष कीर्तितो देहलोह[1]परसिद्धिदायकः ॥४४॥ मूर्छितो हरते व्याधीन्बद्धः खेचरसिद्धिदः । सर्वसिद्धिकरो लीनो निरुद्धो देहसिद्धिदः ॥ ४५ ॥ विविधव्याधिभयोदयमरणजरासंकटेऽपि मर्त्यानाम् । पारं ददाति यस्मात्तस्मादयमेव पारदः कथितः ॥ ४६ ॥

## *हिङ्गूलम् । (हिङ्गलः) (पारदचूर्णविशेषः) ॥ ३ ॥

हिङ्गूलं दरदं म्लेच्छं हिङ्गुलं चूर्णपारदम् । मणिरागकरं चान्यन्नाम्ना चर्मानुरञ्जनम् ॥ ४० ॥

गुणाः—हिङ्गुलं कटुकं पाके वीर्ये चोष्णं प्रकीर्तितम् । विषकुष्ठविसर्पादित्वग्दोषदलनं स्मृतम् ॥ ४१ ॥ हिङ्गुलं मधुरं तिक्तमुष्णवातकफापहम् ।

* हिङ्गूलवर्णनं शुद्धिश्च—हिङ्गुलः शुकतुण्डाख्यो हंसपादस्तथाऽपरः । प्रथमोऽल्पगुणस्तत्र चर्मारः स निगद्यते । श्वेतरेषः प्रवालाभो हंसपाद स ईरितः । हिङ्गुलः सर्वदोषघ्नो दीपनोऽतिरसायनः । सर्वरोगहरो वृष्यो जारणायाति शस्यते । एतस्मादाहृतः सूतो जीर्णगन्धसमो गुणैः । सप्तकृत्वाऽऽर्द्रकद्रवैर्लकुचस्याम्बुनाऽपि वा । शोषितो भावयित्वा च निर्दोषो जायते खलु । किमत्र चित्रं दरदः सुभावितः क्षीरेण मेष्या बहुशोऽम्लवर्गैः । एवं सुवर्णं बहुघर्मतापितं करोति साक्षाद्वरकुङ्कुमप्रभम् ॥ दरदः पातनायन्त्रे पातितश्च जलाशये । ततस्तत्त्वं सूतसंकाशं पातयेन्नात्र संशयः ॥

हिङ्गुलशोधनम्—अन्यच्च—मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम् । सप्तवारान्प्रयत्नेन शुद्धिमायाति निश्चितम् ॥

हिङ्गुलाद्रसाकर्षणविधिः—निम्बूरसैर्निम्बपत्ररसैर्वा याममात्रकम् । घृष्ट्वा दरदमूर्ध्वं तु पातयेत्सूतयुक्तिवत् । तत्रोर्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम् । शुद्धमेव हितं सूतं सर्वकर्मसु योजयेत् ॥

१ ट. 'हरससि' । २ झ. नीलो ।

त्रिदोषद्वंद्वदोषोत्थं ज्वरं हरति सेवितम् ॥ ४२ ॥ ग्रन्थान्तरे—हिङ्गुलः सर्वदोषघ्नो दीपनोऽतिरसायनः । सर्वरोगहरो वृष्यो जारणे लोहमारणे ॥ ४३ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

हिङ्गुलं बर्बरं रक्तं सुरङ्गं सगरं स्मृतम् । रञ्जनं दरदं म्लेच्छं चित्राङ्गं चूर्णपारदम् ॥ ४७ ॥ अन्यच्च मारकं चैव मणिरागं रसोद्भवम् । रञ्जकं रसगर्भं च बाणभूसंख्यसंमतम् ॥ ४८ ॥

गुणाः—हिङ्गुलं मधुरं तिक्तमुष्णवातकफापहम्[1] । त्रिदोषद्वंद्वदोषोत्थं ज्वरं हरति सेवितम् ॥ ४९ ॥

## ( १० ) †वैक्रान्तम् ।

वैक्रान्तं कान्तसंज्ञं स्याद्वज्रो भूमिरजस्तथा । गोनसं क्षुद्रकुलिशं जीर्णवज्रं तु वज्रकम् ॥ ४४ ॥ तत्तु सप्तविधं प्रोक्तमनेककर्मकारकम् । षट्कोणं तीक्ष्णधारं च स्वच्छमिन्द्रधनुश्छवि ॥ ४५ ॥ तदुत्तमं तु वैक्रान्तं हितं प्रोक्तं रसायने ।

गुणाः—मेहखाण्ड्यांशर्वाधक्यक्षयग्रहणिकासजित् । वृष्यो रसायनो बल्यो वैक्रान्तो वह्निदीपनः ॥ ४६ ॥ आयुष्प्रदश्च बलवर्णकरोऽतिवृष्यः प्रज्ञाप्रदः सकलदोषगणापहारी । दीप्ताग्निकृत्पविसमानगुणस्तरस्वी वैक्रान्तकः खलु वपुर्वललोहकारी ॥ ४७ ॥ दोषाः—अशुद्धवज्रं कुरुपाण्डुतापहृत्पार्श्वपीडारुचिकुष्ठकारि । शुद्धं मृतं सौख्यबलप्रदं च वैक्रान्तभस्मापि रसायनं च ॥ ४८ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

वैक्रान्तं चैव विक्रान्तं नीचवज्रं कुवज्रकम् । गोनासः क्षुद्रकुलिशं चूर्णवज्रं च गोनसः ॥५०॥

---

† वैक्रान्तभेदशोधनमारणानि—अष्टास्रश्चाष्टफलकः षट्कोणो मसृणो गुरुः। शुद्धो मिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥ श्वेताः पीता रक्तनीलाम्ते स्युः पारावतप्रभाः। केकिकण्ठप्रभाश्चैव तथा मरकतप्रभाः ॥ श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः ।

अस्य शोधनम्—वैक्रान्तकाः स्युस्त्रिदिनं विशुद्धाः संस्वेदिताः क्षारपटूनि दत्त्वा । आम्लेषु मूत्रेषु कुलित्थरम्भार्नीरेऽथवा कोद्रववारिपक्काः ॥

वैक्रान्तमारणम्—कुलित्थक्काथसंस्विन्नो वैक्रान्तः परिशुष्याति । म्रियतेऽष्टपुटैर्गन्धनिम्बुकोद्रवसंयुतः ॥ वैक्रान्तेषु च सर्वेषु हयमूत्रं विनिक्षिपेत् । यो नैपुण्येन वा कुर्याद्द्रवं दत्त्वा पुटं लघु । भस्मीभूतं तु वैक्रान्तं वज्रस्थाने नियोजयेत् ॥ भस्मत्वं समुपागतो विकृतको हेम्ना मृतेनान्वितः पादांशेन कणाज्यवल्लसहितो गुञ्जोन्मितः सेवितः । यक्ष्माणं जरणं च पाण्डुगुदजं श्वासं च कासामयं दुश्चां च ग्रहणीमुरःक्षतमुखान्रोगाञ्जयेद्देहकृत् ॥

---

१ ट. 'मुष्णं वा' ।

गुणाः—वज्राभावे च वैक्रान्तं रसवीर्यादिके समम् । क्षयकुष्ठविषघ्नं च पुष्टिदं सुरसायनम् ॥ ५१ ॥ वज्राकारतयैव प्रसह्य हरणाय सर्वरोगाणाम् । यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥ ५२ ॥

## ( ११ ) गारुत्मतम् ।

*गारुत्मतं मरकतं रौहिणेयं हरिन्मणिः । *सौपर्णं गरुडोद्गीर्णं बुधरत्नाश्मगर्भजम् ॥ ४९ ॥ *गरलारिर्वायवालं गारुडं रुद्रसंमितम् ।

गुणाः—रौहिणेयं विषघ्नं च शीतलं मधुरं रसे । आम्लपित्तहरं वृष्यं पुष्टिदं भूतनाशनम् ॥ ५० ॥ ग्रन्थान्तरे—ज्वरच्छर्दिविषश्वासकासशूलाग्निमान्द्यजित् । दुर्नामशोफपाण्डुघ्नं तार्क्ष्यमोजोविवर्धनम् ॥ ५१ ॥ श्वेतोऽरुणः पीतसुनीलवर्णौ द्विजादयः सिद्धिकरो हि विप्रः । क्षोणीपतिर्मृत्युहरोऽर्थकारी वैश्यश्च शूद्रो गदराजिभङ्गी ॥ ५२ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

* * ॥ ५३ ॥ *

गुणाः—मरकतं विषघ्नं च शीतलं मधुरं रसे । आमपित्तहरं रुच्यं पुष्टिदं भूतनाशनम् ॥ ५४ ॥ मरकतलक्षणम्—स्वच्छं गुरु सुच्छायं स्निग्धं गात्रे च मार्दवसमेतम् । अव्यङ्गं बहुरङ्गं शृङ्गारि मरकतं शुभं बिभृयात् ॥ ५५ ॥ मरकतपरीक्षा—शर्करिलकलिलरूक्षं मलिनं लघु हीनकान्ति कल्माषम् । त्रासयुतं विकृताङ्गं मरकतममरोऽपि नोपभुञ्जीत ॥ ५६ ॥ यच्छैवालशिखण्डिशाड्वलहरित्काचैश्च चाषच्छदैः खद्योतेन च बालकीरवपुषा शैरीषपुष्पेण च । छायाभिः समतां दधाति तदिदं निर्दिष्टमष्टात्मकं जात्यं यत्तपनातपैश्च परितो गारुत्मतं रञ्जयेत् ॥ ५७ ॥

## ( १२ ) *हीरकम् ।

हीरकं भिदुरं वज्रं सद्रत्नमशनिः पविः । सूचिवक्त्रं वराहं च कुलिशं

---

*वज्रभेदशोधनमारणानि—

तत्राऽऽदौ भेदः—वज्रं च त्रिविधं प्रोक्तं नरो नारी नपुंसकम् । व्यत्यासान्नैव फलदं पुंवज्रेण विना क्वचित् ॥

शोधनम्–कुलित्थकोद्रवक्काथे दोलायन्त्रे विपाचयेत् । व्याघ्रीकन्दगतं वज्रं त्रिदिनं तद्विशुध्यति।

मारणम्–वज्रं मत्कुणरक्तेन चतुर्वारं विभावितम् । सुगन्धिमूषिकामांसैर्वर्तितैः परिमर्द्य च ॥ पुटेत्पुटैर्वराहाख्यैस्त्रिंशद्वारं ततः परम् । ध्मात्वा ध्मात्वा शतं वारान्कुलित्थक्काथके क्षिपेत् ॥ अन्यैरुक्तः शतं वारान्कर्तव्योऽयं विधिक्रमः । कुलित्थक्काथसंयुक्तलकुचद्रवपिष्टया ॥ शिलया लिप्तमूषायां

भार्गवं स्मृतम् ॥ ५५ ॥ अभेद्यमशिरं रत्नं दृढं भार्गवकं स्मृतम् । षट्कोणं वहुधारं च शतकोट्यब्धिभूमिजम् ॥ ५६ ॥

गुणाः—रुजां समूहं हरते नराणां बलं सुरूपं विदधाति युक्त्या । देहस्य सौख्यं च सदा करोति चिरं तथाऽऽयुः पलितं च हन्ति ॥ ५७ ॥ आयुष्प्रदं झटिति सद्गुणदं च वृष्यं दोषत्रयप्रशमनं सकलामयघ्नम् । सूतेन्द्रबन्धवधसद्गुणकृत्प्रदीपं मृत्युंजयं तदमृतोपममेव वज्रम् ॥ ५८ ॥ दोषाः—पीडां विधत्ते विविधां नराणां कुष्ठं क्षयं पाण्डुगदं च दुष्टम् । हृत्पार्श्वपीडां कुरुतेऽतिदुःसहामशुद्धवज्रं गुरुतापदं भवेत् ॥ ५९ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

वज्रमिन्द्रायुधं हीरं भिदुरं कुलिशं पविः । अभेद्यमशिरं रत्नं दृढं भार्गवकं स्मृतम् ॥ ५८ ॥ षट्कोणं वहुधारं च शतकोट्यब्धिभूमितम् ॥

गुणाः—वज्रं च षड्रसोपेतं सर्वरोगापहारकम् । सर्वाघशमनं सौख्यं देहदार्ढ्यं रसायनम् ॥ ५९ ॥ कुवज्रलक्षणम्—भस्माङ्गं काकपादं च रेखाक्रान्तं तु वर्तुलम् । अधारं मलिनं बिन्दुसंत्रासं स्फुटितं तथा ॥ ६० ॥ नीलाभं चिपिटं रूक्षं तद्वज्रं दोषदं त्यजेत् । वज्रस्य चतुर्वर्णलक्षणम्—श्वेतालोहितपीतमेचकतया छायाश्चतस्रः क्रमाद्विप्रादित्वमिहास्य यत्सुमनसः शंसन्ति सत्यं ततः । स्फीतां कीर्तिमनुत्तमां श्रियमिदं धत्ते यथास्वं धृतं मर्त्यानामयथायथं तु कुलिशं पथ्यं हि नान्यत्ततः ॥ ६१ ॥

वज्रपरीक्षा—यत्पाषाणतले निकाषनिकरे नोद्घृष्यते निष्ठुरैर्यच्चोलूखललोहमुद्गरघनै र्लेखां न यात्याहतम् । यच्चान्यन्निजलीलयैव दलयेद्वज्रेण वा भिद्यते तज्जात्यं कुलिशं वदन्ति कुशलाः श्लाघ्यं महार्घं च तत् ॥ ६२ ॥ चतुर्वर्णवज्रगुणलक्षणम्—विप्रः सोऽपि रसायनेषु वलवानष्टाङ्गसिद्धिप्रदो राजन्यस्तु नृणां वलीपलीतजिन्मृत्युं जयेदञ्जसा । द्रव्याकर्षणसिद्धिदस्तु सुतरां वैश्योऽथ शूद्रो भवेत्सर्वव्याधिहरस्तदेष कथितो वज्रस्य वर्ण्यो गुणः ॥ ६३ ॥

## राजावर्तः ( हीरकविशेषः ) ॥ ४ ॥

राजावर्तश्च राजा च नीलाश्मा तु नृपोपलः । सुवर्णधातू राजाद्री राजप्रस्तर एव च ॥ ६० ॥

---

वज्रं क्षिप्त्वा निरुध्य च । अष्टवारं पुटेत्सम्यग्विशुष्कैश्च वनोत्पलैः ॥ शतवार ततो ध्मात्वा निक्षिप्तं शुद्धपारदे । निश्चितं म्रियते वज्रं भस्म वारितरं भवेत् । सत्यवाक्सोमसेनानीरेतद्वज्रस्य मारणम् । दृष्टप्रत्ययसंयुक्तमुक्तवान्रसकौतुकी ॥ विलिप्तं मत्कुणस्यास्रैः सप्तवारं विशोषितम् । कासमर्दरसापूर्णे लोहपात्रे निवेशितम् । सप्तवारं परिध्मातं वज्रभस्म भवेत्खलु । ब्रह्मज्योतिर्मुनीन्द्रेण क्रमोऽयं परिकीर्तितः ॥ नीलज्योतिर्लताकन्दे घृष्टं घर्मे विशोषितम् । वज्रं भस्मत्वमायाति कर्मवज्ज्ञानवह्निना ॥

गुणाः—*राजावर्तः कटुः स्निग्धः शिशिरः पित्तनाशनः । *सौभाग्यं कुरुते नृणां भूषणेषु प्रयोजितः ॥ ६१ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

राजावर्तो नृपावर्तो राजन्यावर्तकस्तथा । आवर्तमणिरावर्तः स्यादित्येष शराह्वयः ॥ ६४ ॥

गुणाः— * । * ॥ ६५ ॥

## ( १३ ) मौक्तिकम् । ( मुक्ता )

मौक्तिकं शुक्तिजं स्फोटशुक्तिजं शुक्तिसंभवम् । भूषणार्हतमं श्रेष्ठं तौतिकं शौक्तिजं तथा ॥ ६२ ॥

गुणाः—मौक्तिकं मधुरं शीतं सरं दृष्टिभवं गदम् । उन्मूलयति पित्तं च हारालिङ्गेन दाहहृत् ॥ ६३ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

मुक्ता सौम्या मौक्तिकं मौक्तिकेयं तारं तारा भौतिकं तारका च । अम्भःसारं शीतलं नीरजं च नक्षत्रं स्यादिन्दुरत्नं वलक्षम् ॥ ६६ ॥ मुक्ताफलं बिन्दुफलं च मुक्तिका शौक्तेयकं शुक्रमणिः शशिप्रियम् । स्वच्छं हिमं हैमवतं सुधांशुभं सुधांशुरत्नं शरनेत्रसंमितम् ॥ ६७ ॥

गुणाः—मौक्तिकं च मधुरं सुशीतलं दृष्टिरोगशमनं विषापहम् । राजयक्ष्ममुखरोगनाशनं क्षीणवीर्यबलपुष्टिवर्धनम् ॥ ६८ ॥ मौक्तिकलक्षणम्—नक्षत्राभं वृत्तमत्यन्तमुक्तं स्निग्धं स्थूलं निर्मलं निर्व्रणं च । न्यस्तं धत्ते गौरवं यत्तुलायां तन्निर्मूल्यं मौक्तिकं सौख्यदायि ॥ ६९ ॥ यद्विच्छायं मौक्तिकं व्यङ्गकायं शुक्तिस्पर्शं रक्ततां चापि धत्ते । मत्स्याक्ष्याभं रूक्षमुत्ताननिम्नं नैतद्धार्यं धीमता दोषदायि ॥ ७० ॥ अष्टविधा मौक्तिकोत्पत्तिः—मातङ्गोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृच्छुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा । छायाः पाटलनीलपीतधवलास्तत्रापि सामान्यतः सप्तानां बहुशो न लब्धिरितरच्छौक्तेयकं तूल्बणम् ॥ ७१ ॥ मौक्तिकपरीक्षा—लवणक्षारक्षोदिनि पात्रे गोमूत्रपूरिते क्षिप्तम् । मर्दितमपि शालितुषैर्यदविकृतं तत्तु मौक्तिकं जात्यम् ॥ ७२ ॥

## ( १४ ) प्रवालम् । ( प्रवालकम् )

प्रवालं विद्रुमं रक्तं भूषणार्हं सुवल्लिजम् । सामुद्रजं महारक्तं वल्लीपाषाणसंभवम् ॥ ६४ ॥ पक्वबिम्बीफलच्छायं वृत्तायनमवक्रकम् । स्निग्धमव्रणकं स्थूलं

---

१ ट. 'क्षगपरिकोपना' ।

प्रवालं सप्तधा शुभम् ॥६५॥ पाण्डुरं धूसरं रूक्षं सव्रणं कण्डरान्वितम् । निर्भारं शुभ्रवर्णं च नेष्यते सप्तधा त्विदम् ॥ ६६ ॥

गुणाः—प्रवालकं सरं शीतं वातपित्तत्रिदोषनुत् । दृष्टिदोषविघाताय विषनाशाय चेष्यते ॥ ६७ ॥ क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु । विषभूतादिशमनं विद्रुमं नेत्ररोगनुत् ॥ ६८ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

प्रवालोऽङ्गारकमणिर्विद्रुमोऽम्भोधिपल्लवः । भौमरत्नं च रक्ताङ्गो रक्ताङ्कुरो लतामणिः ॥ ७३ ॥ प्रवालो मधुरोऽम्लश्च कफपित्तादिदोषनुत् । वीर्यकान्तिकरः स्त्रीणां धृतो मङ्गलदायकः ॥ ७४ ॥ प्रवाललक्षणम्—शुद्धं दृढघनं वृत्तं स्निग्धगात्रं सुरङ्गकम् । समं गुरु शिराहीनं प्रवालं धारयेच्छुभम् ॥ ७५ ॥ कुप्रवाललक्षणम्—गौररङ्गं जलाक्रान्तं वक्रं सूक्ष्मं सकोटरम् । रूक्षं कृष्णं लघु श्वेतं प्रवालमशुभं त्यजेत् ॥ ७६ ॥ प्रवालपरीक्षा—बालार्ककिरणरक्ता सागरसलिलोद्भवा प्रवाललता । या न त्यजति निजरुचिं निकषे घृष्टाऽपि सा स्मृता जात्या ॥ ७७ ॥

## ( १५ ) +शालिः ।

रक्तशालिर्महाशालिः सुगन्धप्रसवस्तथा । वृन्दारको मुष्टिकश्च शालीनां प्रवरस्तथा ॥ ६९ ॥ [1]शाबरः कृष्णशालिश्च[2] हासो वृन्तक एव च । कृष्ण[3]शालिश्च गौरश्च व्रीहयो विविधाः स्मृताः ॥ ७० ॥ श्वेतशालिर्महाशालिः[4] स चोक्तो वर्णपूरकः । खरशूकश्च काकश्च स च सूकरबालकः ॥ ७१ ॥ [5]अरण्यधान्यनामा च जलजः सप्रसादकः ।

## ( १६ ) *व्रीहिः ।

षष्टिकस्तु महाव्रीहिः कृष्णव्रीहिस्ततोऽनु च । यवकश्चैव पाकश्च रक्तसार-

---

+ वाचस्पतौ—'कण्डनेन विना शुक्ला हेमन्ताः शालयः स्मृताः'।

*वाचस्पतौ—'वार्षिकाः कण्डिताः शुक्ला व्रीहयश्चिरपाकिनः'।

ग्रन्थान्तरे—शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम् । शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् । शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः। यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम् ॥ कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यं च तत्स्मृतम् ।

अन्यच्च—शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः । मुद्गादि वैदलं शैम्ब्यं कङ्ग्वादि तृणधान्यकम् ॥ तुषारोदक उत्पन्नं धान्यं श्लेष्मरुजापहम् । स्वादुशुभ्रोदके जातं धान्यं पक्कं रुजापहम् ॥

---

१ क. ङ. शाम्बरः । घ. सौवीरः । २ ङ. छ. 'श्च हूस्वो हतक' । ३ क. ङ. 'ष्णव्रीहिश्च गौरश्च शालयो वि' । ४ ङ. 'लिर्हेमशा' । ५ घ. धान्यारण्यकनामा च नीवारस्तु प्रकीर्तितः ।

मुखस्तथा ॥ ७२ ॥ शालिव्रीहिगुणाः—शीतो गुरुस्त्रिदोषघ्नो मधुरो गौरषष्टिकः । किंचिद्धितो गुरुस्तस्मादपरो रसपाकतः ॥ ७३ ॥ महाशालिः परो वृष्यः कलमः श्लेष्मपित्तहा । मधुरश्चाम्लपाकश्च व्रीहिः पित्तकरो गुरुः ॥ ७४ ॥ अत्युष्णो बहुनिष्यन्दी पाटलस्तु त्रिदोषकृत् । बहूष्मा बहुविण्मूत्रो व्रीहिराशु त्रिदोषलः ॥ ७५ ॥ ग्रन्थान्तरे—शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्चसः । पित्तघ्नाल्पा वृष्यकफामूत्रला लघवो हिमाः ॥ ७६ ॥ रक्तशालिस्त्रिदोषघ्नश्चक्षुष्यो लघुमूत्रलः । तृष्णाघ्नो बलकृत्स्वर्यो हृद्बस्तिशमनः परः ॥ ७७ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

शालयः कलमा रुच्या वीहिश्रेष्ठा नृपप्रियाः । धान्योत्तमाश्च विज्ञेयाः कैदाराः सुकुमारकाः ॥ ७८ ॥ राजान्नषष्टिकसितेतररक्तमुण्डस्थूलाणुगन्धनिरपादिकशालिसंज्ञाः । व्रीहिस्तथेति दशधा भुवि शालयस्तु तेषां क्रमेण गुणनामगणं ब्रवाणि ॥ ७९ ॥ राजान्नं दीर्घशूकः खरिपुदिवसजं षष्टिको वर्णतो द्वौ निःशूको मुण्डशालिः स्वगुणविशदितः स्वाभिधानास्त्रयोऽन्ये । मासैर्योऽन्यस्त्रिभिः स्यात्स भवति निरपो योऽपि वृष्ट्यम्बुसंभूरेष स्याद्व्रीहिसंज्ञस्तादिति दशविधाः शालयस्तु प्रसिद्धाः ॥ ८० ॥ शालिर्नृपान्नं राजान्नं राजार्हं दीर्घशूककम् । धान्यश्रेष्ठं राजधान्यं राजेष्टं दीर्घकूरकम् ॥ ८१ ॥

गुणाः—राजान्नं तु त्रिदोषघ्नं सुस्निग्धं मधुरं लघु । दीपनं बलकृत्पथ्यं कान्तिदं वीर्यवर्धनम् ॥ ८२ ॥ राजान्नं त्रिविधं स्वशूकभिदया ज्ञेयं सितं लोहितं कृष्णं चेति रसाधिकं च तदिदं स्यादौत्तरोत्तर्यतः । त्रैविध्यादिह तण्डुलाश्च हरिताः[1] श्वेतास्तथा लोहिताः सामान्येन भवन्ति तेऽप्यथ गुणैः स्युः पूर्वपूर्वोत्तराः ॥ ८३ ॥

षष्टिकः षष्टिशालिः स्यात्षष्टिजः स्निग्धतण्डुलः । षष्टिवासरजः सोऽयं ज्ञेयो मासद्वयोद्भवः ॥ ८४ ॥

गुणाः—गौरो नीलः षष्टिकोऽयं द्विधा स्यादाद्यो रुच्यः शीतलो दोषहारी । बल्यः पथ्यो दीपनो वीर्यवृद्धिं दत्ते चास्मात्किंचिदूनो द्वितीयः ॥ ८५ ॥

कृष्णशालिः कालशालिः श्यामशालिः सितेतरः ।

---

बलपुष्टिप्रभावघ्नं चाऽऽशुकं मृत्तिकोद्भवम् । सुस्निग्धमृत्तिकोद्भूतं धान्यमोजोबलापहम् ॥ शूकधान्यं शिम्बिधान्यं परिसंवत्सरोषितम् । लघु पथ्यतमं प्रोक्तं गुर्वपथ्यतमं मतम् ॥ यवगोधूममाषाश्च तिलाश्चापि नवा हिताः । पुराणा विरसा रूक्षा न तथा गुणकारिणः ॥ धान्यं सर्वं नवं स्वादु गुरु श्लेष्मकरं स्मृतम् । तत्तु वर्षोषितं पथ्यं यतो लघुतरं हितम् ।

---

[1] झ. ढ. 'ताः पीता'।

गुणाः—कृष्णशालिस्त्रिदोषघ्नो मधुरः पुष्टिवर्धनः ॥ ८६ ॥ वर्णकान्तिकरो बल्यो दाहजिद्वीर्यवृद्धिकृत् ।

रक्तशालिस्ताम्रशालिः शोणशालिश्च लोहितः ॥ ८७ ॥

गुणाः—रक्तशालिः सुमधुरो लघुः स्निग्धो बलावहः । रुचिकृद्दीपनः पथ्यो मुखजाड्यरुजापहः ॥ ८८ ॥ सर्वामयहरो रुच्यो पित्तदाहानिलास्रजित् ।

मुण्डशालिर्मुण्डनको निःशूको यवशूकजः ।

गुणाः—मुण्डशालिस्त्रिदोषघ्नो मधुराम्लो बलप्रदः ॥ ८९ ॥

स्थूलशालिर्महाशालिः स्थूलाङ्गः स्थूलतण्डुलः । एवंगुणाढ्यशालेश्च नामान्यूह्यानि सूरिभिः॥ ९० ॥

गुणाः—महाशालिः स्वादुर्मधुरशिशिरः पित्तशमनो ज्वरं जीर्णं दाहं जठररुजमह्नाय शमयेत् । शिशूनां यूनां वा यदपि जरतां वा हितकरः सदा सेव्यः सर्वैरनलबलवीर्याणि कुरुते ॥ ९१ ॥

सूक्ष्मशालिः सूचिशालिः पोतशालिश्च सूचकः ।

गुणाः—सूक्ष्मशालिः सुमधुरो लघुः पित्तास्रदाहनुत् ॥ ९२ ॥ दीपनः पाचनश्चैव किंचिद्वातविकारजित् ।

गन्धशालिस्तु कलमाषो गन्धालुः कलमोत्तमः । सुगन्धिर्गन्धबहलः सुरभिर्गन्धतण्डुलः ॥ ९३ ॥

गुणाः—सुगन्धशालिर्मधुरोऽतिवृष्यदः पित्तश्रमास्रारुचिदाहशान्तिदः । स्तन्यस्तु गर्भस्थिरताल्पवातदः पुष्टिप्रदश्चाल्पकफश्च बल्यदः ॥ ९४ ॥ निरपो मधुरः स्निग्धः शीतलो दाहपित्तजित् । त्रिदोषशमनो रुच्यः पथ्यः सर्वामयापनुत् ॥ ९५ ॥ व्रीहिर्गौरो मधुरशिशिरः पित्तहारी कषायः स्निग्धो वृष्यः कृमिकफहरस्तापरक्तापहश्च । पुष्टिं दत्ते श्रमशमनकृद्वीर्यवृद्धिं विधत्ते रुच्योऽत्यन्तं जनयति मुदं वातकृन्मेचकोऽन्यः ॥ ९६ ॥

अथपृथक्शालिनामानि—( *मण्डकः स्थूलशालिश्च स्याद्बिम्बशालिकस्तथा । निजातिशाणहुल्याश्च बिम्बी कौसेन्दुकस्तथा ॥ ९७ ॥ प्रसाधिका जीरकाख्या सश्यामा मधुरा मता । राजानां मौलिकस्यापि शालिः स्यादुर्बरी यथा ॥९८॥ सूक्ष्मशालिः कुदितिका सुशालिर्गुरुशालयः । वनशालिर्गुण्डुरूकी क्षीरिका पङ्क्तयः पृथक् ॥ ९९ ॥ अशोचा पाटला व्रीहिर्व्रीहिको व्रीहिधान्यकः । व्रीहिसंधान्यमुद्दिष्टः अर्धधान्यस्तु व्रीहिकः ॥ १०० ॥ गर्भपाकणिकः षष्टिः षष्टिको

* एतदारभ्य ' बल्या मूत्रविवर्धनाः' इत्यन्तो धनुराकारचिह्नस्थो ग्रन्थो ज. ट. पुस्तकयोर्नास्ति ।

बलसंभवः । सुधान्यं पथ्यकारी च मुपविप्रज्ञविप्रियः ॥ १०१ ॥ शालिस्तु कलमाद्यस्तु कलमो नाकलायकः । कदम्बपुष्पगन्धश्च कलजातः कलोद्भवः ॥ १०२ ॥

गुणाः—पित्तश्लेष्मकरो वृष्यः कलमो मधुरस्तथा । लोहितो रक्तशालिः स्यात्काष्ठलोहितशालयः ॥ १०३ ॥

रुणाली रुणशालिस्तु रक्तशाल्यः सुशाल्यकः ।

गुणाः—तृष्णाघ्नो मलकृच्छ्रघ्नो हृद्यस्तु मतिताः परे ॥ १०४ ॥

महाशालिः सुगन्धा स्यात्सुगन्धा गन्धसंभवा । गन्धाढ्या गन्धमाल्या च गन्धानी गन्धमालिनी ॥ १०५ ॥

गुणाः—सुगन्धा मधुरा हृद्या कफपित्तज्वरास्रजित् । जलोद्भवा जलरुहा जलजाता सुजातका ॥ १०६ ॥

रक्ताङ्कुलं सुकारं च कुङ्कुमं समवर्णजा ।

गुणाः—कुङ्कुमा मधुरा शीता रक्तपित्तातिसारजित् ॥ १०७ ॥

तिलजा नीलनामा स्याद्दीर्घकृष्णा सूपूजका । मधुरा च सुगन्धा च तिलवासी निगद्यते ॥ १०८ ॥ राजादनी राजप्रिया राजभावा मुनिप्रिया । तिलनी तिलपर्णी च आमगन्धा प्रवासिनी ॥ १०९ ॥

गुणाः—कफपित्तहराः स्निग्धाः कासश्वासहराः पराः । शीघ्रपाककरा हृद्या लघवः शुक्रवर्धनाः ॥ ११० ॥ कोमलाहारसंभूतास्तिलवासीमहागुणाः । पाण्डुरोगेषु शूलेषु चाऽऽमवाते प्रशस्यते ॥ १११ ॥

वक्तको वक्तशालिः स्याद्दीर्घस्तु आशुकोपितः । राजप्रिया पथ्यकरा मध्यदेशसमुद्भवा ॥ ११२ ॥

गुणाः—वक्तिका लघवः प्रोक्ता मुखपाककरास्तथा ।

कलाटकः कलुर्वा स्याद्गुरुसो गरुडः स्मृतः ॥ ११३ ॥ गुरुवको गुरडकः सुखभोजी सुभोजकः ।

गुणाः—कविलो गन्धकारी च लघुपाककरोऽपि च ॥११४॥ कफपित्तहरः स्वादुः शूलश्वासनिवारणः । ग्रहणीगुल्मकुष्ठघ्नं विकलं भोजने शुभम् ॥११५॥ कूष्माण्डिका कुम्भडिका रक्ता सुमधुरा गुरुः । सुगन्धा दुर्जरा पीता स्थूलतण्डुलकोमला ॥ ११६ ॥

कम्भिका मधुरा स्निग्धा वातपित्तनिबर्हिणी । सौरभं शुण्डिकः शुण्डी कौसुम्भी कठिनोऽफलः ।

गुणाः—कौसुम्भी लघुपाका च वातपित्तनिबर्हिणी ॥ ११७ ॥

उम्पास उम्पिकाशालिर्मधुरा गुरुतण्डुला । बहुशूका सुगन्धाढ्या तारुण्यजनवल्लभा ॥ ११८ ॥

गुणाः—उम्पिका मधुरा स्निग्धा सुगन्धा च कषायका । पित्तश्लेष्महरा रूक्षा ह्यम्पिकाऽनिलनाशनी ॥ ११९ ॥

पक्षिकः पक्षिनाबल्यः पक्षिराजो मुनिप्रियः । स्थूलतण्डुलसंभूता गन्धो बहलगन्धकृत् ॥ १२० ॥

शालिविशेषाः—दग्धायामवनौ जाताः शालिनो लघुपाकिनः । किंचित्सतिक्ता मधुराः पाचना बलवर्धनाः ॥ १२१ ॥ केदारा मधुरा वृष्या बल्याः पित्तविवर्धनाः । ईषत्कषायाल्पमला गुरवः कफनाशनाः ॥ १२२ ॥ शालयो ये छिन्नरुहा रूक्षास्ते बद्धवर्चसः । रोप्यानिरोप्या लघवः शीघ्रपाका गुणोत्तराः ॥ १२३ ॥ विदाहिनो दोषहरा बल्या मूत्रविवर्धनाः ) ॥

## ( १७ ) अक्षता ( यवः )

अक्षतास्तीक्ष्णशूकाश्च यवाश्चैव तु नामतः ।

गुणाः—रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ॥ ७८ ॥ वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफाञ्जयेत् । पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ॥ ७९ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

यवस्तु मेध्यः सितशूकसंज्ञो दिव्योऽक्षतः कञ्चुकिधान्यराजौ । स्यात्तीक्ष्णशूकस्तुरगप्रियश्च सक्तुर्हयेष्टश्च पवित्रधान्यम् ॥ १२४ ॥

गुणाः—यवः कषायो मधुरः सुशीतलः प्रमेहजित्तिक्तकफापहारकः । अशूकमण्डस्तु यवो बलप्रदो वृष्यश्च नृणां बहुवीर्यपुष्टिदः ॥ १२५ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

### वेणुजः ( अक्षताविशेषः ) ॥ ९ ॥

वेणुजो वेणुबीजश्च वंशजो वंशतण्डुलः । वंशधान्यं च वंशाह्वो वेणुर्वंशद्विधायवः ॥ १२६ ॥

गुणाः—शीतः कषायो मधुरस्तु रूक्षो मेहक्रिमिश्लेष्मविषापहश्च । पुष्टिं च वीर्यं च बलं च दत्ते पित्तापहो वेणुयवः प्रशस्तः ॥ १२७ ॥

## ( १८ ) वासन्ताः ( मुद्गाः )

वासन्ताः कृष्णमुद्गाश्च शारदा हरितास्तथा । मुद्गानां नामतश्चोक्ताः सूपश्रेष्ठा रसोत्तमाः ॥ ८० ॥

---

१ ज. ट. 'णुर्वेशाद्विजाजवाः ।

गुणाः—मुद्गः किलाटो माङ्गल्यो हरितः शारदोऽपि च । पित्तप्रसेको वसुको माधवः प्रवरोऽसितः ॥ ८१ ॥ मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः । स्वादुरल्पानिलो नेत्र्यो वन्योऽप्येतद्गुणः स्मृतः ॥ ८२ ॥ हरितः प्रवरस्तेषां तच्छाकं तिक्तमुत्तमम् । कृष्णमुद्गस्तु वरको राजमुद्गस्तु खण्डकः ॥८३॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

मुद्गस्तु सूपश्रेष्ठः स्याद्वर्णार्हश्च रसोत्तमः । भुक्तिप्रदो हयानन्दो भूबलो वाजिभोजनः ॥ १२८ ॥ कृष्णमुद्गस्तु वासन्तो माधवश्च सुराष्ट्रजः ।

गुणाः—कृष्णमुद्गस्त्रिदोषघ्नो मधुरो वातनाशनः ॥ १२९ ॥ लघुश्च दीपनः पथ्यो बलवीर्याङ्गपुष्टिदः । शारदस्तु हरिन्मुद्गो धूसरोऽन्यश्च शारदः ॥ १३० ॥

गुणाः—हरिन्मुद्गः कषायश्च मधुरः कफपित्तहृत् । रक्तमूत्रामयघ्नश्च शीतलो लघुदीपनः ॥ १३१ ॥ तद्वच्च धूसरो मुद्गो रसवीर्यादिषु स्मृतः ।

गुणाः—कषायो मधुरो रुच्यः पित्तवातविबन्धकृत् ॥ १३२ ॥

मुद्गयूषगुणाः—पित्तस्वरार्तिशमनं लघु मुद्गयूषं संतापहारि तदरोचकनाशनं च । रक्तप्रसादनमिदं यदि सैन्धवेन युक्तं तदा भवति सर्वरुजापहारि ॥ १३३ ॥

## ( १९ ) माषः ( राजमाषः )

माषो बीजवरो धारीश्चवलो राजमाषकः । *राजमाषो नीलमाषो नृपमाषो नृपोचितः ॥ ८४ ॥

गुणाः—*कफपित्तहरो रुच्यो वातकृद्बलदायकः । राजमाषः सरो वृष्यः कफपित्तास्रशुक्रनुत् ॥ ८५ ॥ सुस्वादुः शीतलो रूक्षः कषायो विषदो गुरुः ।

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

* ।

गुणाः—* ॥ १३४ ॥

*क्षुवः क्षुधाभिजननश्चपलो दीर्घशिम्बिकः । सुकुमारो वृत्तबीजो मधुरः क्षवकश्च सः ॥ १३५ ॥

गुणाः—क्षुवः कषायमधुरः शीतलः कफपित्तजित् । वृष्यः श्रमहरो रुच्यः पवनाध्मानकारकः ॥ १३६ ॥

## ( २० ) कोद्रवः ।

कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः ।

गुणाः—कोद्रवः शीतलो ग्राही विषपित्तकफाञ्जयेत् ॥ ८६ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

---

* क्षुवः 'लघुचवळी' इति ख्याते ।

कोद्रवः कोरदूषश्च कुद्दालो मदनाग्रजः। स च देशविशेषेण नानाभेदः प्रकीर्तितः १३७ ॥

गुणाः—कोद्रवो मधुरस्तिक्तो व्रणिनां पथ्यकारकः। कफपित्तहरो रूक्षो मोहकृद्वातलो गुरुः ॥ १३८ ॥

## ( २१ ) नीवारः।

नीवारस्तापसश्चैव मुनिभक्तप्रसादितः। अरण्यधान्यनामा च रसिकश्च प्रकीर्तितः ॥ ८७ ॥

गुणाः—नीवारो मधुरः स्निग्धः पवित्रः पथ्यदो लघुः।

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

नीवारोऽरण्यधान्यं स्यान्मुनिधान्यं तृणोद्भवम्।

गुणाः—नीवारो मधुरः स्निग्धः पवित्रः पथ्यदो लघुः ॥ १३९ ॥

## ( २२ ) श्यामाकः ( श्यामकः )

श्यामाकस्तृणबीजश्च मुनिभक्ष्यो गवां प्रियः। * सुकुमारो राजधान्यं तृणबीजोत्तमश्च सः ॥ ८८ ॥

गुणाः—*श्यामाको मधुरः स्निग्धः कषायो लघुशीतलः। * वातकृत्कफ-पित्तघ्नः संग्राही विषदोषनुत् ॥ ८९ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

श्यामाकः श्यामकः श्यामस्त्रिबीजः स्यादविप्रियः ॥ * ॥ १४० ॥

गुणाः—* । * ॥ १४१ ॥

## ( २३ ) प्रियङ्गुः ( कङ्गुः )

प्रियङ्गुः कङ्गुकश्चैव चीनकः पीततण्डुलः। अस्थिसंबन्धनश्चैव कङ्गनी पटु(?) कथ्यते ॥ ९० ॥

गुणाः—* प्रियङ्गुर्मधुरो रुच्यः कषायः स्वादुशीतलः। * वातकृत्पित्त-दाहघ्नो रूक्षो भग्नास्थिबन्धकृत् ॥ ९१ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

कङ्गुणी कङ्गुनी प्रोक्ता चीनकः पीततण्डुलः। वातलः सुकुमारश्च स च नानाविधाभिधः ॥ १४२ ॥

---

१ ङ. छ. °सादकः। अ।

गुणाः— * । * ॥ १४३ ॥

वरकः स्थूलकङ्गुश्च रूक्षः स्थूलप्रियङ्गुकः ।

गुणाः—वरको मधुरो रूक्षः कषायो वात्तपित्तकृत् ॥ १४४ ॥

## ( २४ ) मकुष्ठका ( वनमुद्गः )

मकुष्ठका निरूढा च वनमुद्गः कृमीलकः ।

गुणाः—मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः ॥ ९२ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

मुकुष्ठको मयष्टश्च वनमुद्गः कृमीलकः । अमृतोऽरण्यमुद्गश्च वल्लीमुद्गश्च कीर्तितः ॥ १४५ ॥

गुणाः—मुकुष्ठकः कषायः स्यान्मधुरो रक्तपित्तजित् । ज्वरदाहहरः पथ्यो रुचिकृत्सर्वदोषहृत् ॥ १४६ ॥

## ( २५ ) आढकी ।

* आढकी तुवरी तुल्या करवीरभुजा तथा । * वृत्तबीजा पीतपुष्पा श्वेता रक्ताऽसिता त्रिधा ॥ ९३ ॥

गुणाः—आढकी कफपित्तघ्नी किंचिन्मारुतकोपनी । कषाया स्वादुसंग्राहिकटुपाका हिमा लघुः ॥ ९४ ॥ मेदःश्लेष्मास्रपित्तेषु हिता लेपोपसेकयोः ।

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

* । * ॥ १४७ ॥

गुणाः—आढकी तु कषाया च मधुरा कफपित्तजित् । ईषद्वातकरा रुच्या विदुला गुरुग्राहिका ॥ १४८ ॥

## ( २६ ) मसूरिका ।

मसूरामधुरासूप्यापृथवः पित्तभेषजम् । हरेणवः सतीनाश्च चणकाश्चाकरालकाः ॥ ९५ ॥

गुणाः—* मसुरो मधुरः शीतः संग्राही कफपित्तहा । * वातामयकरश्चैव मूत्रकृच्छ्रहरो लघुः ॥ ९६ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

मसुरो रागदालिस्तु मङ्गल्यः पृथुबीजकः । शूरः कल्याणबीजश्च गुरुबीजो मसूरकः ॥ १४९ ॥

गुणाः—* । * ॥ १५० ॥

## ( २७ ) गोधूमः ।

गोधुमो यवकश्चैव हुडम्बो म्लेच्छभोजनः । गिरिजा सैतिनामा च रसिकश्च प्रकीर्तितः ॥ ९७ ॥

गुणाः—वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा । संधानो बृंहणो बल्यो गोधूमः स्थैर्यकृत्सरः ॥ ९८ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

गोधूमो बहुदुग्धः स्यादपूपो म्लेच्छभोजनः । यवनो निस्तुषः क्षीरी रसालः सुमनश्च सः ॥ १५१ ॥

गुणाः—गोधूमः स्निग्धमधुरो वातघ्नः पित्तदाहकृत् । गुरुः श्लेष्मामदो बल्यो रुचिरो वीर्यवर्धनः ॥ १५२ ॥ स्निग्धोऽन्यो लघुगोधूमो गुरुर्वृष्यः कफापहः । आमदोषकरो बल्यो मधुरो वीर्यपुष्टिदः ॥ १५३ ॥

## ( २८ ) धान्यमाषः ( माषः )

धान्यमाषस्तु विज्ञेयः कुरुविन्दो वृषाकरः । मांसलश्च बलाढ्यश्च पित्र्यश्च पितृजोत्तमः ॥ ९९ ॥

गुणाः—स्निग्धोष्णो मधुरो वृष्यो मेदोमांसबलप्रदः । वातानुबृंहणो बल्यो माषो बहुबलो गुरुः ॥ १०० ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

माषस्तु कुरुविन्दः स्याद्धान्यवीरो वृषाकरः । मांसलश्च बलाढ्यश्च पित्र्यश्च पितृजोत्तमः ॥ १५४ ॥

गुणाः—माषः स्निग्धो बहुमलकरः शोषणः श्लेष्मकारी वीर्येणोष्णो झटिति कुरुते रक्तपित्तप्रकोपम् । हन्याद्वातं गुरुबलकरो रोचनो भक्ष्यमाणः स्वादुर्नित्यं श्रमसुखवतां सेवनीयो नराणाम् ॥ १५५ ॥

## ( २९ ) हरिमन्थः ( चणकः )

हरिमन्थाः सुगन्धाश्च चणकाः कृष्णकञ्चुकाः ।

गुणाः—कफास्रपित्तपुंस्त्वघ्नाश्चणका वातला हिमाः ॥ १०१ ॥ लघवो भृष्टचणका आमक्लमहराः पराः । छर्दिघ्ना रोचनाः शुष्कास्तेजोवीर्यबलप्रदाः ॥ १०२ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

---

१ ङ. °व दद्रुवाम्ले°। छ. °व द्रुद्रुर्वाम्ले° । त. °व हुद्रवाम्ले° । २ ङ. °नः । घृष्टः समीतना° । छ. °नः । घृष्टसमीतना° । ३ ण. सभ्यनामा । ४ ट. °वमाभिस्तु° ।

चणस्तु हरिमन्थः स्यात्सुगन्धः कृष्णकञ्चुकः। बालभोज्यो वाजिभक्षश्चणकः कञ्चुकी च सः ॥ १५६ ॥

गुणाः—चणको मधुरो रूक्षो मेहजिद्वातपित्तकृत्। दीप्तिवर्णकरो बल्यो रुच्यश्चाऽऽध्मानकारकः ॥ १५७ ॥

हरिमन्थविशेषगुणाः—आमश्चणः शीतलरुच्यकारी संतर्पणो दाहतृषापहारी। गौल्योऽश्मरीशोपविनाशकारी कषाय ईपत्कटुवीर्यकारी ॥ १५८ ॥ कृष्णस्तु चणकः शीतो मधुरः कासपित्तजित्। पित्तातिसारकासघ्नो बल्यश्चैव रसायनः ॥ १५९ ॥ चणो गौरस्तु मधुरो बलकृद्रोचनः परः । श्वेतो वातकरो रुच्यः पित्तघ्नः शिशिरो गुरुः ॥ १६० ॥ सुभृष्टचणको रुच्यो वातघ्नो रक्तदोषकृत् । वीर्येणोष्णो लघुश्चैव कफशैत्यापहारकः ॥ १६१ ॥ चणस्य यूषं मधुरं कषायं कफापहं वातविकारहेतुः । श्वासोर्ध्वकासक्लमपीनसानां करोति नाशं बलदीपनत्वम् ॥ १६२ ॥ चणोदकं चन्द्रमरीचिशीतं पीतं प्रगे पित्तरुजापहारि । पुष्टिप्रदं नैजगुणं च पाके संतर्पणं मञ्जुलमाधुरीकम् ॥ १६३ ॥

## कलायः ( हरिमन्थविशेषः ) ॥ ६ ॥

*कलायो मुण्डचणको हरेणुश्च सतीनकः। त्रासनो नलकः कण्ठी हरेणुर्वर्तुलः स्मृतः ॥ १०३ ॥

गुणाः—वर्तुलः शीतलो ग्राही कफपित्तहरो लघुः । विपाके मधुरो रूक्षो वातलो भक्षणप्रियः ॥ १०४ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

* । त्रासनो[1] नालकः कण्ठी सतीनश्च हरेणुकः ॥ १६४ ॥

गुणाः—कलायः कुरुते वातं पित्तदाहकफापहः । रुचिपुष्टिप्रदः शीतः कषायश्चाऽऽमदोषकृत् ॥ १६५ ॥

## ( ३० ) कुलित्थः ।

कुलित्थास्ताम्रवर्णाश्च कलावृत्तानिलापहाः । कर्षणाः पीतमुद्गाश्च अलिस्कन्धाः सुराष्ट्रकाः ॥ १०५ ॥

गुणाः—ऊष्णः कुलित्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः। शुक्राश्मरीगुल्मनिषूदनश्च संग्राहकः पीनसकासहन्ता ॥ १०६ ॥ आनाहमेदोरुचिकीलहिक्काश्वासापहः शोणितपित्तकृच्च । बलासहन्ता नयनामयघ्नो विशेषतो वन्यकुलित्थ उक्तः ॥ १०७ ॥

---

१ ज. शमनो।

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

कुलित्थस्ताम्रबीजश्च श्वेतबीजः सितेतरः ।

गुणाः—कुलित्थस्तु कषायोष्णो रूक्षो वातकफापहः ॥ १६६ ॥

## जूर्णा (धान्यविशेषः) ॥ ७ ॥

जूर्णाह्वा योनलाः प्रोक्ता यावनाला युगंधराः ।

गुणाः—कफपित्तहरा वृष्या मृदवो गुरवो हिमाः । रूक्षा विष्टम्भिनश्चैव न पथ्या गुदरोगिणाम् ॥ १०८ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

यावनालो यवनालः शिखरी वृत्ततण्डुलः । दीर्घनालो दीर्घशरः क्षेत्रेक्षुश्चेक्षुपत्रकः ॥ १६७ ॥

धवलो यावनालस्तु पाण्डुरस्तारतण्डुलः । नक्षत्राकृतिविस्तारो वृत्तो मौक्तिकतण्डुलः ॥ १६७ ॥ जूर्णाह्वयो देवधान्यं जूर्णलो बीजपुष्पकः । जूनलः पुष्पगन्धश्च सुगन्धः सेगुरुन्दकः ॥ १६८ ॥

गुणाः—धवलो यावनालस्तु गौल्यो बल्यस्त्रिदोषजित् । वृष्यो रुचिमदोऽर्शोघ्नः पथ्यो गुल्मव्रणापहः ॥ १७० ॥ अथ तुवरयावनालस्तुवरश्च कषाययावनालश्च । स रक्तयावनालो हितलो हितस्तुवरधान्यश्च ॥ १७१ ॥

गुणाः—तुवरो यावनालस्तु कषायोष्णो विशोफकृत् । संग्राही वातशमनो विदाही शोषकारकः ॥ १७२ ॥ शारदो यावनालस्तु श्लेष्मदः पिच्छलो गुरुः । शिशिरो मधुरो वृष्यो दोषघ्नो बलपुष्टिदः ॥ १७३ ॥

## करटः (धान्यविशेषः) ॥ ८ ॥

करटाश्च करालाश्च त्रिपुटा रूक्षणात्मकाः ।

गुणाः—करालः कफपित्तघ्नो ग्राही शीतोऽपि वातलः ॥ ११९ ॥ त्रिपुटोऽपि गुणैरेवं तच्छाकं कफपित्तजित् ।

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

लङ्का कराला त्रिपुटा काण्डिका रूक्षणात्मिका ।

गुणाः—लङ्का रुच्या हिमा गौल्या पित्तजिद्वातकृद्गुरुः ॥ १७४ ॥

## निष्पावः (धान्यविशेषः) ॥ ९ ॥

निष्पावाः श्वेतशिम्बाश्च पालकाख्या मुखप्रियाः ।

---

१ ट. 'रः क्षुद्रेक्षु' । २ ङ. छ. 'पुटाः खाण्डिका मताः । गु' ।

गुणाः—निष्पावोऽनिलपित्तास्रमूत्रस्तन्यकरः सरः। विदाह्युष्णो गुरुः शोषशोफकृच्छ्रुक्रनाशनः ॥ ११० ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

मधुरः श्वेतनिष्पावो माध्वीका मधुशर्करा। पलंकषा स्थूलशिम्बी वृत्ता मधुसिता सिता ॥ १७५ ॥

गुणाः—मधुशर्करा सुरुच्या मधुराल्पकषायका । शिशिरा वातुला बल्याऽप्याध्मानगुरुपुष्टिदा ॥ १७६ ॥ सोऽन्यश्च कटुनिष्पावः खर्बुरो नदीजस्तथा ।

गुणाः—नदीनिष्पावकस्तिक्तः कटुकोऽस्रप्रदो गुरुः । वातलः कफदो रूक्षः कषायो विषदोषनुत् ॥ १७७ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

## रागी ( धान्यविशेषः) ॥ १० ॥

रागी तु लाञ्छनः स्याद्बहुदलकणिशश्च गुच्छकणिशश्च ।

गुणाः—तिक्तो मधुरकषायः शीतः पित्तास्रनाशनो बलदः ॥ १७८ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

## कुरी ( धान्यविशेषः ) ॥ ११ ॥

कुरी[1] तु तृणधान्यं स्यान्मधुरं तद्बलप्रदम् । हरितं वार्धकं पक्वं वाजिनां पुष्टिदायकम् ॥ १७८ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

## गोजिह्वा ( धान्यविशेषः )॥ १२॥

गोजिह्वा खरपत्री स्यात्[2]मतनादार्विके तथा। अधोमुखा धेनुजिह्वा चाधःपुष्पी च सप्तधा ॥ १८० ॥ अन्यच्च—गवेधुका च गोजिह्वा कर्षणीया सिता तथा ।

गुणाः—गोजिह्वा कटुका तीव्रा शीतला पित्तनाशनी । व्रणसंरोपणी चैव सर्वदन्तविषार्तिजित् ॥ १८१ ॥

राजनिघण्टौ मूलकादिः सप्तमो वर्गः—

## राजाद्रिः ( धान्यविशेषः ) ॥ १३ ॥

राजाभिधानपूर्वा तु नगाह्वाद्यपरेण तु । राजाद्रिः स्याद्राजगिरिर्ज्ञातव्या राजशाकिनी ॥ १८२ ॥

---

१ ज. कुतुरी तृ॰ २ ज. स्याद्भूतोन्मादार्तिहा तथा । ट. स्याद्भूतोन्मादार्तिका तथा ।

गुणाः—राजशाकिनिका रुच्या पित्तघ्नी शीतला च सा। सैवातिशीतला रुच्या विज्ञेया स्थूलशाकिनी ॥ १८३ ॥

## मेथिका ( धान्यविशेषः ) ॥ १४ ॥

मेथिका दीपनी चोग्रा कुञ्चिका बहुपुत्रिका। मल्लिका शीतवीर्या च ज्योतिष्का वल्लरी शिखी ॥ १११ ॥

गुणाः—*मेथिका कटुरुष्णा च रक्तपित्तप्रकोपनी। अरोचकहरा दीप्तिकरी वातप्रणाशिनी ॥ ११२ ॥

## मेथिका ( मेथिकाविशेषः ) ॥ १५ ॥

मेथिका वास्तिका सेलुरहित्थो वनमेथिका। अहित्थोऽल्पगुणस्तस्या वाजिनासस्तु पूजितः ॥ ११३ ॥

राजनिघण्टौ पर्पटादिः पञ्चमो वर्गः—

मेथिका मेथिनी मेथी दीपिका[1] बहुपत्रिका। वेधनी गन्धबीजा च ज्योतिर्गन्धफला तथा ॥ १८४ ॥ वल्लरी चन्द्रिका मेथा[2] मिश्रपुष्पा च कैरवी। कुञ्चिका बहुपर्णी च पीतबीजा मुनीन्दुधा ॥ १८५ ॥

गुणाः—*। अरोचकहरा दीप्तिकरी वातघ्नदीपनी ॥ १८६ ॥

## प्रतरीर्कः ( अतसी ) ( धान्यविशेषः ) ॥ १६ ॥

प्रतरीर्कतमा प्रोक्ता रुद्रपत्नी च वल्कला। उमा सुनीलपुष्पा च वसुतर्कासुकापि(?) च ॥११४॥ शीता तैलफला चैव पालिका पूतिपूरकः। अन्यच्च—अतसी नीलपुष्पी च पार्वती स्यादुमा क्षुमा ॥ ११५ ॥

गुणाः—रुद्रपत्नी तु मधुरा पित्तहा बलकारिका। कफवातकरी चेषत्पित्तहृत्कुष्ठवातजित् ॥ ११६ ॥ अन्यच्च—अतसी मधुरा तिक्ता स्निग्धा पाके कटुर्गुरुः। उष्णासृक्शुक्रवातघ्नी कफपित्तविनाशिनी ॥ ११७ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

अतसी पिच्छला देवी मदगन्धा मदोत्कटा। उमा क्षुमा हैमवती सुनीला नीलपुष्पिका ॥ १८७ ॥

गुणाः—अतसी मदगन्धा स्यान्मधुरा बलकारिका। कफवातकरी चेषत्पित्तहृत्कुष्ठवातनुत् ॥ १८८ ॥

---

१ ट. दीपनी। २ ट. मन्था।

## *कुसुम्भम् ( धान्यविशेषः ) ॥ १७ ॥

कुसुम्भं पावकं पीतमलक्तं वस्त्ररञ्जनम् । तद्बीजं कीलता लट्वा शुद्धा पयोत्तरं तथा ॥ ११८ ॥ अन्यच्च—कुसुम्भं स्याद्वह्निशिखं वस्त्ररञ्जक-संज्ञितम् ।

गुणाः—कुसुम्भं वातलं रूक्षं रक्तपित्तकफापहम् ॥ ११९ ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

ज्ञेयोऽ†रण्यकुसुम्भः स्यात्कौसुम्भश्चाग्निसंभवः ।

गुणाः—कौसुम्भः कटुकः पाके श्लेष्महृद्दीपनश्च सः ॥ १८९ ॥

## खस्तिलः ( धान्यविशेषः ) ॥ १८ ॥

खस्तिलस्तिलभेद[1]स्तु शुभ्रपुष्पो लसत्फलः ।

गुणाः—वृष्यो बल्यश्च[2] खस्तिलः श्लेष्मघ्नो वातजिद्गुरुः ॥ १२० ॥

राजनिघण्टौ शताह्वादिश्चतुर्थो वर्गः—

खस्खसः सूक्ष्मबीजः स्यात्सुबीजः सूक्ष्मतण्डुलः ।

गुणाः—खस्खसो मधुरः पाके कान्तिवीर्यबलप्रदः ॥ १९० ॥

## खस्तिलवल्कलः ॥ १९ ॥

खस्तिलवल्कलगुणाः—वल्कलस्तत्फलो ज्ञेयो रूक्षो ग्राही विशोषणः ।

## +अफूकम् ( उपविषम् ) ( खस्तिलनिर्यासः ) ॥ २० ॥

अफूकं तद्द्रवो भूतमहिफेनमफेनकम् ।

गुणाः—अफूकं शोधनं ग्राहि श्लेष्मघ्नं वातपित्तलम् ॥ १२१ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

अफेनं खस्खसरसो निफेनं चाहिफेनकम् ।

गुणाः—अफेनं संनिपातघ्नं वृष्यं बल्यं च मोहदम् ॥ १९१ ॥

---

*राजनिघण्टौ 'कुसुम्भस्य' पर्यायशब्दा न दृश्यन्ते ।

†अरण्यकुसुम्भः 'वनकुसुंभः' इति ख्याते ।

+अफूकशोधनम्—अहिफेनं शृङ्गबेररसैर्भाव्यं त्रिसप्तधा । शुद्धयुक्तेषु योगेषु योजयेत्तद्विधानतः ॥

गुणाः—अफुकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तलम् । मदकृद्दाहकृच्छुक्रस्तम्भनायासमेहकृत् ॥ अतिसारे ग्रहण्यां च हितं दीपनपाचनम् । सेवितं दिवसैः कैश्चिद्भ्रमयत्यन्यथाऽर्तिकृत् ॥ ३ ॥

---

१ त. 'भेदः शसतिलः । २ त. बल्यः शसतिलः ।

## तिलः ( धान्यविशेषः ) ॥ २१ ॥

*तिलस्तु होमधान्यं स्यात्पवित्रः पितृतर्पणे । *पापघ्नः पूतधान्यश्च †जार्तिलस्तु वनोद्भवः ॥ १२२ ॥

गुणाः—तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः । विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत् ॥ १२३ ॥ बल्यः केश्यो हिमस्पर्शस्त्वच्यः स्तन्यो व्रणे हितः । दन्त्योऽल्पमूत्रकृद्ग्राही वातघ्नोऽग्निमतिप्रदः ॥ १२४ ॥

राजनिघण्टौ शाल्यादिः षोडशो वर्गः—

* । * ॥ १९२ ॥

गुणाः—स्निग्धो वर्णबलाग्निवृद्धिजननस्तन्यानिलघ्नो गुरुः सोष्णः पित्तकरोऽल्पमूत्रकरणः केश्योऽतिपथ्यो व्रणे । संग्राही मधुरः कषायसहितस्तिक्तो विपाके कटुः कृष्णः पथ्यतमः सितोऽल्पगुणदः क्षीणास्तथाऽन्ये तिलाः ॥ १९३ ॥

## ( ३१ ) तैलम् ।

तैलं स्नेहोत्तमं प्रोक्तं तिलजं तिलसंभवम् । अभ्यञ्जनं मृक्षणं च तच्च मर्दनकं स्मृतम् ॥ १२५ ॥

गुणाः—कषायं च रसे स्वादु सूक्ष्ममुष्णं व्यवायि च । पित्तलं बद्धविण्मूत्रं न च श्लेष्मविवर्धनम् ॥ १२६ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

तैलं यत्तिलसर्षपोदितकुसुम्भोत्थातसीधान्यजं यच्चैरण्डकरञ्जकेङ्गुदिफलैर्निम्बाक्षनैर्गुण्डकैः । ज्योतिष्मत्यभयोद्भवं मधुरिकाकोशाम्रचित्राभवं कर्पूरत्रपुसादिजं च सकलं सिद्ध्यै क्रमात्कथ्यते ॥ १९४ ॥

## तिलतैलम् ( तैलविशेषः ) ॥ २२ ॥

गुणाः—स्नानाभ्यङ्गावगाहेषु तिलतैलं विशिष्यते । तद्वद्बस्तिष्वपानेषु नस्यकर्णाक्षिपूरणे ॥ १२७ ॥ अन्नपानविधौ वाऽपि प्रयोज्यं वातशान्तये । छिन्नभिन्नयुताल्पिष्ठमथितक्षतपातिते ॥ १२८ ॥ भग्ने स्फुटितविद्धाग्निदग्धविश्लिष्टदारिते । भयाभिहितनिर्भुग्ने मृगव्यालादिभक्षिते ॥ १२९ ॥ तैलयोगश्च संस्कारात्सर्वरोगापहो मतः ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

---

† 'जटिलस्तु' इतिपाठः ।

---

१ ट. 'अकैर्गुडफं' ।

तिलतैलमलं करोति कैश्यं मधुरं तिक्तकषायमुष्णतीक्ष्णम् । बलकृत्कफ-वातजन्तुखर्जूव्रणकण्डूतिहरं च कान्तिदायि ॥ १९५ ॥

## अतसीतैलम् ( तैलविशेषः ) ॥ २३ ॥

गुणाः—वातघ्नं मधुरं तेषु क्षौमं तैलं बलासकृत् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

मधुरं त्वतसीतैलं पिच्छिलं चानिलापहम् । मदगन्धि कषायं च कफकासा-पहारकम् ॥ १९६ ॥

## सर्षपतैलम् ( तैलविशेषः ) ॥ २४ ॥

गुणाः—कटुपाकमचक्षुष्यं स्निग्धोष्णं कफनाशनम् । कृमिघ्नं सार्षपं तैलं कण्डूकुष्ठापहं लघु ॥ १३० ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

सर्षपतैलं तिक्तं कटुकोष्णं वातकफविकारघ्नम् । पित्तास्रदोषदं कृमिकुष्ठघ्नं तिलजवच्च चक्षुष्यम् ॥ १९७ ॥

## एरण्डतैलम् ( तैलविशेषः ) ॥ २५ ॥

गुणाः—तैलमेरण्डजं बल्यं गुरूष्णं मधुरं सरम् । कफमेदोनिलहरं लेखनं कटु दीपनम् ॥ १३१ ॥ हृद्बस्तिपार्श्वजानूरुत्रिकपृष्ठास्थिशूलिनाम् । आम-दोषेषु वातासृक्प्लीहोदावर्तशोफिनाम् ॥ १३२ ॥ हितं वातामयस्याग्र्यं ग्रन्थि-बन्धविकारिणाम् । तिक्तोष्णं पिच्छलं विस्रं रक्तैरण्डोद्भवं भृशम् ॥ १३३ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

एरण्डतैलं कृमिदोषनाशनं वातामयघ्नं सकलाङ्गशूलहृत् । कुष्ठापहं स्वादु रसायनोत्तमं पित्तप्रकोपं कुरुतेऽतिदीपनम् ॥ १९८ ॥

## कुसुम्भतैलम् ( तैलविशेषः ) ॥ २६ ॥

गुणाः—कुसुम्भतैलमुष्णं च विपाके कटुकं गुरु । विदाहि च विशेषेण तच्च रोगप्रकोपनम् ॥ १३४ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

कुसुम्भतैलं कृमिहारि तेजोबलावहं यक्ष्ममलापहं च । त्रिदोषकृत्पुष्टिबलक्षयं च करोति कण्डूं च करोति दृष्टेः ॥ १९९ ॥

---

१ छ. 'ण सर्वदोषप्र' । २ जं. दृष्टया ।

## कोशाम्रजतैलम् ( तैलविशेषः ) ॥ २७ ॥

गुणाः—सरं कोशाम्रजं तैलं कृमिकुष्ठविषापहम् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

सरं कोशाम्रजं तैलं कृमिकुष्ठव्रणापहम् । तिक्ताम्लमधुरं बल्यं पथ्यं रोचनपाचनम् ॥ २०० ॥

## *आत्मगुप्तातैलम् ( तैलविशेषः ) ॥ २८ ॥

गुणाः—गुरूष्णं स्निग्धमधुरं कषायं चाऽऽत्मगुप्तजम् । फलं बल्यं च वृष्यं च बृंहणं वातजित्परम् ॥ १३५ ॥

## निम्बतैलम् ( तैलविशेषः ) ॥ २९ ॥

गुणाः—नात्युष्णं निम्बजं तैलं कृमिपित्तकफापहम् । वातपित्तप्रशमनं मदा[1]रश्मीरुजापहम् ॥ १३६ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

निम्बतैलं तु नात्युष्णं कृमिकुष्ठकफापहम् ।

## आक्षतैलम् ( तैलविशेषः ) ॥ ३० ॥

गुणाः—*आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

## तैलविशेषः ॥ ३१ ॥

गुणाः—दन्तिमूलकरक्षोग्रकरञ्जारिष्टशिग्रुजम् । सुवर्चलेङ्गुदीपीलुशङ्खिनीनीपसंभवम् ॥ १३७ ॥ सरलागरुदेवाह्वशिंशपासारजन्म च । तुम्बरारुष्करोत्थं च तीक्ष्णं कट्वस्रपित्तजित् ॥ १३८ ॥ अर्शःशुक्रकृमिश्लेष्मकुष्ठमेदोनिलापहम् । करञ्जारिष्टके तिक्ते नात्युष्णे तत्र निर्दिशेत् ॥ १३९ ॥ कषायं तिक्तकटुकं सारलं व्रणशोधनम् ॥ भृशोष्णे तिक्तकटुनी तुम्बरारुष्करोद्भवे ॥ ॥ १४० ॥ विशेषात्कृमिकुष्ठघ्ने तथोर्ध्वाधोविरेचने । अक्षातिमुक्तकाक्षोडनारिकेरमधूकजम् ॥ १४१ ॥ त्रपुस्योर्वारुकूष्माण्डश्लेष्मातकप्रियालजम् । वातपित्तहरं केश्यं श्लेष्मलं गुरु शीतलम् ॥ १४२ ॥ कफवातहरं रूक्षं कषायं नातिपित्तकृत् । सतिक्तं सहकारस्य तैलं सुरभि रोचनम् ॥ १४३ ॥ यवतिक्तोद्भवं तैलं सुरभि रेचनं तथा ।

---

* राजानिघण्टावात्मगुप्तातैलं न दृश्यते ।

---

१ ङ. 'दालक्ष्मीजराप' । छ. 'दालक्ष्मीज्वराप' ।

## ( ३२ ) घृतम् ।

घृतमाज्यं हविः सर्पिः पवित्रं नवनीतजम् । अमृतं चाभिघारश्च जीवनीयं प्रकीर्तितम् ॥ १४४ ॥

गुणाः—सहस्रवीर्यं विधिवद्धृतं कर्मसहस्रकृत् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

*घृतमाज्यं हविः सर्पिः पवित्रं नवनीतजम् । अमृतं चाभिघारश्च होम्यमायुश्च तैजसम् ॥ २०२ ॥

गुणाः—भक्षणं स्नेहनं स्नेहः स्निग्धता मृक्ष एव च । अभ्यङ्गोऽभ्यञ्जनं चैव चोपडं च घृतादिकः ॥ २०३ ॥

### गोघृतम् ( घृतविशेषः ) ॥ ३२ ॥

गुणाः—शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् । बालवृद्धप्रजाकान्तिसौकुमार्यस्थिरार्थिनाम् ॥ १४५ ॥ क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् । विपाके मधुरं शीतं वातपित्त[1]विषापहम् । चक्षुष्यं बल्यमग्र्यं च गव्यं सर्पिर्गुणोत्तरम् ॥ १४६ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

धीकान्तिस्मृतिदायकं बलकरं मेधाप्रदं पुष्टिकृद्वातश्लेष्महरं श्रमोपशमनं पित्तापहं हृद्यदम् । वह्नेर्वृद्धिकरं विपाकमधुरं वृष्यं वपुस्थैर्यदं गव्यं हव्यतमं घृतं बहुगुणं भोग्यं भवेद्भाग्यतः ॥ २०४ ॥

### महिषीघृतम् ( घृतविशेषः ) ॥ ३३ ॥

गुणाः—मधुरं रक्तपित्तघ्नं गुरु पाके कफावहम् । वातपित्तप्रशमनं सुशीतं माहिषं घृतम् ॥ १४७ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्तिकृद्वातश्लेष्मनिबर्हणं बलकरं वर्णप्रदाने क्षमम् । दुर्नामग्रहणीविकारशमनं मन्दानलोद्दीपनं चक्षुष्यं नवगव्यतः परमिदं हृद्यं मनोहारि च ॥ २०५ ॥

### अजाघृतम् ( घृतविशेषः ) ॥ ३४ ॥

गुणाः—आजं घृतं दीपनीयं चक्षुष्यं बलवर्धनम् । कासे श्वासे क्षये चापि पथ्यं पाके च तल्लघु ॥ १४८ ॥

---

* इदं श्लोकद्वयं ज. ट. पुस्तकयोर्न दृश्यते ।

---

१ ङ. छ. 'त्तकफाप' ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

आजमाज्यं तु चक्षुष्यं दीपनं बलवर्धनम् । कासश्वासकफहरं राजयक्ष्मसु शस्यते ॥ २०६ ॥

## आविकघृतम् ( घृतविशेषः ) ॥ ३५ ॥

गुणाः—*पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपनम् । *कफेऽनिले योनिदोषे शोफे कम्पे च तद्धितम् ॥ १४९ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

* । * ॥ २०७ ॥

भैडकं घृतमतीवगौरवाद्वर्ज्यमेव सुकुमारदेहिनाम् । बुद्धिपाटवकरं बलावहं सेवितं च कुरुते नृणां वपुः ॥ २०८ ॥

## उष्ट्रीघृतम् ( घृतविशेषः ) ॥ ३६ ॥

गुणाः—औष्ट्रं कटुरसं पाके शोफक्रिमिविषापहम् । दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम् ॥ १५० ॥ मूर्छामेहोन्मादगरज्वरापस्मारनाशनम् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

घृतमौष्ट्रं तु मधुरं विपाके कटुशीतलम् । कुष्ठक्रिमिहरं वातकफगुल्मोदरापहम् ॥ २०९ ॥

## अश्वाघृतम् ( घृतविशेषः ) ॥ ३७ ॥

गुणाः—*अश्वासर्पिस्तु कटुकं मधुरं च कषायकम् । *ईषद्दीपनदं मूर्छाहारि वाताल्पदं गुरु ॥ १५१ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

* * ॥ २१० ॥

## गर्दभीघृतम् ( घृतविशेषः ) ॥ ३८ ॥

गुणाः—*घृतं गार्दभिकं बल्यं दीपनं मूत्रदोषनुत् । *पाके लघूष्णवीर्यं च कषायं कफनाशनम् ॥ १५२ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

* । * ॥ २११ ॥

## †एकशफाघृतम् ( घृतविशेषः ) ॥ ३९ ॥

गुणाः—दीपनं बद्धविण्मूत्रं विद्यादेकशफाघृतम् ॥ १५३ ॥

† राजनिघण्टावेकशफाघृतं न दृश्यते ।

## हस्तिनीघृतम् ( घृतविशेषः ) ॥ ४० ॥

गुणाः—कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु । हन्ति कारेणवं सर्पिः कफकुष्ठविषकृमीन् ॥ १५८ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

निहन्ति हस्तिनीसर्पिः कफपित्तविषकृमीन् । कषायं लघु विष्टम्भि तिक्तं चाग्निकरं परम् ॥ २१२ ॥

## स्त्रीघृतम् ( घृतविशेषः) ॥ ४१ ॥

गुणाः—चक्षुष्यमग्र्यं स्त्रीणां तु सर्पिः स्यादमृतोपमम् । वृद्धिं करोति देहाग्न्योर्लघु[1] पाके विषापहम्[2] ॥ १५९ ॥ तर्पणं नेत्ररोगघ्नं दाहनुत्पयसो[3] हृतम् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

नारीसर्पिस्तु चक्षुष्यं पथ्यं सर्वामयापहम् । मन्दाग्निदीपनं रुच्यं पाके लघु विषापहम् ॥ २१३ ॥

## पुराणघृतम् ( घृतविशेषः ) ॥ ४२ ॥

गुणाः—सर्पिः पुराणं तिमिरं श्वासपीनसकासनुत् । मूर्छाकुष्ठविषोन्मादग्रहापस्मारनाशनम् ॥ १५६ ॥ योनिकर्णाक्षिशिरसां शूलघ्नं शोफजित्परम् । हन्ति दोषत्रयं भेदि व्रणशोधनरोपणम् ॥ १५७ ॥ उग्रगन्धि पुराणं स्याद्दशवर्षोत्थितं घृतम् । लाक्षानिभं रसे शीतं तद्वत्सर्वग्रहापहम् ॥ १५८ ॥ तद्वच्च घृतमण्डोऽपि रूक्षैस्तिक्तस्तनुश्च सः[4] । ग्रन्थान्तरे—एकादशशतं चैव वत्सरानुषितं घृतम् । रक्षोघ्नं कुम्भसर्पिः स्यात्परतस्तु महाघृतम् ॥ १५९ ॥ पेयं महाघृतं भूतैः कफघ्नं पवनाधिकैः । बल्यं पवित्र्यं मेध्यं च विशेषात्तिमिरापहम् ॥ १६० ॥ सर्वभूतहरं चैव घृतमेतत्प्रशस्यते ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

गुणाः—मदापस्मारमूर्छादिशिरःकर्णाक्षिजा रुजः । सर्पिः पुराणं जयति व्रणशोधनरोपणम् ॥ २१४ ॥ आयुर्वृद्धिं वपुषि दृढतां सौकुमार्यं च कान्तिं बुद्धिं धत्ते स्मृतिबलकरं शीतविध्वंसनं च । पथ्यं बाल्ये वयसि तरुणे वार्धके चातिबल्यं नान्यत्किंचिज्जगति गुणदं सर्पिषः पथ्यमस्ति ॥ २१५ ॥

---

१ ण. °ति शुक्राग्न्यो° । २ ण. °म् । नेत्ररोगप्रशमनं दा° । ३ ण. °सो घृत° । ४ ण. °क्षस्तीक्ष्णस्त° ।

## ( ३३ ) दुग्धम् ।

दुग्धं क्षीरं पयः स्वादु रसायनसमाश्रयम् । सौम्यं प्रस्रवणं स्तन्यं वारिसात्म्यं च जीवितम् ॥ १६१ ॥

गुणाः—गव्यमाजं तथौरभ्रं माहिषं कारभं च यत् । अश्वायाश्चैव नार्याश्च हास्तिनीनां च यत्पयः ॥ १६२ ॥ तथाऽनेकौषधिरसं प्राणिनां प्राणदं गुरु । मधुरं पिच्छलं स्निग्धं शीतं सूक्ष्मं सरं मृदु ॥ १६३ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

क्षीरं पीयूषमूधस्यं दुग्धं स्तन्यं पयोऽमृतम् ।

### गोदुग्धम् ( दुग्धविशेषः ) ॥ ४३ ॥

गुणाः—पथ्यं रसायनं बल्यं हृद्यं मेध्यं गवां पयः । आयुष्यं पुंस्त्वकृद्वातरक्तपित्तविकारनुत् ॥ १६४ ॥ गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् । कफघ्नं रक्तवर्णानां गोदुग्धं च त्रिधा स्मृतम् ॥ १६५ ॥ गोक्षीरमनभिष्यन्दि स्निग्धं गुरु रसायनम् । रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ १६६ ॥ जीवनीयं तथा वातपित्तघ्नं परमं स्मृतम् ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

गव्यं क्षीरं पथ्यमत्यन्तरुच्यं स्वादु स्निग्धं वातपित्तामयघ्नम् । कान्तिप्रज्ञाबुद्धिमेधाङ्गपुष्टिं धत्ते स्पष्टं वीर्यवृद्धिं विधत्ते ॥ २१६ ॥

### अजापयः ( दुग्धविशेषः ॥ ४४ ॥

गुणाः—छागं कषायं मधुरं शीतं ग्राहितरं लघु । रक्तपित्तातिसारघ्नं क्षयकासज्वरापहम् ॥ १६७ ॥ * अजानां लघुकायत्वान्नानाद्रव्यनिषेवणात् । * अत्यम्बुपानाद्व्यायामात्सर्वव्याधिहरं परम् ॥ १६८ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

गुणाः—* । * ॥ २१७ ॥

### औरभ्रपयः ( दुग्धविशेषः ) ॥ ४५ ॥

गुणाः—औरभ्रं मधुरं स्निग्धमुष्णं तिक्तं कफापहम् । गुरु शुद्धानिले पथ्यं शोफे चानिलशोणिते ॥ १६९ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

---

१ ङ. छ. ण. जीवनम् ।

आविकं तु पयः स्निग्धं कफपित्तहरं परम् । स्थौल्यमेहहरं पथ्यं लोमशं गुरु वृद्धिदम् ॥ २१८ ॥

## महिषीपयः ( दुग्धविशेषः ) ॥ ४६ ॥

महाभिष्यन्दि मधुरं माहिषं वह्निनाशनम् । निद्राकरं शीतकरं गव्यात्स्निग्धतरं गुरु ॥ १७० ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

गौल्यं तु महिषीक्षीरं विपाके शीतलं गुरु । बलपुष्टिप्रदं वृष्यं पित्तदाहास्रनाशनम् ॥ २१९ ॥

## उष्ट्रीपयः (दुग्धविशेषः)॥ ४७॥

गुणाः—रूक्षोष्णं क्षीरमुष्ट्रीणामीषत्सलवणं लघु। शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ॥ १७१ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

उष्ट्रीक्षीरं कुष्ठशोफापहं तत्पित्तार्शोघ्नं तत्कफाटोपहारि । आनाहार्ति जन्तुगुल्मोदराख्यं श्वासोल्लासं नाशयत्याशु पीतम् ॥ २२० ॥

## अश्वापयः ( दुग्धविशेषः ) ॥ ४८ ॥

गुणाः— * अश्वाक्षीरं तु वृष्याम्लं लवणं दीपनं लघु । * देहस्थैर्यकरं बल्यं गौरवं कान्तिकृत्परम् ॥ १७२ ॥ श्वासवातहरं साम्लं लवणं रुचिदीप्तिकृत् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

* । * ॥ २२१ ॥

## गर्दभीपयः । ( दुग्धविशेषः ) ॥ ४९ ॥

गुणाः—कासश्वासहरं क्षीरं गार्दभं बालरोगनुत् । मधुराम्लरसं रूक्षं लवणानुरसं गुरु ॥ १७३ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

बलकृद्गर्दभीक्षीरं वातश्वासहरं परम् । मधुराम्लरसं रूक्षं दीपनं पथ्यदं स्मृतम् ॥ २२२ ॥

---

१ झ. 'हिसादन' । २ ङ. पयः । ३ ब. छ. 'कृत्सर' ।

## *एकशफापयः । ( दुग्धविशेषः ) ॥ ५० ॥

गुणाः—उष्णं चैकशफं बल्यं शाखावातहरं पयः । मधुराम्लरसं रूक्षं लवणानुरसं लघु ॥ १७४ ॥

## मानुषीपयः । ( दुग्धविशेषः ) ॥ ५१ ॥

गुणाः—स्निग्धं स्थैर्यकरं चापि चक्षुष्यं बलवर्धनम् । जीवनं बृंहणं सात्म्यं स्नेहनं मानुषीपयः ॥ १७५ ॥ नाशनं रक्तपित्ते च तर्पणं चाक्षिशूलनुत् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

मधुरं मानुषीक्षीरं कषायं च हिमं लघु । चक्षुष्यं दीपनं पथ्यं पाचनं रोचनं च तत् ॥ २२३ ॥

## हस्तिनीपयः (दुग्धविशेषः) ॥ ५२ ॥

गुणाः—हस्तिन्या मधुरं वृष्यं कषायानुरसं गुरु । स्निग्धं शीततरं चापि चक्षुष्यं बलवर्धनम् ॥ १७६ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

मधुरं हस्तिनीक्षीरं वृष्यं गुरु कषायकम् । स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम् ॥ २२४ ॥

पयःसामान्यगुणदोषाः—विवत्सा बालवत्सानां पयो दोषलमीरितम् । पिण्याकाम्लाशिनीनां च गुर्वभिष्यन्दि तद्भृशम् ॥१७७॥ जाङ्गलानूपदेशेषु पारन्तीनां यथोत्तरम् । पयो गुरुतरं स्नेहो यथा चैषां विवर्धते ॥१७८॥ कृष्णायाः कृष्णवत्सायाः शुक्लायाश्च परं पयः । सुखोष्णं कफवातघ्नं शृतशीतं च पित्तजित् ॥१७९॥ आमवातकरं चापि धारोष्णममृतं पयः । सुशृतं च पयः पीतं पीयूषादपि तद्गुरु ॥ १८० ॥ †कूर्चिकाश्च +किलाटाश्च गुरुवः श्लेष्मवर्धनाः । तर्पणाः प्रीणना बल्या बृंहणा मारुतापहाः ॥ १८१ ॥ दीप्ताग्नीनामनिद्राणां व्यवाये चापि पूजिताः । अनिष्टगन्धमम्लं च विवर्णं विरसं च तत् ॥१८२॥ वर्ज्यं सलवणं क्षीरं यच्च विग्रन्थितं भवेत् । धारोष्णममृतं पथ्यं धाराशीतं त्रिदोषलम् ॥१८३॥ $शृतशीतं त्रिदोषघ्नं शृतोष्णं कफवातजित् ॥ १८४ ॥ जीर्णज्वरे किंतु कफे विनीले स्याद्दुग्धपानं हि सुधासमानम् । तदेव पीतं तरुणज्वरे च निहन्ति हालाहलवन्मनुष्यम् ॥१८५॥ नवज्वरे च मन्दाग्नौ ह्यामदोषेषु कुष्ठिनाम् । शू-

---

* राजनिघण्टावेकशफापयसो गुणा न दृश्यन्ते ।

† 'कूर्चिका' विरजण इति ख्याते । +'किलाटः, निवळ (थरी, साई ) इति ख्याते $ शृतम्' कढविलेलें, तापविलेलें इति ख्याते ।

लिनां कफदोषेषु कासिनामतिसारिणाम् ॥ १८६ ॥ पयःपानं न कुर्वीत विशेषात्क्रमिदोषतः । मुहूर्तपञ्चकादूर्ध्वं क्षीरं भवति विकृतम् । तदेव द्विगुणे काले विषवद्धन्ति मानवम् ॥ १८७ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

क्षीरं कासश्वासकोपाय सर्वं गुर्वामं स्यात्प्रायशो दोषदायि । तच्चेत्क्वाथावर्तितं पथ्यमुक्तं नारीक्षीरं त्वाममेवाऽऽमयघ्नम् ॥ २२५ ॥ उक्तं गव्यादिकं दुग्धं धारोष्णममृतोपमम् । सर्वामयहरं पथ्यं चिरसंस्थं तु दोषदम् ॥ २२६ ॥ अन्यच्च—केऽप्याविकं पथ्यतमं शृतोष्णं क्षीरं त्वजानां शृतशीतमाहुः । देहान्तशीतं महिषीपयश्च गव्यं तु धारोष्णमिदं प्रशस्तम् ॥ २२७ ॥ वृष्यं बृंहणमग्निवर्धनकरं पूर्वाह्णपीतं पयो मध्याह्ने बलदायकं कफहरं कृच्छ्रस्य विच्छेदकम् । बाल्ये वह्निकरं ततो बलकरं वीर्यप्रदं वार्धके रात्रौ क्षीरमनेकदोषशमनं सेव्यं ततः सर्वदा ॥ २२८ ॥ क्षीरं मुहूर्तत्रितयोषितं यदतप्तमेतद्विकृतिं प्रयाति । उष्णं तु दोषं कुरुते तदूर्ध्वं विषोपमं स्यादुषितं दशानाम् ॥ २२९ ॥ जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् । तदेव तरुणे पीतं विषवद्धन्ति मानुषम् ॥ २३० ॥ चतुर्थभागं सलिलं निधाय यत्नाद्यदावर्तितमुत्तमं तत् । सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तम् ॥ २३१ ॥ गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहिषम् । क्षीरं सशर्करं पथ्यं यद्वा स्वात्म्ये च सर्वदा ॥२३२॥ पित्तघ्नं शृतशीतलं कफहरं पक्वं तदुष्णं भवेच्छीतं यत्तु न पाचितं तदखिलं विष्टम्भदोषप्रदम् । धारोष्णं त्वमृतं पयः श्रमहरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्निवर्धनमतिस्वादु त्रिदोषापहम् ॥२३३॥ क्षीरं न युञ्जीत कदाऽप्यतप्तं तप्तं न चैतल्लवणेन सार्धम् । पिष्टान्नसंधानकमापमुद्गकोशातकीकन्दफलादिकैश्च ॥ २३४ ॥ तथाच—मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः । शाकजाम्बवरसैस्तु सेवितं मारयत्यबुधमाशु सर्पवत् ॥ २३५ ॥ स्निग्धं शीतं गुरुक्षीरं सर्वकालं न सेवयेत् । दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च ॥ २३६ ॥ नित्यं तीव्राग्निना सेव्यं सुपक्वं माहिषं पयः । पुष्णन्ति धातवः सर्वे बलपुष्टिविवर्धनम् ॥ २३७ ॥ क्षीरं गवाजकादेर्मधुरं क्षारं नवप्रसूतानाम् । रूक्षं च पित्तदाहं करोति रक्तामयं कुरुते ॥ २३८ ॥ मधुरं त्रिदोषशमनं क्षीरं मध्यप्रसूतानाम् । लवणं मधुरं क्षीरं विदाहजननं चिरप्रसूतानाम् ॥ २३९ ॥ गुणहीनं निःसारं क्षीरं प्रथमप्रसूतानाम् । मध्यवयसां रसायनमुक्तमिदं दुर्बलं तु वृद्धानाम् ॥ २४० ॥ तासां मासत्रयादूर्ध्वं गुर्विणीनां च यत्पयः । तद्वाहि लवणं क्षीरं मधुरं पित्तदोषकृत् ॥ २४१ ॥ गवादीनां वर्णभेदाद्गुणा दुग्धादिके पृथक् ।

१ ज. ट. रतिकरं । २ ज. साम्ये । ३ ज. ट. 'त्तशोष'।

कैश्चिदुक्तो विशेषाच्च विशेषो देशभेदतः ॥ २४२ ॥ उक्तं च–देशेषु देशेषु च तेषु तेषु तृणाम्बुनी यादृशदोषयुक्ते। तत्सेवनादेव गवादिकानां गुणादि दुग्धादिषु तादृशं मतम् ॥ २४३ ॥ शीतं स्निग्धं गुरुर्गौल्यं वृष्यं पित्तापहं परम्। ज्ञेया चैवाभिधा तस्य कीलाटं तु पयश्छदः ॥ २४४ ॥

## दधि (दुग्धजम्) ॥ ९३ ॥

*तक्रजन्म पयोहेतुर्नवनीतोद्भवं दधि।

गुणाः—अम्लं स्वादुरसं ग्राहि गुरूष्णं दधि वातजित्। मेदःशुक्रबलश्लेष्मरक्तपित्ताग्निशोफकृत् ॥ १८८ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

क्षीरजं दधि तद्रूप्यं विरलं मस्तु तज्जलम्।

गुणाः—दधि मधुरमीषदम्लं मधुराम्लं वा हितं न चात्युष्णम्। यावद्याववन्मधुरं दोषहरं तावदुक्तमिदम् ॥ २४५ ॥

## मथितदधि। (दुग्धजम्) ॥ ९४ ॥

मथितं गोरसं घोलं द्रवमम्लं विलोडितम्। श्वेतं दण्डाहतं सान्द्रं दध्यम्लं नामतः स्मृतम् ॥ १८९ ॥

गुणाः—वातपित्तहरं ह्लादि मथितं कफपित्तनुत्।

## गोदधि (दुग्धजम्) ॥ ९५ ॥

गुणाः—स्निग्धं विपाके मधुरं दीपनं बलवर्धनम्। वातापहं पवित्रं च दधि गव्यं रुचिप्रदम् ॥ १९० ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

दधि गव्यमतिपवित्रं शीतं स्निग्धं च दीपनं बलकृत्। मधुरमरोचकहारि ग्राहि च वातामयघ्नं च ॥ २४६ ॥

## अजादधि (दुग्धजम्) ॥ ९६ ॥

गुणाः—दध्याजं कफवातघ्नं लघु[1] पाके क्षयापहम्[2]। दुर्नामश्वासकासेषु हितमग्नेश्च दीपनम् ॥ १९१ ॥ रसे पाके च मधुरं कषायं कफवातजित्।

---

* झ. पुस्तकेऽयमधिकः श्लोको दृश्यते—
"नष्टं च पयसश्चान्यन्माङ्गल्यं दधि संभवम्।
वन्दनीयं महाश्रेष्ठं दृष्ट्वा शकुनमुत्तमम्" ॥

---

१ ङ. छ. 'घु वातक्ष'। २ ङ. छ. 'यं रक्तपा'।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

दध्याजं कफवातघ्नं लघूष्णं नेत्रदोषनुत् । दुर्नामश्वासकासघ्नं रुच्यं दीपन-पाचनम् ॥ २४७ ॥

## औरभ्रदधि ( दुग्धजम् ) ॥ ५७ ॥

गुणाः—कोपनं कफवातानां दुर्नाम्नां चाऽऽविकं दधि । विपाके मधुरं वृष्यं रक्तपित्तप्रसादनम् ॥ १९२ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

आविकं दधि सुस्निग्धं कफपित्तकरं गुरु । वाते च रक्तवाते च पथ्यं शोफ-व्रणापहम् ॥ २४८ ॥

## माहिषीदधि ( दुग्धजम् ) ॥ ५८ ॥

गुणाः—बलासवर्धनं स्निग्धं विशेषान्माहिषं[1] दधि । महाभिष्यन्दि मधुरं कफमेदोविवर्धनम् ॥ १९३ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

माहिषं मधुरं स्निग्धं श्लेष्मकृद्रक्तपित्तजित् । बलास्रवर्धनं वृष्यं श्रमघ्नं शोधनं दधि ॥ २४९ ॥

## उष्ट्रीदधि ( दुग्धजम् ) ॥ ५९ ॥

गुणाः—विपाके कटु सक्षारमम्लं स्यादौष्ट्रकं दधि । वातमर्शांसि कुष्ठानि कृमीन्हन्त्युदराणि च ॥ १९४ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

औष्ट्रमर्शांसि कुष्ठानि कृमिशूलोदराणि च । विहन्ति कटुकं स्वादु किंचिद-म्लरसं दधि ॥ २५० ॥

## अश्वादधि ( दुग्धजम् ) ॥ ६० ॥

गुणाः—दीपनीयमचक्षुष्यं वातलं दधि वाडवम् । रूक्षमुष्णं कषायं च कफ-मूत्रापहं च तत् ॥ १९५ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

अश्वादधि स्यान्मधुरं कषायं कफार्तिमूर्छामयहारि रूक्षम् । वाताल्पदं दीपनकारि नेत्रदोषापहं तत्कथितं पृथिव्याम् ॥ २५१ ॥

---

१ ज. ट. बल्यं ।

## गर्दभीदधि ( दुग्धजम् ) ॥ ६१ ॥

गुणाः—*गर्दभीदधि रूक्षोष्णं लघु दीपनपाचनम्। *मधुराम्लरसं रुच्यं वातदोषविनाशनम् ॥ १९६ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

* । * ॥ २५२ ॥

## हस्तिनीदधि ( दुग्धजम् ) ॥ ६२ ॥

गुणाः—लघुपाके बलासघ्नं वीर्योष्णं पक्तिनाशनम्। कषायानुरसं नाग्या दधि वर्चोविवर्धनम् ॥ १९७ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

हस्तिनीदधि कषायलघूष्णं पक्तिशूलशमनं रुचिप्रदम्। दीप्तिदं खलु बलासगदघ्नं वीर्यवर्धनबलप्रदमुक्तम् ॥ २५३ ॥

## स्त्रीदधि ( दुग्धजम् ) ॥ ६३ ॥

गुणाः—स्निग्धं च मधुरं बल्यमुष्णसंतर्पणं गुरु। चक्षुष्यमग्र्यं दोषघ्नं दधि नार्या गुणोत्तरम् ॥ १९८ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

विपाके मधुरं बल्यमम्लं संतर्पणं गुरु। चक्षुष्यं ग्रहदोषघ्नं दधि स्त्रीस्तन्यसंभवम् ॥ २५४ ॥

सामान्यदधिगुणाः—कफपित्तकृ*दम्लं स्यादत्यम्लं रक्तदूषकम्। विदाहि[1] सृष्टविण्मूत्रं †मधुदधि त्रिदोषनुत् ॥ १९९ ॥ दध्नस्तु यदधस्तोयं तन्मस्तु*नि परिशृतम्। शृतात्क्षीराच्च यज्जातं गुणवद्दधि तत्स्मृतम् ॥ २०० ॥ वातपित्तहरं रुच्यं धात्वग्निबलवर्धनम्। दधि सारं च रूक्षं च ग्राहि विष्टम्भि वातलम् ॥ २०१ ॥ दीपनीयं लघुतरं सकषायं रुचिप्रदम्। सरं स्निग्धं गुरु वृष्यं कफमेदोविवर्धनम् ॥ २०२ ॥ बृंहणं मारुतघ्नं च बलासचयकृत्परम्। सरसं निर्जलं †घोलं तक्रं पादजलान्वितम् ॥२०३ ॥ अर्धोदकमुदश्विच्च मथितं जलवर्जितम्। वातपित्तहरं घोलमुदश्विच्छ्लेष्मलं भवेत् ॥ २०४ ॥ त्रिदोषशमनं तक्रं मथितं श्लेष्मपित्तकृत्। कफवातहरं भेदि मस्तु स्रोतोविशोधनम् ॥२०५॥

---

* अम्लम्—खारें दहीं इति ख्यातम्। † मधुदधि ( मन्दजातं )—गोडदहीं इति ख्यातम्।
* मस्तु—मत्रा इति ख्याते। † घोलम्—घोळलेलें दहीं इति ख्याते।

---

१ ङ. 'हि श्लिष्ट'। २ ण. त. मन्दजातं।

पीनसे चातिसारे च शीतके विषमज्वरे । अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते ॥ २०६ ॥ शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् । हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥ २०७ ॥ रक्तपित्तकफोत्थेषु विकारेषु हितं च तत् । विज्ञेयमेषु सर्वेषु गव्यमेव गुणोत्तरम् ॥ २०८ ॥ वातघ्नं कफकृत्स्निग्धं बृंहणं न च पित्तकृत् । न नक्तं दधि भुञ्जीत न चाप्यघृतशर्करम् । नामुद्गसूपं नाक्षौद्रं नोष्णं नाऽऽमलकैर्विना ॥ २०९ ॥ ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् । प्राप्नुयात्कामलां चोग्रां विधिं हित्वा दधिप्रियः ॥ २१० ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

दध्यम्लं गुरु वातदोषशमनं संग्राहि मूत्रावहं बल्यं शोफकरं च रुच्यशमनं वह्नेश्च शान्तिप्रदम् । कासश्वाससुपीनसेषु विषमे शीतज्वरे स्याद्धितं रक्तोद्रेककरं करोति सततं शुक्रस्य वृद्धिं पराम् ॥ २५५ ॥ लवणमरिचसर्पिःशर्करामुद्गधात्रीकुसुमरसविहीनं नैतदश्नन्ति नित्यम् । न च शरदि वसन्ते नोष्णकाले न रात्रौ न दधि कफविकारे पित्तदोषेऽपि नाद्यात् ॥ २५६ ॥ त्रिकटुकयुतमेतद्राजिकाचूर्णमिश्रं कफहरमनिलघ्नं वह्निसंधुक्षणं च । तुहिनशिशिरकाले सेवितं चातिपथ्यं रचयति तनुदार्ढ्यं कान्तिमत्त्वं च नृणाम् ॥ २५७ ॥ उष्णाम्लं रुचिपक्तिदं क्लमहरं बल्यं कषायं सरं भुक्तिच्छेदकरं तृषोदरगदप्लीहार्शसां नाशनम् । स्रोतःशुद्धिकरं कफानिलहरं विष्टम्भशूलापहं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु ॥ २५८ ॥

## ( ३४ ) तक्रम् ।

तक्रं श्वेतपयः सात्म्यं छासि चैव प्रकीर्तितम् । द्विगुणाम्बु श्वेतपयस्त्वर्धोदकमुदश्वितम् ॥ २११ ॥ तक्रं त्रिभागभिन्नं तु केवलं मथितं स्मृतम् । तक्रस्योपरि यत्तोयं तदुदश्वित्प्रकीर्तितम् ॥ २१२ ॥

गुणाः—तक्रं लघु कषायोष्णं दीपनं कफवातजित् । शोफोदरार्शोग्रहणीदोषत्रयग्रहारुचि ॥ २१३ ॥ गुल्मप्लीहघृतव्याधिगरपाण्ड्वामयाञ्जयेत् । समुद्धृतघृतं तक्रमर्धोद्धृतघृतं च यत् ॥ २१४ ॥ अनुद्धृतघृतं तक्रमित्येवं त्रिविधं स्मृतम् । पूर्वं लघु च पथ्यं च गुरु वृष्यतरं परम् ॥ २१५ ॥ अतः परं वृष्यतमं यथाक्रमसुदीरितम् । अम्लं चात्यम्लमेवान्यत्कषायं स्वादु चापरम् ॥ २१६ ॥ तनुसारं सारतरं गुरु विद्याद्यथोत्तरम् । तत्र यदुद्धृतस्नेहं साम्लं च मधुरं च यत् ॥ २१७ ॥

---

१ ङ. 'रेष्वहि' । २ ङ. 'रास्रपित्त' । ३ ञ. त. 'पाण्डुभ्रमप्रदम् । प्रा' । ४ ठ. 'त्रापह' । ५ ट. 'दोषे न दद्या' । ६ ङ. छ. 'षमूत्रग्र' । ७ ङ. 'हधृत' । त. 'हहृत' ।

कषायानुरसं स्वादु नातिसान्द्रं प्रशस्यते। गरोदरार्शोग्रहणीपाण्डुरोगे ज्वरेऽरुचौ ॥ २१८ ॥ वर्चोमूत्रग्रहप्लीहस्नेहव्यापदि मेहिषु । कषायशीतमधुरैस्तदुत्कृष्टतमं स्मृतम् ॥ २१९ ॥ तर्पणं प्रीणनं बल्यं हृद्यं पित्तविरोधि च । तक्रं केवलमम्लं च श्लेष्मानिलहरं लघु ॥ २२० ॥ लेखनं दीपनीयं च रक्तपित्तप्रकोपनम् । तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च ॥ २२१ ॥ पीनसश्वासकासादौ सिद्धमेव तदिष्यते । तक्रं नैव क्षये दद्यान्नोष्णकाले न दुर्बले । न मूर्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके ॥ २२२ ॥ शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च । मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ २२३ ॥ वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् । पिबेत्तक्रं कफे चापि व्योषक्षारसमायुतम् ॥ २२४ ॥ ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका । तक्राल्लघुतरो मण्डः कूर्चिकादधितक्रजः ॥ २२५ ॥ गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृतः । मधुरौ बृंहणौ वृष्यौ तद्वत्पीयूषमोरटौ ॥ २२६ ॥ सरसं निर्जलं घोलं मथितं रसवर्जितम् । अर्धोदकमुदश्वित्स्यात्तक्रं पादजलान्वितम् ॥ २२७ ॥ वातपित्तहरं घोलमुदश्विच्छ्लेष्मलं भवेत् । त्रिदोषशमनं तक्रं* मथितं कफपित्तजित् ॥ २२८ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

उक्तं श्लेष्मसमीरहारि मथितं तच्छ्लेष्मपित्तापहं रुच्यं प्राहुरुदश्विदाख्यमधिकं तक्रं त्रिदोषापहम् । मन्दाग्नावरुचौ विदाहविषमश्वासार्तिकासादिषु श्रेष्ठं पथ्यतमं वदन्ति सुधियस्तक्रत्रयं ह्युत्तमम् ॥ २५९ ॥

तथाच—तक्रं त्रिदोषशमनं रुचिदीपनीयं रुच्यं वमिश्रमहरं क्लमहारि मस्तु । बल्यप्रदं पवननाशमुदश्विदाख्यं शस्तं कफश्रममरुद्धमनेषु घोलम् ॥ २६० ॥ अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः । यथा सुराणाममृतं हिताय तथा नराणामिह तक्रमाहुः ॥ २६१ ॥ आमातिसारे च विषूचिकायां वातज्वरे पाण्डुषु कामलेषु । प्रमेहगुल्मोदरवातशूले नित्यं पिबेत्तक्रमरोचके च ॥ २६२ ॥ अपि च—शीतकालेऽग्निमान्द्ये च कफे पाण्ड्वामयेषु च । मार्गोपरोधे कृष्ठादिव्याधौ तक्रं प्रशस्यते ॥ २६३ ॥ वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् । शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ २६४ ॥ यवानीसैन्ध-

---

*ग्रन्थान्तरे—शशिकुन्दसमुज्ज्वलशङ्खनिभं युवतीकरनिर्मथितं कथितम् । परिपक्वसुगन्धिकपित्थसमं पिब हे नृप तक्रं रुजापहरम् ॥

---

१ ङ. छ. नातिसाम्लं । २ ङ. छ. चैव हि । ३ ङ. छ. °धुरं तथा श्रेष्ठतमं मतम् । ४ ङ. छ. सिद्धं त्रा तक्रमिष्य° । ५ ङ. छ. क्षते ।

वाजाजीव्योषयुक्तं कफोदरे । संनिपातोदरे तक्रं त्रिकटुक्षारसैन्धवम् ॥२६५॥ तक्रं दद्यान्नो क्षते नोष्णकाले नो दौर्बल्ये नो तृषामूर्छिते च । नैव भ्रान्तौ नैव पित्तास्रदोषे नैतद्दद्यात्सूतिकायां विशेषात् ॥ २६६ ॥ तक्रं स्नेहान्वितं तत्तु निद्राजाड्यप्रदं गुरु । अर्धावशिष्टं सामान्यं निःशेषं लघु पथ्यदम् ॥२६७॥

## नवनीतम् ( तक्रजम् ) ॥ ६४ ॥

नवनीतं दधिभवं घृतहेतुः शिशुप्रियम् । दधिमण्डोद्भवं चैव मन्थनोद्भवमेव च ॥ २२९ ॥

गुणाः—नवनीतं नवं हृद्यं ग्राहि रोचनदीपनम् । क्षयारुच्यर्दितप्लीहग्रहण्यर्शोविकारनुत् ॥ २३० ॥ चक्षुष्यं शिशिरं स्निग्धं वृष्यं जीवनबृंहणम् । क्षीरोद्भवं हिमं ग्राहि रक्तपित्ताक्षिरोगनुत् ॥ २३१ ॥ स्मृतिक्षुधाग्निशुक्रौजःकफमेदोविवर्धनम् । वातपित्तविषोन्मादशोफालक्ष्मीजरापहम् ॥ २३२ ॥ सर्वस्नेहोत्तमं शीतं मधुरं रसपाकयोः ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

दधिजं नवनीतं स्यात्सारो हैयंगवीनकम् ।

साधारणगुणाः—शीतं रुच्यनवोद्धृतं सुमधुरं वृष्यं च वातापहं कासघ्नं क्रिमिनाशनं कफकरं संग्राहि शूलापहम् । बल्यं पुष्टिकरं तृषार्तिशमनं संतापविच्छेदनं चक्षुष्यं श्रमहारि तर्पणकरं दध्युद्भवं पित्तजित् ॥ २६८ ॥ एकाहाद्युषितं प्रोक्तमुत्तरोत्तरगन्धदम् । अहृद्यं सर्वरोगाढ्यं दधिजं तद्धृतं स्मृतम् ॥ २६९ ॥

## ( ३५ ) मधु ।

मधु क्षौद्रं[1] तु माक्षीकं माक्षिकं कुसुमासवम् । पुष्पासवं सारघं च तच्च पुष्परसं स्मृतम् ॥ २३३ ॥

मधुजातयः—*माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रकं तथा । *अर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः ॥ २३४ ॥ माक्षिकं तैलवर्णं स्यात्क्षौद्रं तु कपिलं भवेत् । पौत्तिकं घृतवर्णं तु श्वेतं भ्रामरमुच्यते ॥ २३५ ॥ आपीतवर्णं छात्राख्यं पिङ्गलं चार्घ्यनामकम् । औद्दालं स्वर्णसदृशं दालं च पाटलं स्मृतम् ॥ २३६ ॥

गुणाः—कषायानुरसं रूक्षं शीतलं मधुरं मधु । दीपनं लेखनं बल्यं व्रणरोपणमुत्तमम् ॥ २३७ ॥ संधानं लघु चक्षुष्यं स्वर्यं हृद्यं त्रिदोषनुत् । छर्दिहिक्काविषश्वासकासशोषातिसारजित् ॥ २३८ ॥ रक्तपित्तहरं ग्राहि क्रिमितृण्मोहहृ-

---

१ झ. °द्रं माक्षिकं तु पौतिकं कु° ।

त्परम् । पैच्छिल्यात्स्वादुरूपत्वाद्भ्रामरं गुरुसंज्ञितम् ॥ २३९ ॥ भ्रामरं कुरुते जाड्यमत्यन्तं मधुरं च तत् । क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम् ॥२४०॥ तस्माल्लघुतरं रूक्षं माक्षिकं प्रवरं स्मृतम् । उष्णैर्विरुध्यते सर्वं विषान्वयतया लघु ॥२४१॥उष्णार्तरूक्षैरुष्णैर्वा तन्निहन्ति तथा विषम्॥२४२॥तत्सौकुमार्याच्च तथैव सेव्यं वनौषधीनां रससंभवाच्च । उष्णैर्विरुध्येत विशेषतस्तु तथाऽन्तरिक्षेण जलेन वाऽपि ॥२४३॥ माध्वी सिता मधूत्पन्ना मधुजा मधुशर्करा । माक्षीकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा ॥ २४४ ॥ यद्गुणं यन्मधु प्रोक्तं तद्गुणास्तस्य शर्कराः । विशेषाद्बलवृष्याश्च तर्पण्यः क्षीणदेहिनाम् ॥ २४५ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

मधु क्षौद्रं च माक्षीकं माक्षिकं कुसुमासवम् । पुष्पासवं पवित्रं च पित्र्यं पुष्परसाह्वयम् ॥ २७० ॥

राजनिघण्टौ मधुजातयः—

* । * ॥ २७१ ॥

नानापुष्परसाहाराः कपिला वनमक्षिकाः । याः स्थूलास्ताभिरुत्पन्नं मधु माक्षिकमुच्यते ॥ २७२ ॥ ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः । भ्रमरैर्जनितं तैस्तु भ्रामरं मधु भण्यते ॥ २७३ ॥ पिङ्गला मक्षिकाः सूक्ष्माः क्षुद्रा इति हि विश्रुताः । ताभिरुत्पादितं यत्तु तत्क्षौद्रं मधु कथ्यते ॥ २७४ ॥ अम्बजा मक्षिकाः पिङ्गाः पुत्तिका इति कीर्तिताः । तज्जातं मधु धीमद्भिः पौत्तिकं समुदाहृतम् ॥ २७५ ॥ छत्राकारं तु पटलं सरघाः पीतपिङ्गलाः । यत्कुर्वन्ति तदुत्पन्नं मधु च्छात्रकमीरितम् ॥ २७६ ॥ मक्षिकास्तीक्ष्णतुण्डा यास्तथा षट्पदसंनिभाः । तदुद्भूतं यदर्घार्हं तदर्घ्यं मधु वर्ण्यते ॥ २७७ ॥ औद्दालाः कपिलाः कीटा भूमेरुद्दलनाः स्मृताः । वल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्यते ॥ २७८ ॥ इन्द्रनीलदलाकाराः सूक्ष्माश्चिन्वन्ति मक्षिकाः । यद्वृक्षकोटरान्तस्थं मधु दालमिदं स्मृतम् ॥ २७९ ॥ इत्येतस्याष्टधाभेदैरुत्पत्तिः कथिता क्रमात् । माक्षिकं तैलवर्णं स्याच्छ्वेतं भ्रामरमुच्यते ॥ २८० ॥ क्षौद्रं तु कपिलाभासं पौत्तिकं घृतसंनिभम् । आपीतवर्णं छात्रं स्यात्पिङ्गलं चार्घ्यनामकम् ॥ २८१ ॥ औद्दालं स्वर्णसदृशमापीतं दालमुच्यते । माक्षिकं मधुरं रूक्षं लघुश्वासादिदोषनुत् । भ्रामरं पिच्छिलं रूक्षं मधुरं मुखजाड्यजित् ॥२८२॥ क्षौद्रं तु शीतं चक्षुष्यं पिच्छलं पित्तवातहृत् । पौत्तिकं मधु रूक्षोष्णमस्रपित्तादिदाहकृत् ॥ २८३ ॥ चित्रमेहकृमिघ्नं च विद्याच्छात्रं गुणोत्तरम् ।

---

१ ण. त. मधु ।

अर्घ्यं मध्वतिचक्षुष्यं कफपित्तादिदोषहृत् ॥ २८४ ॥ औद्दालकं तु कुष्ठादिदोषघ्नं सर्वसिद्धिदम् । दालं कटु कषायाम्लं मधुरं पित्तदायि च ॥२८५॥ नवं मधु भवेत्स्थौल्यं नातिश्लेष्मकरं परम् । देहस्थौल्यापहं ग्राहि पुराणं मधुलेखनम् ॥ २८६ ॥ *पक्वं दोषत्रयघ्नं मधु विविधरुजाजाड्यजिह्वामयादिध्वंसं धत्ते च रुच्यं बलमतिधृतिदं वीर्यवृद्धिं विधत्ते । आमं चेदामगुल्मामयपवनरुजापित्तदाहास्रदोषमातन्वानं विशोषं जनयति नयति ध्वंसमष्टाग्नवृद्धिम् ॥२८७॥ व्रणशोधनसंधाने व्रणसंरोपणादिषु । साधारण्या मधु हितं तत्तुल्या मधुशर्करा ॥ २८८ ॥ उष्णैः सहोष्णकाले वा स्वयमुष्णमथापि वा । आमं मधु मनुष्याणां विषवत्तापदायकम् ॥२८९॥ कीटकादियुतमम्लदूषितं यच्च पर्युषितकं मधु स्वतः । कण्टकोटरगतं च मेचकं तच्च गेहजनितं च दोषकृत् ॥ २९० ॥ दण्डैर्निहत्य यदुपात्तमपास्तदंशं तादृग्विधं मधु रसायनयोगयोग्यम् । हिकागुदाङ्कुरविशोफककफव्रणादिदोषापहं भवति दोषदमन्यथा चेत् ॥ २९१ ॥

## ( ३६ ) सूक्तम् ।

सूक्तं सहस्रवेधं च रसाम्लं चुक्रमेव च । मुक्तसारं तथा चोक्तं दहनं नीलकारकम् । विविधाभिमतं चण्डं भेदनं चाम्लमेव च ॥२४६॥

गुणाः—रक्तपित्तकरं सूक्तं सद्योभुक्तविपाचनम् । जरणं भेदनं पाण्डुकृमिरोगहरं लघु ॥ २४७ ॥ तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च । तद्वत्तदाश्रितं सर्वं रोचनं तु विशेषतः ॥ २५५ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

चुक्रं सहस्रवेधं च रसाम्लं चक्रवेधकम् । शाखाम्लभेदनं चैवमम्लसारं च चुक्रिका ॥ २९२ ॥

गुणाः—चुक्रं तिक्ताम्लकं स्वादु कफपित्तविनाशनम् । नासिकागदवुर्गन्धशिरोरोगहरं परम् ॥ २९३ ॥

## ( ३७ ) काञ्जिकम् ।

काञ्जिकं चैव सौवीरं कुल्माषाभिभवं तथा । अवन्तिसोमं धान्याम्लमारनालं महारसम् ॥ २४९ ॥

---

* ' पक्वम् '–कढलेलें इति ख्याते ।

---

१ ज. °स्थौलं ना° । २ ट. °च्यं मल° । ३ ट. °म् । बालाशो° । ४ झ. ढ. अम्रं । ५ ङ. छ. °त्तहरं । ६ ङ. छ. °द्यं कटु पाके विदाहि च । ७ झ. °दासुतं । ८ झ. °भिषुतं त° ।

गुणाः—दाहज्वरापहं स्पर्शात्पानाद्वातकफापहम्। विबन्धघ्नमवस्रंसि दीपनं चाम्लकाञ्जिकम् ॥ २५० ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

काञ्जिकं काञ्जिका वीरं कुल्माषाभिभवं तथा। अवन्तिसोमं धान्याम्लमारनालोऽम्लसारकः ॥ २९४ ॥

गुणाः—काञ्जिकं वातशोफघ्नं पित्तघ्नं ज्वरनाशनम्। दाहमूर्छाश्रमघ्नं च शूलाध्मानविबन्धनुत् ॥ २९५ ॥ काञ्जिकं काञ्जितैलं च पलितं वातकारकम्। दाहकं गात्रशैथिल्यं भक्षणान्न च मर्दनात् ॥ २९६ ॥

## सौवीरं, तुषोदकं च (काञ्जिकविशेषः) ॥ ६५ ॥

सौवीरकं सुवीराम्लं यवगोधूमसंभवम्। यवाग्रजं यवोत्थं च तुषोदं च तुषोदकम् ॥ २५१ ॥

गुणाः—जरणीयं च हृत्पाण्डुकृमिरोगविदाहनुत्। ग्रहण्यर्शोहितं भेदि सौवीरं च तुषोदकम् ॥ २५२ ॥ गौडानि रससूक्तानि मधुसूक्तानि यानि च। यथापूर्वं गुरुतराण्यभिष्यन्दकराणि च ॥ २५२ ॥ यन्मस्त्वादि शुचौ भाण्डे सगुडं क्षौद्रकाञ्जिकम्। धान्यराशौ त्रिरात्रस्थं सूक्तं चुक्रं तदुच्यते ॥ २५४ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

सौवीरकं सुवीराम्लं ज्ञेयं गोधूमसंभवम्। यवाम्लजं यवोत्थं च तुषोत्थं च तुषोदकम् ॥ २९७ ॥

गुणाः—तुषाम्बु दीपनं हृद्यं हृत्पाण्डुकृमिरोगनुत्। सौवीरकं चाम्लरसं केश्यं मस्तकदोषजित्। जराशैथिल्यहरणं वलसंतर्पणं परम् ॥ २९८ ॥ तण्डुलोत्थं तण्डुलाम्बु कषायं मधुरं लघु। संग्राहि विषविच्छर्दितृड्दाहव्रणनाशकृत् ॥ २९९ ॥ अन्नोदजः शिवरसत्र्यहात्पर्युषिते रसे। दीपनो मधुराम्लस्तु दाहजिल्लघुतर्पणः ॥ ३०० ॥

## (३८) सुरा।

सुरा मद्यं प्रसन्ना स्यान्मदिरा *वारुणी रसा। वरा मण्डा मदकरी माधवी वरुणात्मजा ॥ २६२ ॥ इरा कादम्बरी हाला जगेलो मेदको मता। मद्यजा-

* 'वारुणी'—'पुनर्नवाशिलापिष्टैर्वारुणी विहिता स्मृता। संहितैस्तालखर्जूररसैर्या साऽपि वारुणी' इति भावप्रकाशे।

१ ज. ट. तिलतैलं। २ क. छ. 'गदोन्मादकोबला। म'।

तयः—सौरेयी मधु *मैरेयी सुरासुरभवा स्मृता । महासुरा च विज्ञेया त्रिविधाऽपि सुरा मता ॥ २५६ ॥ सर्वं मद्यं सुसंजातं मधूलिकमिति स्मृतम् ।

गुणाः—दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् । सुस्वादु तिक्तकटुकमम्लपाकरसं सरम् ॥ २५७ ॥ सकषायं स्वरारोग्यं प्रीतिभावर्णकृल्लघु । नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ॥ २५८ ॥ कृच्छ्रशूलहितं रूक्षं सूक्ष्मं मूत्रविशोधनम् । वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥ २५९ ॥ कासार्शो ग्रहणीश्वासप्रतिश्यायविनाशनी । स्वेदमूत्रकफस्तन्यरक्तमांसकरी सुरा॥२६०॥ कासार्शोग्रहणीदोषमूत्राघातानिलापहा । स्तन्यरक्तक्षयहिता †सुरा बृंहणदीपनी ॥ २६१ ॥ छर्द्यरोचकहृत्कुक्षितोदशूलप्रमर्दनी । प्रसन्ना गुल्मवातार्शोविबन्धानाहनाशनी ॥ २६२ ॥ पित्तलाऽल्पकफा रूक्षा यवैर्वातप्रकोपनी । विष्टम्भिनी सुरा गुर्वी श्लेष्मला तु मधूलिका ॥ २६३ ॥ रूक्षा नातिकफा वृष्या पाचनी चाक्षुषी स्मृता। मधु मद्योत्तमं हृद्यं मार्द्वीकं कथितं तथा । सरणं भिषुविक्रान्तं काम्रिकान्तं मदोत्कटम् ॥२६४॥ +सीधुर्मधुकरः प्रोक्तो विदाह्यग्निबलप्रदः । सीधुरामण्डवासः स्याच्छीतपकरसस्तथा ॥ २६५ ॥ बल्यः पित्तहरो वृष्यो वर्ण्यस्तेषु रसासवः। रूक्षः कषायः कफहा वातपित्तप्रकोपनः ॥ २६६ ॥ त्रिदोषोद्रेकघ्नवृष्यश्च कोहलो वदनप्रियः । मेदको *जागलसमो संधानः स्यादभिषवः ॥ २६७ ॥ हृद्यः प्रवाहिकाटोपदुर्नामानिलशोषजित् । वल्कलोद्भवसारत्वाद्विष्टम्भी कफकोपनः ॥ २६८ ॥ मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् । अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ॥२६९॥ तस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु । दीपनं सृष्टविण्मूत्रो विशदोऽल्पमदो गुरुः ॥ २७० ॥ कषायो मधुरः सीधुर्गौडः पाचनदीपनः । शार्करो मधुरो रुच्यो दीपनो बस्तिशोधनः ॥ २७१ ॥ वातघ्नो मधुरः पाके हृद्य इन्द्रियबोधनः । कर्षणः शीतरसकः श्वयथूदरनाशनः ॥ २७२ ॥ वर्णकृज्जरणः स्वर्यो विबन्धघ्नोऽर्शसां हितः । छेदी मध्वासवस्तीक्ष्णो मेदःपीनसकासजित् ॥२७३ ॥ सुरासवस्तीक्ष्णमदः स्वादुस्तृष्णानिलापहः । कृमिमेदोनिलहरो मैरेयो मधुरो

---

* 'आयुर्वेदविज्ञाने'—मालूरमूलं बदरी शर्करा च तथैव च। एषामेकत्र संधानात् 'मैरेयी' मदिरा मता ॥

† 'सुरा'—शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता । इति भावप्रकाशे । + 'सीधुः-इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसश्च सः । इति भावप्रकाशे ।

* 'जागलः' ( जगलः ) 'जगलो मदनद्रुमे' इत्यमरः ।

---

१ ग्र. 'मद्यवाशस्यं शीत' ।

गुरुः ॥ २७४ ॥ बल्यः पित्तहरो वर्ण्यो मृद्वीकेक्षुरसासवः । सीधुर्मधुकपुष्पोत्थो विदाह्यग्निबलप्रदः ॥ २७५ ॥ रूक्षः कषायः कफहृद्वातपित्तप्रकोपनः । आक्षिकः पाण्डुरोगघ्नो व्रण्यः संग्राहको लघुः ॥ २७६ ॥ कषायो मधुरः सीधुः पित्तघ्नोऽसृक्प्रसादनः । जाम्बवो बद्धनिष्यन्दस्तुवरो वातकोपनः ॥ २७७ ॥ तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्मजित् । निर्दिशेद्रसतश्चान्यान्कन्दमूलफलासवान् ॥ २७८ ॥ अरिष्टो द्रव्यसंयोगात्संस्कारादधिको गुणैः । बहुदोषहरश्चैव दोषाणां शमनश्च सः ॥ २७९ ॥ दीपनः कफवातघ्नः सरः पित्तविरोधनः । शूलाध्मानोदरप्लीहज्वराजीर्णार्शसां हितः ॥ २८० ॥ पिप्पल्यादिकृतो गुल्मकफरोगहरः स्मृतः । चिकित्सितेषु वक्ष्यन्तेऽरिष्टा रोगहराः स्मृताः ॥ २८१ ॥ अरिष्टसर्वसीधूनां गुणान्कर्माणि चाऽऽदिशेत् । बुद्ध्या यथास्वसंस्कारमवेक्ष्य कुशलो भिषक् ॥ २८२ ॥ नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् । अनिष्टगन्धं विरसमहृद्यमविदाहि च ॥ २८३ ॥ सुगन्धि दीपनं हृद्यं रुचिष्यं कृमिनाशनम् । स्फुटस्रोतस्करं जीर्णं लघु वातकफापहम् ॥ २८४ ॥ सान्द्रं विदाहि दुर्गन्धं विरसं कृमिलं गुरु । अहृद्यं तरुणं तीक्ष्णमुष्णं दुर्भाजनस्थितम् ॥ २८५ ॥ अल्पौषधं पर्युषितमत्यच्छं पिच्छलं च यत् । तद्वर्ज्यं सर्वदा मद्यं किंचिच्छेषं तु यद्भवेत् ॥ २८६ ॥ तत्र यत्स्तोकसंभारं तरुणं पिच्छलं गुरु । कफप्रकोपि तन्मद्यं दुर्जरं च विशेषतः ॥ २८७ ॥ पित्तप्रकोपि बहुलं तीक्ष्णमुष्णं विदाहि च । अहृद्यं फेनिलं पूतिकृमिलं विरसं गुरु ॥ २८८ ॥ तथा पर्युषितं चापि विद्यादनिलकोपनम् । सर्वैर्दोषैरुपेतं तु सर्वदोषप्रकोपनम् ॥ २८९ ॥ चिरास्थितं जातरसं दीपनं कफवातजित् । रुच्यं प्रसन्नं सुरभि मद्यं सेव्यं मदावहम् ॥ २९० ॥ तस्यानेकप्रकारस्य मद्यस्य रसवीर्यतः । तीक्ष्णः सुरासवो हृद्यो मूत्रलः कफवातनुत् ॥ २९१ ॥ मुखप्रियः स्थिरमदो विज्ञेयोऽनिलनाशनः । लघुर्मध्वासवच्छेदी मेहकुष्ठविषापहः ॥ २९२ ॥ तिक्तः कषायशोफघ्नस्तीक्ष्णः स्वादुरवातकृत् । सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना ॥ २९३ ॥ समेत्य हृदयं प्राप्य धमनीरूर्ध्वमागतम् । विक्षोभ्येन्द्रियचेतांसि वीर्यं मदयतेऽचिरात् ॥ २९४ ॥ चिरेण श्लैष्मिके पुंसि पानतो जायते मदः । अचिराद्वातिके दृष्टः पैत्तिके शीघ्रमेव तु ॥ २९५ ॥ सात्त्विके शौचदाक्षिण्यहर्षमण्डनलालसः । गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः ॥ २९६ ॥ राजसे दुःखशीलत्वमात्मत्यागं ससाहसम् । कलहं सानुबन्धं तु करोति पुरुषे मदः ॥ २९७ ॥ अशौचनिद्रामात्सर्यागम्यागमनलोलुपम् । असत्यभाषणं चापि कुर्याद्धि तामसं मदः ॥ २९८ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

मद्यं सुरा प्रसन्ना स्यान्मदिरा वारुणी वरा । मत्ता कादंबरी शीता चपला कामिनी प्रिया ॥ ३०१ ॥ मदगन्धा च माध्वीकं मधु संधानमासवः । परिसृताऽमृता वीरा मेधावी मदनी च सा ॥ ३०२ ॥ सुप्रतिभा मनोज्ञा च विपाना मोदिनी तथा । हालाहलगुणाऽरिष्टं सरकोऽथ मधूलिका ॥ ३०३ ॥ मदोत्कटा महानन्दा द्वात्रिंशदभिधाः क्रमात् ।

गुणाः—मद्यं सुमधुराम्लं च कफमारुतनाशनम् । बलदीप्तिकरं हृद्यं सरमेतन्मदावहम् ॥ ३०४ ॥ मद्यं तावत्त्रिविधं *गौडी †माध्वी च ×पैष्टिका चेति । अन्यच्च सैन्धिकादि द्रव्यान्तरयोगतो विविधम् ॥ ३०५ ॥ स्याद्धातकीरसगुडादिकृता तु गौडी पुष्पद्रवादिमधुसारमयी तु माध्वी । पैष्टी पुनर्विविधधान्यविकारजाता ख्याता मदाधिकतयाऽत्र च पूर्वपूर्वा ॥ ३०६ ॥ तालादिरसनिर्यासैः सैन्धीं हालां सुरां जगुः । नानाद्रव्यकदम्बेन मद्यं कादम्बरं स्मृतम् ॥ ३०७ ॥ सैन्धी कादम्बरी चैव द्विविधं मद्यलक्षणम् । गौडी तीक्ष्णोष्णमधुरा वातहृत्पित्तकारिणी ॥ ३०८ ॥ बलकृद्दीपनी पथ्या कान्तिकृत्तर्पणी परा । माध्वी तु मधुरा हृद्या नात्युष्णा पित्तवातहृत् ॥ ३०९ ॥ पाण्डुकामलगुल्मार्शःप्रमेहशमनी परा । पैष्टी कटूष्णा तीक्ष्णा स्यान्मधुरा दीपनी परा ॥ ३१० ॥ सैन्धी शीता कषायाम्ला पित्तहृद्वातदा च सा । सर्वेषां तृणवृक्षाणां निर्यासं शीतलं गुरु ॥ ३११ ॥ मोहनं बलकृद्धृद्यं तृष्णासंतापनाशनम् । ऐक्षवं तु भवेन्मद्यं शिशिरं च मदोत्कटम् ॥ ३१२ ॥ यवधान्यकृतं मद्यं गुरु विष्टम्भदायकम् । शर्कराधातकीतोये कृतं शीतं मनोहरम्॥३१३॥ शार्करं कथ्यते मद्यं वृष्यं दीपनमोहनम् । ( *गौडी तु शिशिरे पानं पैष्टी हेमन्तवर्षयोः । शरद्ग्रीष्मवसन्तेषु माध्वी ग्राह्या न चान्यथा । कादम्बरीशार्करजादिमद्यं सुशीतलं वृष्यकरं मदाढ्यम् । माध्वीसमं स्यात्तृणवृक्षजातं मद्यं सुशीतं गुरुतर्पणं च । अन्यथा कुर्वतः पानं मद्यं संतापदोषदम् । अन्नद्वेषमदात्यादिकारकं मूर्छनं च तत् ) ।

विशेषगुणाः—मद्यं नवं सर्वविकारहेतुः सर्वं तु वातादिकदोषदायि । जीर्णं

*आयुर्वेदविज्ञाने—धातकीगुडमुख्या या गौडी सा मदिरोच्यते ।

†आयुर्वेदविज्ञाने—मध्वादिविहिता या तु माध्वी सा मदिरोच्यते ।

×आयुर्वेदविज्ञाने—कृता वहुविधैर्धान्यैः पैष्टीति मदिरोच्यते ।

* धनुश्चिह्नद्वयगतं टपुस्तकेऽधिकं दृश्यते ।

१ ट. कटूवम्लती ।

तु सर्वं सकलामयघ्नं बलप्रदं वृष्यकरं च दीपनम् ॥३१४॥ अन्यच्च—मद्यप्रयोगं कुर्वन्ति शूद्रादिषु महार्तिषु । द्विजैस्त्रीभिस्तु न ग्राह्यं यद्यप्युज्जीवयेन्मृतम्॥३१५॥ अन्ये द्वादशधा मद्यभेदानाहुर्मनीषिणः । उक्तेष्वन्तर्भवन्तीति नान्यैस्तु पृथगीरिताः ॥ ३१६ ॥

## ( ३९ ) *आसवः ।

†विद्यादरिष्टसंधानं सुखं संजातमासवम् ।

+गुणाः—आसवो रूक्षणीयश्च स च पानमधुश्रेयः ॥ २९९ ॥

शर्करासवगुणाः—शार्करः सुरभिः सौम्यो माधवो रूक्षणात्मकः । आसवो मुखवासश्च सुकुमारः सुयोजितः ॥ ३०० ॥

( राजनिघण्टावासवस्य पर्यायनामानि गुणा वा न दृश्यन्ते )

## ( ४० ) मर्जिका ( मज्जिका )

मर्जिका शिखरिण्युक्ता रसाला सुरभिस्तथा । उल्बणी खाण्डवरसा चातुर्जातकसंगता ॥ ३०१ ॥

*गुणाः—मर्जिकाया गुणा ज्ञेया बीजद्रव्यगुणैः समाः ।

(राजनिघण्टौ मज्जिकाशब्दस्य पर्यायनामानि गुणा वा न दृश्यन्ते)

## ( ४१ ) पानीयम् ( जलम् )

पानीयमापः कीलालं नीरं कं सलिलं जलम् । अमृतं वारुणं तोयं वार्यम्भोऽम्बूदकं पयः ॥ ३०२ ॥

गुणाः—साधारणं जलं रुच्यं दीपनं पाचनं लघु । श्रमतृष्णापहं वातकफमेदोघ्नपुष्टिदम् ॥ ३०३ ॥ *पानीयं मधुरं हिमं च रुचिदं तृष्णाविशोषापहं मोहभ्रान्तिमपाकरोति कुरुते भुक्तान्नपक्तिं पराम् । *निद्रालस्यनिरासनं विषहरं श्रान्तार्तसंतर्पणं नृणां धीबलवीर्यवृद्धिजननं नष्टाङ्गपुष्टिप्रदम् ॥ ३०४ ॥ गगनाम्बु त्रिदोषघ्नं गृहीतं यत्सुभाजने । बल्यं रसायनं मेध्यं पात्रापेक्षी ततः परम् ॥ ३०५ ॥ अनार्तवं विमुञ्चन्ति वारि वारिधरास्तु यत् । तत्त्रिदोषाय

---

* भावप्रकाशे—'आसवः'-यदपक्वौषधाम्बुभ्यां सिद्धं मद्यं स आसवः । आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः ।

†भावप्रकाशे-' अरिष्टम्'—पक्वौषधाम्बुसिद्धं यन्मद्यं तत्स्यादरिष्टकम् । अरिष्टं लघु पाकेन सर्वतश्च गुणाधिकम् ।

+ सुरादिप्रकरणे विस्तरेण गुणाः कथिताः सन्ति तस्मात्तत्र द्रष्टव्यम् ।

* सुरादिप्रकरणे विस्तरेण गुणाः कथिताः सन्ति तस्मात्तत्र द्रष्टव्यम् ।

---

१ ज. ट. 'जैस्त्रिभि' । २ ङ. छ. पानं म' । ३ झ. छ. त. 'श्रयम् । शा' ।

सर्वेषां देहिनां परिकीर्तितम् ॥ ३०६ ॥ दिव्यवाय्वग्निसंयोगात्संहताः खात्पतन्ति याः । शिलाप्रकारबद्धास्ताः करका अमृतोपमाः ॥ ३०७ ॥ अपविद्धाः समुद्रान्ते वह्नेरापस्तदुद्भवाः । धूमावयवनिर्मुक्तास्तुषाराख्यास्तु ताः स्मृताः ॥ ३०८ ॥ प्राक्समुद्राम्बुसंपर्कसमीरणसमन्विताः । दिवा सूर्यांशुसंतप्तं निशि चन्द्रांशुशीतलम् । कालपक्कमनिर्दोषमगस्त्युदयनिर्विषम् ॥ ३०९ ॥ हंसोदकमिति ख्यातं शारदं शीतलं शुचि । स्नानपानावगाहेषु शस्यते तु यथाऽमृतम् ॥ ३१० ॥ चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं स्मृतम् । नादेयं वातलं रूक्षं दीपनं लघु लेखनम् ॥ ३११ ॥ तदभिष्यन्दि मधुरं सान्द्रं गुरु कफावहम् । तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥ ३१२ ॥ ताडागं वातलं स्वादुकषायं कटुपाकि च । वातश्लेष्महरं *वाप्यं सक्षारं कटुपित्तनुत् ॥ ३१३ ॥ †चौण्ट्यमग्निकरं रूक्षं मधुरं कफकृन्न च । कफघ्नं दीपनं प्रोक्तं लघु प्रस्रवणोद्भवम् ॥ ३१४ ॥ सक्षारं पित्तलं $कौपं श्लेष्मघ्नं लघु दीपनम् । मधुरं पित्तशमनमविदाह्यौ+द्भिदं स्मृतम् ॥ ॥ ३१५ ॥ कैदारं मधुरं प्रोक्तं विपाके गुरु दोषलम् । तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलं तु तत् ॥ ३१६ ॥ सामुद्रमुदकं विस्रं लवणं सर्वदोषकृत् । नद्यः पाषाणनिर्भिन्नाः क्षुभिताभ्याहतोदकाः ॥ ३१७ ॥ हिमवत्प्रभवाः पथ्याः पुण्या देवर्षिसेविताः । नद्यः पाषाणसिक्ताश्च वाहिन्यो विमलोदकाः ॥ ३१८ ॥ मलयप्रभवा याश्च तज्जलं त्वमृतोपमम् । पश्चिमाभिमुखा याश्च पथ्यास्ता निर्मलोदकाः ॥ ३१९ ॥ प्रायो मृदुवहा गुर्व्यो याश्च पूर्वसमुद्रगाः । पारियात्रभवा[3] याश्च विन्ध्यसह्यभवाश्च याः ॥ ३२० ॥ शिरोहृद्रोगकुष्ठादिहेतुस्ताः श्लीपदस्य च । चन्द्रार्ककरसंस्पृष्टं वायुनाऽऽस्फालितं बहु ॥ ३२१ ॥ पर्वतोपरि यद्वारि समं पौरंदरेण तु । तस्यानुगुणमुद्दिष्टं शैल्यप्रस्रवणोद्भवम् ॥ ३२२ ॥ लेखनं दीपनं रूक्षं किंचिद्वातप्रकोपनम् । †अनूपदेशजं वारि तत्सान्द्रं गुरु पिच्छलम्

---

* आयुर्वेदविज्ञाने—पाषाणैरिष्टकाभिर्वा बद्धकूपा बृहत्तरा । ससोपाना भवेद्वापी तज्जलं वाप्यमुच्यते ॥

† आयुर्वेदविज्ञाने—शिलाकीर्णे स्वयं श्वभ्रं नीलाञ्जनसमोदकम् । लतावितानसंछन्नं चौन्ड्यमित्यभिधीयते ॥ क्वचित्पुस्तकेषु चौण्ट्य इति पाठो दृश्यते ।

$ आयुर्वेदविज्ञाने—भूमौ खातो ऽल्पविस्तारो गम्भीरो मण्डलाकृतिः । बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते ॥

\+ आयुर्वेदविज्ञाने—विदार्य भूमिं निम्नां यन्महत्या धारया स्रवेत् । तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ॥

† 'मधुरं श्लेष्मजननं स्निग्धं पावकसादनम् । जाड्यगद्गगबाधीयं सक्लेशारोचकापहम्' इत्यधिकः श्लोको ण.पुस्तके ।

---

१ झ. अपि नद्याः स° । २ ण. °न्ते चाम्भेरा° । ३ झ. प्राच्यावन्त्यभवा ।

॥३२३॥ प्रमेदःश्लीपदच्छर्दिगलगण्डास्यशोषकृत् ॥ ३२४ ॥ विपर्यये जाङ्गले च समं साधारणं स्मृतम् । अगन्धमस्पष्टरसं सुशीतं तृड्विनाशनम् ॥ ३२५ ॥ अच्छं लघु च हृद्यं च तोयं गुणवदुच्यते । पिच्छलं कृमिलं क्लिन्नं पर्णशैवालकर्दमैः ॥३२६॥ विवर्णं विरसं सान्द्रं दुर्गन्धं न हितं जलम् । दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः ॥ ३२७ ॥ अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना । कफमेदोनिलामघ्नं दीपनं बस्तिशोधनम् ॥ ३२८ ॥ कासश्वासज्वरहरं पथ्यमुष्णोदकं सदा । भिनत्ति श्लेष्मसंघातं मारुतं चापि कर्षति ॥३२९॥ अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि । मद्यपानसमुद्भूते रोगे पित्तोद्भवे तथा ॥ ३३० ॥ संनिपातसमुत्थे च शृतशीतं प्रशस्यते । सार्धं वाऽप्यर्धपादोनं पादहीनं तु हैमने[1] ॥ ३३१ ॥ शिशिरे च वसन्ते च ग्रीष्मे चार्धावशेषितम् । विपरीतामृतं दृष्ट्वा पादांशं चाष्टभागिकम् ॥ ३३२ ॥ यत्क्वथ्यमानं निर्वेदं निष्फेनं निर्मलं भवेत् । तत्पादहीनं वातघ्नमर्धहीनं च पित्तजित् ॥ ३३३ ॥ कफघ्नं पादशेषं तु पानीयं लघु दीपनम् । धारापातेन विष्टम्भि दुर्जरं पवनाहतम्[2] ॥ ३३४ ॥ शृतशीतं त्रिदोषघ्नं बाष्पान्तर्भावशीतलम् । दिवाशृतं तु यत्तोयं रात्रौ तद्गुरुतां व्रजेत् ॥ ३३५ ॥ रात्रौ शृतं दिवा चैव गुरुत्वमधिगच्छति । मूर्छापित्तोष्णदाहेषु पित्तरक्ते मदात्यये ॥३३६ ॥ भ्रमक्लमपरीतेषु तमके वमथौ तथा । हृद्रोगे[3] रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ ३३७ ॥ पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे । आध्माने स्तिमिते[4] कोष्ठे सद्यःशुद्धे नवज्वरे ॥ ३३८ ॥ हिक्कायां स्नेहपित्ते च शीताम्बु परिवर्जयेत् । अरोचके प्रतिश्याये प्रसेके श्वयथौ क्षये ॥ ३३९ ॥ मन्दाग्नावुदरे कुष्ठे ज्वरे नेत्रामये तथा । व्रणे च मधुमेहे च पानीयं मन्दमाचरेत् ॥ ३४० ॥ स्निग्धं सुस्वादु हृद्यं च दीपनं बस्तिशोधनम् । *नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः । गुर्व्यः शैवालसंछन्नाः कलुषा मन्दगाश्च याः ॥ ३४१ ॥ प्रायेण नद्यो मरुषु सतिक्ता लवणान्विताः । ईषत्कषाया मधुरा लघुपाका बले हिताः ॥ ३४२ ॥ वर्ज्यजलम्—तृणपर्णोत्करयुतं कलुषं विषसंयुतम् । योऽवगाहेत वर्षासु पिबेद्वाऽपि नवं जलम् । स बाह्याभ्यन्तरान्रोगान्प्राप्नुयात्क्षिप्रमेव हि ॥ ३४३ ॥

जलपाने विशेषनियमाः—अजीर्णे भेषजं वारि जीर्णे वारि बलप्रदम् । अमृतं

---

*ग्रन्थान्तरे—मासद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः । तासु स्नानादिकं वर्ज्यं वर्जयित्वा सुरापगाम् ॥

---

१ झ. हैमिजम् । २ झ. पावनाहतम् । ३ झ. ऊर्ध्वगे । ४ ण. तिमिरे ।

भोजने वारि भुक्तस्योपरि तद्विषम् ॥ ३४४ ॥ तृषितो नैव भुञ्जीत क्षुधितो न जलं पिबेत् । तृषितस्य भवेद्गुल्मः क्षुधितस्य भगंदरः ॥ ३४५ ॥ भुक्त-स्याऽऽदौ जलं पीतमग्निसादं कृशाङ्गताम् । अन्ते करोति स्थूलत्वमूर्ध्वमामा-शये कफम् ॥ ३४६ ॥ मध्ये मध्याङ्गतां सम्यग्धातूनां जरणं सुखे ।

भूमिभागविशेषेण जलगुणाः—भूमिः पञ्चविधा ज्ञेया कृष्णा रक्ता सिता तथा। पीता नीला भवेच्चान्या गुणास्तासां प्रकीर्तिताः॥३४७॥ कृष्णा च मधुरा क्षारा कषाया पीतवर्णिनी। रक्ता सा च भवेत्तिक्ता मधुराम्ला सिता तथा॥३४८॥ नीला सकटुका ज्ञेया भूविभागाज्जलं विदुः। सघनं मधुरं नीरं कृष्णभूमिप्रति-ष्ठितम् ॥ ३४९ ॥ पीताश्रितं कषायं रक्तायाः पित्तगुणं स्मृतम् । सिताया मधुराम्लं नीलायाः कटुगुणं स्मृतम् ॥ ३५० ॥ जलं पञ्चविधं ज्ञेयं भूमिभागेन लक्षयेत् ।

नारिकेरोदकगुणाः—वृष्यं पिपासादाहघ्नं नारिकेरोदकं लघु । तदेव जीर्णं विष्टम्भि गुरु पित्तकरं स्मृतम् ॥ ३५१ ॥

राजनिघण्टौ पानीयादिश्चतुर्दशो वर्गः—

पानीयजीवनवनामृतपुष्कराम्भःपाथोम्बुशम्बरपयःसलिलोदकानि । आपः कवारुणकबन्धजलानि नीरकीलालवारिकमलानि विषार्णसी च ॥ ३१७ ॥ भुवनं दहनारातिर्वास्तोयं सर्वतोमुखं क्षीरम् । घनरसनिम्नगमेघप्रसवरसाश्चेति वह्निमिताः ॥ ३१८ ॥

गुणाः—* । * ॥ ३१९ ॥

दिव्योदकं खवारि स्यादाकाशसलिलं तथा। व्योमोदकं चान्तरिक्षजलं चेष्वभिधाह्वयम् ॥ ३२० ॥

गुणाः—रुच्यं दीपनदं तृष्णाश्रममेहापहारकम् । व्योमोदकं त्रिदोषघ्नं मधुरं पथ्यदं परम् ॥ ३२१ ॥ सद्योवृष्टम्बु भूमिस्थं कलुषं दोषदायकम् । चिरस्थितं लघु स्वच्छं पथ्यं स्वादु सुखावहम् ॥ ३२२ ॥

समुद्रजलम्—यादोनाथसमुद्रसिन्धुजलदाकूपारपाथोधयः पारावारपयोधि-सागरसरिन्नाथाश्च वारांनिधिः । अम्भोराशिसरस्वदम्बुधिनदीनाथाब्धि-नित्यार्णवोदन्वद्वारिधिवार्धयः कधिरपांनाथोऽपि रत्नाकरः ॥ ३२३ ॥

गुणाः—सागरसलिलं विस्रं लवणं रक्तामयप्रदं चोष्णम् । वैवर्ण्यदोषजननं विशेषदाहार्तिपित्तकरणं च ॥ ३२४ ॥

नदी धुनी निर्झरिणी तरङ्गिणी सरस्वती शैवलिनी समुद्रगा । कूलंकषा कूलवती च निम्नगा शैवालिनी सिन्धुरथाऽऽपगाऽपि च ॥ ३२५ ॥ ह्रदिनी

समुद्रकान्ता सागरगा ह्रादिनी सरित्कर्षूः । स्रोतस्विनी सुनीरा रोधोवक्रा च वाहिनी तटिनी ॥ ३२६ ॥

गुणाः—नादेयं सलिलं स्वच्छं लघु दीपनपाचनम् । रुच्यं तृष्णापहं पथ्यं मधुरं चेषदुष्णकम् ॥ ३२७ ॥

देशविशेषान्नदीजलगुणाः—सर्वा गुर्वी प्राङ्मुखी वाहिनी या लघ्वी पश्चाद्वाहिनी निश्चयेन । देशे देशे तद्गुणानां विशेषादेषा धत्ते गौरवं लाघवं च ॥ ३२८ ॥ विन्ध्यात्प्राची याऽप्यवाची प्रतीची या चोदीची स्यान्नदी सा क्रमेण । वाताटोपं श्लेष्मपित्तार्तिलोपं पित्तोद्रेकं पथ्यपाकं च धत्ते ॥ ३२९ ॥ हिमवति मलयाचले च विन्ध्ये प्रभवति सह्यगिरौ च या स्रवन्ती । सृजति किल शिरोरुजादिदोषानपनुदतेऽपि च पारियात्रजाता ॥ ३३० ॥

विशेषः—नद्यः प्रावृषिजास्तु पीनसकफश्वासार्तिकासप्रदाः पथ्या वातकफापहाः शरदिजा हेमन्तजा बुद्धिदाः । संतापं शमयन्ति शं विदधते शैशिर्यवासन्तजास्तृष्णादाहवमिश्रमार्तिशमदा ग्रीष्मे यथासद्गुणाः ॥ ३३१ ॥ अनूपसलिलं स्वादु स्निग्धं पित्तहरं गुरु । तनोति पामकण्डूतिकफवातज्वरामयान् ॥ ३३२ ॥ जाङ्गलं सलिलं स्वादु त्रिदोषघ्नं रुचिप्रदम् । पथ्यं चाऽऽयुर्बलवीर्यपुष्टिदं कान्तिकृत्परम् ॥ ३३३ ॥ जातं ताम्रमृदस्तदेव सलिलं वातादिदोषप्रदं देशाज्जाड्यकरं च दुर्जरतरं दोषावहं धूसरम् । वातघ्नं तु शिलाशिरोत्थममलं पथ्यं लघु स्वादु च श्रेष्ठं श्याममृदस्त्रिदोषशमनं सर्वामयघ्नं पयः ॥३३४॥ ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यं च । प्रस्रवणजलं स्वच्छं लघु मधुरं रोचनं च दीपनकृत् ॥ ३३५ ॥ तडागसलिलं स्वादु कषायं वातदं कियत् । वापीजलं तु संतापि वातश्लेष्मकरं गुरु । कफघ्नं कूपपानीयं क्षारं पित्तकरं लघु ॥ ३३६ ॥ औद्भिदं पित्तशमनं सलिलं लघु च स्मृतम् । केदारसलिलं स्वादु विपाके दोषदं गुरु । तदेव बद्धमुक्तं तु विशेषाद्दोषदं भवेत् ॥ ३३७ ॥ नादेयं नवमृद्घटेषु निहितं संतप्तमर्कांशुभिर्यामिन्यां च निविष्टमिन्दुकिरणैर्मन्दानिलान्दोलितम् । एलाद्यैः परिवासितं श्रमहरं पित्तोष्णदाहे विषे मूर्छारक्तमदात्ययेषु च हितं शंसन्ति हंसोदकम् ॥ ३३८ ॥

घ्राणपीतोदकगुणाः—यः पानीयं पिबति शिशिरं स्वादु नित्यं निशीथे प्रत्यूषे वा पिबति यदि वा घ्राणरन्ध्रेण धीरः । सोऽयं सद्यः पतगपतिना स्पर्धते नेत्रशक्त्या स्वर्गाचार्यं प्रहसति धिया द्वेष्टि दस्रौ च तन्वा ॥ ३३९ ॥

दूषितजलम्—विण्मूत्रारुणनीलिकाविषहतं तप्तं घनं फेनिलं दन्तग्राह्यमनुत्तरं

१ ट. °थास्वं गु° । २ ट. °षापहं । ३ ट. °तापवा° । ४ झ. ढ. °मनार्तवं स° ।

सलवणं शैवालकैः संवृतम् । जन्तुव्रातविमिश्रितं गुरुतरं पर्णौघपङ्काविलं चन्द्रार्कांशुतिरोहितं च न पिबेन्नीरं जडं दोषलम् ॥ ३४० ॥

शीताम्बुपरिवर्जनम्—पार्श्वशूले प्रतिश्याये वातदोषे नवज्वरे । हिक्काध्माना-दिदोषेषु शीताम्बु परिवर्जयेत् ॥ ३४१ ॥

शृतशीतजलम्—धातुक्षये रक्तविकारदोषे वान्त्यस्रमेहे विषविभ्रमेषु[१] । जीर्णज्वरे शैथिलसंनिपाते जलं प्रशस्तं शृतशीतलं तु ॥ ३४२ ॥

तप्तादिजलम्—तप्तं पाथः पादभागेन हीनं प्रोक्तं पथ्यं वातजातामयघ्नम् । अर्धांशोनं नाशयेद्वातपित्तं पादप्रायं तत्तु दोषत्रयघ्नम् ॥ ३४३ ॥ हेमन्ते पादहीनं तु पादार्धोनं तु शारदे । प्रावृड्वसन्ते शिशिरे ग्रीष्मे चार्धाव-शेषितम् ॥ ३४४ ॥

कौपं प्रस्रवणं वाऽपि शिशिरर्तुवसन्तयोः । ग्रीष्मे चौडं तु सेवेत दोषदं स्यादतोऽन्यथा ॥ ३४५ ॥

तप्तं दिवा जाड्यमुपैति नक्तं नक्तं च तप्तं तु दिवा गुरु स्यात् । दिवा च नक्तं च नृभिस्तदात्वतप्तं जलं युक्तमतो ग्रहीतुम् ॥ ३४६ ॥ उष्णं क्वापि क्वापि शीतं कवोष्णं क्वापि क्वापि क्वाथशीतं च पाथः । इत्थं नृणां पथ्यमेत-त्प्रयुक्तं कालावस्थादेहसंस्थानुबोधात् ॥ ३४७ ॥ अपनयति पवनदोषं दल-यति कफमाशु नाशयत्यरुचिम् । पाचयति चान्नमनलं पुष्णाति निशीथपीत-मुष्णाम्भः ॥ ३४८ ॥

कालविशेषे जलपानम्—रात्रौ पीतमजीर्णदोषशमनं शंसन्ति सामान्यतः पीतं वारि निशावसानसमये सर्वामयध्वंसनम् । भुक्त्वा तूर्ध्वमिदं च पुष्टिजननं प्राक्केदपुष्टिप्रदं रुच्यं जाठरवह्निपाटवकरं पथ्यं च भुक्त्यन्तरे ॥ ३४९ ॥

जलपानलक्षणम्—अत्यम्बुपानान्न विपच्यतेऽन्नमनम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥ ३५० ॥

जलभेदाः—जलं चतुर्विधं प्राहुरन्तरिक्षोद्भवं बुधाः । धारं च कारकं चैव तौषारं हैममित्यपि ॥ ३५१ ॥ अम्बु वर्षोद्भवं धारं कारं वर्षोपलोद्भवम् । नीहारतोयं तौषारं हैमं प्रातर्हिमोद्भवम् ॥३५२॥ धारं च द्विविधं प्रोक्तं गाङ्ग-सामुद्रभेदतः । तत्र गाङ्गं गुणाढ्यं स्याददोषं पाचनं परम् ॥३५३॥ यदा स्यादा-श्विने मासि सूर्यः स्वातिविशाखयोः । तदाऽम्बु जलदैर्मुक्तं गाङ्गमुक्तं मनीषिभिः ॥२५४॥अन्यदा मृगशीर्षादिनक्षत्रेषु यदम्बुदैः । अभिवृष्टमिदं तोयं सामुद्रमिति शब्दितम् ॥ ३५५ ॥धाराधरे वर्षति रौप्यपात्रे विन्यस्य शाल्योदनसिद्धपिण्डे ।

---

१ ज. ट. 'विभ्रमेषु ।

दभ्रोपदिग्धे निहितं मुहूर्तादविक्रियं गाङ्गमथान्यथा स्यात् ॥ ३५६ ॥ गाङ्गं जलं स्वादु सुशीतलं च रुचिप्रदं पित्तकफापहं च । निर्दोषमच्छं लघु तच्च नित्यं गुणाधिकं व्योम्नि गृहीतमाहुः ॥ ३५७ ॥ चन्द्रकान्तोद्भवं वारि पित्तघ्नं विमलं लघु । मूर्छापित्तास्रदाहेषु हितं कासमदात्यये ॥ ३५८ ॥ सामुद्रसलिलं शीतं कफवातप्रदं गुरु । चित्रायामाश्विने तच्च गुणाढ्यं गाङ्गवद्भवेत् ॥ ३५९ ॥ पतितं भुवि यत्तोयं गाङ्गं सामुद्रमेव वा । स्वस्वाश्रयवशाद्गच्छेदन्यदन्यद्रसादिकम् ॥ ३६० ॥ आम्लं च लवणं च स्यात्पतितं पार्थिवस्थले । आप्ये तु मधुरं प्रोक्तं कटु तिक्तं च तैजसे ॥ ३६१ ॥ कषायं वायवीये स्यादव्यक्तं नाभसे स्मृतम् । तत्र नाभसमेवोक्तमुत्तमं दोषवर्जितम् ॥ ३६२ ॥ यत्र चेदाश्विने मासि नैव वर्षति वारिदः । गाङ्गतोयविहीने स्युः काले तत्राधिका रुजः ॥ ३६३ ॥ क्वचिदुष्णं क्वचिच्छीतं क्वचित्क्वथितशीतलम् । क्वचिद्भेषजसंयुक्तं न क्वचिद्वारि वार्यते ॥ ३६४ ॥

## ( ४२ ) मानुषः ( पुरुषः )

मानुषः पुरुषो नाऽथ शतायुर्नर एव च । कान्तो मर्त्यः पुमान्वक्ता दीर्घप्रेक्षी च मानवः ॥ ३५२ ॥

गुणाः—नरमांसमखाद्यं स्यान्मूत्रमालेपनं मतम् । नेत्ररोगहरं वृष्यं पाण्डुशोफविनाशनम् ॥ ३५३ ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । द्विपादश्चेतना भूस्था भूमिजा भूस्पृशो विशः ॥ ३६५ ॥

## ( ४३ ) स्त्री ।

स्त्री योषिद्वनिता योषा वासिता वामलोचना । प्रतीपदर्शिनी श्यामा कान्ता नार्यङ्गनाऽबला ॥ ३५४ ॥ रामा च कामिनी भीरुः सुन्दरी कामुका तथा । महिला ललना गौरी प्रोक्ता सीमन्तिनीति च ॥ ३५५ ॥ प्रमदा युवती चैव सैकवासा प्रकीर्तिता ।

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

स्त्री योषिद्वनिताऽबला सुनयना नारी च सीमन्तिनी रामा वामदृगङ्गना च ललना कान्ता पुरध्री वधूः । सुभ्रूः सा वरवर्णिनी च सुतनुस्तन्वी तनुः कामिनी तन्वङ्गी रमणी कुरङ्गनयना भीरुः प्रिया भामिनी ॥ ३६६ ॥

---

१ ङ. छ. मनुष्यः । २ ङ. वासित्रा । छ. वासिला ।

योषिन्महेला महिला विलासिनी नितम्बिनी साऽपि च मत्तकाशिनी । जनी सुनेत्रा प्रमदा च सुन्दरी स्यादञ्चितभ्रूर्ललिता विलासिनी ॥ ३६७ ॥ मानिनी च वरारोहा नताङ्गी च नतोदरा । प्रतीपदर्शिनी श्यामा कामिनी दर्शनी च सा ॥ ३६८ ॥

## ( ४४ ) शरीरम् ( वपुः )

शरीरं शकटं देहं पुरं कायं कलेवरम् । वपुश्चावयवस्थानमात्मा दशरथस्तथा ॥ ३५६ ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

तनुस्तनूः संहननं शरीरं कलेवरं क्षेत्रवपुःपुराणि । गात्रं च मूर्तिर्घनकाय-देहावष्टाङ्गपीडानि च विग्रहश्च ॥ ३६९ ॥

## ( ४५ ) वाचा ।

वाचा सरस्वती वाणी वार्ग्गौरी (?) वचनी तथा । गिरा च भारती चैव ब्राह्मी भाषा च गी रसा ॥ ३५७ ॥

## ( ४६ ) वायुः ।

वायुः प्रभञ्जनः कर्ता मारुतः श्वसनोऽनिलः । समीरणो मातरिश्वा पवनश्च सदागतिः ॥३५८॥ प्राणोऽपान उदानश्च समानो व्यान एव च । कृकरो देवदत्तश्च नागः कूर्मो धनंजयः ॥ ३५९ ॥

गुणाः—तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः ।

राजनिघण्टौ सत्त्वादिरेकविंशो वर्गः—

वातो गन्धवहो वायुः पवमानो महाबलः । स्पर्शनो गन्धवाही च पवनो मरुदाशुगः ॥३७०॥ श्वसनो मातरिश्वा च नभस्वान्मारुतोऽनिलः । समीरणो जगत्प्राणः समीरश्च सदागतिः ॥ ३७१ ॥ जवनः पृषदश्वश्च तरस्वी च प्रभञ्जनः । प्रधावनोऽनवस्थानो धूननो मोटनः खगः ॥३७२॥ अन्येऽपि वायवो देहे नाडीचक्रप्रवाहकाः । मया वितत्य नोक्तास्ते ग्रन्थगौरवभीरुणा ॥ ८ ॥

## ( ४७ ) पित्तम् ।

पित्तं तेजोमयं तिक्तं शिखी वैश्वानरोऽनलः । ज्वरपक्ता तृष्णाकर्ता शोषं चैव प्रकीर्तितम् ॥ ३६० ॥

गुणाः—पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥ ३६१ ॥ आग्नेयमुष्णं विषदं सतीक्ष्णं सरं द्रवं विस्रतरं विदाहि । विनीलमम्लं कटुकं च पित्तं पक्वाशयामाशयमध्यवर्ति ॥ ३६२ ॥

---

१ ख. 'ग्गौर्वाच' ।

## ( ४८ ) श्लेष्मा ( कफः )

श्लेष्मा बलासः सततो बलवान्समकृत्तथा । सोमयोनिरनिर्वाणो निद्राजननकः कफः ॥३६३॥ स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।

गुणाः—स्निग्धो मृदुर्मधुरपिच्छलशीतसान्द्रः श्वेतो गुरुश्च लवणानुरसो विदाहात् । श्लेष्मा वसत्युरसि मूर्धनि सर्वसन्धिष्वामाशये वसति तत्र परं विशेषात् ॥ ३६४ ॥

## ( ४९ ) मोहः ( मोहम् )

त्रिदोषसंभवो मोहः संकरो मिश्र एव च । संनिपातो मतिभ्रंशः संन्यासो नष्टसंज्ञकः ॥ ३६५ ॥

## ( ५० ) प्रकृतयः ।

कृशो रूक्षोऽल्पकेशश्च चलचित्तोऽनवस्थितः । बहुवाग्व्योमगः स्वप्ने वातप्रकृतिकोऽधमः ॥ ३६६ ॥ अकालपलितो गौरः प्रस्वेदी कोपनो बुधः । स्वप्ने च दीप्तिमत्प्रेक्षी पित्तलो मध्यमो नरः ॥ ३६७ ॥ स्थिरचित्तः सुपुष्टाङ्गः सुप्रजः स्निग्धमूर्धजः । स्वप्ने जलाशयालोकी श्लेष्मप्रकृतिरुत्तमः ॥ ३६८ ॥

राजनिघण्टौ सत्त्वादिरेकविंशो वर्गः—

सत्त्वाढ्यः शुचिरास्तिकः स्थिरमतिः पुष्टाङ्गको धार्मिकः कान्तः सोऽपि बहुप्रजः सुमधुरक्षीरादिभोज्यप्रियः । दाता पात्रगुणादृतो द्रुततमं वाग्मी कृपालुः समो गौरः श्यामतनुर्घनाम्बुतुहिनस्वप्नेक्षणः श्लेष्मलः ॥ ३७४ ॥ राजस्यो लवणाम्लतिक्तकटुकप्रायोष्णभोजी पटुः प्रौढो नातिकृशोऽप्यकालपलिती क्रोधप्रपञ्चान्वितः । द्राघीयान्महिलाशयो वितरिता सोपाधिकं याचितो गौराङ्गः कनकादिदीप्तिललितः स्वप्नी च पित्तात्मकः[1] ॥ ३७५ ॥ निद्रालुर्बहुभाषकः सुकुटिलः क्रूराशयो नास्तिकः प्रायः पर्युषितातिशीतविरसाहारैकनिष्ठोऽलसः । कार्येष्वत्यभिमानवानसमये दाता यथेच्छं कृशः स्वप्ने व्योमगतिः सितेतरतनुर्वातूलकस्तामसः ॥ ३७६ ॥ सत्त्वादयो गुणा यत्र मिश्रिताः सन्ति भूयसा । मिश्रप्रकृतिकः सोऽयं विज्ञातव्यो मनीषिभिः ॥३७७॥ अपि च—सत्त्वादिरजसा मिश्रे श्रेष्ठं सत्त्वादितामसे । मध्यमं रजसा मिश्रे कनीयो गुणमिश्रणम् ॥ ३७८ ॥

---

1 ट. ॰त्ताधिकः ।

## ( ५१ ) अस्थि ।

अस्थि हड्डं बलकरं संधानं देहधारणम् । सकलं मांसलिप्तं च सर्वमेदःसमुद्भवम् ॥ ३६९ ॥

## ( ५२ ) आमिषम् (मांसम्)

आमिषं लोभनं मांसं रस्यं शोणितसंभवम् । अङ्गजं पिशितं कीरं क्रव्यं राक्षसभोजनम् ॥ ३७० ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

मांसं तु पिशितं क्रव्यं पलं तु रस्यमस्रजम् । पललं जाङ्गलं कीरमामिषं च तदुच्यते ॥ ३७१ ॥

## ( ५३ ) वस्ना ( वसा )

वस्ना[1] वसा पीतधरा मेदोमांससमुद्भवा । सर्वस्नेहप्रधाना च वसाऽस्थिजननी तथा ॥ ३७१ ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

वसा तु वस्नसा स्नायुर्वत्सोक्ता देहवल्कलम् ।

## ( ५४ ) रक्तम् ।

रक्तं तु शोणितं विस्नमसृग्लोहितमेव च । आग्नेयमामिषकरं प्राणदं रससंभवम् ॥ ३७२ ॥ अशुद्धं रुधिरं चैव रक्तनाम प्रकीर्तितम् ।

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

रक्तास्ररुधिरत्वग्जकीलालक्षतजानि तु । शोणितं लोहितं चासृक्शोणं लोहं च चर्मजम् ॥ ३७३ ॥

## ( ५५ ) शुक्रम् ।

शुक्रं तेजो बलं पुंस्त्वं पौरुषं हर्षसंभवम् । रेतो वीर्यं वृद्धिकरं शिरस्थं सप्तधातुजम् ॥ ३८० ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

शुक्रं पुंस्त्वं रेतो बीजं वीर्यं च पौरुषं कथितम् । इन्द्रियमप्रविकारो मज्जरसो हर्षणं बलं चैव ॥ ३८१ ॥

## ( ५६ ) अस्थिसारम् ( मज्जा )

अस्थिसारस्तथा मज्जा[2] बीजं तेजोऽस्थिसंभवम् ।

---

१ ङ. छ. ण. त. विस्ना । २ ण. 'ज्जा जीवते' ।

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

अस्थिसारस्तु मज्जा स्यात्तेजो बीजं तथाऽस्थिजम्। जीवनं देहसारश्च तथाऽस्थिस्नेहसंज्ञकम्॥ ३८२॥

## (५७) रसः।

रसः प्राणप्रदः पथ्यं षड्रसो ह्यन्नसंभवः। रक्तस्य धातुकर्ता च स च रक्तपिता स्मृतः॥ ३७४॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

रसस्तु रसिका प्रोक्ता स्वेदमाता वपुःस्रवः। चर्माम्भश्चर्मसारश्च रक्तसूरस्रमातृका॥ ३८३॥

## (५८) सप्त धातवः।

रसाद्रक्तं ततो मांसं मांसान्मेदोऽस्थि मेदसः। अस्थ्नो मज्जा ततः शुक्रमिति तेषां जनिक्रमः॥ ३७५॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

रसासृङ्मांसमेदोस्थिमज्जानः शुक्रसंयुताः। शरीरस्थैर्यदाः सम्यग्विज्ञेयाः सप्त धातवः॥ ३८४॥ रसादस्रं ततो मांसं मांसान्मेदोऽस्थि तद्भवम्। अस्थ्नो मज्जा ततः शुक्रमित्यमेषां जनिक्रमः॥ ३८५॥

## (५९) हस्ती।

हस्ती द्विपो गजो नाग इभोऽथ द्विरदः करी। वारणः कुञ्जरो दन्ती मातङ्गः षष्टिहायनः॥ ३७६॥ कुम्भी स्तम्बेरमः पद्मी सिन्धुरश्च मतङ्गजः। करेणुः करिणी प्रोक्ता कलभः करिशावकः॥ ३७७॥ हस्तिनी धेनुका ज्ञेया गजस्त्री गजगामिनी।

गुणाः—हस्ती कफानिलौ हन्यादुष्णः पित्तास्रकोपनः।

राजनिघण्टौ सिंहादिरेकोनविंशतितमो वर्गः—

द्विरदगजमतङ्गजेभकुम्भिद्विरदनवारणहस्तिपद्मिनागाः। करिकरटिविषाणिकुञ्जरास्ते रदनिमदावलसंमदद्विपाश्च॥ ३८६॥ भद्रः स्तम्बेरमो दन्ती द्रुमारिः षष्टिहायनः। मातङ्गः पुष्करी दन्तावलश्चानेकपस्त्विभः॥ ३८७॥

त्रिविधगजनामानि—भद्रो मन्दो मृगश्चेति विज्ञेयास्त्रिविधा गजाः। वनप्रचारसारूप्यसत्त्वभेदोपलक्षिताः॥ ३८८॥ स बालः कलभो ज्ञेयो दुर्दन्तो

१ झ. ट. ढ. °लसामजद्वि°। २ झ. ढ. °जाः। सुदन्तो बालभो। ३ जं. दुर्दान्तो।

व्याल उच्यते । प्रभिन्नो गर्जितो भ्रान्तो मत्तो मदकलश्च सः ॥ ३८९ ॥ हस्तिनी—इभी तु करिणी ज्ञेया हस्तिनी धेनुका वशा । करेणुः पद्मिनी चैव मातङ्गी वासिता च सा ॥ ३९० ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—हस्तिक्रव्यं गुरु स्निग्धं वातलं श्लेष्मकारकम् । बहुपुष्टिप्रदं चैव दुर्जरं मन्दवह्निदम् ॥ ३९१ ॥

## ( ६० ) घोटः । (अश्वः)

घोटोऽश्वस्तुरगो वाजी हरिर्हंसस्तुरङ्गमः । शालिहोत्रो जवी सप्तिस्तुरङ्गश्च ययुर्हयः ॥ ३७८ ॥ घोटिका—घोटिका वडवा वामी प्रसूकाऽश्वा च वाजिनी ।

गुणाः—आश्वं सलवणं स्निग्धं बल्यं च गुरु बृंहणम् । घोटकस्तु कटुः पाके दीपनः कफपित्तनुत् ॥ ३७९ ॥ वातहृद्बृंहणो बल्यश्चक्षुष्यो मधुरो लघुः ।

राजनिघण्टौ सिंहादिरेकोनविंशतितमो वर्गः—

अश्वो घोटस्तुरङ्गोऽर्वा तुरगश्च तुरङ्गमः । वाहो वाजी मुद्गभोजी वीतिः सप्तिश्च सैन्धवः ॥ ३९२ ॥ हरिर्हयश्च धाराटो जवनो जीवनो जवी । गन्धर्वो वाहनश्रेष्ठः श्रीभ्राताऽमृतसोदरः ॥ ३९३ ॥

अश्वभेदाः—आरट्टसिन्धुजवनायुजपारसीककाम्बोजबाह्लिकमुखा विविधा-स्तुरङ्गाः । साम्रोणशेफकमुखा अपि देशतः स्युर्वर्णेन तेऽपि च पुनर्बहुधा भवन्ति ॥ ३९४ ॥ श्वेतः कर्कः सोऽथ रक्तस्तु शोणो हैमः कृष्णो नीलव-र्णस्तु नीलः । शुभ्रैर्नेत्रैर्मल्लिकाक्षो निदिष्टः कृष्णैरुक्तः सोऽयमिन्द्रायुधाख्यः ॥ ३९५ ॥ इत्थं नानावर्णभेदेन वाजी ज्ञातव्योऽयं लोकरूढैः सुधीभिः । अत्रास्माभिर्न प्रपञ्चः कृतोऽस्मादाजानेयोऽप्यत्र वाजी कुलीनः ॥ ३९६ ॥ सुकुलः सुविनीताश्वः किशोरस्तुरगार्भकः । वाजिनी वडवा चापि प्रसूरश्वाऽ-श्विनी च सा ॥ ३९७ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—अश्वमांसं भवेदुष्णं वातघ्नं बलदं लघु । पित्तदाहप्रदं नृणां तदेतच्चा-तिसेवनात् ॥ ३९८ ॥

## ( ६१ ) उष्ट्रः ।

उष्ट्रः क्रमेलको धूम्रः करभो दीर्घमार्गगः । ग्रीवाङ्कुशः कुनासश्च दीर्घग्रीवोऽथ धूसरः ॥ ३८० ॥ वक्रग्रीवो दीर्घजङ्घो धूम्रो दासेरको मयः ।

१ ट. °दं चेषद्दुर्जं° । २ झ. ढ. °म्राणिधूपरिमु° । ३ झ. ढ. °धास्यः । इ° । ४ ट. रोगदं । ज. गौरवं ।

गुणाः—उष्ट्रमांसं लघु स्वादु चक्षुष्यमनिलापहम् । उष्णमर्शःप्रशमनं मेदः-पित्तकफापहम् ॥ ३८१ ॥

राजनिघण्टौ सिंहादिरेकोनविंशतितमो वर्गः—

उष्ट्रो दीर्घगतिर्बली च करभो दासेरको धूसरो लम्बोष्ठो लवणः क्रमेलक-महाजङ्घौ च बीजाङ्घ्रिकः । दीर्घः शृङ्खलको महानथ महाग्रीवो महाङ्गो महानादः सोऽपि महाध्वगः स च महापृष्ठो बलिष्ठश्च सः ॥ ३९९ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—उष्ट्रमांसं तु शिशिरं त्रिदोषशमनं लघु । बलपुष्टिप्रदं रुच्यं मधुरं वीर्यवर्धनम् ॥ ४०० ॥

## ( ६२ ) गर्दभः ।

*गर्दभः शङ्कुकर्णश्च बालेयो रासभः खरः । भारवाहो भूरिगमो धूसरो रेणुभूषितः ॥ ३८२ ॥

गुणाः—गार्दभं पिच्छलं बल्यं बृंहणं कफपित्तकृत्[1] । कटु पाके लघु श्रेष्ठं तस्मा-द्वन्यखरोद्भवम् ॥ ३८३ ॥

राजनिघण्टौ सिंहादिरेकोनविंशतितमो वर्गः—

* । भारवाहो भूरिगमश्चक्रीवान्धूसराह्वयः ॥ ४०१ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—गर्दभप्रभवं मांसं किंचिद्गुरु बलप्रदम् । रुच्यं तु वन्यजं शैत्यं बहु-वीर्यबलप्रदम् ॥ ४०२ ॥

## अश्वखरजः ( अश्वगर्दभविशेषः ) ॥ ६६ ॥

तज्जो घोगाम्यश्वतरः शीघ्रगो वेगपूजितः ।

गुणाः—बल्यमाश्वतरं मांसं बृंहणं कफपित्तलम्[2] ॥ ३८४ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

वेसरस्त्वश्वखरजः सकृद्गर्भोऽध्वगः क्षमी । संतुष्टो मिश्रजः प्रोक्तो मिश्रश-ब्दोऽतिभारगः[3] ॥ ४०३ ॥

## ( ६३ ) छागलः । ( अजा )

छागलो बर्कलश्छागस्तथा बस्तः पयस्वलः । अजो बूकडको मेध्यो लम्बकर्णः पशुस्तथा ॥ ३८५ ॥

---

१ ङ. छ. ण. 'कफप्रदम् । २ झ. ट. तु न भवेन्निदो' । ३ ङ. छ. 'त्तजित् ।

गुणाः—बृंहणो रसवीर्ये च वातघ्नः कफपित्तलः । कषायो दीपनीयश्च योग्यः श्लेष्मसुशीतलः ॥ ३८६ ॥ छागमांसं गुरु स्निग्धं लघु पक्वं त्रिदोषनुत् । अदाहि रुचिदं नातिशीतं पीनसनाशनम् ॥ ३८७ ॥ देहधातुसमानत्वादनभिष्यन्दि दीपनम् ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

अजो बुकश्च मेध्यः स्याल्लम्बकर्णः पशुश्च सः । छागलो बर्करश्छागस्तुभो बस्तः पयस्वलः ॥ ४०४ ॥ अजा—अजा पयस्विनी भीरुश्छागी मेध्या गलस्तनी ।

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—छागमांसं लघु स्निग्धं नातिशीतं रुचिप्रदम् । निर्दोषं वातपित्तघ्नं मधुरं बलपुष्टिदम् ॥ ४०५ ॥ छागपोतभवं मांसं लघु शीतं प्रमेहजित् । ईषल्लघु बलं दत्ते तदेव तृणचारिणः ॥ ४०६ ॥

## ( ६४ ) भेडः ।

भेडो मेषो हुडो मेण्ढ्र उरभ्र उरणोऽविकः । अविः पशुस्तथैवैड एडकः पृष्ठशृङ्गकः ॥ ३८८ ॥ ऊर्णायू रोमशो वृष्णिर्मदपुच्छस्तु बर्बुकः ।

गुणाः—औरभ्रं बृंहणं मांसं सर्वदोषकरं गुरु । उष्णं स्निग्धमभिष्यन्दि न पथ्यं बलकृत्परम् ॥ ३८९ ॥ मेषमांसं गुरु स्निग्धं बल्यं पित्तकफप्रदम् । मेषपुच्छामिषं वृष्यं कफपित्तकरं गुरु ॥ ३९० ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

एडकः शृङ्गिणोऽपि स्यादुरभ्रो रोमशो बली । नानादेशविशेषेण मेषा नानाविधा अमी ॥ ४०७ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—औरभ्रं मधुरं शीतं गुरु विष्टम्भि बृंहणम् । आविकं मधुरं मांसं किंचिद्गुरु बलप्रदम् ॥ ४०८ ॥

## ( ६५ ) ईहामृगः । ( वृकः )

*ईहामृगस्तु कोकः स्याद्वृको वत्सादनोऽविभुक् ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

* । गोवत्सारिश्छागलारिश्छागलान्तो जलाश्रयः ॥ ४०९ ॥

---

१ ङ. बृंहणम् । २ क्ष. 'को वृत्सा' ।

## ( ६६ ) व्याघ्रः ।

*व्याघ्रः पञ्चनखो द्वीपी शार्दूलोऽथ गुहाशयः । पुण्डरीकस्तीक्ष्णदंष्ट्रस्तं-पस्वी घोरदर्शनः ॥ ३९१ ॥

गुणाः—द्वीपी स्निग्धो भवेच्चोष्णो मधुरो लघुदीपनः । वातघ्नः पित्तशमनो बल्यो वृष्यो रुचिप्रदः ॥ ३९२ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

* । तीक्ष्णदंष्ट्रः पुण्डरीको द्वीपी भीरुर्नखायुधः ॥ ४१० ॥

## शरभः ( व्याघ्रविशेषः ) ॥ ६७ ॥

शरभश्चित्रकायः स्यादुपव्याघ्रो मृगान्तकः । शूरश्च क्षुद्रशार्दुलश्चित्र-व्याघ्र इतीरितः ॥ ३९३ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

चित्रकश्चित्रकायः स्यादुपव्याघ्रो मृगान्तकः । शूरश्च क्षुद्रशार्दूलश्चित्रव्या-घ्रश्च स स्मृतः ॥ ४११ ॥

## ( ६७ ) सिंहः ।

सिंहः पञ्चमुखो दृप्तः क्रव्यात्पञ्चाननो हरिः । केसरी मृगराजश्च विक्रान्तः श्वेतपिङ्गलः ॥ ३९४ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

सिंहः पञ्चमुखो नखी मृगपतिर्मानी हरिः केसरी क्रव्यादो नखरायुधो मृगरिपुः शूरश्च कण्ठीरवः । विक्रान्तो द्विरदान्तको बहुबलो दीप्तो बली विक्रमी हर्यक्षः स च दीप्तपिङ्गल इति ख्यातो मृगेन्द्रश्च सः ॥ ४१२ ॥

## ( ६८ ) सूकरः ( वराहः )

सूकरो वज्रदंष्ट्रश्च वराहो रोमशः किरिः । दंष्ट्री दन्तायुधः क्रोडः पीन-स्कन्धो बहुप्रजः ॥ ३९५ ॥

गुणाः—स्नेहनं बृंहणं वृष्यमामघ्नमनिलापहम् । वाराहं स्वेदनं[2] बल्यं रोचनं श्रमनुद्गुरु ॥ ३९६ ॥ ग्रामसूकरजं विस्रं पित्तलं बलकृद्गुरु ॥ ३९७ ॥ अन्यच्च—सौकरं पिशितं स्वादु बल्यं वातापहं गुरु । स्निग्धोष्णं शुक्रलं रुच्यं निद्रास्थूलत्वदार्ढ्यकृत् ॥ ३९८ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

---

१ ण. त. °स्तरस्वी । २ त. °नं स्वेदनं गुरु ।

वराहः स्तब्धरोमा च रोमशः सूकरः किरिः । वक्रदंष्ट्रः किटिर्दंष्ट्री क्रोडो दन्तायुधो बली ॥ ४१३ ॥ पृथुस्कन्धश्च भूदारः पोत्री घोणान्तभेदनः । कोलः पोत्रायुधः शूरो बहुपत्यो रदायुधः ॥ ४१४ ॥ अन्यस्तु विड्वराहः स्याद्ग्रामीणो ग्रामसूकरः । ग्राम्यक्रोडो ग्राम्यकोलो विष्ठाशी दारकश्च सः ॥ ४१५ ॥

गुणाः—वराहमांसं गुरु वातहारि वृष्यं बलस्वेदकरं वनोत्थम् । तस्माद्गुरु ग्रामवराहमांसं तनोति मेदोबलवीर्यवृद्धिम् ॥ ४१६ ॥

## ( ६९ ) मृगः ।

मृगोऽथ हरिणो न्यङ्कुः सारङ्गः पृषतो रुरुः । एणः श्यामलपृष्ठश्च कुरङ्गश्चारुलोचनः ॥ ३९९ ॥

गुणाः—एणमांसं हिमं रुच्यं ग्राहि दोषत्रयापहम् । षड्रसं बलदं पथ्यं लघु हृद्यं कफास्रजित् ॥ ४०० ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

मृगः कुरङ्गो वातायुः कृष्णसारः सुलोचनः । हरिणोऽजिनयोनिः स्यादेणः पृषत इत्यपि ॥ ४१७ ॥ ककुवागथ सारङ्गः शारिशृङ्गश्च चित्तलः । अन्यश्च भारशृङ्गः स्यान्महाशृङ्गो वनप्रियः ॥ ४१८ ॥ रुरुस्तु रौहिषो रोही स्यान्न्यङ्कुश्चैव शम्बरः । नीलकः पृषतश्चैव रङ्कुः शबलपृष्ठकः ॥ ४१९ ॥ शिखर्युपकुरङ्गः स्याच्छ्रीकारी च महाजवः । जवनो वेगिहरिणौ जङ्घालो जाङ्घिकाह्वयः ॥ ४२० ॥

## ( ७० ) महिषः ।

महिषः कासरः शृङ्गी श्यामः कृष्णो लुलायकः । विषाणी कलुषो दंशी पीनस्कन्धो रजस्वलः ॥ ४०१ ॥ महिषी मन्दगमना महाक्षीरा पयस्विनी । * लुलायकान्ता कलुषा तुरङ्गद्वेषिणी च सा ॥ ४०२ ॥

गुणाः—स्निग्धोष्णो महिषस्तिक्तो निद्राशुक्रबलप्रदः । मधुरस्तर्पणो वृष्यो गुरुर्मांसस्य दार्ढ्यकृत् ॥ ४०३ ॥ तद्वदरण्यजो ज्ञेयो विशेषाच्छोणिते हितः ॥ ४०४ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

महिषः कासरः क्रोधी कलुषश्चापि सैरिभः । लुलायमत्तरक्ताक्षा विषाणी कवली बली ॥ ४२१ ॥ महिषी मन्दगमना महाक्षीरा पयस्विनी । *॥४२२॥

१ ज. °पि । कुकुवा° । ट. °पि । कूकूवा° । २ ज. झ. °ङ्गः शिखि° । ३ ज. शम्बरः ।

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—वनमहिषामिषं स्वादीषल्लघु दीपनं च बलदायि। ग्रामीणमहिषमांसं स्निग्धं निद्राकरं च पित्तहरम् ॥ ४२३ ॥

## ( ७१ ) बलीवर्दः।

बलीवर्दो दान्त उग्रो गोरक्षो धूर्वहः स्थिरः। अनड्वान्वृषभो दम्यः ककुद्मान्वृषभो वृषः ॥ ४०५ ॥ *गौः शृङ्गिणी सौरभेयी दोग्ध्री धेनुः पयस्विनी ॥ ४०६ ॥

गुणाः—†गोमांसं तु गुरु स्निग्धं पित्तश्लेष्मविवर्धनम्। बृंहणं वातहृद्बल्यमपथ्यं पीनसप्रणुत् ॥ ४०७ ॥ कार्श्यात्पाग्निसमुच्छेदि गव्यं गुरु च वातनुत्। कीर्तितो नात्यभिष्यन्दि मांसं प्रायस्तु जाङ्गलम् ॥ ४०८ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

गौस्तु भद्रो बलीवर्दो दम्यो दान्तः स्थिरो बली। उक्षाऽनड्वान्ककुद्मान्स्याद्वृषभो वृषभो वृषः ॥४२४॥ धुर्यो धुरीणो धौरेयः शाङ्करो हरवाहनः। रोहिणीरमणो वोढा गोनाथः सौरभेयकः॥४२५॥ धवलः शबलस्ताम्रश्चित्रश्च धूसरस्तथा। इत्यादिवर्णभेदेन ज्ञेया गावोऽत्र भेदिताः ॥ ४२६ ॥ विनीतः शिक्षितो दान्तो धुर्यो वोढा च धौरिकः। बालो वत्सतरः प्रोक्तो दुर्दान्तो गडिरुच्यते ॥४२७॥ वृषभस्तु वृषः प्रोक्तो महोक्षः पुङ्गवो बली। गोनाथ उक्षा ऋषभो गोप्रियो गोपतिश्च सः ॥ ४२८ ॥ गौर्मातोस्रा शृङ्गिणी सौरभेयी माहेयी स्याद्रोहिणी धेनुरघ्न्या। दोग्ध्री भद्रा भूरिमत्यानडुह्यौ कल्याणी स्यात्पावनी चार्जनी च ॥ ४२९ ॥ *वनगौः—वनगौर्गवयः प्रोक्तो बलभद्रो महागवः। गवयी वनधेनुः स्यात्सैव भिल्लगवी मता ॥ ४३० ॥ †चमरः—चमरो व्यजनो वन्यो धेनुगो बालधिप्रियः। तस्य स्त्री चमरी प्रोक्ता दीर्घबाला गिरिप्रिया ॥ ४३१ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—²अपूतं गोभवं क्रव्यं गुरु वातकफप्रदम्।

---

* गौः—गाई गाय इति ख्याते।

† झ. ण. पुस्तकयोरेतस्मात्प्राक्—'गौर्बला सुरभिर्धेनुर्दोग्ध्री धेनुर्गवागवी। उक्षा च शर्करी चान्या वन्ध्या या त्वप्रसूतिका' इति श्लोको दृश्यते।

* 'वनगौः'—रानगाई इति ख्याते। † 'चमरः'—चमरीमृग इति ख्याते।

---

१ ट. 'जनीवत्सो धे'। २ ज. ट. अप्लुतं।

## ( ७२ ) मत्स्यः ।

मत्स्यो मीनोऽथ शकुनी कण्ठी माङ्गल्यदर्शनः । रोहितः कण्ठकालश्च पाठीनः शकुली तथा ॥ ४०९ ॥

गुणाः—कफपित्तहरा मत्स्या बल्याः शक्तिविवर्धनाः। व्यायामिनां च दीप्ता-ग्नेर्व्यवायिनां च पूजिताः॥ ४१० ॥ कषायानुरसाः स्वादुवातघ्ना नातिपित्तदाः। रोहितः सर्वमत्स्यानां वरो वृष्योऽर्धवातजित् ॥ ४११ ॥ कषायो मधुरो रूक्षो विशदो रोचनो लघुः । ग्राही तु नन्दिकावर्तस्तस्यानु सकलः स्मृतः ॥ ४१२ ॥ रङ्गीर्तेच्छतशङ्कं च गोमत्स्योऽलिस्त्रिकण्टकः । कण्टकैः स तु विज्ञेयो गृह्यमाणः सुनिर्विषः । शृङ्गी तु वातशमनी तथा श्लेष्मप्रकोपनी ॥ ४१३ ॥ विपाके मधुरो वृष्यो मुद्गरो वातहा गुरुः । अलिमत्स्यो गुरुः स्निग्धः कषायो रूक्ष एव च ॥ ४१४ ॥ मुखमत्स्यो गुरुः स्निग्धः श्लेष्मलो वातनाशनः । इरसो मधुरः स्निग्धः पित्तश्लेष्मातिकोपनः ॥ ४१५ ॥ पुँलङ्कः स्निग्धमधुरो गुर्वि-ष्टम्भिशीतलः । लघवः क्षुद्रमत्स्यास्तु ग्राहिणो ग्रहणीहिताः ॥ ४१६ ॥

मत्स्यभेदाः—राजीवः शकुली शृङ्गी वागुशः शल्यचुल्लकौ । पाठीनः कुलि-शश्चैव नद्यावर्तश्च रोहितः ॥ ४१७ ॥ मुद्गरास्तिमिरित्याद्या ज्ञेयास्तद्भेद-जातयः । तद्भेदो मकराख्योऽन्यो मातङ्गमकरोऽपरः ॥ ४१८ ॥ चिरलुश्च तिमिश्चैव तथाऽन्यश्च तिमिङ्गिलः । तिमिङ्गिलगिलश्चेति महामत्स्या अमी मताः ॥ ४१९ ॥ रक्तोऽपरो रक्तमुखो रोहिषो मत्स्यपुङ्गवः । सहस्रदंष्ट्रः पाठीनः कृष्णवर्णो महाशिराः ॥ ४२० ॥ शफरः क्षुद्रमत्स्यश्च प्रोष्ठी तु शफरी स्मृता । जलमीनश्चिलिचिमो मीनः ख्यातः समुद्रजः ॥ ४२१ ॥

गुणाः—मत्स्या बलप्रदा वृष्या गुरवः कफपित्तलाः । उष्णाभिष्यन्दिनः स्निग्धा बृंहणाः पवनापहाः ॥ ४२२ ॥ नादेया बृंहणा मत्स्या गुरवोऽनिल-नाशनाः । कौपा वृष्याः कफाष्ठीलामूत्रकृच्छ्रविबन्धदाः ॥ ४२३ ॥ ताडागा गुरवो वृष्याः शीतला बलमूत्रलाः । ताडागवन्निर्झरजा बलायुर्मतिदक्कराः॥४२४॥

सरोजा मधुराः स्निग्धा बल्या वातनिबर्हणाः । सामुद्रा गुरवो नातिपित्तलाः पवनापहाः ॥ ४२५ ॥ तत्रापि लवणाम्भोजा ग्राहिणो दृष्टिनाशनाः । ह्रदो-द्भवा बलकरा न तु स्वच्छजलोद्भवाः ॥ ४२६ ॥ हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः । मधुग्रीष्माम्बुकालेषु नदीचूडीतडागजाः ॥ ४२७ ॥ शरत्सु नैर्झराः सर्वे वर्षोत्थाः सर्वदोषदाः । विपाके मधुरा वृष्या इति मत्स्याः

---

१ झ. 'ष्योऽर्दितार्तिजि' । २ झ. वृष्यो । ३ झ. विषघ्नो । ४ 'तपुच्छश' । ५ ण. पुगलः । ६ झ. नीलवर्णाभा ।

प्रकीर्तिताः ॥ ४२८ ॥ *शिशुमाराहते तुल्या मकरस्तु त्रिदंष्ट्रकः। शिशुमारो गुरुर्वृष्यः कफकृद्वातनाशनः ॥४२९॥ बृंहणो बलदः स्निग्धस्तद्वन्मकरमादिशेत्।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

यादस्तु जलजन्तुः स्याज्जलप्राणी जलेशयः। तत्रातिक्रूरकर्मा यः स जलव्याल उच्यते ॥ ४३२ ॥ मत्स्यो वैसारिणो मीनः पृथुरोमा झषोऽण्डजः। विसारः शकुली शल्की पाठीनोऽनिमिषस्तिमिः ॥ ४३३ ॥ राजीवः शकुलः शृङ्गी वागुसः शल्यपल्लवौ। पाठीनः शकुलश्चैव नद्यावर्तश्च रोहितः ॥ ४३४ ॥ मद्गुरस्तिमिरित्याद्या ज्ञेयास्तद्भेदजातयः। तद्भेदो मकराख्योऽन्यो मातङ्गमकरोऽपरः ॥ ४३५ ॥ चिलिचिमस्तिमिश्चैव तथाऽन्यश्च तिमिङ्गिलः। तिमिङ्गिलगिलश्चेति महामत्स्या अमी मताः ॥ ४३६ ॥ शिशुकः शिशुमारः स्यात्स च ग्राहो वराहकः। भवेन्नक्रस्तु कुम्भीरो गलग्राहो महाबलः ॥ ४३७ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—मत्स्याः स्निग्धोष्णगुरवो वातघ्ना रक्तपित्तदाः। तत्र कांश्चिदपि ब्रूमो विशेषगुणलक्षणान् ॥ ४३८ ॥ रोहितो गर्गरो भीरुर्बालको बर्बरस्तथा। छागलो रक्तमत्स्योऽथ महिषश्चाऽऽविलस्तथा ॥ ४३९ ॥ वीतूषकोलमोसश्च ज्ञेयाः कर्णविशादयः। लक्ष्यलक्षणवीर्यादीन्कथयामि यथाक्रमम् ॥ ४४० ॥ कृष्णः शुक्लः श्वेतकुक्षिस्तु मत्स्यो यः श्रेष्ठोऽसौ रोहितो वृत्तवक्त्रः। कोष्णं बल्यं रोहितस्यापि मांसं वातं हन्ति स्निग्धमृध्नोति वीर्यम् ॥ ४४१ ॥ यः पीतवर्णोऽपि च पिच्छलाङ्गः पृष्ठे तु रेखाबहुलः सशल्कः। स सर्वरोगार्गलनादवस्थो जडश्च शीतः कफवातदायी ॥ ४४२ ॥ पृष्ठे पक्षौ द्वौ गले पुच्छकं चेत्सर्पाभः स्यात्फूत्कृतो वृत्ततुण्डः। ज्ञेयः शल्को मत्स्यको भीरुरक्तः स्निग्धो वृष्यो दुर्जरो वातकारी ॥ ४४३ ॥ नातिस्थूलो वृत्तवक्त्रोऽपि शस्तो धत्ते दन्तान्श्मश्रुलो दीर्घकायः। संध्यायां वा रात्रिशेषे च वर्यः प्रोक्तो बालः पथ्यबल्यः सुवृष्यः ॥ ४४४ ॥ पृष्ठे कुक्षौ कण्टकी दीर्घतुण्डः सर्पाभो यः सोऽप्ययं बर्बराख्यः। वानाटोपं सोऽपि दत्ते जडश्च बल्यः स्निग्धो दुर्जरो वीर्यकारी ॥४४५॥ श्वेतं सुकायं समदीर्घवृत्तं निःशल्ककं छागलकं वदन्ति। गले द्विकण्टः किल तस्य पृष्ठे कण्टः सुपथ्यो रुचिदो बलप्रदः ॥४४६॥ यो रक्ताङ्गो नातिदीर्घो न चाल्पो नातिस्थूलो रक्तमत्स्यः स चोक्तः। शीतो रुच्यः पुष्टिकृद्दीपनोऽसौ नाशं धत्ते किंच दोषत्रयस्य ॥ ४४७ ॥ यः कृष्णो दीर्घकायः स्यात्स्थूलशल्को बलाधिकः। मत्स्यो महिषनामाऽसौ दीपनो बलवीर्यदः

* 'शिशुमारः' सुसर इति ख्याते।

॥ ४४८ ॥ शुक्लाङ्गस्ताम्रपक्षो यः स्वल्पाङ्गश्चाऽऽविलाह्वयः । सुरुच्यो मधुरो बल्यो गुणाढ्यो वीर्यपुष्टिदः ॥ ४४९ ॥ यः स्थूलाङ्गो माहिषाकारको यस्तालुस्थाने नीरजाभां दधाति । शल्कं स्थूलं यस्य वीतूषकोऽसौ दत्ते वीर्यं दीपनं वृष्यदायी ॥४५०॥ वितस्तिमानः श्वेताङ्गः सूक्ष्मशल्कः सुदीपनः । अलमोसाह्वयो मत्स्यो बलवीर्याङ्गपुष्टिदः ॥ ४५१ ॥ यो वृत्तगौल्यः कृष्णाङ्गः शल्की कर्णवशाभिधः । दीपनः पाचनः पथ्यो वृष्योऽसौ बलपुष्टिदः ॥ ४५२ ॥ निःशल्का निन्दिता मत्स्याः सर्वे शल्कयुता हिताः । वपुःस्थैर्यकरा वीर्यबलपुष्टिविवर्धनाः ॥ ४५३ ॥ ह्रदकुल्याजलधिनिर्झरतडागवापीजले च ये मत्स्याः । ते तु जडा नाऽऽदेया यथोत्तरं लघुतरास्तु नादेयाः ॥ ४५४ ॥ क्षाराम्बुमत्स्या गुरवोऽस्रदाहदा विष्टम्भदास्ते [1]लवणार्णवादिजाः । तानश्नतां स्वादुजलस्थिता अपि ज्ञेया जडास्तेऽपि तथा शृतानिमान् ॥ ४५५ ॥

## ( ७३ ) कच्छपः ।

*कच्छपः कमठः कूर्मो गूढाङ्गो धरणीधरः । कच्छेष्टः पल्वलावासो वृत्तः कठिनपृष्ठकः ॥ ४३० ॥ कच्छपोऽन्यो महामत्स्यः कूर्मराजः प्रतिष्ठितः । गुप्ताङ्गश्चित्रकुष्ठश्च धरणीधरणक्षमः ॥ ४३१ ॥

गुणाः—कच्छपो बलदः स्निग्धो वातघ्नः पुंस्त्वकारकः ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

* । कच्छेष्टः पल्वलावासो वृत्तः कठिनपृष्ठकः ॥ ४५६ ॥

## ( ७४ ) दीर्घतुण्डी ( आमूषिका )

दीर्घतुण्डनखी ज्ञेया मूषिकाऽन्या [2]चुचुन्दरी ।

गुणाः—मूषको मधुरः स्निग्धो व्यवायी शुक्रवर्धनः ॥ ४३२ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

[3]चुचुन्दरी राजपुत्री प्रोक्ताऽन्या प्रतिमूषिका । सुगन्धिमूषिका गन्धा शुण्डिनी शुण्डमूषिका ॥ ४५७ ॥

### मूषकः ( दीर्घतुण्डीविशेषः ) ॥ ६८॥

मूषकः खनकः पिङ्ग आखुरुन्दुरुको नखी ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

मूषिको मूषकः पिङ्गोऽप्याखुरुन्दुरुको नखी । खनको विलकारी च धान्यारिश्च बहुप्रजः ॥ ४५८ ॥

---

१ झ. ढ. लवणाम्बुजाताः । २ झ. चुच्छुन्दरी । ३ झ. चुच्छुन्दरी ।

**महामूषकः** ( दीर्घतुण्डीविशेषः ॥ ६९ ॥

* अन्यो महामूषकः स्यान्मोषी विघ्नेशवाहनः। *महाङ्गः सस्यमारी च भूफलो भित्तिपातनः ॥ ४३३ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

*।*॥ ४५९ ॥

## ( ७५ ) बिडालः।

*बिडालो मूषकद्वेषी वृषदंशो बिडालकः। *शालावृकश्च मार्जारो मायावी दीप्तलोचनः ॥ ४३४ ॥

अन्यच्च—बिडालो विषदन्तश्च मार्जारोऽथ बिडालकः। ओतुर्मूषकशत्रुश्च मायावी दीप्तलोचनः ॥ ४३५ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

*।*॥ ४६० ॥

**लोमशबिडालः** ( गन्धमार्जारः ) ( बिडालविशेषः )॥ ७० ॥

लोमशोऽन्यो बिडालश्च पूतिकः पूतिकेसरः। सुगन्धिमूत्रपतनो गन्धमार्जारसंज्ञकः ॥ ४३६ ॥ तृतीयः पिङ्गलश्चान्य उग्र उग्रबिडालकः। सुगन्धमूत्रवृषणः कस्तूरीति निगद्यते ॥ ४३७ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

अन्यो लोमशमार्जारः पूतिको शालिजाहकः। सुगन्धिमूत्रपतनो गन्धमार्जारकश्च सः ॥ ४६१ ॥

## ( ७६ ) शृगालः।

शृगालो जम्बुकः फेरुर्गोमायुः क्रोष्टुकः शिवः। भल्लुको मृगधूर्तश्च शालावृकश्च फेरवः ॥ ४३८ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

शृगालो वञ्चकः क्रोष्टा फेरवः फेरुजम्बुकौ। शालावृकः शिवालुश्च फेरण्डो व्याघ्रसेवकः ॥ ४६२ ॥

सिंहादिगुहाशयानां गुणाः—सिंहव्याघ्रर्क्षमार्जारशृगालाद्या गुहाशयाः। गुरूष्णाः स्युरतिस्निग्धा बल्या मारुतनाशनाः ॥ ४३९ ॥ विशेषेण गुरुस्तेषां

---

१ झ. भूपाला। ट. भूमिलो। ढ. भूपलो। २ ज. मारजातकः।

सिंहः क्रोष्टा च वातजित् । वातार्शोहा दीपनश्च रुच्यो बल्यो विडालकः ॥ ४४० ॥ सारमेयो भवेदुष्णो विपाके वातनाशनः ।

### तरक्षुः ( शृगालविशेषः ) ॥ ७१ ॥

तरक्षुर्मृगभक्षश्च तरस्वी घोरदर्शनः ॥ ४४१ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

मृगादस्तु स विज्ञेयस्तरक्षुर्घोरदर्शनः । शिवा तु भूरिमायुः स्याद्गोमायुर्मृगधूर्तकः ॥ ४६३ ॥

### कुक्कुरः ( शृगालविशेषः ) ॥ ७२ ॥

* कुक्कुरः सारमेयश्च भषकः श्वानकः शुनः । भूस्तरो वक्रलाङ्गूलो भल्लूको रात्रिजागरः ॥ ४४२ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

* । भल्लूको वक्रलाङ्गूलो हुकारी रात्रिजागरः ॥ ४६४ ॥

## ( ७७ ) मर्कटः ।

मर्कटो वानरः कीशो हरिः शाखामृगः कपिः । * प्लवङ्गमो वनौकाश्च प्लवङ्गः प्लवगः प्लवः ॥ ४४३ ॥

गुणाः—संतर्पणो वृष्यतमः श्लेष्मलो बलवर्धनः । कषायो बद्धविण्मूत्र आमवातकफापहः ॥ ४४४ ॥ वानरः पवनः श्वासमेदःपाण्डुकृमीञ्जयेत् ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

* । * ॥ ४६५ ॥

गोलाङ्गूलस्तु गौरास्यः कपिः कृष्णमुखो हि सः । मन्दुराभूषणाख्योऽयं विज्ञेयः कृष्णवानरः ॥ ४६६ ॥

## ( ७८ ) मयूरः ।

मयूरो नर्तको बर्हीं नीलकण्ठः शिखी ध्वजी । मेघारावः कलापी च शिखण्डी चित्रपिच्छकः ॥ ४४५ ॥

गुणाः—मयूरमांसं सुस्निग्धं वातघ्नं शुक्रवर्धनम् । बल्यं मेधाकरं प्रोक्तं चक्षूरोगविनाशनम् ॥ ४४६ ॥ कषायो मधुरः स्वर्यो लवणो वातहा शिखी ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

मयूरश्चन्द्रकी बर्हीं नीलकण्ठः शिखी ध्वजी । मेघानन्दी कलापी च शिखण्डी चित्रपिच्छकः ॥४६७॥ बर्हिणः प्रचलाकी च शुक्लापाङ्गः शिखावलः ।

केकी भुजङ्गभोजी च मेघनादानुलासकः ॥ ४६८ ॥ बर्हभारः कलापः स्याद्बर्हनेत्राणि चन्द्रकाः । प्रचलाकः शिखा ज्ञेया ध्वनिः केकेति कथ्यते ॥४६९॥

## ( ७९ ) भ्रमरः ( शिलीमुखः )

भ्रमरः षट्पदो भृङ्गो भृङ्गराजः शिलीमुखः । द्विरेफोऽलिर्मधुकरो मधुपो मधुलिट्स्मृतः ॥ ४४७ ॥ स च षट्चरणः प्रोक्तो झङ्कारी पुष्पलोलुपः । नीलो घुमुघुमारावी मधुकृन्मधुरस्वरः ॥ ४४८ ॥ अपरः क्षुद्रभृङ्गारः पूतिभृङ्गः कुभृङ्गकः ।

गुणाः—भ्रमरो रूक्ष उष्णश्च तैलयोगेक्षणापहः(?)[1] । कर्णरोगशिरोव्याधीन्मुखाद्यैश्चैव वीर्यवान्(?) ॥ ४४९ ॥

राजनिघण्टौ सिंहादिरेकोनविंशतितमो वर्गः—

भ्रमरः षट्पदो भृङ्गः कलालापः शिलीमुखः । पुष्पन्धयो द्विरेफोऽलिर्मधुकृन्मधुपो द्विपः[2] ॥ ४७० ॥ भसरश्चञ्चरीकोऽली झङ्कारी मधुलोलुपः ।

## ( ८० ) शुकः ।

शुकः कीरो रक्तमुखो मेधावी प्रियदर्शनः । अन्यो महान्राजशुकः शतपत्रो निगद्यते ॥ ४५० ॥

गुणाः—शुको बल्योऽतिवृष्यश्च वीर्यवृद्धिकरः परः । वातलो बृंहणो ज्ञेयस्तथा राजशुकः स्मृतः ॥ ४५१ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

शुकः कीरो रक्ततुण्डो मेधावी मञ्जुपाठकः । अन्यो राजशुकः प्राज्ञः शतपत्रो नृपप्रियः ॥ ४७१ ॥

## ( ८१ ) गोराटिका ( सारिका )

गोराटिका गोकिराटी[3] गौरिका कलहप्रिया । मेधाविनी सारिकाऽन्या दूतिका प्रियवादिनी ॥ ४५२ ॥

गुणाः—सारिका च भवेत्स्निग्धा[4] वातला बृंहणी स्मृता । वीर्यसंजननी वृष्या मेध्या चैव रसायनी ॥ ४५३ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

सारिका मधुरालापा दूती मेधाविनी च सा । कवरी कुत्सिताङ्गी च कष्कलाङ्गी सनालुकः(?) ॥४७२॥ पीतपादा ह्युज्ज्वलाक्षी रक्तचञ्चुश्च सारिका ।

---

१ ख. ग. झ. 'योगोक्षणा' । २ झ. ढ. द्विभः । ३ ङ. छ. गोविराटी । ४ ङ. छ. श्लेष्मला ।

पठन्ती पाठवार्ता च बुद्धिमती भुसारिका ॥ ४७३ ॥ गोराट्रिका गोकिराटी गौरिका कलहप्रिया ।

## ( ८२ ) चक्रवाकः ।

चंक्रवाकस्तु चक्राह्वश्चक्री चक्ररथो रथी । रथाङ्गनामा रथिकः कामी चक्रोऽथ चक्रवाक् ॥ ४५४ ॥

गुणाः—चक्रवाको महास्निग्धः शुक्रलो गुरुरेव च । बल्योऽथ रुचिकृद्वातहरो दोषविनाशनः ॥ ४५५ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

चक्रः कोकश्चक्रवाको रथाङ्गो भूरिप्रेमा द्वंद्वचारी सहायः । कान्तः कामी रात्रिविश्लेषगामी रामावक्षोजोपमः कामुकश्च ॥ ४७४ ॥

## ( ८३ ) हंसः ।

हंसः श्वेतो धार्तराष्ट्रो राजहंसो मनोरमः । कलहंसोऽपरः प्रोक्तो जलपादोऽथ बन्धुरः ॥ ४५६ ॥ अन्यच्च—कारण्डवः प्लवो मञ्जुर्वरटा हंसयोषिता ।

गुणाः—हंसः स्निग्धो गुरुर्वृष्यो वीर्योष्णः स्वरवर्णकृत् । वातास्रपित्तशमनो बृंहणो बलवर्धनः ॥ ४५७ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

हंसो धवलपक्षी स्याच्चक्राङ्गो मानसालयः । कलहंसस्तु कादम्बः कलनादो मरालकः ॥ ४७५ ॥ एतेषु चञ्चुचरणेष्वरुणेषु राजहंसोऽपि धूसरतरेषु च मल्लिकाक्षः । कालेषु तेषु धवलः किल धार्तराष्ट्रः सोऽप्येष धूसरतनुस्तु भवेदभव्यः ॥ ४७६ ॥ हंसी तु वरटा ज्ञेया वरला बारला च सा । मराली मन्दगमना चक्राङ्गी मृदुगामिनी ॥ ४७७ ॥

## ( ८४ ) कुक्कुटः ।

कुकुटस्ताम्रचूडश्च दक्षः शौण्डोऽथ विष्किरः । कालज्ञः कृकवाकुश्च नियोद्धा चरणायुधः ॥ ४५८ ॥

गुणाः—कुक्कुटः स्निग्धरूक्षोष्णः स्वराग्नीन्द्रियदार्ढ्यकृत् । बृंहणो वातहा वृष्यो लघुर्बलकरः स्मृतः । अन्यस्तद्वद्गुणो ग्राम्यो विशेषेण गुरुस्तथा ॥४५९॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

---

१ क. छ. चक्रः कोकश्चक्रवाको रथाङ्गाख्यश्च कामुकः । रामास्तनोपमो रात्रिवियोगी द्वंद्वगः खगः । गु° । २ ज्ञ. °त् । स्निग्धोष्णो बृंहणो वृष्यः कुक्कुटो वातनाशनः । अ° ।

कुक्कुटस्ताम्रचूडः स्यात्कालज्ञश्चरणायुधः । नियोद्धा कृकवाकुश्च विष्किरो नखरायुधः ॥ ४७८ ॥ जलकुक्कुटकश्चान्यो जलशायी जलस्थितः ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—अरण्यकुक्कुटक्रव्यं हृद्यं श्लेष्महरं लघु । ग्राम्यकुक्कुटजं स्निग्धं वातहृद्दीपनं गुरु ॥ ४७९ ॥

## ( ८५ ) लावः ।

लावस्तु लावको ज्ञेयश्चित्रदेहश्चतुर्विधः । पांसुलो गौरकोऽन्यश्च पौण्ड्रको दर्भरस्तथा ॥ ४६० ॥

गुणाः—लावो हृद्यो हिमः स्निग्धो ग्राही वह्निप्रदीपनः । गुरूष्णो मधुरः किंचित्सर्वदोषहरो मतः ॥ ४६१ ॥ पांसुलः श्लेष्मलस्तेषां वीर्योष्णोऽनिलनाशनः । गौरकः कफवातघ्नो रूक्षो वह्निप्रदीपनः ॥ ४६१ ॥ पौण्ड्रकः पित्तकृत्किंचिल्लघुः श्लेष्मानिलापहः । दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः ॥ ४६३ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

लावा तु लावकः प्रोक्तो लावः स च लवः स्मृतः ।

## ( ८६ ) कोकिलः ।

कोकिलः परपुष्टश्च कृष्णः परभृतोऽसितः । वसन्तदूतस्ताम्राक्षो गन्धर्वो वनभूषणः ॥ ४६४ ॥ कोकिला परपुष्टा च धूर्ता परभृताऽसिता । अन्यच्च—कोकिलः परपुष्टश्च काकः परभृतः कपिः ॥ ४६५ ॥ वसन्तदूतस्ताम्राक्षो गन्धर्वो मधुगायनः । कुहूरवः कलकण्ठः कामान्धः काकलीरवः ॥ ४६६ ॥

गुणाः—कोकिलो बृंहणः प्रोक्तो मधुरो बलवर्धनः । कफघ्नो मधुरो ग्राही चक्षुष्यः कर्फकासजित् ॥ ४६७ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

कोकिलः परपुष्टः स्यात्कालः परभृतः पिकः । वसन्तदूतस्ताम्राक्षो गन्धर्वो मधुगायनः ॥ ४८० ॥ वासन्तः कलकण्ठश्च कामान्धः काकलीरवः । कुहूरवोऽन्यपुष्टश्च मत्तो मदनपाठकः ॥ ४८१ ॥ कोकिला त्वन्यपुष्टा स्यान्मत्ता परभृता च सा । सुकण्ठी मधुरालापा कलकण्ठी मधूदया ॥ ४८२ ॥ वसन्तदूती ताम्राक्षी पिकी सा च कुहूरवा । वासन्ती कामगा चैव गन्धर्वा वनभूषणी ॥ ४८३ ॥

---

१ ङ. 'फवातजित् ।

## काकः ( कोकिलाविशेषः ) ॥ ७३ ॥

काकोऽथ वायसो ध्वाङ्क्षः काणोऽरिष्ट उलूकजित् । बलिभुक्चिरजीवी च धूलिजङ्घो निमित्तकृत् ॥ ४६८ ॥ *काकद्रोणो द्रोणकाकः स्यात्काणोऽपि च वायसः । रूक्षो †भल्लो भल्लुको भल्लशल्यो दुर्घोषः स्याद्भल्लुकः पृष्ठदृष्टिः । द्रागीश्वासौ दीर्घकेशश्चिरायुर्ज्ञेयः सोऽयं दुःस्वरो दीर्घदर्शी ॥ ४६९ ॥ +भासः शिवोऽनुभासेत गृध्राकारो रजःप्रभः । $जलकाकस्तु दात्यूहः स च स्यात्कालकण्टकः ॥ ४७० ॥

सर्वकाकगुणाः—काकभासभवं मांसं चक्षुष्यं दीपनं लघु । आयुष्यं बृंहणं बल्यं क्षतदोषक्षयापहम् ॥ ४७१ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

काकस्तु वायसो ध्वाङ्क्षः काणोऽरिष्टः सकृत्प्रजः । बलिभुग्बलिपुष्टश्च धूलिजङ्घो निमित्तकृत् ॥ ४८४ ॥ कौशिकारिश्चिरायुश्च करटो मुखरः खरः। आत्मघोषो महालोलश्चिरजीवी चलाचलः ॥ ४८५ ॥ द्रोणस्तु द्रोणकाकः स्यात्काकोलोऽरण्यवायसः । वनवासी महाप्राणः क्रूररावी फलप्रियः ॥४८६॥

## ( ८७ ) उलूकः ।

उलूको नक्तचारी च दिवान्धः कौशिकस्तथा। कौशी घर्घरको भीरुः काकशत्रुर्निशाचरः ॥ ४७२ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

उलूकस्तामसो घूको दिवान्धः कौशिकः कुविः । नक्तंचरो निशाटश्च काकारिः क्रूरघोषकः ॥ ४८७ ॥

## क्षुद्रोलूकः ( उलूकविशेषः ) ॥ ७४ ॥

क्षुद्रोलूकः शाकुनेयः पिङ्गलो डुडुलश्च सः । वृक्षाश्रयी बृहद्रावः पिङ्गलाक्षो भयंकरः ॥ ४७३ ॥

गुणाः—औलूकं पित्तलं भ्रान्तिकरं वातप्रकोपनम् । प्रसहा वायसोलूकश्येनगृध्रादयस्तथा । सिंहादिवद्गुणस्तेषां विशेषाच्छोषणे हिताः ॥ ४७४ ॥ सृष्टमूत्रविसर्पघ्ना मृगाः शाखामृगादयः । गुरवः स्वादवो वृष्याश्चक्षुष्याः शोषणे हिताः ॥ ४७५ ॥

---

* काकद्रोणः=डोमकावळा इति ख्यातः । † भल्लः=काकावळ इति ख्यातः । + भासः=गिधाडीकावळा इति प्रसिद्धः । $ जलकाकः=पाणकावळा इति ख्यातः ।

---

१ ण. 'गीश्वासुद्दीर्घ' ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

गोत्रद्वेषी भूरिपक्षः शतायुः सिद्धिकारकः। क्षुद्रोलूकः शाकुनेयः पिङ्गलो हुडुलश्च सः ॥ ४८८ ॥

## ( ८८ ) सर्पः ( भोगी )

सर्पो दंष्ट्री भुजंगोऽहिर्भुजगोऽथ सरीसृपः। उरगः कञ्चुकी व्यालो द्विजिह्वोऽथ भुजंगमः। स च नागो विषधरः कुण्डली पन्नगः फणी ॥ ४७६ ॥ चक्षुःश्रवा दन्दशूको भोगी चाऽऽशीविषः स्मृतः।

सर्पविशेषः—राजिलो जलसर्पस्तु विरुलः स प्रकीर्तितः ॥ ४७७ ॥ श्वेतो नागोऽरुणः सर्पो व्यन्तरश्चित्रवर्णकः। गोनसो मण्डली पातः कुलङ्गः कृष्णडुण्डुभः ॥ ४७८ ॥

गुणाः—विविधाग्निकृतः सर्पा वातघ्नाः स्वादुपाकिनः। दर्वीकरा मण्डलिनस्तेषूक्ताः कटुपाकिनः। स्वादवश्चातिचक्षुष्याः सृष्टविण्मूत्रमारुताः ॥ ४७९ ॥ राजीमदादयः स्वादे रसे पाके बलावहाः। स्निग्धाः शीताः स्तब्धवर्चःसशुक्रबलवर्धनाः ॥ ४८० ॥ कृष्णसर्पादयस्तेषां बल्याश्चोष्णानिलापहाः। शुक्रसंधानकृच्छ्रेष्ठा बल्याः स्वापानिलापहाः ॥ ४८१ ॥ स्निग्धोष्णाः स्वादुगुरवः सृष्टविण्मूत्रमारुताः। महाभिष्यन्दिनो वृष्या बल्या वातहराः पराः ॥ ४८२ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

दर्वीकरो द्विरसनः पातालनिलयो बली। नागश्च काद्रवेयश्च वक्रगो दन्दशूककः ॥ ४८९ ॥ चक्षुःश्रवा विषधरो गूढाङ्घ्रिः कुण्डली फणी। पन्नगो वायुभक्षश्च भोगी स्याज्जिह्मगश्च सः ॥ ४९० ॥ सर्पो दंष्ट्री भुजंगोऽहिर्भुजगश्च सरीसृपः। कञ्चुकी दीर्घपुच्छश्च द्विजिह्व उरगश्च सः ॥ ४९१ ॥ फणिनो धवलाङ्गा ये ते नागा इति कीर्तिताः। अन्ये रक्तादिवर्णाढ्या बोध्याः सर्पादिनामभिः ॥ ४९२ ॥ गोनसो मण्डलीत्युक्तश्चित्राङ्गो व्यन्तरो भवेत्। कुलिको हरितो ज्ञेयो राजिलं डुण्डुभं विदुः ॥ ४९३ ॥ अनन्तो वासुकिः पद्मो महापद्मोऽपि तक्षकः। कर्कोटः कुलिकः शङ्ख इत्यमी नागनायकाः ॥ ४९४ ॥ तद्बान्धवास्तु कुमुदकम्बलाश्वतरादयः। आपहृद्द्विमुखी चैव धामिणीत्यादयः परे ॥ ४९५ ॥

## ( ८९ ) मण्डूकः। ( भेकः )

मण्डूको दर्दुरो मण्डो हरिर्भेकः कसूचकः। महावितस्तु मण्डव्यो राजमण्डूक उच्यते ॥ ४८३ ॥

गुणाः— मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

मण्डूको दर्दुरो मण्डो हरिर्भेकश्च लूलकः । शालूरः स च वर्षाभूः प्लवः कटुरवस्तथा ॥ ४९६ ॥ पीतोऽन्यो राजमण्डूको महामण्डूक इत्यपि ॥ ४९७ ॥ पीताङ्गः पीतमण्डूको वर्षाघोषो महारवः ।

## कर्कटः ( मण्डूकविशेषः ) ॥ ७५ ॥

*कर्कटः स्यात्कर्कटकः कुलीरश्च कुलीरकः । *संदंशकः पङ्कवासस्तिर्यग्गामी स चोर्ध्वदृक् ॥ ४८४ ॥

गुणाः—कर्कटो बृंहणो वृष्यः शीतलोऽसृग्गदापहः ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

* । * ॥ ४९८ ॥

## ( ९० ) मलम् ( विट् )

* मलं विष्ठा पुरीषं च विट् किट्टं पूतिकं च तत् ॥ ४८५ ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

* ॥ ४९९ ॥

## गोमयम् ( मलविशेषः ) ॥ ७६ ॥

गोमयं गोपुरीषं स्याद्गोविष्ठा गोमलं च तत् ।

## ( ९१ ) मूत्रम् ।

*मूत्रं तु गुह्यनिष्यन्दः प्रस्रावः स्रवणं स्रवः ॥ ४८६ ॥

गुणाः—*मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् । पित्तलं रूक्षतिक्तोष्णं लवणानुरसं कटु । कृमिशोफज्वरानाहशूलपाण्डुकफानिलान् ॥ ४८७ ॥ गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ।

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

* ॥ ५०० ॥

## गोमूत्रम् । ( मूत्रविशेषः ) ॥ ७७ ॥

गोमूत्रं गोजलं गोम्भो गोपानीयं च गोस्रवः । गवापो गोकीलालं च गोनीरं सुरभीजलम् ॥ ४८८ ॥

* झ. पुस्तकेऽधिकमिदं श्लोकार्धम्—'नराणां तु भवेत्सर्वं पाचनं दीपनं लघु' इति ।

१ ज. लुलुकः ।

गुणाः—गोमूत्रं कटुतिक्तोष्णं सक्षारं लेखनं सरम् । लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् ॥ ४८९ ॥ मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

गोमूत्रं गोजलं गोम्भो गोनिष्यन्दश्च गोद्रवः ।

गुणाः—गोमूत्रं कटु तिक्तोष्णं कफवातहरं लघु । पित्तकृद्दीपनं मेध्यं त्वग्दोषघ्नं मतिप्रदम् ॥ ५०१ ॥

## अजामूत्रम् ( मूत्रविशेषः ) ॥ ७८ ॥

गुणाः—कासश्वासापहं शोफकामलापाण्डुरोगनुत् । कटुतिक्तान्वितं छागमीषन्मारुतकोपनम् ॥ ४९० ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

अजामूत्रं कटूष्णं च रूक्षं नाडीविषार्तिजित्[1] । प्लीहोदरकफश्वासगुल्मशोफहरं लघु ॥ ५०२ ॥

## मेषीमूत्रम् ( मूत्रविशेषः ) ॥ ७९ ॥

गुणाः—कासप्लीहोदरश्वासशोषवर्चोग्रहे हितम् । सक्षारं कटुकं तिक्तमुष्णं वातघ्नमाविकम् ॥ ४९१ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

आविकं तिक्तकटुकं मूत्रमुष्णं च कुष्ठजित्[2] । दुर्नामोदरशूलास्रशोफमेहविषापहम् ॥ ५०३ ॥

## महिषीमूत्रम् ( मूत्रविशेषः ) ॥८०॥

गुणाः—दुर्नामोदरशूलेषु कुष्ठमेहादिशुद्धिषु । आनाहशोफगुल्मेषु पाण्डुरोगे च माहिषम् ॥ ४९२ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

माहिषं मूत्रमानाहशोफगुल्माक्षिदोषनुत् । कटूष्णं कुष्ठकण्डूतिशूलोदररुजापहम् ॥ ५०४ ॥

## गजमूत्रम् ( मूत्रविशेषः ) ॥ ८१ ॥

गुणाः—सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम्[3] । तीक्ष्णं क्षारं किलासे च नागमूत्रं प्रयोजयेत् ॥ ४९३ ॥

---

१ ङ. ढ. नातिकफार्तिजित् । २ ङ. 'शोफव' । ३ ट. पित्तजित् ।

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

हस्तिमूत्रं तु तिक्तोष्णं लवणं वातभूतनुत् । तिक्तं कषायं शूलघ्नं हिक्काश्वासहरं परम् ॥ ५०५ ॥

## अश्वमूत्रम् ( मूत्रविशेषः ) ॥ ८२ ॥

गुणाः—दीपनं कटु तिक्तोष्णं[1] वातचेतोविकारनुत् ॥ आश्वं कफहरं मूत्रं कृमिदद्रुषु शस्यते ॥ ४९४ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

अश्वमूत्रं तु तिक्तोष्णं तीक्ष्णं च विषदोषजित् । वातप्रकोपशमनं पित्तकारि प्रदीपनम् ॥ ५०६ ॥

## उष्ट्रमूत्रम् (मूत्रविशेषः) ॥८३॥

गुणाः—*शोफकुष्ठोदरोन्मादमारुतकृमिनाशनम् । अर्शोघ्नं कारभं मूत्रं विजानीयाच्चिकित्सकः ॥ ४९५ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

औष्ट्रकं कटु तिक्तोष्णं लवणं पित्तकोपनम् । बल्यं जठररोगघ्नं वातदोषविनाशनम् ॥ ५०७ ॥

## गर्दभमूत्रम् ( मूत्रविशेषः ) ॥ ८४ ॥

गुणाः—गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् । दीपनं गार्दभं मूत्रं कृमिवातकफापहम् ॥ ४९६ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

खरमूत्रं कटूष्णं च क्षारं तीक्ष्णं कफापहम् । महावातापहं भूतकम्पोन्मादहरं परम् ॥ ४९८ ॥

## मानुषमूत्रम् ( मूत्रविशेषः ) ॥ ८५ ॥

गुणाः—पित्तरक्तकृमिहरं रोचनं कफवातजित् । तिक्तं मोहहरं मूत्रं मानुषं तु विषापहम् ॥ ४९७ ॥

राजनिघण्टौ क्षीरादिः पञ्चदशो वर्गः—

---

* एतच्छ्लोकस्थाने ङ. छ. ण. त. पुस्तकेषु—
'औष्ट्रं कुष्ठोदरोन्मादशोफार्शःकृमिवातनुत् ।
गरचेतोविकारघ्नं तीक्ष्णं जठररोगनुत्' इति श्लोको दृश्यते ।

---

[1] ङ. तीक्ष्णोष्णं ।

मानुषं मूत्रमामघ्नं कृमिव्रणविषार्तिनुत् । तिक्तोष्णं लवणं रूक्षं भूतत्वग्दोषवातजित् ॥ ५०९ ॥

सामान्यमूत्रगुणाः—तत्सर्वं कटु तिक्तोष्णं लवणानुरसं लघु । शोधनं कफवातघ्नं कृमिदोषविषापहम् ॥ ४९८ ॥ अर्शोजठरगुल्मघ्नं शोफारोचकनाशनम् । पाण्डुरोगहरं भेदि हृद्यं दीपनपाचनम् ॥ ४९९ ॥

## ( ९२ ) मेदः ।

मेदस्तु मांससारः स्याच्छुभ्रं मांसजमीरितम् ।

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

मेदस्तु मांससारः स्यान्मांसस्नेहो वसा वपा ।

## ( ९३ ) त्वक् ।

* त्वक्चर्मासृग्धरा कृत्तिरजिनं देहचर्म च । * रक्ताधारो रोमभूमिः शरीरावरणं तथा ॥ ५०० ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

* । * ॥ ५१० ॥

## ( ९४ ) रोम ।

* रोम लोम च त्वग्जं च चर्मजं च तनूरुहम् । * तच्च नेत्रस्थितं पक्ष्म मुखजं श्मश्रु कथ्यते ॥ ५०१ ॥

राजनिघण्टौ मनुष्यादिरष्टादशो वर्गः—

* । * ॥ ५११ ॥

# अथ वर्गेतराणि—

---

## ( १ ) अनूपादिमांसगुणाः ।

*अनूपाः—ग्रन्थान्तरे—†कूलेचराः प्लवाश्चापि कोशस्थाः पादिनस्तथा । मत्स्या एते समाख्याताः पञ्चधाऽनूपजातयः ॥ १ ॥

गुणाः—अनूपा मधुराः स्निग्धा गुरवो वह्निसादनाः । श्लेष्मलाः पिच्छलाश्चापि मांसपुष्टिप्रदा भृशम् ॥ २ ॥ तथाऽभिष्यन्दिनस्ते हि प्रायः पथ्यतमाः स्मृताः ।

---

* अनूपाः—जलानुगतदेशभवे प्राणिवर्गेऽनूपसंज्ञा ।

† कूलेचराः—क्वचित्पुस्तकेषु 'कुलचराः' इति पाठो दृश्यते ।

जङ्घालाः—हरिणैणकुरङ्गाश्च पृषतन्यङ्कुशम्बराः । राजीवोऽपि च मुण्डी चेत्याद्या जङ्घालसंज्ञकाः ॥ ३ ॥

गुणाः—जङ्घालाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः । किंचिद्वातकराश्चापि लघवो बलवर्धनाः ॥ ४ ॥

बिलेशयाः—गोधाशशभुजंगाखुशल्लकाद्या बिलेशयाः ।

गुणाः—बिलेशया वातहरा मधुरा रसपाकयोः । बृंहणा बद्धविण्मूत्रा वीर्योष्णाश्च प्रकीर्तिताः ॥ ५ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

अहिनकुलशल्यगोधामूषकमुख्या बिलेशयाः कथिताः ।

गुणाः—श्वासानिलकासहरं तन्मांसं पित्तदाहकरम् ॥ १ ॥

गुहाशयाः—सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा । बभ्रूजम्बूकमार्जारा इत्याद्याः स्युर्गुहाशयाः ॥ ६ ॥

गुणाः—गुहाशया वातहरा गुरूष्णा मधुराश्च ते । स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ ७ ॥

पर्णमृगाः—वनौका वृक्षमार्जारो वृक्षमर्कटिकादयः । एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः ॥ ८ ॥

गुणाः—स्मृताः पर्णमृगा वृष्याश्चक्षुष्याः शोषणे हिताः । श्वासार्शःकासशमनाः सृष्टमूत्रपुरीषकाः ॥ ९ ॥

विष्किराः—वर्तका लाववर्तीरकपिञ्जलकतित्तिराः । कुलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः ॥१०॥ विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः।

गुणाः—विष्किरा मधुराः शीताः कषायाः कटुपाकिनः । बल्या वृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः स्मृताः ॥ ११ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

भक्ष्याश्च कुक्कुटकपोतकतित्तिराद्याः क्षोणीं विलिख्य नखरैः खलु वर्तयन्ति ।

गुणाः—ते विष्किराः प्रकथिताः पिशितं तदीयं वृष्यं कषायमधुरं शिशिरं च रुच्यम् ॥ २ ॥

प्रतुदाः—हरितो धवलः पाण्डुश्चित्रपक्षो बृहच्छुकः । पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः ॥ १२ ॥ प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्तथा ।

गुणाः—प्रतुदा मधुरा पित्तकफघ्नास्तु वरा हिमाः । लघवो बद्धवर्चस्काः किंचिद्वातकराः स्मृताः ॥ १३ ॥

---

१ झ. ढ. 'हहर' ।

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

भोक्ता निष्कृष्याऽऽमिषं स प्रतुदः प्रोक्तो गृध्रश्येनकाकादिको यः।
गुणाः—मांसं तस्य स्वादु संतर्पणं च स्निग्धं बल्यं पित्तदाहास्रदायि ॥१॥
प्रसहाः—काको गृध्र उलूकश्च चिल्लश्च शशघातकः । चाषो भासश्च कुरर इत्याद्याः प्रसहाः स्मृताः ॥ १४ ॥ प्रसहाः कीर्तिता एते प्रसह्याऽऽच्छिद्य भक्षणात् ।
गुणाः—प्रसहाः खलु वीर्योष्णास्तन्मांसं भक्षयन्ति ये । विशोषभस्मकोन्मादशुक्रक्षीणा भवन्ति ते ॥ १५ ॥
ग्राम्याः—छागमेषवृषाश्चाश्वा ग्राम्याः प्रोक्ता महर्षिभिः ।
गुणाः—ग्राम्या वातहराः सर्वे दीपनाः कफपित्तलाः ॥ १६ ॥
कूलेचराः—लुलायगण्डवाराहचमरीवारणादयः । एते कूलचराः प्रोक्ता यतः कूले चरन्त्यपाम् ॥ १७ ॥
गुणाः—कूलेचरा मरुत्पित्तहरा वृष्या बलावहाः । मधुरा शीतलाः स्निग्धाः शुक्राढ्याः श्लेष्मवर्धनाः ॥ १८ ॥
प्लवाः—हंससारसकारण्डवकक्रौञ्चशरारिकाः । नन्दीमुखी सकादम्बाः बलाकाद्याः प्लवाः स्मृताः ॥ १९ ॥ प्लवन्ति सलिले यस्मादेते तस्मात्प्लवाः स्मृताः ।
गुणाः—प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः । वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः ॥ २० ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

सारसहंसबलाकाश्चक्रक्रौञ्चादयो जलप्लवनात् ।
गुणाः—प्लवसंज्ञाः कथितास्ते तन्मांसं गुरूष्णबलदायि ॥ ४ ॥
कोशस्थाः—शङ्खः शङ्खनखश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोशस्थाः परिकीर्तिताः ॥ २१ ॥
गुणाः—कोशस्था मधुराः स्निग्धाः वातपित्तहरा हिमाः । बृंहणा बहुवर्चस्का वृष्याश्च बलवर्धनाः ॥ २२ ॥
पादिनः—कुम्भीरकूर्मनक्राश्च गोधामकरसंज्ञिताः । घण्टिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः ॥ ९२३ ॥
गुणाः—पादिनोऽपि च ये ते तु कोशस्थानां गुणैः समाः ।
सद्योहतमांसगुणाः—सद्योहतं भवेन्मांसं व्याधिवारिविषापहम् । वयस्थामकृतं सात्म्यमन्यथा परिवर्जयेत् ॥ २४ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

सद्योहतस्य मांसं श्रेष्ठं हरिणादिकस्य यूनस्तु । ज्ञेयं सुगन्धि पथ्यं जाङ्गल-देशस्थितस्य पथ्यतमम् ॥ ५ ॥

च्युतगर्भागर्भिण्यादिमांसगुणाः—वृद्धानां दोषलं मांसं बालानां बलदं गुरु । च्युतगर्भा गुरुर्योषिद्गर्भो गर्भवती तथा ॥ २५ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

बालस्य वृद्धस्य कृशस्य रोगिणो विषाग्निदग्धस्य मृतस्य चाम्बुषु । त्याज्यं मृगादेः पिशितं तु तस्य विगन्धि शुष्कं च चिरस्थितं च ॥ ६ ॥

अखाद्यमांसगुणाः—स्वयं मृतमबल्यं स्यादतिसारकरं गुरु । विषाम्बुरुङ्मृतं मृत्युदोषत्रयरुजावहम् ॥ २६ ॥

विहंगमादिमांसगुणाः—विहंगेषु पुमाञ्श्रेष्ठः स्त्री चतुष्पदजातिषु । पश्चार्धो लघु पुसां स्यात्स्त्रीणां पूर्वार्धमादिशेत् ॥ २७ ॥

स्थूलास्थूलदेहमांसगुणाः—तुल्यं जातिस्वल्पदेहा महादोषेषु(?) पूजिताः । अल्प-देहेषु शस्यन्ते तथैव स्थूलदेहिनः ॥ २८ ॥ चेष्टावतां वरं मासं मलसं स्याल्लघु स्मृतम् । देहमध्यं लघु प्रायः सर्वेषां प्राणिनां मतम् ॥ २९ ॥ पक्षोत्क्षेपाद्वि-हंगानां तदेव समनुच्यते । गुरूण्यण्डानि सर्वेषां गलग्रीवं च पक्षिणाम् ॥ ३० ॥ ये मृगाश्च विहंगाश्च दूरवासाः प्रचारकाः । ते नाभिष्यन्दिनः सर्वे विपरीता अतोऽन्यथा ॥ ३१ ॥ जलानूपभवाः सर्वे जलानूपचराश्च ये । गुरुपक्षा गुरु-तरमेषां मांसमुदाहृतम् ॥ ३२ ॥ धान्योत्पत्तिचराणां तु लघु स्याल्लघुभक्षि-णाम् । उरःस्कन्धोदरं मूर्धा पाणिपादौ कटिस्तथा ॥ ३३ ॥ पृष्ठत्वग्यकृद-न्त्राणि गुरूणीह यथोत्तरम् ।

इति वर्गेतराणि ।

## अथ रसाः—

## ( २ ) महारसाः ।

अभ्रवैक्रान्तमाक्षीकं विमलाद्रिजसस्यकम् । चपलो रसकश्चेति ज्ञेया अष्टौ महारसाः ॥ १ ॥

गुणाः—कृष्णं च शुक्लं च सुपीततिक्तं रसायनं स्यात्क्रमशो गुणाढ्यम् ॥ २ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

दरदः पारदः सस्यो वैक्रान्तं क्रान्तमभ्रकम् । माक्षिकं विमलं चेति स्युरे-तेऽष्टौ महारसाः ॥ १ ॥

## ( ३ ) *अभ्रकम् ।

अभ्रकं विमलं शुभ्रं नवं पीतकपीटकम् । निर्मलं पर्वतोद्भूतं तच्चाभ्रपटवं मतम् ॥ ३ ॥

गुणाः—गौरीतेजः परममृतं वातपित्तक्षयघ्नं प्रज्ञाबोधी प्रशमितजरं वृष्यमायुष्यमग्र्यम् । स्निग्धं बल्यं रुचिदमकफं दीपनं पाचनं स्यात्तद्योगैः सकलगदहृद्व्योम सूतेन्द्रबद्धिः ॥ ५ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

अभ्रकमभ्रं भृङ्गं व्योमाम्बरमन्तरिक्षमाकाशम् । बहुपत्रं खमनन्तं गौरीजं गौरिजेयमिति रवयः ॥२॥ श्वेतं पीतं लोहितं नीलमभ्रं चातुर्विध्यं याति भिन्नक्रियार्हम् । श्वेतं तारे काञ्चने पीतरक्ते नीलं व्याधावग्र्यमग्र्यं गुणाढ्यम् ॥३॥ नीलाभ्रं दर्दुरो नागः पिनाको वज्र इत्यपि । चतुर्विधं भवेत्तस्य परीक्षा कथ्यते क्रमात् ॥४॥ यद्वह्नौ निहितं तनोति नितरां भेकारवं दर्दुरो नागः फूत्कुरुते धनुःस्वनमुपादत्ते पिनाकः किल । वज्रं नैव विकारमेति तदिमान्यासेवमानः क्रमाद्गुल्मी च व्रणवांश्च कुत्सितगदी नीरुक्क संजायते ॥ ५ ॥

## ( ४ ) †विमलम् ।

विमलं निर्मलं स्वच्छममलं स्वच्छधातुकम् । बाणसंख्याभिधं प्रोक्तं तारहेम

---

* अभ्रकभेदशुद्धिमारणानुपानानि—

तत्राऽऽदौ भेदः—भेकं पिनाकं भुजगं च वज्रं चतुर्विधं चाभ्रकमीरितं बुधैः । दलानि मुञ्चत्यनले पिनाको भेकः स्वरावं कुरुतेऽनलस्थः । फूत्काररावो भुजगस्त्वमीषां सैवं नृणां स्याद्गदवृन्दकर्ता । अविक्रियं वह्निगतं नियोज्यं वज्राख्यमभ्रं गदमृत्युशान्त्यै ।

शुद्धिः—प्रतप्तं सप्तवाराणि निक्षिप्तं काञ्जिकेऽभ्रकम् । निर्दोषं जायते नूनं प्रक्षिप्तं वाऽपि गोजले । त्रिफलाक्वथिते वाऽपि गवां दुग्धे विशेषतः ।

मारणम्—गोजलटङ्कणतुलसीसुरनालेन्दुराजिपशुरिपुभिः । त्रित्रिपुटैरतिसुदृढैर्निःशङ्कं मृत्युमेति कृष्णाभ्रम् ।

अनुपानम्—वेल्लव्योषसमन्वितं घृतयुतं वल्लोन्मितं सेवितं दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलं च कोष्ठामयम् । जूर्तिं श्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं मन्दाग्निं जठरव्यथां विजयते योगैरशेषामयान् ॥

† विमलशोधनादि—विमलस्त्रिविधः प्रोक्तो हेमाद्यस्तारपूर्वकः । तृतीयः कांस्यविमलस्तत्तत्कान्त्या स लक्ष्यते ॥ वर्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः ।

गुणाः—मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः । पूर्वो हेमक्रियासूक्तो द्वितीयो रूप्यकृन्मतः । तृतीयो भेषजे तेषु पूर्वपूर्वो गुणोत्तरः । आटरूषजले स्विन्नो विमलो विमलो भवेत् । जम्बीरस्य रसे स्विन्नो मेषशृङ्गीरसेऽथवा ॥ आयाति शुद्धिं विमलो धातवश्च यथा परे ।

---

१ ङ. छ. °नं शीतवीर्यं त° । २ ङ. छ. °न्द्रबन्धि ॥ ५ ॥　　३४

द्विधा मतम् ॥ ६ ॥ विमलो द्विविधः प्रोक्तो हेमाद्यस्तारपूर्वकः । तृतीयः कांस्यविमलस्तत्तत्कान्त्या स लक्ष्यते ॥७॥ वर्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः । पूर्वो हेमक्रियासूक्तो द्वितीयो रूप्यकृन्मतः ॥ ८ ॥ तृतीयो भेषजं तेषु पूर्वपूर्वो गुणोत्तरः ।

गुणाः—मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः ॥ ९ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

विमलं निर्मलं स्वच्छममलं स्वच्छदारुकम् । बाणसंख्याभिधं प्रोक्तं तारहेम द्विधा मतम् ॥ ६ ॥

गुणाः—विमलं कटुतिक्तोष्णं त्वग्दोषव्रणनाशनम् । रसवीर्यादिके तुल्यं वेधे स्याद्भिन्नवीर्यकम् ॥ ७ ॥

## ( ५ ) +चपलम् ।

गौरः श्वेतोऽरुणः कृष्णश्चपलश्च चतुर्विधः । हेमाभश्चैव ताराभो विशेषाद्रसबन्धनौ ॥१०॥ शेषौ तु मध्यौ लाक्षावच्छीघ्रद्रावौ तु निष्फलौ । वङ्गवद्द्रवते वह्नौ चपलस्तेन कीर्तितः ॥ ११ ॥

गुणाः—चपलो लेखनः स्निग्धो देहलोहकरः स्मृतः । रसराजसहायः स्यात्तिक्तोष्णो मधुरो मतः ॥ १२ ॥ चपलः स्फटिकच्छायः षडस्रिः स्निग्धको गुरुः । त्रिदोषघ्नोऽतिवृष्यश्च रसबन्धविधायकः ॥ १३ ॥

## ( ६ ) *गैरिपाषाणः ।

†गैरिपाषाणकः पीतो विटको हृतचूर्णकः ।

---

विमलमारणम्—गन्धाश्मलकुचाम्लैश्च म्रियते दशभिः पुटैः । सटङ्कणकुचद्रावैर्मेषशृङ्ग्याश्च भस्मना ॥ पिष्टो मूषोदरे लिप्तः संशोष्य च निरुध्य च । षट्प्रस्थकोकिलैर्ध्मातो विमलः सीससंनिभः ॥ सत्त्वं मुञ्चति तद्युक्तो रसः स्यात्स रसायनः ।

गुणाः—लीढो व्योषवरान्वितो विमलको युक्तो घृतैः सेवितो हन्याद्दुर्भगकृज्ज्वराञ्श्वयथुकं पाण्डुप्रमेहारुचीः । मूलार्तिं ग्रहणीं च शूलमतुलं यक्ष्मामयं कामलां सर्वान्पित्तमरुद्गदान्किमपरैर्योगैरशेषामयान् ॥

+ चपलशुद्धिः—जम्बीरकर्कोटकशृङ्गबेरैर्विभावनाभिश्चपलस्य शुद्धिः । शैलं तु चूर्णयित्वा तु धान्याम्लोपविषैर्विषैः । पिण्डं बद्ध्वा तु विधिवत्पातयेच्चपलं तथा ॥

*गैरिपाषाणशोधनम्—पूर्वं पूर्वं गुणैः श्रेष्ठं कारवल्लीफले क्षिपेत् । स्वेदयेद्धण्डिकामध्ये शुद्धो भवति मूषकः ॥

गैरिपाषाणसत्त्वम्—तालवद्ग्राहयेत्सत्त्वं शुद्धं शुभ्रं प्रयोजयेत् ।

गुणाः—रसबन्धकरः स्निग्धो दोषघ्नो रसवीर्यकृत् ॥

† क्वचित्पुस्तके 'गौरीपाषाणः' इत्यपि पाठो दृश्यते ।

गुणाः—रसबन्धकरः स्निग्धो दोषघ्नो रसवीर्यजित् ॥ १४ ॥

## ( ७ ) अवनी ।

अवनी मेदिनी भूमी भूतमाता वसुंधरा । गौः पृथ्वी धरणी भूमिः क्षोणी धात्री तथा क्षितिः ॥ १५ ॥ उर्वी वेला बला मूला धरित्री वसुधा धरा । प्रतिष्ठा च मही माता चतुरङ्गा बहूमया (?) ॥ १६ ॥ सा भूमिरुर्वराख्या या सर्वसस्योद्भवप्रदा । समस्तवस्तूद्भवनादुर्वरा नाम भूमिका ॥ १७ ॥

राजनिघण्टौ भूम्यादिर्द्वितीयो वर्गः—

अथ धरणिधरित्रीभूतधात्रीधराभूक्षितिमहिधरणीडाक्ष्मावनीमेदिनीज्याः । अवनिरुदधिवस्त्रा गौः क्षमा क्षोणिरुर्वी कुरपि वसुमतीरा काश्यपी रत्नगर्भा ॥ ८ ॥ क्षमाऽऽदिमा भूमिरिला वसुंधरा वरा च धात्री वसुधाऽचलोर्वरा। विश्वंभराऽऽद्या जगती क्षिती रसा पृथ्वी च गोत्रा पृथिवी पृथुर्मही ॥ ९ ॥ क्षोणी सर्वसहाऽनन्ता भूतमाता च निश्चला । भूमी बीजप्रसूः श्यामा क्रोड-कान्ता च कीर्तिता ॥ १० ॥ सा भूमिरुर्वराख्या या सर्वसस्योद्भवप्रदा। समस्तवस्तूद्भवनादुर्वरा नाम भूमिका ॥ ११ ॥

## ( ८ ) वालुका ।

वालुका सिकता सीरा लोहमाताऽभ्रलोहिनी । नानाधातुमयी चैव बहु-वर्णा बहुष्करा ॥ १८ ॥ अन्यच्च—*सिकता वालुका सिक्ता शीतला सूक्ष्म-शर्करा । *प्रवाहोत्था महाश्लक्ष्णा सूक्ष्मा पानीयचूर्णकम् ॥ १९ ॥

गुणाः—*वालुका मधुरा शीता संतापश्रमनाशिनी । *सेकप्रयोगतश्चैव शाखाशैत्यानिलापहा ॥ २० ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

* । * ॥ १२ ॥

गुणाः—* । * ॥ १३ ॥

## ( ९ ) *अग्निजारः ।

*अग्निजारोऽग्निनिर्यासः सोऽग्निगर्भोऽग्निजः स्मृतः । स दावाग्निमलो ज्ञेयो जरायुश्चाग्निसंभवः ॥ २१ ॥

---

*अग्निजारशोधनादि—समुद्रेणाग्निनक्रस्य जरायुर्बहिरुज्झितः । संशुष्को भानुतापेन सोऽ-ग्निजार इति स्मृतः ॥

अग्निजारगुणाः—अग्निजारस्त्रिदोषघ्नो धनुर्वातादिवातनुत् । वर्धनो रसवीर्यस्य दीपनो जार-णस्तथा । स चाब्धिक्षारसंशुद्धस्तस्माच्छुद्धिर्न हीष्यते ।

गुणाः—अग्निजारस्त्रिदोषघ्नो धनुर्वातादिवातनुत् । वर्धनो रसवीर्यस्य दीपनो जारणस्तथा ॥ २२ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

* । वडवाग्निमलो ज्ञेयो जरायुश्चाग्निसंभवः ॥ १४ ॥

गुणाः—स्यादग्निजारः कटुरुष्णवीर्य[1]स्तुण्डामयो[2] वातकफापहश्च । पित्तप्रदः सोऽधिकसंनिपातशूलार्तिशीतामयनाशकश्च ॥ १५ ॥ जाराभं दहनस्पर्शापिच्छलं सागरे प्लवम् ॥ जरायुस्तच्चतुर्वर्णं श्रेष्ठं तेषु सलोहितम् ॥ १६ ॥

## ( १० ) *बोदारशृङ्गकम् ( मृद्दारशृङ्गकम् )

सदलं पीतवर्णं च भवेद्गुर्जरमण्डले । अर्बुदस्य गिरेः पार्श्वे जातं बोदारशृङ्गकम् ॥ २३ ॥

गुणाः—शिशिरत्वं मरुच्छ्लेष्मशमनं पुंस्त्वदायकम् । रसबन्धनमुत्कृष्टं केशरञ्जनमुत्तमम् ॥ २४ ॥

## ( ११ ) †रसकः ।

रसको द्विविधः प्रोक्तो दर्दुरः कारवेल्लकः । सदलो दर्दुरः प्रोक्तो निर्दलः कारवेल्लकः । सत्त्वपाते शुभः पूर्वो द्वितीयश्चौषधादिषु ॥ २५ ॥

गुणाः—रसकः सर्वमेहघ्नः कफपित्तविनाशनः । नेत्ररोगक्षयघ्नश्च लोहपारदरञ्जनः ॥ २६ ॥ नागार्जुनेन संदिष्टौ रसश्च रसकावुभौ ॥ २७ ॥

---

*बोदारशृङ्गशोधनम्—साधारणरसाः सर्वे मातुलुङ्गार्द्रकाम्बुना । त्रिरात्रं भाविताः शुष्का भवेयुर्दोषवर्जिताः ॥

†रसकशुद्धिः—कटुकालाबुनिर्यास आलोड्य रसकं पचेत् । शुद्धं दोषविनिर्मुक्तं पीतवर्णं तु जायते ॥ खर्परः परिसंतप्तः सप्तवारं निमज्जितः । बीजपूररसस्यान्तर्निर्मलत्वं समश्नुते ॥ नृमूत्रे वाऽश्वमूत्रे वा तक्रे वा काञ्जिकेऽथवा । प्रताप्य मज्जितं सम्यक्खर्परं परिशुध्यति ॥

रसकसत्त्वम्—लाक्षागुडासुरीपथ्याहरिद्रासर्जटङ्कणैः । सम्यक्संचूर्ण्य तत्पक्वं गोदुग्धेन घृतेन च ॥ वृन्ताकमूषिकामध्ये निरुध्य गुटिकाकृतिम् । ध्मात्वा ध्मात्वा समाकृष्य ढालयित्वा शिलातले ॥ सत्त्वं वङ्गाकृति ग्राह्यं रसकस्य मनोहरम् ।

रसकभस्म—तत्सत्त्वं तालकोपेतं प्रक्षिप्य खलु खर्परे ॥ मर्दयेल्लोहदण्डेन भस्मी भवति निश्चितम् ।

रसकभस्मगुणाः—तद्भस्म मृतकान्तेन समेन सह योजयेत् । अष्टगुञ्जामितं चूर्णं त्रिफलाक्वाथसंयुतम् ॥ कान्तपात्रस्थितं रात्रौ तिलजप्रतिवापकम् । निषेवितं निहन्त्याशु मधुमेहमपि ध्रुवम् ॥ पित्तं क्षयं च पाण्डुं च श्वयथुं गुल्ममेव च । रक्तगुल्मं च नारीणां प्रदरं सोमरोगकम् ॥ योनिरोगानशेषांश्च विषमांश्च ज्वरानपि । रजःशूलं च नारीणां कासं श्वासं च हिध्मिकाम् ॥

---

१ ट. वीर्यः कण्ठाम° । २ झ. ढ. °स्तुन्दाम° ।

## ( १२ ) +शिलाधातुः ।

उत्पत्तिः—ग्रीष्मे तीव्रार्कतप्तेभ्यः पादेभ्यो हिमभूभृतः । स्वर्णरौप्यार्कगर्भेभ्यः शिलाधातुर्विनिःसरेत् ॥ २८ ॥

वर्णनम्—शिलाधातुर्द्विधा प्रोक्तो गोमूत्राद्यो रसायनः । कर्पूरपूर्वकश्चान्यस्तत्राऽऽद्यो द्विविधः पुनः ॥२९॥ ससत्त्वश्चैव निःसत्त्वस्तयोः पूर्वो गुणाधिकः ।

गुणाः—स्वर्णगर्भगिरेर्जातो जपापुष्पनिभो गुरुः । स स्वल्पतिक्तः सुस्वादुः परमं तद्रसायनम् ॥३०॥ रूप्यगर्भगिरेर्जातं मधुरं पाण्डुरं गुरु । शिलाजं पित्तरोगघ्नं विशेषात्पाण्डुरोगहृत् ॥ ३१ ॥ ताम्रगर्भ गिरेर्जातं नीलवर्णं घनं गुरु । शिलाजं कफवातघ्नं तिक्तोष्णं क्षयरोगहृत् ॥ ३२ ॥ वह्नौ क्षिप्तं भवेद्यत्तल्लिङ्गाकारमधूमकम् । सलिलेऽथ विलीनं च तच्छुद्धं हि शिलाजतु ॥ ३३ ॥

## ( १३ ) रोहिणः ।

रोहिणो रोहितो रोही अश्वगन्धो विषाणिकः । चमरी नीलिनी प्रोक्तस्ताम्रकः करभू रुरुः ॥ ३४ ॥ रक्षो नीलान्द्रगो नीलो गवयश्चारुदर्शनः ।

गुणाः—गवयो मधुरो वृष्यः स्निग्धोष्णकफपित्तलः ॥ ३५ ॥

## ( १४ ) महाशृङ्गः ।

महाशृङ्गस्तु शरभो मेघस्कन्दो महामनाः । अष्टपादो महासिंहो मनस्वी पर्वताश्रयः ॥ ३६ ॥

## ( १५ ) शल्लूलः ।

शल्लूलः शलली श्वावित्सेधा स्यात्सूचिनाखरा ॥ ३७ ॥

गुणाः—शल्लकः श्वासकासास्रशोषदोषत्रयापहः । सेधा तथैव विज्ञेया विशेषाद्बलवर्धिनी ॥ ३८ ॥

## ( १६ ) गोधा ।

गोधा घोरफडा पञ्चनखराजः स्मृतस्तथा । खरचर्मा तु गोधायां गौधेरः स महाविषः ॥ ३९ ॥

---

+ शिलाधातुशोधनम्—क्षाराम्लगोजलैर्धौतं शुध्यत्येव शिलाजतु । शिलाधातुं च दुग्धेन त्रिफलामार्कवद्रवैः ॥ लोहपात्रे विनिक्षिप्य शोधयेदतियत्नतः ।

शिलाधातुमारणम्—शिलया गन्धतालाभ्यां मातुलुङ्गरसेन च । पुटितो हि शिलाधातुर्म्रियतेऽष्टगिरिण्डकैः ॥

गुणाः—भस्मीभूतशिलोद्भवं समतुलं कान्तं च वैक्रान्तकं युक्तं च त्रिफलाकटुत्रिकघृतैर्वल्लेन तुल्यं भजेत् । पाण्डौ यक्ष्मगुदे तथाऽग्निसदने मेहेषु मूलामये गुल्मप्लीहमहोदरे बहुविधे शूले च योन्यामये ॥

गुणाः—असृक्श्वासक्षयहरा गोधा मधुरशीतला ॥ ४० ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

गोधा तु गोधिका ज्ञेया दारुमत्स्याह्वया च सा। खरचर्मा पञ्चनखी पुलका दीर्घपुच्छिका ॥ १७ ॥

## ( १७ ) गौधेयः ।

गोधाजः स्यात्तु गौधेयो गौधारो गोधिकासुतः ॥ ४१ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

गौधारः स्यात्तु गौधेयो गौधेरो गोधिकासुतः ॥ १८ ॥

## ( १८ ) मक्षिका ।

मक्षिका मधुकृच्चान्या सरघा मधुमक्षिका। पूतिका माक्षिका पूतिः क्षुद्राऽन्या क्षुद्रमक्षिका ॥ ४२ ॥ कृष्णा नीलाऽरुणा मक्षी कृमिमक्षी प्रकीर्तिता ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

दंशो दुष्टमुखः क्रूरः क्षुद्रिका वनमक्षिका । मक्षिका त्वमृतोत्पन्ना वमनी चापला च सा ॥ १९ ॥

## ( १९ ) मशकः ।

मशको दंशको ग्राम्यः क्षुद्रदंशस्तु स स्मृतः । अन्यो दंशो वन्यदंशः पशुलोहितपः स्मृतः ॥ ४३ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

मशको वज्रतुण्डश्च सूच्यास्यः सूक्ष्ममक्षिका ॥ २० ॥

## ( २० ) कोकडः ।

कोकडो जवनः प्रोक्तः काकवाचो बिलेशयः । ज्ञेयो मधुरवृत्तश्च रोमशो धूम्रवर्णकः ॥ ४४ ॥ रात्रिजागरदो धूम्रो नीलाभास्त्वन्यजातयः । अष्टाङ्घ्रिरष्टपादश्च गृहवासी च कृष्णकः ॥ ४५ ॥

## ( २१ ) पक्षी ।

पक्षी विहंगमः पत्री शकुन्तो विहगः खगः । अण्डजो विः पत्ररथः पतत्री शकुनी द्विजः ॥ ४६ ॥ तिर्यञ्चो विषपत्री स्याद्विहंगः खेचरस्तथा।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

खगविहगविहंगमा विहंगः पिपतिषुपत्रिपतत्रिपत्रवाहाः । शकुनिशकुनविविष्किराण्डजा विः पतगपतङ्गभसंगमा नगौकाः ॥ २१ ॥

## ( २२ ) सारसः ।

सारसः सुस्वरश्चैव नीलाङ्गश्चित्रकन्धरः । रक्ततुण्डो रक्तनेत्रो रक्तपादोऽस्रवल्लभः ॥ ४७ ॥ सारसी तस्य रामा च लक्ष्मणा लक्षणाकृतिः ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

सारसो रसिकः कामी नीलाङ्गो भणितारवः । नीलकण्ठो रक्तनेत्रः काकवाकामिवल्लभः ॥ २२ ॥

## ( २३ ) तित्तिरिः ।

तित्तिरिस्तित्तिरश्चैव कृष्णो गौरः कपिञ्जलः ॥ ४८ ॥

गुणाः—तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः । हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरः ॥ ४९ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

तित्तिरिस्तित्तिरश्चैव तैत्तिरो याजुषो गिरिः । कृष्णोऽन्यस्तित्तिरिः शूरः सुभूतिः परिपालकः ॥ २३ ॥

गुणाः—स्निग्धं तित्तिरजं मांसं लघु वीर्यबलप्रदम् । कषायं मधुरं शीतं त्रिदोषशमनं परम् ॥ २४ ॥

## ( २४ ) चटकः ।

चटकः कलविङ्कस्तु कार्मुको नीलकण्ठकः । मधुरोऽन्योऽतिसूक्ष्मः स्याच्चटको धान्यभक्षणः ॥ ५० ॥ गृहकर्ताऽक्षमो भीरुः कृषिद्विष्टः कणप्रियः ।

गुणाः—व्यवायी संनिपातघ्नः कलविङ्कः कफापहः ॥ ५१ ॥

तित्तिरादिविशेषगुणाः—लावतित्तिरवर्तश्च कलविङ्कः कपिञ्जलः । विष्किराः शिखिचक्राह्वचकोरकुररादयः ॥५२॥ कषायाः स्वादवः शीता लघवो दोषनाशनाः । कषायो मधुरस्तेषां संनिपातहरो लघुः ॥५३॥ मेधाग्निवर्धनो वृष्यो ग्राही वर्णप्रसादकृत् । वर्तिरः कटुकः पाके कषायो वातजिल्लघुः ॥ ५४ ॥ कपिञ्जलो लघुः शीतो रक्तपित्तकफापहः । लघुर्बल्योऽग्निकृन्मेध्यः कुररो वातपित्तहा ॥५५॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

चटका कलविङ्की स्याच्चाटकैरस्तु तत्सुतः । धूसरोऽरण्यचटकः कुजो भूमिशयी च सः ॥ २५ ॥ भारीटः श्यामचटकः शैशिरः कणभक्षकः । धूसरोऽन्योऽतिसूक्ष्मः स्याच्चटको धान्यभक्षकः । गृहकृत्यक्षमो भीरुः कृषिद्विष्टः कणप्रियः ॥ २६ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—चटकायाः पलं शीतं लघु वृष्यं बलप्रदम् । तद्वच्चारण्यचटकक्रव्यं लघु च पथ्यदम् ॥ २७ ॥

## ( २५ ) पारावतः ।

पारावतो रक्तनेत्रो नीलाङ्गश्च कपोतकः । गृहस्वामी वरारोहघुर्घुराग इति स्मृतः ॥५६॥ ज्ञेयो गृहकपोतस्तु श्वेतः पारावतः स्मृतः । जलपारावतः कोपी प्रोक्तो जलकपोतकः ॥ ५७ ॥ भस्माङ्गोऽथ कपोतोऽन्यो घूघूकृत्पाण्डुरेव च । अमङ्गल्यः स भवति द्विजो यस्तु यभो यतः ॥ ५८ ॥ अन्यच—भस्माङ्गोऽथ कपोतोऽन्यो घूघूकृद्धूम्रलोचनः । दहनोऽग्निसहायश्च भीषणो गृहनाशनः ॥ ५९ ॥

गुणाः—पारावतो गुरुः स्वादुः कषायो रक्तपित्तहा । स्वादुः कषायश्च लघुः कपोतः कफपित्तहा ॥ ६० ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

पारावतः कलरवोऽरुणलोचनश्च पारापतो मदनकाकुरवश्च कामी । रक्तेक्षणो मदनमोहनवाग्विलासी कण्ठीरवो गृहकपोतक एष उक्तः ॥ २८ ॥ पारावतोऽन्यदेशीयः कामुको घुंल्लुसारवः । जलपारावतः कामी ज्ञेयो गलरवश्च सः ॥ २९ ॥

राजनिघण्टौ मांसादिः सप्तदशो वर्गः—

गुणाः—वर्धनं वीर्यबलयोस्तद्वदेव कपोतजम् । पारावतपलं स्निग्धं मधुरं गुरु शीतलम् । पित्तास्रदाहनुद्बल्यं तथाऽन्यद्वीर्यवृद्धिदम् ॥ ३० ॥

## ( २६ ) वल्गुली ।

वल्गुली नक्तचारी च वक्त्रविष्ठाविनिर्गमी । निशाचरी स्वैरिणी च क्रव्यादी मातृवाहिनी ॥ ६१ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

वल्गुली वक्त्रविष्ठा सा दिवान्धा च निशाचरी । स्वैरिणी च दिवास्वापा मांसेष्टा मातृवाहिनी ॥ ३१ ॥

## ( २७ ) गृध्रः ।

गृध्रस्तार्क्ष्यः शाल्मलीस्थः खगेन्द्रो भुजगान्तकः । वज्रतुण्डश्च दाक्षाय्यो गरुत्मान्दुष्टदर्शनः ॥ ६२ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

---

१ झ. यतो । २ ट. घुल्मुलारवः ।

गृध्रस्तार्क्ष्यो वैनतेयः खगेन्द्रो भुजगान्तकः । वक्रतुण्डश्च दाक्षाय्यो गरुत्मान्दूरदर्शनः ॥ ३२ ॥

## ( २८ ) रणगृध्रः ।

*करको नीलपिच्छः स्याल्लम्बकर्णो रणप्रियः । *रणपक्षी पिच्छबाणः स्थूलनीलो भयंकरः ॥ ६३ ॥

गृध्रद्वयगुणाः—गृध्रस्य काकवन्मांसं विशेषान्नेत्ररोगजित् ॥ ६४ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

* । * ॥ ३३ ॥

## ( २९ ) श्येनः ।

श्येनः शशादः क्रव्यादः क्रूरो वेगी खगान्तकः । कामान्धस्तीव्रसंतापस्तरस्वी तार्क्ष्यनायकः ॥ ६५ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

श्येनः शशादः क्रव्यादः क्रूरो वेगी खगान्तकः । कामान्धस्तीव्रसंतापस्तरस्वी तार्क्ष्यनायकः ॥ ३४ ॥

## ( ३० ) चीरिः ।

चिरश्चिल्लश्चिल्लिचली क्षुद्रगृध्री प्रकीर्तिता ।

श्येनचीरगुणाः—श्येनचीरिभवं मांसं प्रायो दोषकरं गुरु ॥ ६६ ॥

## ( ३१ ) खञ्जरीटः ।

खञ्जरीटः खञ्जनकश्चाषनामा किकीदिविः । चाषकस्तोककः सोऽपि सारङ्गो मेघजीवनः ॥ ६७ ॥ भरद्वाजः कृकराटो व्याघ्राटः पुण्यदर्शनः ।

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

व्याघ्राटः स्याद्भरद्वाजः खञ्जनः खञ्जरीटकः । समन्तभद्रः कृष्णस्तु स्वल्पकृष्णः सुभद्रकः ॥ ३५ ॥ द्वीपवासी मुनिश्चैव चातुर्मास्यविदर्शनः । चाषः किकीदिविः प्रोक्तो नीलाङ्गः पुण्यदर्शनः ॥ ३६ ॥

## ( ३२ ) चटी ( भरद्वाजादिपक्षिणश्च )

चटी चटक इत्युक्तो भारद्वाजो नहिः कुटिः । चटकोऽन्यश्चतुर्थस्तु खञ्जरी चलपिच्छकः ॥ ६८ ॥ भारद्वाजश्चटी ब्राह्मी खञ्जरीटस्तु पिच्छकः ॥ ६९ ॥

गुणाः—खञ्जरीटो भरद्वाजश्चातकः श्लेष्मवातहा । वातघ्नोऽनिलपित्तघ्नो भारद्वाजः कफास्रजित् ॥ ७० ॥

## ( ३३ ) पेचः ।

पेचस्तु मेचको ज्ञेयो पुच्छान्तभागलोहितः । उत्क्रोशः कुररोऽथो च कोयष्टिष्टिट्टिभस्तथा ॥ ७१ ॥

## ( ३४ ) क्रौञ्चः ।

क्रौञ्चकः क्रोचवी दीर्घरवः स्याद्रात्रिजागरः । * नीलक्रौञ्चस्तु नीलाङ्गो दीर्घग्रीवोऽतिजागरः ॥ ७२ ॥ कुररः क्रौञ्चवज्ज्ञेयष्टिट्टिभोऽल्पमरुत्करः ।

पेचादिगुणाः—क्रौञ्चः पित्तानिलहरः पेचकः कफवातजित् ॥ ७३ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

कुररः खरशब्दः कुङ्क्रौञ्चः पङ्क्तिचरः खरः ॥ ३७ ॥

## ( ३५ ) टोकः ।

[1]टोककुक्कुटिविष्टिट्टिकिटीवीटीटिवीटिभाः ।

## ( ३६ ) वर्तकः ।

वर्तको वर्तिको वर्तवर्तिका पोथवर्तिका ।

गुणाः—मेध्योऽग्निवर्धनो वृष्यो ग्राही वर्णप्रसादकृत् । वर्तिकः कटुकः पाके कषायो वातजिल्लघुः ॥ ७५ ॥

राजनिघण्टौ सिंहादिरेकोनविंशो वर्गः—

वर्तको वर्तिको वर्तिर्गो[2]ञ्जिकायश्च कथ्यते ॥ ३८ ॥

काञ्चनादिस्तु मत्स्यान्तो वर्गः षष्ठ उदाहृतः ।
धातुद्रव्यद्रवद्रव्यमांसद्रव्यसमाश्रयः ॥ ६ ॥

इति रसवीर्यविपाकसहिते राजनिघण्टुयुतधन्वन्तरीयनिघण्टौ
सुवर्णादिः षष्ठो वर्गः ॥ ६ ॥

---

१ ञ. टोको कुक्कुटी पिट्टी च कटी वीटी च टिट्टिभः । २ ज. 'गाञ्जीका' । ट. 'गांजीका' ।

# अथ मिश्रकादिः सप्तमो वर्गः।

## ( १ ) *त्रिफला।

*हरीतकी चाऽऽमलकं विभीतकमिति त्रयम्। त्रिफला च वरा श्रेष्ठतमं ज्ञेयं फलत्रिकम् ॥ १ ॥

गुणाः—त्रिफला च त्रिदोषघ्नी दीपनी स्याद्रसायनी । वृष्या मेहहरा दीप्या नेत्ररोगहरा मता ॥ २ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । त्रिफला त्रिफली चैव फलत्रयफलत्रिके ॥ १ ॥

## ( २ ) स्वादुत्रिफला।

द्राक्षाखर्जूरकाश्मर्यफलानीति फलत्रयम्। सैव स्वादुर्द्वितीया तु त्रिफला त्रैफला स्मृता ॥ ३ ॥ अन्यच्च—द्राक्षादाडिमखर्जूरं द्वितीयं च फलत्रयम्।

गुणाः—चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी ॥ ४ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

द्राक्षाकाश्मर्यखर्जूरीफलानि मिलितानि तु । मधुरत्रिफला ज्ञेया मधुरादिफलत्रयम् ॥ २ ॥

## ( ३ ) सुगन्धित्रिफला।

जातीफलं तथैला च लवङ्गफलमेव च । सुगन्धित्रिफला प्रोक्ता तृतीयं तु फलत्रिकम् ॥ ५ ॥

गुणाः—संग्राहिमधुरा पाके कफवातविबन्धनुत् ।

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

जातीफलं पूगफलं लवङ्गकलिकाफलम्। सुगन्धित्रिफला प्रोक्ता सुरभित्रिफला च सा ॥ ३ ॥

## ( ४ ) त्रिकटुकम् ( कटुत्रयम् )

* पिप्पली मरिचं शुण्ठी त्रयमेतद्विमिश्रितम् । त्रिकटु त्र्यूषणं व्योषं कटुत्रयमिहोच्यते ॥ ६ ॥

---

* ग्रन्थान्तरे—एका हरीतकी योज्या द्वौ च योज्यौ विभीतकौ । त्रीणि चाऽऽमलकान्याहुस्त्रिफलैषा प्रकीर्तिता ॥

---

१ झ. ण. त. 'ला फलमित्युक्तं तच्च ज्ञे'।

गुणाः—दीपनं रुचिदं वातश्लेष्ममन्दाग्निशूलनुत् ।

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । त्रिकटु त्र्यूषणं व्योषं कटुत्रयकटुत्रिकम् ॥ ४ ॥

## ( ५ ) चातुर्भद्रकम् ।

* नागराऽतिविषा मुस्ता त्रयमेतच्च कार्षिकम् । * गुडूचीसंयुतं चैव चातुर्भद्रकमुच्यते ॥ ७ ॥

गुणाः—ज्वरघ्नं पाचनं प्रोक्तं त्रिदोषशमनं स्मृतम् । जीर्णज्वरारोचकघ्नं कण्ठामयविनाशनम् ॥ ८ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ५ ॥

## ( ६ ) द्वितीयं चातुर्भद्रकम् ।

* एलात्वक्पत्रकैस्तुल्यैर्मरिचेन समन्वितैः । * कटुपूर्वमिदं चान्यच्चातुर्भद्रकमुच्यते ॥ ९ ॥

गुणाः—चातुर्भद्रं रुचिकरं पित्तलं चाग्निदीपनम् । रूक्षोष्णं च सुगन्धि स्यात्तीक्ष्णं वर्ण्यं लघु स्मृतम् ॥ १० ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ६ ॥

## ( ७ ) तृतीयं चातुर्भद्रकम् ।

* त्वगेलापत्रकैस्तुल्यैस्त्रिगन्धि च त्रिजातकम् । * नागकेसरसंयुक्तं चातुर्जातकमुच्यते ॥ ११ ॥

गुणाः—स्वरभेदश्वासकासमुखदोषविनाशनम् । वृष्यं बल्यं च योगार्हं चातुर्जातं रसायनम् ॥ १२ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ७ ॥

## ( ८ ) पञ्चकोलम् ।

* पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् । * एकत्र मिश्रितैरेभिः पञ्चकोलकमुच्यते ॥ १३ ॥

१ ट. 'तत्रिका' । २ क्ष. ण. 'तुर्जातक' ।

गुणाः—पञ्चकोलं त्रिदोषघ्नं रुच्यं दीपनपाचनम् । स्वरभेदहरं चैव शूल-गुल्मार्तिनाशनम् ॥ १४ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ८ ॥

## ( ९ ) पञ्चवल्कलम् ।

*न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । * सर्वैरेकत्रे संयुक्तैः +पञ्चवल्कलमुच्यते ॥ १५ ॥

गुणाः—रसे कषायं शीतं च वर्ण्यं दाहतृषापहम् । योनिदोषं कफं शोफं हन्तीदं पञ्चवल्कलम् ॥ १६ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ९ ॥

## ( १० ) पञ्चभृङ्गम् ।

देवदाली शमी भृङ्गा निर्गुण्डी सनकस्तथा ।

गुणाः—रोगान्ते स्नानपानार्थे पञ्चभृङ्गमिति स्मृतम् ॥ १७ ॥

## ( ११ ) मध्यमपञ्चमूलम् ।

*बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन च ।

गुणाः—मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ॥ १८ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । एकत्र योजितेनैतन्मध्यमं पञ्चमूलकम् ॥ १० ॥

## ( १२ ) पञ्चमूलम् ( पञ्चमूलकम् )

* शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका । तथा गोक्षुरकश्चैव पञ्चमूलमिति स्मृतम् ॥ १९ ॥

गुणाः—पञ्चमूलं त्रिदोषघ्नं वातघ्नं दशमूलकम् । ज्वरकासश्वासशूलमन्दाग्न्यरुचिनाशनम् ॥ २० ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । तथा गोक्षुरकश्चेति लघ्विदं पञ्चमूलकम् ॥ ११ ॥

---

\+ राजनिघण्टौ पञ्चवेतसमुच्यत इति पाठो दृश्यते ।

---

१ ङ. °त्र मिलितैः प° । २ ङ. °ञ्चभङ्गम् । ३ ङ. भङ्गा । ४ ख. स्नापनार्थेच प° । ५ ण. °ञ्चभङ्गमि° । ६ ङ. छ. °मिदं लघु ॥ १९ ॥

## ( १३ ) महापञ्चमूलदशमूले ।

बिल्वोऽग्निमन्थः स्योनाकः काश्मर्यः पाटला तथा । ज्ञेयं महापञ्चमूलं दशमूलमुभे स्मृतम् ॥ २१ ॥ अन्यच्च—शालिपर्णीपृश्निपर्णीबृहतीद्वयगोक्षुरैः । बिल्वाग्निमन्थस्योनाककाश्मरीपाटलायुतैः ॥ २२ ॥ दशमूलमिति ख्यातं संनिपातहरो गणः ।

गुणाः—प्रायस्त्रिदोषशमनं पवनामयेषु श्लेष्मोल्बणेषु च गदेषु भिषग्भिरुक्तम् । हिक्कासु संनिपतितेषु शिरोरुजायां श्वासे हितं च कसने दशमूलमेतम् ॥२३॥ उभयं पञ्चमूलं तु संनिपातज्वरापहम् । कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥ २४ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

बिल्वोऽग्निमन्थः स्योनाकः[१] पाटली तिन्दुकस्तथा । सर्वैस्तु मिलितैरेतैः स्यान्महापञ्चमूलकम् ॥ १२ ॥ पञ्चमूलकयोरेतद्द्वयं च मिलितं यदा । तदा भिषग्भिराख्यातं गुणाढ्यं दशमूलकम् ॥ १३ ॥

## ( १४ ) जीवनपञ्चमूलम् ।

अभीरु[२]वीराजीवन्तीजीवकर्षभकैः स्मृतम् ।

गुणाः—जीवनाख्यं च चक्षु[३]ष्यं वृष्यं पित्तानिलापहम् ॥ २५ ॥

## ( १५ ) तृणपञ्चमूलम् ।

तृणाख्यं पित्तजिद्दर्भशरकाशेक्षुशालयः । एतैरेकीकृतं पञ्चमूलं तु तृणसंज्ञकम् ॥ २६ ॥

गुणाः—तृणादिपञ्चमूलं तु पित्तज्वरतृषापहम् । रक्तदोषाम्लपित्तं च स्त्रीरोगं रक्तपित्तकम् ॥ २८ ॥ प्रमेहं नाशयेदेतदिति सुज्ञैर्निरूपितम् ।

## ( १६ ) जीवकादिगणः ।

जीवकर्षभकौ मेदे काकोल्यौ द्वे च योजिते । द्वे सूर्पपर्ण्यौ जीवन्ती मधुकं चेत्ययं गणः ॥ २७ ॥

गुणाः—नाम्ना मधुर इत्युक्तो जीवनीयो रसायनः । जीवनो जीवनीयश्च स्वादुर्मधुरकस्तथा ॥ २९ ॥ शुक्रदोषहरो बल्यो मूत्रदोषापहारकः ।

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

स्याज्जीवकर्षभकयुग्मयुगद्विमेदाकाकोलिकाद्वययुतद्विकसूर्पपर्ण्या । जीव्या मधूकयुतया मधुराह्वयोऽयं योगो महानिह विराजति जीवकादिः ॥ १४ ॥

---

१ ट. 'कः काश्मर्यः पाटली तथा । २ ञ. 'रुमेदाजी' । ३ ट. छ 'ष्यं कफपि' ।

## (१७) वेसवारम् ।

शुण्ठीमरीचपिप्पल्या धान्यकाजाजिदाडिमम् । पिप्पलीमूलसंयुक्तं वेसवारमिति स्मृतम् ॥ ३० ॥

गुणाः—वेसवारो भवेत्तीक्ष्णः सोऽग्नेर्वीर्यस्य वर्धकः ।

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

अजाजी मरिचं शुण्ठी ग्रन्थिधान्यं निशाद्वयम् । पिप्पली मरिचं चेति वेसवारगणो मतः ॥ १५ ॥

## (१८) संभारः ।

कासमर्दकपत्राणां कृतं चूर्णमुलूखले । वेसवारसमायुक्तं सप्ताहं भाजने स्थितम् ॥ ३१ ॥ ततो हिङ्गुरसाक्तेन मिश्रितास्तेन[१] ते तथा । दिवाकरकरैः शोष्या वटकाः कासमर्दकाः ॥ ३२ ॥ शाकेव्यञ्जनमांसानां[२] संभार इति ते मताः ।

गुणाः—अनेन संयुताः पाका वह्निवीर्यबलप्रदाः ॥ ३३ ॥

## (१९) शिखरिणी ।

दध्नः पलानि द्वात्रिंशत्त्वगेलार्धपलं तथा । मध्वाज्यस्य पलार्धार्धं मरिचैलापलार्धकम् ॥ ३४ ॥ पलान्यष्टौ च खण्डस्य पटे शुक्ले च गालयेत् । कर्पूरवासिते भाण्डे छायायां स्थापयेदिह ॥ ३५ ॥

गुणाः—एषा शिखरिणीत्युक्ता वृष्या दीप्तिविवर्धिनी । सदा पथ्या नियुद्धाध्वक्षीणदेहेषु पुष्टिदा ॥ ३६ ॥ आयुष्यवर्धिनी चैव सर्वरोगप्रमर्दिनी । सा स्याद्रुचिस्थैर्यकरी नराणां सर्वदा हिता ॥ ३७ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

द्वात्रिंशत्पलसंमितं दधि पलान्यष्टौ च खण्डं पलस्यार्धं चेन्मरिचस्य तेन तुलितं युक्तं[३] त्वगेलाद्वयम् । मध्वाज्यं च पटे तदर्धमिलितं[४] संशोधितैर्योजिता भाण्डे स्याद्धिमवासिते शिखरिणी श्रीकण्ठभोग्या गुणैः ॥ १६ ॥

## (२०) सर्वौषधिकम् ।

कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचम्पकाः । वचाकर्पूरमुस्ताश्च सर्वौषधिकमुच्यते ॥ ३८ ॥

---

१ ञ. 'न तद्विधिः । दि' । २ झ. ण. त. 'कस्य व्यञ्जनानां च सं' । ३ ज. ट. युतं । ४ ज. ट. ड. 'लितैः सं'।

गुणाः—सर्वौषधी त्रिदोषघ्नी मूत्रदाहापहा मता । रसायन्यर्शःपित्तघ्नी मुखरोगविनाशिनी ॥ ३९ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः । मुराकर्चूरमुस्ताभिः सर्वौषधमुदाहृतम् ॥ १७ ॥

## ( २१ ) सुगन्धामलकम् ।

* सर्वौषधिकसंयुक्ताः शुष्काश्चाऽऽमलकत्वचः । सुगन्धामलकं ह्येतन्निर्दिशन्ति विचक्षणाः ॥ ४० ॥

गुणाः—सुगन्धामलकं वृष्यं पवित्रं मूत्रदोषनुत् । योनिदोषप्रशमनं हन्ति दोषत्रयं तथा ॥ ४१ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । यदा तदाऽयं योगः स्यात्सुगन्धामलकाभिधः ॥ १८ ॥

## ( २२ ) सुगन्धपञ्चकम् ( पञ्चसुगन्धिकम् )

कङ्कोलकं पूगफलं लवङ्गकुसुमानि च । जातीफलानि कर्पूरमेतत्पञ्चसुगन्धिकम् ॥ ४२ ॥

गुणाः—पञ्चसुगन्धिकं शीतं रक्तपित्तविनाशनम् । हन्त्याशु मुखवैगन्ध्यं पीनसं च कफास्रजित् ॥ ४३ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

कर्पूरकङ्कोललवङ्गपुष्पगुवाकजातीफलपञ्चकेन । समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्यात् ॥ १९ ॥

## ( २३ ) परार्धम् ।

चन्दनं कुसुमं तुल्यं परार्धमभिधीयते ।

## ( २४ ) वाव्यपुष्पकम् ।

त्रिभागकुसुमं यच्च तदुक्तं वाव्यपुष्पकम् ॥ ४४ ॥

## ( २५ ) यक्षकर्दमः ।

कुङ्कुमागरुकर्पूरकस्तूरीचन्दनानि च । महासुगन्ध इत्युक्तो नामतो यक्षकर्दमः ॥ ४५ ॥

---

१ ग. ण. कुङ्कुमं । २ झ. ण. कुङ्कुमं ।

गुणाः—यक्षकर्दम एवं स्याच्छीतस्त्वग्दोषहृच्च यः । सुगन्धिः कान्तिदश्चैव शिरोऽर्तिविषनाशनः ॥ ४६ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

कुङ्कुमागरुकुरङ्गनाभिकाचन्द्रचन्दनसमांशसंभृतम् । [1]यक्षपूजनपरैकगोचरं यक्षकर्दममिमं प्रचक्षते ॥ २० ॥

## ( २६ ) मन्थः ।

सक्तवः सर्पिषाऽभ्यक्ताः शीतोदकपरिप्लुताः । नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते ॥ ४७ ॥

गुणाः—मन्थः पित्तहरो ज्ञेयो दाहारुचिविनाशनः । शीतंश्रमापशमने मूर्छादोषापहारकः ॥ ४८ ॥

## ( २७ ) संतर्पणम् ।

द्राक्षादाडिमखर्जूरैर्मर्दिताम्बु सशर्करम् । * लाजाचूर्णं समध्वाज्यं संतर्पणमुदाहृतम् ॥ ४९ ॥

गुणाः—तर्पणं शीतलं पाने नेत्ररोगविनाशनम् । बल्यं रसायनं हृद्यं वीर्यवृद्धिकरं परम् ॥ ५० ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

द्राक्षादाडिमखर्जूरकदलीशर्करान्वितम् । * ॥ २१ ॥

## ( २८ ) पञ्चामृतम् । ( दिव्यपञ्चामृतम् )

* गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । * एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परम् ॥ ५१ ॥

गुणाः—अजीर्णभूतबाधाघ्नं ज्ञेयं पञ्चामृतं परम् ।

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ २२ ॥

## ( २९ ) पञ्चगव्यम् ।

* गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथैव च । समं योजितमेकत्र पञ्चगव्यमिति स्मृतम् ॥ ५२ ॥

गुणाः—पञ्चगव्यं देहशुद्धिकरं कफविनाशनम् ।

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

---

१ ट. छ. 'तत्रमा' ।

*। युक्तमेतद्यथायोगं पञ्चगव्यमुदाहृतम् ॥ २३ ॥

## ( ३० ) आम्लपञ्चकम् ।

बीजपूरकजम्बीरं नारङ्गं साम्लवेतसम् । फलं पञ्चाम्लकं ख्यातं तिन्तिडी-सहितं परम् ॥ ५३ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

जम्बीरनारिङ्गसहाम्लवेतसैः सतिन्तिडीकैश्च सबीजपूरकैः । समांशभागेन तु मेलितैरिदं द्वितीयमुक्तं च फलाम्लपञ्चकम् ॥ २४ ॥

## ( ३१ ) पञ्चनिम्बम् ।

*निम्बस्य पत्रं त्वक्पुष्पफलमूलैः समन्वितम् । *पञ्चनिम्बमिति ख्यातं नामतः शास्त्रकोविदैः ॥ ५४ ॥

गुणाः—पञ्चनिम्बमिदं कुष्ठपञ्चकव्रणनाशनम् ।

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ २५ ॥

## ( ३२ ) लवणपञ्चकम् ।

सैन्धवं रोमकं चैव सामुद्रलवणं तथा । विडं सौवर्चलाख्यं च युक्तं लवण-पञ्चकम् ॥ ५५ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

काचसैन्धवसामुद्रबिडसौवर्चलैः समैः । स्यात्पञ्चलवणं तच्च मृत्स्नोपेतं षडाह्वयम् ॥ २६ ॥

## ( ३३) पञ्चशैरीषम् ।

शिरीषपत्रं त्वक्पुष्पफलमूलसमन्वितम्[१] । विषारिः सर्वतः ख्यातं पञ्चशैरी-षमुच्यते ॥ ५६ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

शैरीषं कुसुमं मूलं फलं पत्रं त्वगित्ययम् । कीटारिः कथितो योगः पञ्च-शैरीषकाभिधः ॥ २७ ॥

## ( ३४ ) पञ्चाम्लकम् ।

कोलदाडिमवृक्षाम्लं चुक्रिका चाम्लवेतसः । पञ्चाम्लकं समुद्दिष्टं विद्वद्भिश्च भिषग्वरैः ॥ ५७ ॥

---

१ झ. ण. °म् । संचूर्णितं प्रयत्नेन तत्पञ्चशैर्षकं स्मृतम् ॥ ५६ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

कोलदाडिमवृक्षाम्लं चुक्रिका चाम्लवेतसः । फलं पञ्चाम्लमुद्दिष्टमम्लं पञ्चफलं स्मृतम् ॥ २८ ॥

## ( ३५ ) पञ्चाङ्गम् ।

*त्वक्पत्रफलमूलानि पुष्पं चैकस्य शाखिनः । पञ्चाङ्गमिति बोद्धव्यं प्राज्ञैरेकत्र मिश्रितम् ॥ ५८ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

*एकत्र मिलितं तच्चेत्पञ्चाङ्गमिति संज्ञितम् ॥ २९ ॥

## ( ३६ ) पञ्चसार्षकम् ।

शिरीषपञ्चपञ्चाङ्गमगदं पञ्चसार्षकम् ।
गुणाः—सर्पदंष्ट्राविषध्वंसि विज्ञेयं शास्त्रकोविदैः ॥ ५९ ॥

## ( ३७ ) पञ्चसूरणम् ।

*अत्यम्लपर्णीकाण्डीरमालाकन्दद्विसूरणैः । *प्रोक्तो भवति योगोऽयं पञ्चसूरणसंज्ञकः ॥ ६० ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ३० ॥

## ( ३८ ) पञ्चसिद्धौषधिकम् ( पञ्चकन्दः )

*तैलकन्दः सुधाकन्दः क्रोडकन्दो रुदन्तिका । *सर्पनेत्रयुताः पञ्चसिद्धौषधिकसंज्ञकाः ॥ ६१ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ३१ ॥

## ( ३९ ) रक्तवर्गः ।

*दाडिमं किंशुकं लाक्षा बन्धूकं च निशाद्वयम् । *कुसुम्भपुष्पं मञ्जिष्ठा इत्येते रक्तवर्गकः ॥ ६२ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

* । * ॥ ३२ ॥

## ( ४० ) शुक्लवर्गः ।

*खटिनीश्वेतसंयुक्ताः शङ्खशुक्तिवराटिकाः । *भृष्टाश्मशर्करा चेति शुक्लवर्ग उदाहृतः ॥ ६३ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

*। * ॥ ३३ ॥

## ( ४१ ) विदारिगन्धाद्यो गणः ( पञ्चगणः)

*विदारिगन्धा बृहती पृश्निपर्णी निदिग्धिका । *श्वदंष्ट्रा चेति संप्रोक्तो योगः पञ्चगणाभिधः ॥ ६४ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

*। * ॥ ३४ ॥

## ( ४२ ) मूत्राष्टकम् ।

मूत्रं गोजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् । सर्वमेकत्र संयुक्तं मूत्राष्टकमुदाहृतम् ॥ ६५ ॥

## ( ४३ ) क्षाराष्टकम् ।

अपामार्गपलाशार्कतिलपुष्कयवाग्रजम्[1] । सर्जिकाटङ्कणयुतं क्षाराष्टकमुदाहृतम् ॥ ६६ ॥

## ( ४४ ) लवणषट्कम् ।

सामुद्रसिन्धुरुचकं विडरोमकपांशुजम् । षडेते च समाख्याता लवणाः शास्त्रकोविदैः ॥ ६७ ॥

## ( ४५ ) त्रिलवणम् ।

सैन्धवं रुचकं चैव बिडं च लवणत्रयम् । एतत्त्रिलवणं प्रोक्तं नामतत्त्वार्थकोविदैः ॥ ६८ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

सैन्धवं च बिडं चैव रुचकं चेति मिश्रितम् । लवणत्रयमाख्यातं तच्च त्रिलवणं तथा ॥ ३५ ॥

## ( ४६ ) क्षारत्रयम् ।

*सर्जिक्षारं यवक्षारं टङ्कणक्षारमेव च । *क्षारत्रयं समाख्यातं त्रिक्षारं च प्रकीर्तितम् ॥ ६९ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

*। * ॥ ३६ ॥

---

१ अ. 'लपुष्पय' ।

## ( ४७ ) क्षारषट्कम् ।

कृष्णतिलजपालाशौ वचापामार्गजस्तथा । कुटजो मुष्कजश्चैव क्षारषट्कं विनिर्दिशेत् ॥ ७० ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

धवापामार्गकुटजलाङ्गलीतिलमुष्कजैः । क्षारैरेतैस्तु मिलितैः क्षारषट्कमुदाहृतम् ॥ ३७ ॥

## ( ४८ ) त्रिमधुरम् । ( मधुरत्रयम् )

घृतं[1] सिता माक्षिकं च विज्ञेयं मधुरत्रयम् । विद्यात्रिमधुरं चैव प्रोक्तं च मधुरत्रिकम् ॥ ७१ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

सितामाक्षिकसर्पींषि मिलितानि यदा तदा । मधुरत्रयमाख्यातं त्रिमधु स्यान्मधुत्रयम् ॥ ३८ ॥

## ( ४९ ) षड्रसाः ।

कटुतिक्तकषायाश्च लवणोऽम्लश्च पञ्चमः । मधुरेण समायुक्ताः षड्रसाः समुदाहृताः ॥ ७१ ॥

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा । सन्तीति रसनीयत्वादभ्याद्ये षडमी रसाः ॥ ३९ ॥

## ( ५० ) द्वितीयमूत्राष्टकम् ।

महिषाजाविमोश्वानां खराणामुष्ट्रहस्तिनाम् । मूत्राष्टकमिति ख्यातं सर्वशास्त्रेषु संमतम् ॥ ७३ ॥

## ( ५१ ) पञ्चमूलकपञ्चकम् ।

बिल्वोऽग्निमन्थः स्योनाकः काश्मर्यत्वक्क पाटला । बला पुनर्नवैरण्डः शूर्पपर्णीद्वयं तथा ॥ ७४ ॥ जीवकर्षभकौ मेदे जीवन्ती च शतावरी । शरेक्षुदर्भकाशानां शालीनां मूलमेव च ॥ ७५ ॥ गन्धो हर्षश्च दंष्ट्रा च सौरभ्यं करमर्दिका । इत्यौषधैः समुद्दिष्टं पञ्चमूलकपञ्चकम् ॥ ७६ ॥

---

[1] ङ. छ. 'तं गुडोऽथ माक्षीकं वि' ।

## ( ५२ ) क्षारपञ्चकम् ।

पलाशतिलमुष्काणां क्षाराः सर्जियवाग्रजैः । समांशमिलिताः पञ्च क्षारपञ्चकमादिशेत् ॥ ७७ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

यवमुष्ककसर्जानां पलाशतिलयोस्तथा । क्षारैस्तु पञ्चभिः प्रोक्तः पञ्चक्षाराभिधो गणः ॥ ४० ॥

## ( ५३ ) औषधम् ।

भैषज्यं भेषजं चैवमगदो जायुरौषधम् । * आयुर्योगो गदारातिरमृतं च तदुच्यते ॥ ७८ ॥ * तच्च पञ्चविधं प्रोक्तं स्वस्वयोगविशेषतः । * रसश्चूर्णं कषायश्चावलेहः कल्क ईरितः ॥ ७९ ॥ रसः पारदसंभिन्नो दिव्यद्रव्यसमन्वितः । * चूर्णं तु वस्तुभिः क्षुण्णैः कषायः क्वथितैस्तु तैः । अनेकैरवलेहः स्यात्कल्को मध्वादिमर्दितैः ॥ ८० ॥

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

भैषज्यं भेषजं जैत्रमगदो जायुरौषधम् । * ॥४१॥ * । * ॥ ४२ ॥ रसो दृषादि संभिन्नो दिव्यद्रव्यसमन्वितः । * ॥ ४३ ॥ तैः पक्वैरवलेहः स्यात्कल्को मध्वादिमर्दितैः ॥

## ( ५४ ) पथ्यम् ।

*आत्मनीनं तु पथ्यं स्यादायुष्यं च हितं च तत् ।

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

* । पादाहारं पथ्यमाहुश्च वैद्या विद्यादर्धाहारमाहारसंज्ञम् । पादोनं स्याद्भोजनं भोगमन्यद्विद्याच्छेषं वातदोषप्रसूत्यै ॥ ४४ ॥

## ( ५५ ) कुशलनामानि ।

* पाटवं लाघवं वार्त्तमारोग्यं स्यादनामयम् ॥ ८१ ॥

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

* ।

## ( ५६ ) नीरोगनामानि ।

अगदो नीरुजः स्यात्तु ह्यनार्तश्चैव कथ्यते ॥ ८२ ॥

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

अगदो नीरुजो नीरुग्निरातङ्कश्च कथ्यते ॥ ४५ ॥

## ( ५७ ) रोगिनामानि ।

व्याधितो विकृतो ग्लास्नुर्ग्लानो मन्दस्तथाऽऽतुरः । अभ्यान्तोऽभ्यमितो रुग्णश्चाऽऽमयावी च दुःसही ॥ ८३ ॥

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

व्याधितो विकृतो ग्लास्नुर्ग्लानो मन्दस्तथाऽऽतुरः । अभ्यान्तोऽभ्यमितो रुग्णश्चाऽऽमयाव्यपटुश्च सः ॥ ४६ ॥

## ( ५८ ) वैद्यः ।

* वैद्यः श्रेष्ठोऽगदंकारी रोगहारी भिषग्भिषः । * रोगघ्नो जीवनो विद्वानायुर्वेदी चिकित्सकः ॥ ८४ ॥

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

* । * ॥ ४७ ॥ विप्रा वैद्यकपारगः शुचिरनूचानः कुलीनः कृती धीरः कालकलाविदास्तिकमतिर्दक्षः सुधीर्धार्मिकः । स्वाचारः समदृग्दयालुरखलो यः सिद्धमन्त्रक्रमः शान्तः काममलोलुपः कृतयशा वैद्यः स विद्योतते ॥४८॥ पुमर्थाश्चत्वारः खलु करणसौख्यैकसुलभास्तदेतद्भैषज्यानवरतनिषेवैकवशगम् । तदप्येकायत्तं फलदमगदंकारकृपया ततो लोके लोके न परमुपकर्त्रेवममुतः ॥ ४९ ॥ राजानो विजिगीषया निजभुजप्रक्रान्तमोजोदयाच्छौर्यं संगररङ्गसद्मानि यथा संबिभ्रते संगताः । यस्मिन्नौषधयस्तथा समुदिताः सिध्यन्ति वीर्याधिका विप्रोऽसौ भिषगुच्यते स्वयमिति श्रुत्याऽपि सत्यापितम् ॥ ५० ॥

## ( ५९ ) आहारः ।

* अन्नं जीवनमाहारः कूरं कशिपुरोदनम् । * अन्धो भिस्साऽदनं भोज्यमन्नाद्यमशनं तथा ॥ ८५ ॥ *आहारभेदाः—भोज्यं पेयं तथा चोष्यं लेह्यं खाद्यं च चर्वणम् । * निष्पेयं चैव भक्ष्यं स्यादन्नमष्टविधं स्मृतम् ॥ ८६ ॥

राजनिघण्टौ रोगादिर्विंशतितमो वर्गः—

* । * ॥ ५१ ॥ * । * ॥ ५२ ॥

## (६० ) सप्त धातवः ।

स्वर्णं रूप्यं च ताम्रं च *रङ्गं †यशदमेव च । सीसं लोहं च सप्तैते धातवो गिरिसंभवाः ॥ ८७ ॥

## (६१ ) उपधातवः ।

सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम् । तुत्थं कांस्यं च रीतिश्च सिन्दूरश्च शिलाजतु ॥ ८८ ॥

## (६२ ) नव रत्नानि ।

+रत्नं गारुत्मतं पुष्परागो माणिक्यमेव च । इन्द्रनीलश्च गोमेदस्तथा वैडूर्यमित्यपि ॥ ८९ ॥ अन्यच्च—मुक्ताफलं हीरकं च वैडूर्यं पद्मरागकम् । पुष्परागं च गोमेदं नीलं गारुत्मतं तथा ॥९०॥ प्रवालयुक्तान्येतानि महारत्नानि वै नव ।

## (६३ ) उपरत्नानि ।

उपरत्नानि काचश्च कर्पूराश्मा तथैव च । मुक्ता शुक्तिस्तथा शङ्ख इत्यादीनि बहून्यपि ॥ ९१ ॥

## (६४ ) $उपरसाः ।

गन्धो हिङ्गुलमभ्रतालकशिलाः स्रोतोऽञ्जनं टङ्कणं राजावर्तकचुम्बकौ स्फटिकया शङ्खः खटी गैरिकम् । कासीसं रसकं कपर्दसिकताबोलाश्च कङ्कुष्ठकं सौराष्ट्री च मता अमी उपरसाः सूतस्य किंचिद्गुणैः ॥ ९२ ॥ अन्यच्च—गन्धाश्मगैरकासीसकाङ्क्षी तालाशिलाञ्जनम् । कङ्कुष्ठं चेत्युपरसाश्चाष्टौ पारदकर्मणि ॥ ९३ ॥

---

* रङ्गम्= 'कथिल'—इति प्रसिद्धम् ।

† यशदम्='जस्त' 'जसत'—इति प्रसिद्धम् ।

+ 'धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत् । ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥

$ उपरसानां शुद्धिः—सूर्यावर्तो वज्रकन्दः कदली देवदालिका । शिग्रुः कोशातकी वन्ध्या काकमाची च वालकम् ॥ एषामेकरसेनैव त्रिक्षारैर्लवणैः सह । भावयेदम्लवर्गैश्च दिनमेकं प्रयत्नतः ॥ ततः पचेच्च तद्द्रावैर्दोलायन्त्रे दिनं सुधीः । एवं शुध्यन्ति ते सर्वे प्रोक्ता उपरसा हि ये ॥

## (६५) *साधारणरसाः।

कम्पिल्लश्चपलो गौरीपाषाणो नवसागरः। कपर्दो वह्निजारश्च गिरिसिन्दूर-हिङ्गुलौ॥ ९४॥ बोदारशृङ्गमित्यष्टौ साधारणरसाः स्मृताः।

## (६६) धातवः।

तारं ताम्रं पित्तलं नागहेमं वङ्गं तीक्ष्णं कांस्यकं किट्टलोहम्। सूर्यादीनां नामभिः खेचराणां विज्ञातव्या धातवोऽनुक्रमेण॥ ९५॥

## (६७) पञ्च रत्नानि।

पद्मनागेन्द्रनीलाख्यौ तथा मरकतः शुभः। पुष्परागश्च वज्राख्यः पञ्च रत्नवराः स्मृताः॥ ९६॥

## (६८) †विषम्।

ग्रन्थान्तरे—विषं च गरलं क्ष्वेडं कालकूटं च नामतः। अष्टादशविधं ज्ञेयं विषं कन्दभवं बुधैः॥ ९७॥

विषभेदाः—*स्थावरं †जङ्गमं चैव द्विविधं विषमुच्यते। दशाधिष्ठान-माद्यं तु द्वितीयं षोडशाह्वयम्॥ ९८॥ मूलं पत्रं फलं पुष्पं त्वक्क्षीरं सार एव च। निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः॥ ९९॥ तथा च—

---

* साधारणरसानां शोधनम्—साधारणरसाः सर्वे मातुलिङ्गार्द्रकाम्बुना। त्रिदिनं भाविताः शुष्का भवेयुर्दोषवर्जिताः॥

अन्यच्च—कङ्कुष्ठं गैरिकं शङ्खः कासीसं टङ्कणं तथा। नीलाञ्जनं शुक्तिभेदाः क्षुल्लकाः सवराटकाः॥ जम्बीरवारिणा स्विन्नाः क्षालिताः कोष्णवारिणा। शुद्धिमायान्त्यमी योज्या भिषग्भिर्योगसिद्धये॥

† हारीते—शृङ्गिको वत्सनागश्च तथा वै शार्ङ्गवैरिकः। दारकः कालकूटश्च शङ्खः स्यात्सत्सुक-न्दुकः॥ हालाहलश्चाष्टमश्च तथाऽष्टौ विषजातयः। विषलक्षणानि—शृङ्गिकः कृष्णवर्णश्च वत्स-नागश्च पीतकः। शुण्ठीसमानवर्णश्च शार्ङ्गवेरः स उच्यते॥ दारको हरिवर्णश्च कालकूटो मधुप्रभः। शङ्खश्चातिविषाभासः पीताभः सत्सुकन्दुकः॥ हालाहलः कृष्णवर्णश्चाष्टौ च जातयस्तथा।

* स्थावरविषाणि वाचस्पतौ—मूलविषम्—करवीरादि। 'पत्रविषम्'—विषपत्रिकादि। फलविषम्—कर्कोटकादि। पुष्पविषम्—वेत्रादि। त्वक्सारनिर्यासविषाणि—करम्भादीनि। क्षीरवि-षम्—स्नुह्यादि। धातुविषम्—हरितालादि। कन्दविषम्—वत्सनाभसक्तुकादि, इति।

†जङ्गमविषाणि—दृष्टिनिःश्वासविषाः-दिव्याः सर्पाः। दंष्ट्राविषाः-भौमसर्पाः। दंष्ट्रानखविषाः—व्याघ्रादयः। मूत्रपुरीषविषाः—गृहगोधिकादयः। शुक्रविषाः—मूषिकादयः। लालाविषाः—उच्चि-टिकादयः। लालास्पर्शमूत्रपुरीषार्तवशुक्रमुखसंदंशदंष्ट्रास्पर्शावमर्दितगुदपुरीषविषाः—चित्रशीर्षादयः। अस्थिविषाः—सर्पादयः। पित्तविषाः—शकुलमत्स्यादयः। शूकविषाः—भ्रमरादयः—इति।

कालकूटं वत्सनाभः शृङ्गकश्च प्रदीपनः। हालाहलो ब्रह्मपुत्रो हारिद्रः †सक्तुकस्तथा ॥ १०० ॥ सौराष्ट्रिक इति प्रोक्ता विषभेदा अमी नव।

वर्ज्यविषाणि—कालकूटस्तथा मेषशृङ्गी दर्दुरकस्तथा। हालाहलश्च कर्कोटो ग्रन्थिहारिद्रकस्तथा ॥ १०१ ॥ रक्तशृङ्गी केसरश्च यमदंष्ट्रश्च पण्डितैः। त्याज्यानीमानि योगेषु विषाणि दश तत्त्वतः ॥ १०२ ॥

कालकूटस्वरूपम्—देवासुररणे देवैर्हतस्य पृथुमालिनः। दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसंनिभः ॥ १०३ ॥ निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्तितः। सोऽहिक्षेत्रे शृङ्गवेरे कोङ्कणे मलये भवेत् ॥ १०४ ॥

वत्सनाभस्वरूपम्—सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा। यत्पार्श्वेन तरोर्वृद्धिर्वत्सनाभः स भाषितः ॥ १०५ ॥

शृङ्गकस्वरूपम्—यस्मिन्गोशृङ्गके बद्धे दुग्धं भवति लोहितम्। स शृङ्गक इति प्रोक्तो द्रव्यतत्त्वविशारदैः ॥ १०६ ॥

प्रदीपस्वरूपम्—वर्णतो लोहितो यः स्याद्दीप्तिमान्दहनप्रभः। महादाहकरः पूर्वैः कथितः स प्रदीपनः ॥ १०७ ॥

हालाहलस्वरूपम्—गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा। तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः ॥ १०८ ॥ असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये। दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते ॥ १०९ ॥

ब्रह्मपुत्रस्वरूपम्—वर्णतः कपिलो यः स्यात्तथा भवति सारतः। ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले ॥ ११० ॥

हारिद्रस्वरूपम्—हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः।

सक्तुकस्वरूपम्—यद्ग्रन्थिः सक्तुकेनेव पूर्णमध्यः स सक्तुकः ॥ १११ ॥

सौराष्ट्रिकस्वरूपम्—सुराष्ट्रविषये यः स्यात्स सौराष्ट्रिक उच्यते।

जङ्गमविषाणि—दृष्टिनिःश्वासदंष्ट्राश्च नखमूत्रमलानि च ॥ ११२ ॥ शुक्रं लाला नखस्पर्शः सदंशं स्रावमर्दितम्। गुदास्थिपित्तशुक्राणि दश षड्जङ्गमाश्रयाः ॥ ९२ ॥

गुणाः—विषं प्राणहरं प्रोक्तं व्यवायि च विकासि च। आग्नेयं वातकफहृद्योगवाहि मदावहम् ॥ ११४ ॥ स्थावरं जङ्गमं वाऽपि विषं जग्धं भिषग्वर। शीघ्रं दद्याद्व्यथां गुर्वीं प्रोक्तं च नरसत्तमैः ॥ ११५ ॥ तदेव युक्तियुक्तं तु प्राणदायि रसायनम्। योगवाहि परं वातश्लेष्मजित्संनिपातहृत् ॥ ११६ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

---

† सक्तुकः—क्वचित्पुस्तके ' शौक्लिकेयः ' इति वर्तते।

शृङ्गी च कालकूटश्च मुस्तको वत्सनाभकः। सक्तुकश्चेति योगोऽयं महापञ्चविषाभिधः ॥ ५३ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

विषमाहेयममृतं गरलं दारदं गरम्। कालकूटं कालकूटे हरिद्रं रक्तशृङ्गकम् ॥ ५४ ॥ नीलं च गरदं[1] क्ष्वेडो घोरं हालाहलं हरम्[2]। मरं[3] हालाहलं शृङ्गी भूगरं चैकविंशतिः ॥ ५५ ॥ स्थावरे विषजातीनां श्रेष्ठौ नागोग्रशृङ्गकौ। नागो देहकरे श्रेष्ठो लोहे चैवोग्रगृङ्गकः ॥ ५६ ॥ विषस्याष्टादशभिदाश्चतुर्वर्णाश्च यत्पृथक्। तदत्र नोक्तमस्माभिर्ग्रन्थगौरवभीरुभिः ॥ ५७ ॥

## गौरपाषाणकः (शौक्लिकेयः) (विषविशेषः) ॥ १ ॥

ग्रन्थान्तरे—गौरपाषाणकः प्रोक्तो द्विविधः श्वेतरक्तकः। श्वेतः शङ्खसदृग्रक्तो दाडिमाभः प्रकीर्तितः ॥ ११७ ॥ श्वेतः कृत्रिमकः प्रोक्तो रक्तः पर्वतसंभवः। विषकृत्यपरौ तौ हि रसकर्मणि पूजितौ ॥ ११८ ॥

## †हरितालम्। (विषविशेषः) ॥ २ ॥

हरितालं च गोदन्तं पीतकं नटमण्डकम्। अलं बिडालं गौरं च पिञ्जरं चित्रगन्धकम् ॥ ११९ ॥ अन्यच्च-हरितालं तु तालं स्यादालं तालकमित्यपि। हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम् ॥ १२० ॥ तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम्। स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाऽभ्रपत्रवत्। पत्राख्यं तालकं विद्याद्गुणाढ्यं तद्रसायनम् ॥ १२१ ॥ निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु। स्त्रीपुष्पहारकं स्वल्पगुणं तत्पिण्डतालकम् ॥ १२२ ॥

गुणाः—हरितालं कटूष्णं च स्निग्धं कुष्ठोपघातकम्। विषकण्डूभूतहरं सुभगं केशहृत्परम् ॥ १२३ ॥ स्निग्धं कषायं कटुकं हरितालं विषव्रणान्। कुष्ठकण्डूभूतवातान्हन्ति सौभाग्यदायकम् ॥ १२४ ॥ अन्यच्च—श्लेष्मरक्तविषवा-

---

† हरितालशोधनम्—स्विन्नं कूष्माण्डतोये वा तिलक्षारजलेऽपि वा। तोये वा चूर्णसंयुक्ते दोलायन्त्रेण शुध्यति ॥

हरितालसत्त्वपातनम्—बलिनाऽऽलिप्य यत्नेन त्रिवारं परिशोष्य च। द्राविते त्रिफलाताम्रे क्षिपेत्तालकपोटलीम् ॥ भस्मना छादयेच्छीघ्रं ताम्रेणाऽऽवेष्टितं सितम्। मृदुलं सत्त्वमादाय दद्यात्प्रोक्तं रसायनम् ॥

हरितालमारणम्—तालं विचूर्णयेत्सूक्ष्मं मर्द्य नागार्जुनीद्रवैः। सहदेव्या बलायाश्च मर्दयेद्दिवसत्रयम् ॥ तत्तालरोटकं कृत्वा छायायां च विशोषयेत्। हण्डिकायन्त्रमध्यस्थं पलाशभस्मकोपरि ॥ पाच्यं च वालुकायन्त्रे निहितं चण्डवह्निना। स्वाङ्गशीतं समुद्धृत्य सर्वरोगेषु योजयेत् ॥

---

१ ज. ट. गरलं। २ ज. गरम्। ट. दरम्। ३ ज. ट गरं।

तभूतनुत्केवलं च खलु पुष्पहृत्स्त्रियाः । स्निग्धमुष्णकटुकं च दीपनं कुष्ठहारि हरितालमुच्यते ॥ १२५ ॥

दोषाः—हरति च हरितालं सौष्ठवं देहजातं सृजति च बहुतापं मेहकृच्छ्राश्मपीडाम् । वितरति कफवातं चाऽऽयुषोऽन्तं करोति त्वमृतमिह समस्तान्दुष्टरोगान्करोति ॥ १२६ ॥ तापस्फोटाङ्गसंकोचकफमारुतमेहकृत् । अशुद्धस्तालकः शुद्धो भूतहा रोगहाऽमृतम् ॥ १२७ ॥

राजनिघण्टौ सुवर्णादिस्त्रयोदशो वर्गः—

हरितालं गोदन्तं पीतं नटमण्डनं च गौरं च । चित्राङ्गं पिञ्जरकं भवेदलं तालकं च तालं च ॥ ५८ ॥ कनकरसं काञ्चनकं बिडालकं चैव चित्रगन्धं च । पिङ्गं च पिङ्गसारं गौरीललितं च सप्तदशसंज्ञम् ॥ ५९ ॥

गुणाः—हरितालं कटूष्णं च स्निग्धं त्वग्दोषनाशनम् । भूतभ्रान्तिप्रशमनं विषवातरुजार्तिजित् ॥ ६० ॥

## *अमृतम् ( विषविशेषः ) ॥ ३ ॥

* अमृतं स्याद्वत्सनाभो विषमुग्रं महौषधम् । * गरलं मरणं नागं स्तोककं प्राणहारकम् ॥ १२८ ॥ * गरलं स्थावरादि स्यात्प्रोक्तं चैकादशाह्वयम् ।

गुणाः—* वत्सनाभोऽतिमधुरः सोष्णो वातकफापहः । * कण्ठरुक्संनिपातघ्नः पित्तसंशोधनोऽपि च ॥ १२९ ॥

राजनिघण्टौ पिप्पल्यादिः षष्ठो वर्गः—

* । * ॥ ६१ ॥ * ।

गुणाः—* । * ॥ ६२ ॥

## ( ६९ ) †उपविषाणि ।

ग्रन्थान्तरे—अर्कक्षीरं स्नुहीक्षीरं लाङ्गली करवीरकः । गुञ्जाऽहिफेनो धत्तूरः* सप्तोपविषजातयः ॥ १३० ॥ अन्यच्च—स्नुह्यर्कलाङ्गली गुञ्जा हयारिर्विषमु-

---

* अमृतशोधनम्—गोमूत्रे त्रिदिनं स्थाप्यं विषं तेन विशुध्यति । रक्तसर्षपतैलाक्ते तथा धार्यं च वाससि ॥ अन्यच्च—खण्डीकृत्य विषं वस्त्रपरिबद्धं तु दोलया । अजापयसि संस्विन्नं यामतः शुद्धिमाप्नुयात् ॥ विषग्रन्थि मले न्यस्य माहिषे दृढमुद्रितम् । करीषाग्नौ पचेद्यामं वस्त्रपूतं विषं शुचि ॥ अन्यच्च—कणशो वत्सनाभं च कृत्वा बद्ध्वा च पर्पटम् । दोलायन्त्रे जलक्षीरे प्रहराच्छुद्धिमृच्छति ॥ ३ ॥ अजादुग्धे भावितस्तु गव्यक्षीरेण शोधयेत् ।

† उपविषशोधनम् पञ्चगव्येषु शुद्धानि देयान्युपविषाणि च । विषाभावे प्रयोगेषु गुणास्तु विषसंभवाः ॥

* विषमुष्टिका ( अश्विनी ) 'काजरा' ' कुचला ' इति ख्याते ।

ष्टिका । जेपालोन्मत्ताहिफेनं नवोपविषजातयः ॥ १३१ ॥ जयपालं च धत्तूर-बीजं च विषतिन्दुकम् । †विजया लाङ्गली गुञ्जा करवीराद्युपविषं स्मृतम् (?) ॥ १३२ ॥

उपविषगणः—भल्लातकं चातिविषं चतुर्भागं च खाखसम्(?) । करवीरं द्विधा प्रोक्तमहिफेनं द्विधा मतम् ॥ १३३ ॥ धत्तुरश्च चतुर्धा स्याद्द्विधा गुञ्जानन-विषाः (?) । विषमुष्टिर्लाङ्गली च गणश्चोपविषाह्वयः ॥ १३४ ॥

राजनिघण्टौ मिश्रकादिर्द्वाविंशो वर्गः—

स्नुह्यर्ककरवीराणि लाङ्गली विषमुष्टिका । एतान्युपविषाण्याहुः पञ्च पाण्डि-त्यशालिनः ॥ ६३ ॥

विषोपविषप्रशमनम्–ग्रन्थान्तरे—पीतविषं नरं दृष्ट्वा सद्यो वमनमुत्तमम् । याव-त्पीतातिविषं च तावत्तु वमयेत्सदा ॥ १३५ ॥ सिञ्चेच्छीताम्भसा वक्त्रं मन्त्र-पूतेन सत्वरम् । रजनीयुग्माम्लकेन काञ्जिकेन तु पेषितम् ॥ १३६ ॥ लेपेन च विषं हन्ति प्रलिप्तं नात्र संशयः । मातुलुङ्गरसेनापि धावनं काञ्जिकेन वा ॥ १३७ ॥ अतिशीतेन तोयेन प्रलिप्तं नात्र संशयः ।

वर्गोऽयं मिश्रको नाम सप्तमः परिकीर्तितः ।
द्रव्याण्युक्तानि गणशो मिश्रीकृत्य समासतः ॥ ७ ॥
गुडूच्यादिः शताह्वादिस्तथाऽन्यश्चन्दनादिकः ।
करवीरादिराम्रादिः सुवर्णादिर्विमिश्रकः ॥

इति रसवीर्यविपाकसहिते राजनिघण्टुयुतधन्वन्तरीयनिघण्टौ मिश्रकादिः सप्तमो वर्गः ॥ ७ ॥

---

† विजया—भाङ्ग सबजी इति ख्याते ।

# परिशिष्टम् ।

## अथ राजनिघण्टुवशिष्टद्रव्यावलिः ।

### ( १ ) मङ्गलाचरणम् ।

* श्रीकण्ठाचल[1]शृङ्गकोलिषु नदत्कुम्भीन्द्रबुद्ध्यारदमान्तोच्चम्भितसंभृताब्दगलितैः शी[2]तैरपां शीकरैः । निर्वाणे मदसंज्वरे प्रमुदितस्तेनाऽऽतपत्रश्रियं [3]तन्वानेन नि[4]रन्तरं दिशतु वः श्रीविघ्नराजो मुदम् ॥ १ ॥ कर्पूरक्षोदगौरं [5]कपिलपृथुजटं त्रीक्षणं चन्द्रमौलिं सौधं कुण्डं सुधांशुं वरयुतमभयं दोश्चतुष्के दधानम् । वामोत्सङ्गे वहन्तं विविधमणिगणालंकृतामुज्ज्वला[6]ङ्गीं शर्वाणीं स्वानुरूपां तमनिशममृतेशाख्यमीशं स्मरामि ॥ २ ॥ श्रीमन्महेशनलिनासननिर्जरेन्द्रास्तत्राश्विनावथ ततोऽत्रितनूद्भवश्च । धन्वन्तरिश्चरकसुश्रुतसूरिमुख्यास्तेऽप्यायुरागमकृतः कृतिनो जयन्तु ॥ ३ ॥ शंभुं प्रणम्य शिरसा स्वगुरूनुपास्य पित्रोः प[7]दाब्जयुगुले प्रणिपत्य भक्त्या । विघ्नेशितार[8]मभिवन्द्य सरस्वतीं च प्रारम्भि [9]भैषजहिताय निघण्टुराजः ॥ ४ ॥

## ( २ ) प्रस्तावना ।

धन्वन्तरीयमदनादिहलायुधादीन्विश्वप्रकाश्यमरकोशसशेषराजौ । आलोक्य लोकविदितांश्च विचिन्त्य शब्दान्द्रव्याभिधानगणसंग्रह एष सृष्टः ॥ ५ ॥ आयुःश्रुतीनामतुलोपकारकं धन्वन्तरि[11]ग्रन्थमतानुसारकम् । आचक्ष्महे लक्षणलक्ष्यधारकं नामोच्चयं सर्वरुजापहारकम् ॥ ६ ॥ निर्देशलक्षणपरीक्षणनिर्णये[12]न नानाविधौषधविचारपरायणो यः । सोऽधीत्य यत्सकलमेतमवैति सर्वं तस्मादयं [13]जयति सर्वनिघण्टुराजः ॥ ७ ॥ नानाविधौषधिरसाह्वयवीर्यपाकप्रत्येकसम्यगवबोधकृतश्रमोऽपि । मुह्यत्यवश्यमनवेक्ष्य निघण्टुमेतं तस्मा-

---

* एतस्मात्प्राक् ‘यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ’ ॥ १ ॥ इत्ययं श्लोको जपुस्तके दृश्यते ।

---

१ ट. ड. °लमेखलापरिणमत्कु° । २ ज. शीतैः पयोबिन्दुभिः । नि° । ३ ज. बिभ्राणेन । ४ ज. निरत्ययं । ५ ट. ड. धृतकपिलजटं । ६ ज. °ङ्गीं देवीमात्मानु° । ७ ज. पदाम्बुजयुगे । ८ ट. ड. °मधिगम्यं स° । ९ ज. वैद्यकहिताय । १० ज. निघण्टुरेषः । ११ ज. °न्यपथानु° । १२ ज. °न द्रव्यावलीगुणविवेचनतत्परो यः । १३ ज. जगति भाति नि° ।

दयं विरचितो भिषजां हिताय ॥ ८ ॥ निघण्टुना विना वैद्यो विद्वान्व्याकरणं विना[1]। आयुधं च विना योद्धा त्रयो हासस्य भाजनम् ॥ ९ ॥ नानादेशविशेषभाषितवशाद्यत्संस्कृतप्राकृतापभ्रंशादिविभेदतो न गणना द्रव्योच्चयव्याहृतौ। तस्मादत्र तु यावताऽस्त्युपकृतिस्तावन्मया गृह्यते पाथोदैः परिपीयते किमखिलं पाथो हि पाथोनिधेः ॥ १० ॥ आभीरगोपालपुलिन्दतापसाः पान्थास्तथाऽन्येऽपि च वन्यपारगाः। प्रतीत्य[2] तेभ्यो विविधौषधाभिधारसादि[3] लक्ष्माणि ततः प्रचक्ष्महे[4] ॥ ११ ॥ नानाभिधेयमथ यत्र शिवासमङ्गाश्यामादिनामनिगमेषु निवेशितं यत्। प्रस्ताववीर्यरसयोगवशादमुष्य[5] बुद्ध्या विमृश्य भिषजा च धृतिर्विधेया ॥ १२ ॥ नामानि क्वचिदिह रूढितः प्रभावादेश्योक्त्या क्वचन[6] च लाञ्छनोपमाभ्याम्। वीर्येण क्वचिदितराह्वयादि देशाद्द्रव्याणां ध्रुवमिति सप्तधोदितानि ॥ १३ ॥ अत्रौषधानि बहुनामगुणाभिधानप्रस्तावतस्तदुपयुक्ततयेतराणि। क्षेत्रावनीधरनदीनरतिर्यगादिव्याख्यागुणैरतिसविस्तरमीरितानि ॥ १४ ॥ एकः कोऽपि सचेतसां यदि मुदे कल्पेत जल्पे गुणस्तत्रान्येऽपि विनाऽर्थनां बहु मतिं सन्तः स्वयं तन्वते। अप्यार्द्रीकृतशैलसानुगशिलामापीय चान्द्रीं सुधामम्भोधिः कुमुदं दृशश्च[8] जगतां नन्दन्ति केनार्दिताः[9] ॥ १५ ॥ अप्रसिद्धाभिधं चात्र यदौषधमुदीरितम्। तस्याभिधाविवेकः स्यादेकार्थादिनिरूपणे ॥ १६ ॥ रम्भाश्यामादिनाम्नां ये स्वर्गस्त्री तरुणीति च। अर्था नानार्थतन्त्रोक्तास्त्याज्यास्तेऽस्मिन्नपार्थकाः ॥१७॥ व्यक्तिः कृताऽत्र कर्नाटमहाराष्ट्रीयभाषया। आन्ध्रलाटादिभाषास्तु ज्ञातव्यास्तद्द्वयाश्रयाः ॥ १८ ॥ एतत्त्रिनेत्रगणनीयगुणाभिरामगुम्फाढ्यवृत्तसितमौक्तिकवर्गसारम्[10]। कण्ठे सतां सकलनिर्वृतिधाम नामचिन्तामणिप्रकरदाम करोतु केलिम् ॥ १९ ॥ अत्रानूपादिरादाववनिरथ गुडूचीशताह्वादिकौ द्वौ तस्यान्ते पर्पटादिस्तदुपरि पठितौ पिप्पलीमूलकादी। शाल्मल्यादिः प्रभद्रादिकमथ करवीरादिराम्रादिरन्यस्तस्याग्रे चन्दनादिस्तदनु निगदितः कोमलः काञ्चनादिः ॥ २० ॥ पानीयः क्षीरशाल्यादिकमनु कथितौ मांसमानुष्यकादी सिंहादिः स्याद्रुदादिस्तदनु भवति सत्त्वादिको मिश्रकोऽन्यः। एकार्थादिस्तदेतैस्त्रिकरपरिचितैः[11] प्रातिभोन्मेषसर्गं वर्गैरासाद्य वैद्यो निजमतहृदये निस्तरां निश्चिनोतु ॥ २१ ॥ काश्मीरेण कपर्दिपादकमलद्वंद्वार्चनो-

---

१ ट. ड. °ना। अनभ्यासेन धानुष्कत्रयी। २ ट. ड. परीक्ष्य। ३ ज. °दिर्वैद्यो गुणतः। ४ ज. झ. प्रयोजयेत्। ५ ज. °सपाकव°। ६ झ. °तः स्वभा°। ७ ज. क्वचिदविरोधनो°। ८ झ. °मुदैर्दृश°। ९ ज °नार्थिताः। १० झ. ट. ड. °णानुविद्धवर्णाढ्य°। ११ ज. °देतैः सततप°।

पार्जितश्रीसौभाग्ययशःप्रतापपदवीधाम्ना प्रतिष्ठापिता । सेऽयं श्रीनरसिंहनामविदुषा स्ववैद्यविद्यास्थितिः प्रीत्या प्राप्तसुवर्णराजिरचना चित्रोज्ज्वला पीठिका ॥ २२ ॥ अन्यत्र विद्यमानत्वादुपयोगानवेक्षणात् । वृथाविस्तरभीत्या च नोक्तो गुणगणो मया ॥ २३ ॥

---

# अथानूपादिः प्रथमो वर्गः ।

## ( १ ) अनूपदेशः ।

नानाक्षोणीजवीरुद्वनमृगसहितं निर्झरव्रातशीतं शैलाकीर्णं कनीयः कुररमृगखगालंकृतं ताम्रभूमि । विभ्रद्व्रीह्यादिकं यत्स्थलमतिविपुलं नीरसं यत्त्वनुष्णं पित्तघ्नं श्लेष्मवातप्रदमुदररुजापामदं स्यादनूपम् ॥ १ ॥ तच्चोक्तकृत्स्नानिजलक्षणधारि भूरिच्छायावृतान्तरवहद्बहुवारि मुख्यम् । ईषत्प्रकाशसलिलं यदि मध्यमं तदेतच्च नातिबहुलाम्बु भवेत्कनीयः ॥ २ ॥

## ( २ ) जाङ्गलदेशः ।

यत्रानूपविपर्ययस्तनुतृणैस्तीर्णा धरा धूसरा मुद्गव्रीहियवादिधान्यफलदा तीव्रोष्मवत्युत्तमा । प्रायः पित्तविवृद्धिरुद्धतबलाः स्युर्नीरुजः प्राणिनो गावोऽजाश्च पयः क्षरन्ति बहु तत्कूपे जलं जाङ्गलम् ॥३॥ एतच्च मुख्यमुदितं स्वगुणैः समग्रमल्पाल्पभूरुहयुतं यदि मध्यमं तत् । तच्चापि कूपखनने सुलभाम्बु यत्तज्ज्ञेयं कनीय इति जाङ्गलकं त्रिरूपम् ॥ ४ ॥

## ( ३ ) साधारणदेशः ।

लक्ष्मोन्मीलति यत्र किंचिदुभयोस्तज्जाङ्गलानूपयोर्गोधूमोल्बणयावनालविलसन्माषादिधान्योद्भवः । नानावर्णमशेषजन्तुसुखदं देशं बुधा मध्यमं दोषोद्भूतिविकोपशान्तिसहितं साधारणं तं विदुः ॥ ५ ॥ तच्च साधारणं द्वेधाऽनूपजाङ्गलयोः परम् । यत्र यस्य गुणाधिक्यं तच्च तस्य गुणं भजेत् ॥ ६ ॥ मुख्यं तदंशवैषम्यान्नास्ति साधारणं क्वचित् । सूक्ष्मत्वाल्लक्ष्मतत्त्वस्य तद्द्विधैर्भेद इष्यते ॥ ७ ॥

## ( ४ ) क्षेत्रभेदाः ।

क्षेत्रभेदं प्रवक्ष्यामि शिवेनाऽऽख्यातमञ्जसा । ब्राह्मं क्षात्रं च वैश्यीयं शौद्रं

---

१ ज. 'लक्ष्मयुतं मनोहृच्छा' । २ ज. 'हुशः कूपे ।

चेति यथाक्रम् ॥ ८ ॥ तत्र क्षेत्रं ब्रह्मभूमीरुहाढ्यं वारिस्फारं यत्कुशाङ्कुरकीर्णम् । रम्यं यच्च श्वेतमृत्स्नासमेतं तद्व्याचष्टे ब्राह्ममित्यष्टमूर्तिः ॥ ९ ॥ ताम्रभूमिवलयं विभूधरं यन्मृगेन्द्रमुखसत्त्वसंकुलम् । घोरघोषि खदिरादिदुर्गमं क्षात्रमेतदुदितं पिनाकिना ॥ १० ॥ शातकुम्भनिभभूमिभास्वरं स्वर्णरेणुनिचितं निधानवत् । सिद्धकिंनरसुपर्वसेवितं वैश्यमाख्यदिदमिन्दुशेखरः ॥ ११ ॥ श्यामस्थलाढ्यं बहुसस्यभूतिदं लसत्तृणैर्बब्बुलवृक्षवृद्धिदम् । धान्योद्भवैः कर्षकलोकहर्षदं जगाद शौद्रं जगतौ वृषध्वजः ॥ १२ ॥ द्रव्यं क्षेत्रादुदितमनघं ब्राह्मतः सिद्धिदायि क्षात्त्रादुत्थं वलिपलितजिद्विश्वरोगापहारी । वैश्याज्जातं प्रभवतितरां धातुलोहादिसिद्धौ शौद्रादेतज्जनितमखिलव्याधिविद्रावकं द्राक् ॥ १३ ॥ ब्रह्मा शक्रः किंनरेशस्तथा भूरित्येतेषां देवताः स्युः क्रमेण । मोक्तोन्यत्र प्रागुमावल्लभेन प्रत्येकं ते पञ्चभूतानि वक्ष्ये ॥ १४ ॥ पीतस्फुरद्बलयशर्करिलाश्मरम्यं[3] पीतं यदुत्तममृगं चतुरस्रभूतम् । प्रायश्च पीतकुसुमान्वितवीरुदाढ्यं तत्पार्थिवं कथितमुग्रदशेषवस्तु ॥ १५ ॥ अर्धचन्द्राकृति श्वेतं कमलाभं दृषच्चितम् । नदीनदजलाकीर्णमाप्यं तत्क्षेत्रमुच्यते ॥ १६ ॥ खदिरादिद्रुमाकीर्णं भूरिचित्रकवेणुकम् । त्रिकोणं रक्तपाषाणं क्षेत्रं तैजसमुत्तमम् ॥ १७ ॥ धूम्रस्थलं धूम्रदृपत्परीतं षट्कोणकं तूर्णमृगावकीर्णम् । शाकैस्तृणैरञ्चितरूक्षवृक्षझांकारमेतत्खलु वायवीयम् ॥ १८ ॥ नानावर्णं वर्तुलं तत्प्रशस्तं प्रायः शुभ्रं पर्वताकीर्णमुच्चैः । यच्च स्थानं पावनं देवतानां प्राह क्षेत्रं त्रीक्षणस्त्वान्तरिक्षम् ॥ १९ ॥ द्रव्यं व्याधिहरं बलातिशयकृत्स्वादु स्थिरं पार्थिवं स्यादाप्यं कटुकं कषायमखिलं शीतं च पित्तापहम् । यत्तिक्तं लवणं च दीप्यरुचिकृच्चोष्णं च तत्तैजसं वायव्यं तु हिमोष्णमम्लमबलं स्यान्नाभसं नीरसम् ॥ २० ॥

## ( ५ ) क्षेत्रदेवताः ।

ब्रह्मा विष्णुश्च रुद्रः स्यादीश्वरोऽथ सदाशिवः । इत्येताः क्रमशः पञ्च क्षेत्रभूताधिदेवताः ॥ २१ ॥ जित्वा जवादजरसैन्यमिहाऽऽजहार वीरः पुरा युधि सुधाकलशं गरुत्मान् । कीर्णैस्तदा भुवि सुधाकलशैः किलाऽऽसीद्वृक्षादिकं सकलमस्य सुधांशुरीशः ॥ २२ ॥ तत्रोत्पन्नास्तूत्तमे क्षेत्रभागे विप्रीयादौ विप्रुषो यत्र यत्र । क्षोणीजादिद्रव्यभूयं प्रपन्नास्तास्ताः संज्ञा बिभ्रते तत्र भूयः ॥ २३ ॥ एवं क्षेत्रानुगुण्येन तज्जा विप्रादिवर्णिनः । यदि वा लक्षणं वक्ष्याम्यंमोहाय मनीषिणाम् ॥ २४ ॥ किसलयकुसुमप्रकाण्डशाखादिषु विशदेषु

१ ज. 'णुरचि' । २ झ 'क्षास्तत्र । ३ ज. 'रिकाश्म' । ४ झ. ड. कठिनमु' । ५ ज. यत्र । ६ ज. 'चिमच्चो' । ७ ट. ड. 'म्यक्षोभाय ।

वदन्ति विप्रमेतान् । नरपतिमतिलोहितेषु वैश्यं कनकनिभेषु सितेतरेषु शूद्रम् ॥ २५ ॥ विप्रादिजातिसंभूतान्विप्रादिष्वेव योजयेत् । गुणाढ्यानपि वृक्षादीन्प्रातिलोम्यं न चाऽऽचरेत् ॥ २६ ॥ अपि च—विप्रो विप्राद्येषु वर्णेषु राजा राजन्यादौ वैश्यमुख्येषु वैश्यः । शूद्रः शूद्राद्येषु शस्तं गुणाढ्यं द्रव्यं नैव प्रातिलोम्येन किंचित् ॥ २७ ॥ द्रव्यं यदङ्कुरजमाहुरार्यास्तत्ते पुनः पञ्चविधं वदन्ति । वनस्पतिश्चापि स एव वानस्पत्यः क्षुपो वीरुदथौषधी च ॥ २८ ॥ ज्ञेयः सोऽत्र वनस्पतिः फलति यः पुष्पैर्विना तैः फलाद्वानस्पत्य इति स्मृतस्तनुरसौ ह्रस्वः क्षुपः कथ्यते । या वल्लत्यगमादिसंश्रयवशादेषा तु वल्ली मता शाल्यादिः पुनरोषधिः फलपरीपाकावसानान्विता ॥ २९ ॥ स्त्रीपुंनपुंसकत्वेन त्रैविध्यं स्थावरेष्वपि । शृणु वक्ष्यामि तल्लक्ष्म व्यक्तमत्र यथाक्रमम् ॥ ३० ॥ इक्षुवेणुतरुवीरुदादयः स्कन्धकाण्डफलपुष्पपल्लवैः । स्निग्धदीर्घतनुतामनोरमास्ताः स्त्रियः खलु मता विपश्चिताम् ॥ ३१ ॥ यत्र पुष्पप्रवालादि नातिदीर्घं न चाल्पकम् । स्थूलं परुषमित्येष पुमानुक्तो मनीषिभिः ॥ ३२ ॥ स्त्रीपुंसयोर्यत्र विभाति लक्ष्म द्वयोरपि स्कन्धफलादिकेषु । संदेहदं नैकतरावधारि नपुंसकं तद्विबुधा वदन्ति ॥ ३३ ॥ द्रव्यं पुमान्स्यादखिलस्य जन्तोरारोग्यदं तद्बलवर्धनं च । स्त्री दुर्बला स्वल्पगुणा गुणाढ्या स्त्रीष्वेव न क्वापि नपुंसकं स्यात् ॥ ३४ ॥

तथाच—यदि स्त्रियः स्त्रीषु कृता गुणाढ्याः क्लीबानि तु क्लीवशरीरभाजाम् । सदा च सर्वत्र पुमान्प्रयुक्तो गुणावहश्चेति च केचिदाहुः ॥ ३५ ॥ क्षुत्पिपासे च निद्रा च वृक्षादिष्वपि लक्ष्यते । मृज्जलादानतस्त्वाद्ये पर्णसंकोचतोऽन्तिमा ॥ ३६ ॥ यत्काठिन्यं सा क्षितिर्यो द्रवोऽम्भस्तेजस्तूष्मा वर्धते यत्स वातः । यद्यच्छिद्रं तन्नभः स्थावराणामित्येतेषां पञ्चभूतात्मकत्वम् ॥ ३७ ॥

—:०:—

इत्थं देशगुणस्वरूपकथनप्रक्रान्तकान्तारजक्षेत्रद्रव्यगुणान्वयक्रममिमं वर्गं पठित्वा नरः । प्राप्नोत्याशु भिषक्प्रयोगविषयप्रावीण्यपारीणतां हंकुर्वाणसुपर्वसंसदगदंकारक्रियाकौशलम् ॥ ३८ ॥ असूत सुतमीश्वरः श्रुतयज्ञा यमष्टादशप्रभेदविधवाङ्मयाम्बुनिधिपारपारीणधीः । अमुष्य नृहरीशितुः कृतिवरस्य वर्गः कृतावसावगमदादिमः सदभिधानचूडामणौ ॥ ३९ ॥

इति वैद्यपतिमूर्धन्यरत्नाभरणश्रीमदीश्वरसूरिसूनुश्रीकण्ठचरणारविन्दसेवकराजहंसश्रीकाश्मीरादिवंशाचार्यपरंपरान्वयश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनामधेये पर्यायवत्यभिधानचूडामणावनूपादिः प्रथमो वर्गः ॥ १ ॥

१ ट. 'दधल' ।

# अथ भूम्यादिर्द्वितीयो वर्गः—

## (१) क्षारमृत्तिकातद्विशिष्टदेशमरुदेशनामानि ।

क्षारा मृदूषो देशस्तु तद्वानिरिणमूषरम् । खिलमप्रहतं प्राहुर्धन्वा तु मरुरुच्यते ॥ १ ॥

## ( २ ) भूमिभेदाः ।

मरुप्रायस्तु यो देशः स चोक्तो जाङ्गलाभिधः । कृष्णमृत्कृष्णभूमिः स्यात्पाण्डुभूमिस्तु पाण्डुमृत् ॥ २ ॥ स शार्करः शर्करिलो देशो यः शर्करान्वितः । सैकतः स्यात्सिकतिलः सिकतावांश्च यो भवेत् ॥ ३ ॥ देशो जनपदो नीवृद्विषयश्चोपवर्तनम् । प्रदेशः स्थानमाख्या भूरवकाशः स्थितिः पदम् ॥ ४ ॥ नद्यम्बुजैर्भृतो धान्यैर्नदीमातृक उच्यते । वृष्ट्यम्बुजैस्तु तैरेष देशः स्याद्देवमातृकः ॥ ५ ॥ नदीवृष्टिजलोद्भूतैर्नानाधान्यैः समावृतः । देशो द्वयानुगमनात्स द्वैमातृक उच्यते ॥ ६ ॥ मुद्गादीनां क्षेत्रमुद्भूतिदं यत्तन्मौद्गीनं कौद्रवीणं तथाऽन्यत् । व्रैहेयं स्यात्किं च शालेयमेवं बुद्ध्वाऽणव्यं चाऽऽणवीनं च विद्यात् ॥७॥ अथ माष्यं माषीणं भङ्ग्यं भाङ्गीनमुम्यमौमीनम् । तिल्यं तैलीनं स्यादिति षष्टिक्यं च यव्यं च ॥ ८ ॥ शाकादेर्यत्र निष्पत्तिरेतत्स्याच्छाकशाकटम् । शाकशाकिनमित्येतत्तथा वास्तुकशाकटम् ॥ ९ ॥

## ( ३ ) कटकशृङ्गदरीगुहाः ।

मध्यमोऽस्य नितम्बः स्यात्कटकं मेखला च सा । तटेऽतटः प्रपातश्च प्रस्थे स्नुः सानुसानुनी ॥ १० ॥ शृङ्गं तु शिखरं कूटं कन्दरे कन्दरा दरी । बिलं गुहा शिलासंधिर्देवखातं च गह्वरम् ॥ ११॥

## ( ४ ) प्रत्यन्तगिर्याकरधातुलोहानि ।

प्रत्यन्तगिरयः पादा गण्डशैलाश्च्युतोपलाः । आकरः खनिरित्युक्तो धातवो गैरिकादयः ॥ १२ ॥ ग्रावा प्रस्तरपाषाणौ दृषदश्मोपलः शिला । लोहानि विविधानि स्युरश्मसारादिसंज्ञया ॥ १३ ॥

## ( ५ ) काननम् ।

काननं गहनं सत्रं कान्तारं विपिनं वनम् । अरण्यमटवी दावो दवश्च वनवाचकाः ॥ १४ ॥

## ( ६ ) उद्यानम् ।

अन्यदुद्यानमाक्रीडो यत्र क्रीडन्ति रागिणः । नृपालयेषु प्रमदवनमन्तःपुरोचितम् ॥ १५ ॥

## ( ७ ) महावनम् ।

महावनमरण्यानी महारण्यं महाटवी ।

## ( ८ ) उपवनम् ।

अथोपवनमारामः पुरप्रान्ते वनं तु यत् ॥ १६ ॥

## ( ९ ) वृक्षः ।

कुजः क्षितिरुहोऽङ्घ्रिपः शिखरिपादपौ विष्टरः कुटस्तरुरनोकहः कुरुहभूरुहद्रुद्रुमाः । अगो नगवनस्पती विटपिशाखिभूजागमा महीजधरणीरुहक्षितिजवृक्षसालाह्वयाः ॥ १७ ॥

## ( १० ) फलितवृक्षः ।

फलितः फलवानेष फलिनश्च फली तथा । फलेग्रहिरवन्ध्यो यः स्यादमोघफलोदयः ॥ १८ ॥

## ( ११ ) अवकेशी ।

अथावकेशी वन्ध्योऽयं विफलो निष्फलोऽफलः ।

## ( १२ ) मूलम् ।

उक्तौ भागात्मना भिन्नौ वानस्पत्यवनस्पती । मूलं तु नेत्रं पादः स्यादङ्घ्रिश्चरणमित्यपि ॥ १९ ॥

## ( १३ ) उद्भेदः ।

उद्भेदस्त्वङ्कुरो ज्ञेयः प्ररोहोऽङ्कूर इत्यपि ।

## ( १४ ) बुध्नः ।

अर्वाग्भागोऽस्य बुध्नः स्यान्नितम्बः स पृथुर्भवेत् ॥

## ( १५ ) आस्कन्धा ।

आस्कन्धा तु प्रकाण्डः स्यात्काण्डो दण्डश्च कथ्यते ॥ २० ॥

## (१६) स्कन्धः ।

स्कन्धः प्रमाणोऽस्य लतास्तु शाखाः स्कन्धोऽथ शाखास्तु भवन्ति शालाः ॥

## (१७) जटामज्जानौ ।

जटाः शिखास्तस्य किलावरोहाः शाखा शिफा मज्जनि सारमाहुः ॥२१॥

## (१८) निष्कुटवल्कले ।

निष्कुटं कोटरं प्रोक्तं त्वचि वल्कं तु वल्कलम् ।

## (१९) वल्लरी ।

नवपुष्पाढ्यशाखाग्रे वल्लरी मञ्जरी तथा ॥ २२ ॥

## (२०) पर्णम् ।

पर्णं पत्रं दलं बर्हं पलाशं छदनं छदः ।

## (२१) पल्लवः ।

स्यात्पल्लवः किसलयः प्रवालः पल्लवं नवम् ॥ २३ ॥

## (२२) विस्तारः ।

विस्तारो विटपः प्रोक्तः प्राग्रं तु शिखरं शिरः ।

## (२३) पर्णशिरावृन्ते ।

प्रादिः पर्णशिरा ज्ञेया वृन्तं प्रसवबन्धनम् ॥ २४ ॥

## (२४) कोरकः ।

कोरकमुकुलक्षारकजालककलिकास्तु कुड्मले कथिताः ।

## (२५) कुसुमम् ।

कुसुमं सुमनः प्रसूनप्रसवसुमं सूनफुल्लपुष्पं स्यात् ॥ २५ ॥

## (२६) मकरन्दः ।

मकरन्दो मरन्दश्च मधु पुष्परसाह्वयम् । पौष्पं रजः परागः स्यात्प्र-धूली धूलिका च सा ॥ २६ ॥

## (२७) गुच्छः ।

गुच्छो गुलुञ्छस्तबको गुच्छकः कुसुमोच्चयः ।

## ( २८ ) परिमलः ।

समं परिमलामोदगन्धसौरभ्यसौरभम् ॥ २७ ॥

## ( २९ ) विकसितनामानि ।

उज्जृम्भितमुज्जृम्भं स्मितमुन्मिषितं विनिद्रमुन्निद्रम् । उन्मीलितं विजृम्भितमुद्बुद्धोद्भिदुरभिन्नमुद्भिन्नम् ॥ २८ ॥ विकसितहसितविकस्वरविकचव्याकोशफुल्लसंफुल्लम् । स्फुटमुदितदलितदीर्णं स्फुटितोत्फुल्लप्रफुल्लमेकार्थम् ॥२९॥ संकुचितनामानि—निद्राणं मुद्रितं सुप्तं मिलितं मीलितं नतम् । निकूणितं संकुचितं सनिद्रमलसं समम् ॥ ३० ॥

## (३० ) फलादिनामानि ।

आहुस्तरूणां फलमत्र सस्यं तदाममुक्तं हि शलाटुसंज्ञम् । शुष्कं तु वानं प्रवदन्ति गुल्मस्तम्बौ प्रकाण्डै रहिते महीजे ॥ ३१ ॥

## ( ३१ ) लता ।

उपलं गुल्मिनी वीरुल्लता वल्ली प्रतानिनी । व्रतती व्रततिश्चैषा विस्तीर्णा वीरुदुच्यते ॥ ३२ ॥

## ( ३२ ) *नक्षत्रवृक्षाः ।

अथ वक्ष्यामि नक्षत्रवृक्षानागमलक्षितान् । पूज्यानायुष्प्रदांश्चैव वर्धनात्पालनादपि ॥ ३३ ॥ विषद्रुधात्रीतरुहेमदुग्धा जम्बूस्तथा खादिरकृष्णवंशाः । अश्वत्थनागौ च वटः पलाशः प्लक्षस्तथाऽम्बष्ठतरुः क्रमेण ॥ ३४ ॥ बिल्वा-

* ग्रन्थान्तरे नक्षत्रवृक्षनामानि । तद्यथा—नक्षत्रवृक्षाः क्रमशो ( १ अश्विनी ) विषमुष्टि—( २ भरणी )रथाऽऽमली । ( ३ कृत्तिका ) औदुम्बरो ( ४ रोहिणी ) जम्बुवृक्षः (५ मृगशीर्षम्) खदिर( ६ आर्द्रा )श्चागरुर्मतः ॥ १ ॥ ( ७ पुनर्वसू ) वेणुश्च ( ८ पुष्यम् ) पिप्पलः प्रोक्त—( ९ आश्लेषा )श्चम्पकश्च ( १० मघा ) वटो मतः । (११ पूर्वा) पलाशः ( १२ उत्तरा ) पीयरी ( १३ हस्तम् ) जाती ( १४ चित्रा ) बिल्वक( १५ स्वाती )श्चार्जुनः स्मृतः ॥ २ ॥ ( १६ विशाखा ) बब्बुली ( १७ अनुराधा ) नागपुष्पं च ( १८ ज्येष्ठा ) मोचा च (१९ मूलम्) रालवृक्षकः । ( २० पूर्वाषाढा ) वेत्रो ( २१ उत्तराषाढा ) निचुल( २२ श्रवणम् )श्चार्कश्च ( २३ धनिष्ठा ) शमी चैव ( २४ शततारका ) कदम्बकः ॥ ३ ॥ ( २५ पूर्वाभाद्रपदा ) आम्रोऽ( २६ उत्तराभाद्रपदा )रिष्टो ( २७ रेवती ) मोहवृक्षो ज्ञेया जन्मर्क्षतस्त्वमी । एतेषां पालनं कार्यं तच्छ्रेयस्करमुच्यते ॥ ४ ॥ हननं नाशकं प्रोक्तमेतेषां पूर्वसूरिभिः ।

१ ' पायरी ' प्लक्षवृक्षः ।

र्जुनौ चैव विकङ्कतोऽथ सकेसरौ[1] शम्बरसर्जवञ्जुलाः । सर्पान्त्रसार्काश्च शमीकदम्बास्तथाऽऽम्रनिम्बौ मधुकद्रुमः क्रमात् ॥३५॥ अमी नक्षत्रदेवत्या वृक्षाः स्युः सप्तविंशतिः । अश्विन्यादिक्रमादेषामेषा नक्षत्रपद्धतिः ॥ ३६ ॥ यस्त्वेतेषामात्मजन्मर्क्षभाजां मर्त्यः कुर्याद्द्वेषजादीन्मदान्धः । तस्याऽऽयुष्यं श्रीः कलत्रं च पुत्रो नश्यत्येषां वर्धते वर्धनाद्यैः ॥ ३७ ॥ आचार्योक्तौ स्फुटमथ बृहत्सुश्रुते नारदीये नारायण्यां क्वचिदपि तथाऽन्यत्र तन्त्रान्तरेषु । ज्ञात्वाऽपीह प्रथितभिषजां नातिदृष्टोपयोगं नैवास्माभिर्विशदितमिदं गौरवाद्ग्रन्थभीतेः ॥ ३८ ॥

## ( ३३ ) तृणवृक्षाः ।

तालाद्या जातयः सर्वाः क्रमुकः केतकी तथा । खर्जूरी नालिकेराद्यास्तृणवृक्षाः प्रकीर्तिताः ॥ ३९ ॥

## ( ३४ ) संग्रहणीयद्रव्याणि ।

सर्वाणि चाऽऽर्द्राणि नवौषधानि सुवीर्यवन्तीति वदन्ति धीराः । सर्वाणि शुष्काणि तु मध्यमानि शुष्काणि जीर्णानि च निष्फलानि ॥ ४० ॥ वास्तुककुटजगुडूचीवासाः कूष्माण्डकादि शत्रपत्री । इत्यादि तु नित्यार्द्रं गुणवच्छुष्कं यदा तदा विगुणम् ॥ ४१ ॥ विडङ्गं मधुमण्डूरा दाडिमं पिप्पली गुडः । नागवल्लीन्दुशाल्याद्याः पुराणाः स्युर्गुणोत्तमाः ॥ ४२ ॥ काठिन्यं मध्यकाठिन्यं मार्दवं चेति तु त्रिधा । द्रव्याणामिह सर्वेषां प्रकृतिः कथ्यते बुधैः ॥४३॥ द्रव्याणां सन्ति सर्वेषां पूर्वैरुक्तास्त्रयो गुणाः । रसो वीर्यं विपाकश्च ज्ञातव्यास्तेऽतियत्नतः ॥ ४४ ॥ रसस्तु मधुरादिः स्याद्वीर्यं कार्यसमर्थता । परिणामो गुणाढ्यत्वं विपाक इति संज्ञितम् ॥ ४५ ॥ शीतमुष्णं च रूक्षं च स्निग्धं तीक्ष्णं तथा मृदु । पिच्छिलं विषदं चेति वीर्यमष्टविधं स्मृतम् ॥ ४६ ॥ निष्कुटप्रमदकाननादिषु द्रव्यमेतदपि निर्गुणं भवेत् । क्वाप्यलीकवचनोपकर्णनात्काप्यसाधुवनितादिसेवनात् ॥ ४७ ॥ जातं श्मशाने वल्मीके देशे मूत्रादिदूषिते । द्रव्यं नैवोपयोगाय भिषजामुपजायते ॥ ४८ ॥ कन्दं हिमर्तौ शिशिरे च मूलं पुष्पं वसन्ते गुणदं वदन्ति । प्रवालपत्राणि निदाघकाले स्युः पश्च(क्व)जातानि शरत्प्रयोगे ॥ ४९ ॥ निम्बोदुम्बरजम्ब्वाद्या यथाकालं गुणोत्तराः । कन्दादिष्वथ सर्वेषां पृथगेव रसादयः ॥ ५० ॥ केचित्कन्दे केऽपि मूलेषु केचित्पत्रे पुष्पे केऽपि केचित्फलेषु । त्वच्येवान्ये वल्कले केचिदित्थं द्रव्यस्तोमा

---

[1] ज. 'राः शाबर'।

भिन्नभिन्नै गुणाढ्याः ॥ ५१ ॥ देशे देशे योजनद्वादशान्ते भिन्नान्याहुर्द्रव्यनामानि लोके। किंचामीषु प्राणिनां वर्णभाषा चेष्टा छाया भिन्नरूपा विभाति ॥ ५२ ॥ अनिर्दिष्टप्रयोगेषु मूलं ग्राह्यं त्वगादिषु । सामान्योक्तौ प्रयोक्तव्यं प्राहुस्तोयं तु नाभसम् ॥ ५३ ॥ चूर्णकल्ककषायाणां प्रमाणं यत्र नोदितम्। तत्र द्रव्यप्रमाणेन स्वयं बुद्ध्या प्रयोजयेत् ॥ ५४ ॥ माध्वीकं सर्वमद्यानां मधूनां माक्षिकं तथा। तैलं तु तिलसंभूतं धातवो बास्तिसंभवाः ॥ ५५ ॥ शालीनां रक्तशालिः स्यात्सूप्यानां मुद्ग एव च । मूलानां पिप्पलीमूलं फलानां मदनं फलम् ॥ ५६ ॥ त्वचा तु गन्धद्रव्याणां पत्राणां गन्धपत्रकम्। जीवन्तिशाकं शाकानां लवणानां च सैन्धवम् ॥ ५७ ॥ सामान्यपुष्पनिर्देशान्मालतीकुसुमं क्षिपेत् । इत्थमन्येऽपि बोद्धव्याः प्रयोगा योगलक्षिताः ॥ ५८ ॥ द्रव्यं वातहरं यत्तत्सकलं दीपनं परम्। कफहारि समं प्रोक्तं पित्तघ्नं मन्ददीपनम् ॥ ५९ ॥ यच्छीतवीर्यं गुरु पित्तहारि द्रव्यं नृणां वातकरं तदुक्तम्। यदुष्णवीर्यं लघु वातहारि श्लेष्मापहं पित्तकरं च तत्स्यात् ॥ ६० ॥ इति बहुविधदेशभूप्रभूमीरुहवनगुल्मलताभिधागुणानाम्। सविवरमभिधाय लक्ष्म साधारणमथ तच्च विशेषतोऽभिधास्ये ॥ ६१ ॥

इत्थं भूमीविपिनविषयक्षेत्रगोत्रादिनामस्तोमाख्यानप्रकरणगुणव्याकृतिप्रौढमेतम् । वर्गं बुद्ध्वा भिषगुपचितानर्गलात्यन्तसूक्ष्मप्रज्ञालोकप्रकटितधिया-माधिराज्येऽभिषिञ्चेत् ॥ ६२ ॥ इत्येष वैद्यकविकल्पभिधानिदानचूडामणौ मृडपरागमपारगेण। काश्मीरवंशतिलकेन कृतापवर्गे वर्गो नृसिंहकृतिना रचितो द्वितीयः ॥ ६३ ॥

इति वैद्यपतिमूर्धन्यरत्नाभरणश्रीमदीश्वरसूरिसूनुश्रीकण्ठचरणारविन्दसेवकराजहंसश्रीकाश्मीराद्यवंशाचार्यपरान्वयश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनामधेयपर्यायवत्यभिधानचूडामणौ धरण्यादिर्द्वितीयो वर्गः ॥ २ ॥

# अथ गुडूच्यादिस्तृतीयो वर्गः।

गुडूची चाथ मूर्वा च पटोलोऽरण्यजस्तथा। काकोली च द्विधा प्रोक्ता माषपर्णी तथाऽपरा ॥ १ ॥ मुद्गपर्णी च जीवन्ती त्रिविधा चाथ लिङ्गिनी। कटुकोशातकी चैव कपिकच्छुस्तथाऽपरा ॥ २ ॥ खलता कटुतुम्बी च देवदाली

१ ज. त्वचं।

तथा स्मृता । वन्ध्या कर्कोटकी प्रोक्ता कटुतुम्ब्याखुकर्णिका ॥ ३ ॥ द्विधेन्द्र-वारुणी चात्र यवतिक्तेश्वरी तथा। ज्योतिष्मती द्विधा चैव द्विधाच गिरिकर्णिका ॥ ४ ॥ मोरटश्चाथ चेदिन्दीवरी बस्ताम्रिका च सा । सोमवल्ली तथा वत्सादनी गोपालकर्कटी ॥ ५ ॥ काकतुण्डी द्विधा चाथ गुञ्जा द्विर्वृद्धदारु च । कैवर्ती ताम्रवल्ली च काण्डीरी चाथ जन्तुका ॥ ६ ॥ अम्लपर्णी तथा शङ्खपुष्पी चाऽऽवर्तकी तथा । कर्णस्फोटा तथा कट्वी लता चैवामृतस्रवा ॥ ७ ॥ पुत्रदा च पलाशी च विज्ञेयाश्च नवाभिधाः । सुमतिभिरित्थमनूक्ता बोद्धव्या वीरुधः क्रमादेताः । अस्मिन्वीरुद्वर्गे नाम्ना च गुणैश्च कीर्त्यन्ते ॥ ८ ॥ आपानीयात्परिगणनयैवाप्रसिद्धाभिधानां नाम्नामुक्ता परिमितिकथाऽप्यत्र सर्वौषधीनाम् । साऽपि क्वापि स्फुटमभिधया क्वापि च प्रौढभङ्ग्या प्रोक्ता नोक्ता प्रथितविषये साऽपि नष्टाङ्कवाक्ये ॥ ९ ॥ तस्मादिह न यत्रोक्ता नाम्नामङ्कादिनिर्मितिः । तत्र तत्राष्टसंख्यैव ज्ञेया सर्वत्र सूरिभिः ॥ १० ॥ यद्यपि क्वापि नष्टाङ्कसंख्यानियतिरीक्ष्यते । तत्र स्फुटत्वबुद्ध्यैव नोक्ता संख्येति बुध्यताम् ॥ ११ ॥ द्रव्याणां गणशो नियोगवशतो वीर्यं परे प्रोचिरे प्राचीनैर्न च तद्वशेन निगमेषूक्तश्चिकित्साक्रमः । तस्मान्नैगमयोगसंग्रहविदां संवादवाग्भिस्तथा नैवास्माभिरभाणि किंतु तदिह प्रत्येकशः कथ्यते ॥ १२ ॥

## ( १ ) हेमा ।

हेमा हेमवती सौम्या तृणग्रन्थिर्हिमाश्रया । स्वर्णपर्णी सुजीवन्ती स्वर्णजीवा सुवर्णिका ॥ १३ ॥ हेमपुष्पी स्वर्णलता स्वर्णजीवन्तिका च सा । हेमवल्ली हेमलता नामान्यस्याश्चतुर्दश ॥ १४ ॥

गुणाः—स्वर्णजीवन्तिका वृष्या चक्षुष्या मधुरा तथा । शिशिरा वातपित्तासृग्दाहजिद्बलवर्धिनी ॥ १५ ॥

## ( २ ) लिङ्गिनी ।

लिङ्गिनी बहुपत्री स्यादीश्वरी शिववल्लिका । स्वयंभूर्लिङ्गसंभूता लैङ्गी चित्रफला मता ॥ १६ ॥ चण्डाली लिङ्गजा देवी चण्डाऽयस्तम्भिनी तथा । शिवजा शिववल्ली च विज्ञेया षोडशाह्वया ॥ १७ ॥

गुणाः—लिङ्गिनी कटुरुष्णा च दुर्गन्धा च रसायनी । सर्वसिद्धिकरी दिव्या वश्या रसनियामिनी ॥ १८ ॥

---

१ ज. °मनुक्ता ।

## ( ३ ) खवल्ली ।

खवल्ल्याकाशवल्ली स्याद्दुस्पर्शा व्योमवल्लिका । आकाशनामपूर्वा सा वल्ली-पर्यायगा स्मृता ॥ १९ ॥

गुणाः—आकाशवल्ली कटुका मधुरा पित्तनाशिनी । वृष्या रसायनी बल्या दिव्यौषधिपरा स्मृता ॥ २० ॥

## ( ४ ) आखुकर्णी ।

स्यादाखुकर्णी कृषिका द्रवन्ती चित्रा सुकर्ण्युन्दुरुकर्णिका च । न्यग्रोधिका मूषकनामकर्णी स्याद्वृश्चिकर्णी बहुकर्णिका च ॥ २१ ॥ माता भूमिचरी चण्डा शंबरी बहुपादिका । प्रत्यक्श्रेणी वृषा चैव पुत्रश्रेण्यद्रिभूह्वया ॥ २२ ॥

गुणाः—आखुकर्णी कटूष्णा च कफपित्तहरा सदा । आनाहज्वरशूलार्ति-नाशिनी पाचनी परा ॥ २३ ॥

## ( ५ ) रुद्रजटा ।

रौद्री जटा रुद्रजटा च रुद्रा सौम्या सुगन्धा सुवहा घना च । स्यादीश्वरी रुद्रलता सुपत्रा सुगन्धपत्रा सुरभिः शिवाह्वा ॥ २४ ॥ पत्रवल्ली जटावल्ली रुद्राणी नेत्रपुष्करा । महाजटा जटारुद्रा नाम्नां विंशतिरीरिता ॥ २५ ॥

गुणाः—जटा कटुरसा श्वासकासहृद्रोगनाशिनी । भूतविद्रावणी चैव रक्षसां च निबर्हिणी ॥ २६ ॥

## ( ६ ) इन्दीवरी ।

इन्दीवरी युग्मफला दीर्घवृत्तो[1]तमारणी । पुष्पमञ्जरिका द्रोणी करम्भा [2]नलिका च सा ॥ २७ ॥

गुणाः—इन्दीवरी कटुः शीता पित्तश्लेष्मापहारिका । चक्षुष्या कासदोषघ्नी व्रणकृमिहरा परा ॥ २८ ॥

## ( ७ ) सोमवल्ली ।

सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता । सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया ॥ २९ ॥ सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यका ।

गुणाः—सोमवल्ली कटुः शीता मधुरा पित्तदाहनुत् । तृष्णाविशोषशमनी पाचनी यज्ञसाधनी ॥ ३० ॥

---

१ ट. °सोऽत्र वारुणी । २ ज. नालिका ।

## ( ८ ) सौम्या ।

सौम्या महिषवल्ली च प्रतिसोमाऽम्लवल्लिका । अपत्रवल्लिका प्रोक्ता काण्ड-शाखा षडाह्वया ॥ ३१ ॥

गुणाः—रसवीर्यविपाके च सोमवल्लीसमा स्मृता ।

## ( ९ ) वत्सादनी ।

वत्सादनी सोमवल्ली विक्रान्ता मेचकाभिधा । पातालगरुडी तार्क्ष्यी सौपर्णी गारुडी तथा ॥ ३२ ॥ वासनी दीर्घकाण्डा च दृढकाण्डा महाबला । दीर्घ-वल्ली दृढलता नामान्यस्याश्चतुर्दश ॥ ३३ ॥

गुणाः—वत्सादनी तु मधुरा पित्तदाहास्रदोषनुत् । वृष्या संतर्पणी रुच्या विषदोषविनाशिनी ॥ ३४ ॥

## ( १० ) *कैवर्तिका ।

कैवर्तिका सुरङ्गा च लतावल्ली द्रुमारुहा । रिङ्गिणी[१] वस्त्ररङ्गा च सुभगेत्यष्ट-धाभिधा ॥ ३५ ॥

गुणाः—कैवर्तिका लघुर्वृष्या कषाया कफनाशनी । कासश्वासहरा चैव सैव मन्दाग्निदोषनुत् ॥ ३६ ॥

## ( ११ ) †ताली ।

ताली तमाली ताम्रा च ताम्रवल्ली तमालिका । सूक्ष्मवल्ली सुलोमा च शोधनी तालिका नवा ॥ ३७ ॥

गुणाः—ताम्रवल्ली कषाया स्यात्कफदोषविनाशिनी । मुखकण्ठोत्थदोषघ्नी श्लेष्मशुद्धिकरा परा ॥ ३८ ॥

## ( १२ ) अत्यम्लपर्णी ।

अत्यम्लपर्णी तीक्ष्णा च कण्डुला वल्लिसूरणा । वल्ली करवडादिश्च वन-स्थाऽरण्यवासिनी ॥ ३९ ॥

गुणाः—अत्यम्लपर्णी तीक्ष्णाम्ला प्लीहशूलविनाशनी । वातहृद्दीपनी रुच्या गुल्मश्लेष्मामयापहा ॥ ४० ॥

---

* कैवर्तिका—माळवे प्रसिद्धा । † ताली चित्रकूटदेशे प्रसिद्धा ।

---

१ ट. रिङ्गणी ।

## ( १३ ) कर्णस्फोटा ।

कर्णस्फोटा श्रुतिस्फोटा त्रिपुटा कृष्णतण्डुला । चित्रपर्णी स्फोटलता चन्द्रिका चार्धचन्द्रिका ॥ ४१ ॥

गुणाः—कर्णस्फोटा कटुस्तिक्ता हिमा सर्वविषापहा । ग्रहभूतादिदोषघ्नी सर्वव्याधिविनाशनी ॥ ४२ ॥

## ( १४ ) कट्वी ।

कट्वी कटुकवल्ली च सुकाष्ठा काष्ठवल्लिका । सुवल्ली च महावल्ली पशुमोहिनिका कटुः ॥ ४३ ॥

गुणाः—कट्वी तु कटुका शीता कफश्वासार्तिनाशनी। नानाज्वरहरा रुच्या राजयक्ष्मनिवारिणी ॥ ४४ ॥

## ( १५ ) *अमृतस्रवा ।

ज्ञेयाऽमृतस्रवा वृक्षारुहाख्या तोयवल्लिका । घनवल्ली सितलता नामभिः शरसंमिता ॥ ४५ ॥

गुणाः—उक्ताऽमृतस्रवा पथ्या ईषत्तिक्ता रसायनी । विषघ्नी व्रणकुष्ठामकामलाः श्वयथुं जयेत् ॥ ४६ ॥

## ( १६ ) †पुत्रदात्री ।

पुत्रदात्री तु वातारिर्भ्रमरी श्वेतपुष्पिका । वृत्तपत्राऽतिगन्धालुर्वैशीजाता[१] सुवल्लरी ॥ ४८ ॥

गुणाः—पुत्रदात्री तु वातघ्नी कटुरुष्णा कफापहा । सुरभिः सर्वदा पथ्या वन्ध्यादोषविनाशनी ॥ ४७ ॥

## ( १७ ) +पलाशी ।

पलाशी पत्रवल्ली च पर्णवल्ली पलाशिका । सुरपर्णी सुपर्णी च दीर्घवल्ली विषादनी ॥ ४९ ॥ अम्लपत्री दीर्घपत्री रसाम्ला चाम्लिका च सा । अम्लातकी काञ्जिका च स्याच्चतुर्दशधाभिधा ॥ ५० ॥

गुणाः—पलाशी मधुराम्ला च मुखदोषविनाशनी । अरोचकहरा पथ्या पित्तकोपकरी च सा ॥ ५१ ॥

—:०:—

इति बहुविधवल्लीस्तोमनामाभिधानप्रगुणगुणयथावद्वर्णनापूर्णमेतम् । सुल-

---

* इयममृतस्रवा चित्रकूटप्रदेशे प्रसिद्धा । † मालवे प्रसिद्धेयम् । + नागरदेशे प्रसिद्धा ।

---

१ च. ट. ड. 'तुर्वशी' ।

लितपदसर्गे वर्गमाम्नायवैद्यः सदसि बहुविलासं व्यासवद्व्यातनोतु ॥ ५२ ॥ दीप्ता दीधितयस्तथाऽन्धतमसध्वंसाय भानोरिव व्यातन्वन्ति निजं रुजां विजयते वीर्यं निरुध्यैव याः। तासामेष विलासभूमिरसमो वर्गः श्रुतो वीरुधां वीरुद्वर्ग इति प्रतीतमहिमा नैसर्गिकैर्यो गुणैः ॥ ५३ ॥ प्राप्ता यस्य परिग्रहं त्रिविधसद्वीरैकचूडामणेस्तीव्राण्योषधयः स्रवन्ति सहसा वीर्याण्यजर्यादिव । तस्यायं नृहरेः कृतौ स्थितिमगाद्वर्गो गुडूच्यादिकस्तार्तीयीकतयाऽभिधानरचनाचूडामणौ कीर्तितः ॥ ५४ ॥

इति वैद्यकमूर्धन्यरत्नालंकरणश्रीमदीश्वरसूरिसूनुश्रीकण्ठचरणारविन्दसेवकराजहंसश्रीकाश्मीराद्यवंशाचार्यपरंपरान्वयश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनामधेयपर्यायवत्यभिधानचूडामणौ गुडूच्यादिस्तृतीयो वर्गः ॥ ३ ॥

---

## अथ शताह्वादिश्चतुर्थो वर्गः—

---

शताह्वा चैव मिश्रेया शालिपर्णी समष्ठिलः[1] । बृहती कण्टकारी[2] च द्विधा स्यात्पृश्निपर्णिका ॥ १ ॥ द्विधा गोक्षुरकश्चैव यासो वासा सितावरी । धन्वयासद्वयं चाग्निदमनी[3] बाकुची तथा ॥ २ ॥ शणपुष्पी द्विधा चैव त्रिविधा शरपुङ्खिका । पाठाऽम्बष्ठा द्विधा नीली द्विधा गोजिह्विका स्मृता ॥ ३ ॥ अपामार्गद्वयं पश्च बला राष्ट्री महादिका । हयगन्धा च हपुषा शतावर्यौ द्विधा मते ॥ ४ ॥ एलावालुकतेरण्यौ कलिकारी जयन्तिका । काकमाची सुतश्रेणी विजया मार्कवस्त्रिधा ॥ ५ ॥ काकजङ्घा त्रिधा चञ्चुस्त्रिविधः सिन्दुवारकः । भेण्डा स्यात्पुत्रदा चैव तक्रा स्वर्णुलिकाह्वया ॥ ६ ॥ खसखसः सिगृडी चैव ज्ञेयो वन्यकुसुम्भकः । द्व्याहुल्यः कासमर्दश्च रविपत्रो द्विधाऽम्बिका ॥ ७ ॥ अजगन्धाऽऽदित्यभक्ता विषमुष्टिर्द्विधाऽपरा । कालाञ्जनी द्विकार्पासी द्विविधः कोकिलाक्षकः ॥ ८ ॥ सातला कामवृद्धिश्च चक्रमर्दोऽथ झिंझिरा[4] । स्याद्घ्राणादिक्रमेणैव क्षुपाः प्रोक्ता यथाक्रमात् ॥ ९ ॥

### ( १ ) समष्ठिलः ।

समष्ठिलश्च भण्डीरो[5] नद्याम्रश्चाऽऽम्रगन्धकृत् । काकाम्रः[6] कण्टकिफलो[7]ऽप्युपदंशो मुनिह्वयः ॥ १ ॥

---

१ ट. ड. °लः । त्रिबृहति क° । २ ट. ड. °री द्वि° । ३ ज. °मिधम° । ४ ज. झ° डिंडिरा ।
५ ज. गण्डीरो । ६ ज. कोशकाम्रः । ७ ज. °म्रः कोशफ° ।

गुणाः—नद्याम्रः कटुरुष्णश्च रुच्यो मुखविशोधनः। कफवातप्रशमनो दाहकृद्दीपनः परः ॥ २ ॥

## ( २ ) अग्निदमनी ।

अथाग्निदमनी[1] वह्निदमनी[2] बहुकण्टका । वल्लिकण्टारिका गुच्छफला क्षुद्रफला च सा ॥ ३ ॥ विज्ञेया क्षुद्रदुस्पर्शा क्षुद्रकण्टारिका तथा । मर्त्येन्द्रमाता दमनी स्यादित्येषा दशाह्वया ॥ ४ ॥

गुणाः—कटूष्णा चाग्निदमनी[3] रूक्षा वातकफापहा। रुचिकृद्दीपनी हृद्या गुल्मप्लीहापहा[4] भवेत् ॥ ५ ॥

## ( ३ ) शरपुङ्खा ।

शरपुङ्खा काण्डपुङ्खा बाणपुङ्खेषुपुङ्खिका । ज्ञेया सायकपुङ्खा च खगपुङ्खा च सप्तधा ॥ ६ ॥ शराभिधा च पुङ्खा स्याच्छ्वेताढ्या सितसायका । सितपुङ्खा श्वेतपुङ्खा शुभ्रपुङ्खा च पञ्चधा ॥ ७ ॥

गुणाः—शरपुङ्खा कटूष्णा च कृमिवातरुजापहा। श्वेता त्वेषा गुणाढ्या स्यात्प्रशस्ता च रसायने ॥ ८ ॥

## ( ४ ) कण्टपुङ्खा ।

अन्या तु कण्टपुङ्खा स्यात्कण्टालुः कण्टपुङ्खिका ।

गुणाः—कण्टपुङ्खा कटूष्णा च कृमिशूलविनाशनी ॥ ९ ॥

## ( ५ ) शणः ।

शणस्तु माल्यपुष्पः स्याद्वमनः कटुतिक्तकः । निशावनो[5] दीर्घशाखस्त्वक्सारो दीर्घपल्लवः ॥ १० ॥

गुणाः—शणस्त्वाम्लः कषायश्च मलगर्भास्रपातनः[6] । वान्तिकृद्वातकफनुज्ज्ञेयस्तीव्राङ्गमर्दजित् ॥ ११ ॥

## ( ६ ) महाराष्ट्री ।

महाराष्ट्री तु संप्रोक्ता शारदी तोयपिप्पली[7] । मत्स्यादनी मत्स्यगन्धा लाङ्गली शकुलादनी ॥ १२ ॥ अग्निज्वाला चित्रपर्णी प्राणदा जलपिप्पली । तृणशीता बहुशिखा स्यादित्येतास्त्रयोदश ॥ १३ ॥

---

१ ज. 'ग्निधम' । २ ज. 'ह्निधम' । ३ ज. 'ग्निधम' । ४ ज. 'प्लीहमलाञ्जयेत्' । ५ ज. निशाचरो । ट. निशादनो । ६ ज. 'र्भामपा' । ७ ज. तोयवल्लरी ।

गुणाः—महाराष्ट्री कटुस्तीक्ष्णा कषाया मुखशोधनी[1] । व्रणकीटादिदोषघ्नी रसदोषनिबर्हणी ॥ १४ ॥

## ( ७ ) तैरिणी ।

तैरिणी तेरणस्तेरः कुनीली नामतश्चतुः ।

गुणाः—तरेणः शिशिरस्तिक्तो व्रणघ्नोऽरुणरक्तदः ॥ १५ ॥

## ( ८ ) सुतश्रेणी ।

सुतश्रेणी द्रवन्ती च न्यग्रोधी मूषिकाह्वया । चित्रा मूषकमारी च मत्स्यश्रेणी च शम्बरी ॥ १६ ॥

गुणाः—सुतश्रेणी च चक्षुष्या कटुराखुविषापहा । व्रणदोषहरा चैव नेत्रामयनिकृन्तनी ॥ १७ ॥

## ( ९ ) चञ्चुः ।

चुञ्चुश्च विजला[2] चञ्चुः कलभी वीरपत्रिका[3][4] । चञ्चुरश्च[5]ञ्चुपत्रश्च सुशाकः क्षेत्रसंभवः ॥ १८ ॥

गुणाः—चञ्चुस्तु मधुरा तीक्ष्णा कषाया मलशोषणी । गुल्मोदरविबन्धार्शोग्रहणीरोगहारिणी ॥ १९ ॥

## ( १० ) बृहच्चञ्चुः ।

बृहच्चञ्चु[6]र्विषारिः स्यान्महाचञ्चुः सुचञ्चुका । स्थूलचञ्चुर्दीर्घपत्री दिव्यगन्धा च सप्तधा ॥ २० ॥

गुणाः—महाचञ्चुः कटूष्णा च कषाया मल[7]रोधनी । गुल्मशूलोदरार्शोर्तिविषघ्नी च रसायनी ॥ २१ ॥

## ( ११ ) क्षुद्रचञ्चुः ।

क्षुद्रचञ्चुः सुचञ्चुः स्याचञ्चुः शुनकचञ्चुका । त्वक्सारभेदिनी क्षुद्रा कटुका कटुपत्रिका ॥ २२ ॥

गुणाः—क्षुद्रचञ्चुस्तु मधुरा कटूष्णा च कषायिका । दीपनी शूलगुल्मार्शःशमनी च विबन्धकृत् ॥ २३ ॥ चञ्चुबीजगुणाः—चञ्चुबीजं कटूष्णं च गुल्मशूलोदरार्तिजित् । विषत्वग्दोषकण्डूलीकण्डूकुष्ठरुजापहम् ॥ २४ ॥

---

१ ज. मलशोधनी । २ ङ. विजुला । ३ ज. चिरपत्रिका । ४ झ. °का चुञ्चु° । ५ झ. °रश्चञ्चु° । ६ झ. °हच्चञ्चु° । ७ ज. °लशोध° ।

## (१२) भेण्डा ।

भेण्डा[1] भिण्डातिका[2] भिण्डो भिण्डकः क्षेत्रसंभवः । चतुष्पदश्चतुष्पुण्ड्रः सुशाकश्चाम्लपत्रकः ॥ २५ ॥ करपर्णी वृत्तबीजो भवेदेकादशाह्वयः ।

गुणाः—भेण्डा त्वम्लरसा सोष्णा ग्राहिका रुचिकारिका ॥ २६ ॥

## (१३) पुत्रदा ।

पुत्रदा गर्भदात्री च प्रजादाऽपत्यदा च सा । सृष्टिप्रदा प्राणिमाता तापसद्रुमसंनिभा ॥ २७ ॥

गुणाः—पुत्रदा मधुरा शीता नारीपुष्पादिदोषहा । पित्तदाहभ्रमहरा गर्भसंभूतिदायिका ॥ २८ ॥

## (१४) तक्राह्वा ।

तक्राह्वा तक्रभक्षा तु तक्रपर्यायवाचिका । पञ्चाङ्गुली सिताभा स्यादेषा पञ्चाभिधा स्मृता ॥ २९ ॥

गुणाः—तक्रा कटुः कृमिघ्नी स्याद्व्रणनिर्मूलिनी च सा ।

## (१५) स्वर्णुली ।

स्वर्णुली हेमपुष्पी स्यात्स्वर्णपुष्पध्वजा तथा ।

गुणाः—स्वर्णुली कटुका शीता कषाया च व्रणापहा ॥ ३० ॥

## (१६) सिगृडी ।

सिगृडी मतिदा प्रोक्ता बल्या पङ्गुत्वहारिणी । दृषत्पत्री च वातघ्नी गुच्छपुष्पी च सप्तधा ॥ ३१ ॥

गुणाः—सिगृडी कटुरुष्णा च वातहृत्पृष्ठशूलहा । युक्त्या रसायने योग्या देहदार्ढ्यकरी च सा ॥ ३२ ॥

## (१७) आहुल्यम् ।

आहुल्यं हैलुराख्यं च गरं तरवटं तथा । शिम्बीफलं सुपुष्पं स्यादर्बुरं दन्तकाष्ठकम् ॥ ३३ ॥ हेमपुष्पं तथा पीतपुष्पं काञ्चनपुष्पकम् । नृपमङ्गल्यकं चैव शरत्पुष्पं त्रिरेकधा ॥ ३४ ॥

गुणाः—आहुल्यं तिक्तशीतं स्याच्चक्षुष्यं पित्तदोषनुत् । मुखरुकुष्ठकण्डूतिजन्तुशूलव्रणापहम् ॥ ३५ ॥

---

१ ज. ट. भिण्डा । २ ज. ट. भिण्डीतको । ३ ज. ट. हलरा° । ४ ज. ट. ड. °तदाहनु° ।

## ( १८ ) भूम्याहुल्यम् ।

भुम्याहुल्यं कुष्ठकेतुर्मार्कण्डीयं महौषधम् ।
गुणाः—भूम्याहुल्यं तिक्तरसं ज्वरकुष्ठामसिध्मनुत् ॥ ३६ ॥

## ( १९ ) श्वेताम्ली ।

श्वेताम्ली त्वम्बिका प्रोक्ता पिष्टौण्डिः पिण्डिका च सा ।
गुणाः—श्वेताम्ली मधुरा वृष्या पित्तघ्नी बलदायिनी ॥ ३७ ॥

## ( २० ) नीलाम्ली ।

नीलाम्ली नीलपिष्टौण्डी शामाम्ली दीर्घशाखिका ।
गुणाः—नीलाम्ली मधुरा रुच्या कफवातहरा परा ॥ ३८ ॥

## ( २१ ) विषमुष्टिः ।

विषमुष्टिः केशमुष्टिः सुमुष्टिरणुमुष्टिकः । क्षुपदोडिसमायुक्तो मुष्टिः पञ्चाभिधः स्मृतः ॥ ३८ ॥

गुणाः—विषमुष्टिः कटुस्तिक्तो दीपनः कफवातहृत् । कण्ठामयहरो रुच्यो रक्तपित्तार्तिदार्हनुत् ॥ ४० ॥

## ( २२ ) अन्या दोडी ।

अन्या दोडी तु जीवन्ती शाकश्रेष्ठा सुखालुका । बहुपर्णी दीर्घपत्रा सूक्ष्मपत्रा च जीवनी ॥ ४१ ॥

गुणाः—दोडी तु कटुतिक्तोष्णा दीपनी कफवातजित् । कण्ठामयहरा रुच्या रक्तपित्तार्तिदाहनुत् ॥ ४२ ॥

## ( २३ ) कालाञ्जनी ।

कालाञ्जनी चाञ्जनी च रेचनी चासिताञ्जनी । नीलाञ्जनी च कृष्णाभा काली कृष्णाञ्जनी च सा ॥ ४३ ॥

गुणाः—कालाञ्जनी कटूष्णा च मलामकृमिशोधनी । अपानावर्तशमनी जठरामयहारिणी ॥ ४४ ॥

## ( २४ ) कार्पासी ।

कर्पासी सारिणी चैव चव्या स्थूला पिचुस्तथा । बदरी बादरश्चैव गुणसूस्तुण्डिकेरिका ॥ ४५ ॥ मरुद्भवा समुद्रान्ता ज्ञेया एकादशाभिधाः ।

---

१ ज. ट. तिक्तकटु । २ ज. पिष्टौडिः । ट. पिष्टोण्डिः । ३ ज. ट. नीलपिष्टौडिः । ४ झ. °हकृत् । ५ ज. ट. सुवालु° । ६ ज. ट. ड. बहुवल्ली । ७ झ. °ष्णा स्यादम्लाऽऽम° ।

गुणाः—कार्पासी मधुरा शीता स्तन्या पित्तकफापहा ॥ ४६ ॥ तृष्णादाहश्रमभ्रान्तिमूर्छाहृद्बलकारिणी।

## ( २५ ) अरण्यकार्पासी।

वनजाऽरण्यकार्पासी भारद्वाजी वनोद्भवा।
गुणाः—भारद्वाजी हिमा रुच्या व्रणशस्त्रक्षतापहा ॥ ४७ ॥

## ( २६ ) कोकिलाक्षः।

कोकिलाक्षः शृगाली च शृङ्खलारणकस्तथा। शृगालघण्टी वज्रास्थि शृङ्खली वज्रकण्टकः ॥ ४८ ॥ इक्षुरः क्षुरको वज्रः शृङ्खलिका पिकेक्षणः। पिच्छिला चेक्षुगन्धा च ज्ञेया भुवनसंमिता ॥ ४९ ॥
गुणाः—कोकिलाक्षस्तु मधुरः शीतः पित्तातिसारनुत्। वृष्यः कफहरो बल्यो रुच्यः संतर्पणः परः ॥ ५० ॥

## ( २७ ) कामवृद्धिः।

स्यात्कामवृद्धिः स्मरवृद्धिसंज्ञो मनोजवृद्धिर्मदनायुधश्च। कन्दर्पजीवश्च जितेन्द्रियाह्वः कामोपजीवोऽपि च सप्तसंज्ञः ॥ ५१ ॥
गुणाः—कामवृद्धेस्तु बीजं स्यान्मधुरं बलवर्धनम्। कामवृद्धिकरं रुच्यं बहुलेन्द्रियवृद्धिदम् ॥ ५२ ॥

## ( २८ ) झिञ्झिरीटा।

झिञ्झिरीटा कण्टफली पीतपुष्पाऽपि जिञ्झिरा। हुंडरोमाश्रयफला[1] वृत्ता चैव पडाह्वया ॥ ५३ ॥
गुणाः—झिञ्झिरीटा कटुः शीता कषाया चातिसारजित्। वृष्या संतर्पणी बल्या महिषी[2]वृक्ष[3]वर्धिनी ॥ ५४ ॥

---

इत्थं पृथुक्षुपकदम्बकनामकाण्डनिर्वर्णनागुणनिरूपणपूर्वमेतम्। वर्गं बहुस्फुटमधीत्य दधीत सद्यः सौवर्गवैद्यकविचारसुचातुरीं सः ॥ ५५ ॥ येन स्वेन नृणां क्षणेन महता वीर्येण सूर्योपमा व्यत्यस्याङ्गविकारमुद्धततया दूरं क्षिपन्त्यामयान्। स्वस्मिन्नाम्न्यपि संस्तवादिवशतस्तेषां विकारोदयव्यत्यासं दधतां नितान्तगहनो वर्गः क्षुपाणामयम् ॥ ५६ ॥ संतापं विदुषां प्रसह्य समितिस्फीतं प्रतापं द्विषां यस्मिन्विस्मयतेऽवनं च निधनं दत्त्वाऽधुना

---

१ ज. हुण्डरो°। २ ट. ड. °हिमप्रक्ष°। ३ ज. °षीप्रक्ष°।

तेजसा । धुन्वन्त्यौषधयः स्वयं किल गदान्येनार्पिता स्पर्धया तुर्यस्तस्य कृतौ स्थितो नरहरेर्वर्गः शताह्वादिकः ॥ ९७ ॥

इति वैद्यकमुकुटरत्नालंकरणश्रीमदीश्वरसूनुश्रीकण्ठचरणारविन्दसेवकराजहंसश्री-
काश्मीराद्यवंशाचार्यपरंपरान्ववायश्रीनरहरिपण्डितविरचिते निघण्टुराजापर-
पर्यायनामधेयवत्यभिधानचूडामणौ शताह्वादिश्चतुर्थो वर्गः ॥ ४ ॥

---

## अथ पर्पटादिः पञ्चमो वर्गः ।

---

पर्पटो जीवकश्चैवर्षभकः श्रावणी द्विधा । मेदाद्वयमृद्धिवृद्धी धूम्रपत्रा प्रसारिणी ॥ १ ॥ चतुष्पाषाणभेदः स्यात्कन्या बर्हिशिखा तथा । क्षीरिणीद्वितयं चैव त्रायमाणा रुदन्तिका ॥ २ ॥ ब्राह्मी द्विधा च वन्दाकः कुलत्था तण्डुलीयकः । चिविल्ली नागशुण्डी च कुटुम्बी स्थलपद्मिनी ॥ ३ ॥ जम्बूश्च नागदन्ती च विष्णुक्रान्ता कुणञ्जरः । भूम्यामली च गोरक्षी गोलोमी दुग्धफेनिका ॥ ४ ॥ क्षुद्राम्लिका च लज्जाह्वौ हंसपादी च कोथरा । पुनर्नवात्रयं प्रोक्तं वसुको द्विविधः स्मृतः ॥ ५ ॥ सर्पिणी चालिमत्स्याक्षी गुण्डालाऽवनिपाटली । स्यात्पाण्डुरफली श्वेता ब्रह्मदण्डी द्रवन्तिका ॥ ६ ॥ द्रोणपुष्पीद्वयं चैव झण्डूर्गोरक्षदुग्धिका । नवबाणमिताः क्षुद्रक्षुपाः प्रोक्ता यथाक्रमात् ॥ ७ ॥

### ( १ ) धूम्रपत्रा ।

धूम्रपत्रा तु धूम्राह्वा सुलभा तु स्वयंभुवा । गृध्रपत्रा च गृध्राणी कृमिघ्नी स्त्रीमलापहा ॥ ८ ॥

गुणाः—धूम्रपत्रा रसे तिक्ता शोफघ्नी कृमिनाशिनी । उष्णा कासहरा चैव रुच्या दीपनकारिणी ॥ ९ ॥

### ( २ ) गृहकन्या ।

गृहकन्या कुमारी च कन्यका दीर्घपत्रिका । स्थलेरुहा मृदुः कन्या बहुपत्राऽमराजरा ॥ १० ॥ कण्टकप्रावृता वीरा भृङ्गेष्टा विपुलस्रवा । ब्रह्मघ्नी तरुणी रामा कपिला चाम्बुधिस्रवा ॥ ११ ॥ सुकण्टका स्थूलदलेत्येकोना विंशतिर्मता ।

---

१ अ. कासरा ।

गुणाः—गृहकन्या हिमा तिक्ता मदगन्धिः कफापहा । पित्तकासविषश्वासकुष्ठघ्नी च रसायनी ॥ १२ ॥

## ( ३ ) बर्हिचूडा ।

बर्हिचूडा तु शिखिनी शिखालुः सुशिखा शिखा । शिखावला केकिशिखा मयूराद्यशिखाभिधा ॥ १३ ॥

गुणाः—बर्हिचूडा रसे स्वादुर्मूत्रकृच्छ्रविनाशनी । बालग्रहादिदोषघ्नी वश्यकर्मणि शस्यते ॥ १४ ॥

## ( ४ ) रुदन्ती ।

स्याद्रुदन्ती स्रवत्तोया संजीवन्यमृतस्रवा । रोमाञ्चिका महामांसी चणपत्री सुधास्रवा ॥ १५ ॥

गुणाः—रुदन्ती कटुतिक्तोष्णा क्षयक्रिमिविनाशिनी । रक्तपित्तकफश्वासमेहहारिरसायनी ॥ १६ ॥ चणपत्रसमं पत्रं क्षुपं चैव तथाऽम्लकम् । शिशिरे जलबिन्दूनां स्रवन्तीति रुदन्तिका ॥ १७ ॥

## ( ५ ) कुलत्था ।

कुलत्था दृक्प्रसादा च ज्ञेयाऽरण्यकुलत्थिका । कुलाली लोचनहिता चक्षुष्या कुम्भकारिका ॥ १८ ॥

गुणाः—कुलत्थिका कटुस्तिक्ता स्यादर्शःशूलनाशनी । विबन्धाध्मानशमनी चक्षुष्या व्रणरोपणी ॥ १९ ॥

## ( ६ ) हस्तिशुण्डी ।

हस्तिशुण्डी महाशुण्डी शुण्डी धूसरपत्रिका ।

गुणाः—हस्तिशुण्डी कटूष्णा स्यात्संनिपातज्वरापहा ॥ २० ॥

## ( ७ ) कुटुम्बिनी ।

कुटुम्बिनी पयस्या च क्षीरिणी जलकामुका । वज्रशल्या दुराधर्षा क्रूरकर्मा झिरिण्टिका ॥ २१ ॥ शीता प्रहरजाया च शीतला च जलेरुहा । विख्याता किल विद्वद्भिरेषा द्वादशनामभिः ॥ २२ ॥

गुणाः—कुटुम्बिनी तु मधुरा ग्राहिणी कफपित्तनुत् । व्रणास्रदोषकण्डूतिनाशनी सा रसायनी ॥ २३ ॥

---

१ ज. ट. 'ष्णा कषाया क्रमिना' । २ झ. वक्रश' । ३ ज. ट. प्रहरकुटुम्बी ।

## ( ८ ) जम्बूः ।

जम्बूर्जाम्बवती वृत्ता वृत्तपुष्पा च जाम्बवी । मदघ्नी नागदमनी दुर्धर्षा दुःसहा नव ॥ २४ ॥

गुणाः—ज्ञेया जम्बूस्त्रिदोषघ्नी तीक्ष्णोष्णा कटुतिक्तका । उदराध्मानदोषघ्नी कोष्ठशोधनकारिणी ॥ २५ ॥

## ( ९ ) नागदन्ती ।

नागदन्ती श्वेतघण्टा मधुपुष्पा विशोधनी । नागस्फोता विशालाक्षी नागच्छत्रा विचक्षणा ॥ २६ ॥ सर्पपुष्पी शुक्लपुष्पी स्वादुका शीतदन्तिका[1] । सितपुष्पी सर्पदन्ती नागिनी बाणभूमिता ॥ २७ ॥

गुणाः—नागदन्ती कटुस्तिक्ता रूक्षा वातकफापहा । मेधाकृद्विषदोषघ्नी पाचनी शुभदायिनी ॥ २८ ॥ गुल्मशूलोदरव्याधिकण्ठदोषनिकृन्तनी ।

## ( १० ) कुणञ्जरः ।

कुणञ्जरः कुणञ्जी च कुणञ्जोऽरण्यवास्तुकः ।

गुणाः—कुणञ्जो मधुरो रुच्यो दीपनः पाचनो हितः ॥ २९ ॥

## ( ११ ) *गोरक्षी ।

गोरक्षी सर्पदण्डी च दीर्घदण्डी सुदण्डिका । चित्रला गन्धबहुला गोपाली पञ्चपर्णिका ॥ ३० ॥

गुणाः—गोरक्षी मधुरा तिक्ता शिशिरा दाहपित्तनुत् । विस्फोटवान्त्यतीसारज्वरदोषविनाशिनी ॥ ३१ ॥

## ( १२ ) गोलोमिका ।

गोलोमिका तु गोधूमी गोजा क्रोष्टुकपुच्छिका । गोसंभवा प्रस्तरिणी विज्ञेयेति षडाह्वया ॥ ३२ ॥

गुणाः—गोलोमिका कटुस्तिक्ता त्रिदोषशमनी हिमा । मूलरोगास्रदोषघ्नी ग्राहिणी दीपनी च सा ॥ ३३ ॥

## ( १३ ) दुग्धफेनी ।

दुग्धफेनी पयःफेनी फेनदुग्धा पयस्विनी[2] । लूतारिर्व्रणकेतुश्च गोजापर्णी च सप्तधा ॥ ३४ ॥

---

* मालवे प्रसिद्धा ।

---

१ ज. ट. शतदन्तिका । २ ज. ट. 'नी । गोलताव्रण' ।

गुणाः—दुग्धफेनी कटुस्तिक्ता शिशिरा विषनाशिनी । व्रणापसारिणी रुच्या युक्त्या चैव रसायनी ॥ ३५ ॥

## ( १४ ) काथरा ।

काथरा हयपर्यायैः काथरान्तैः प्रकीर्तिता ।
गुणाः—अश्वकाथरिका तिक्ता वातघ्नी दीपनी परा ॥ ३६ ॥

## ( १५ ) वसुकः ।

वसुकोऽथ वसुः शैवो वसोऽथ शिवमल्लिका । पाशुपतः शिवमतः सुरेष्टः शिवशेखरः ॥ ३७ ॥ सितो रक्तो द्विधा प्रोक्तो ज्ञेयः स च नवाभिधः ।
गुणाः—वसुकौ कटुतिक्तोष्णौ पाके शीतौ च दीपनौ । अजीर्णवातगुल्मघ्नौ श्वेतश्चैव रसायनः ॥ ३८ ॥

## ( १६ ) सर्पिणी ।

सर्पिणी भुजगी भोगी कुण्डली पन्नगी फणी ।
गुणाः—षडभिधा सर्पिणी स्याद्विषघ्नी कुचवर्धिनी ॥ ३९ ॥

## ( १७ ) वृश्चिका ।

वृश्चिका नखपर्णी च पिच्छिलाऽप्यलिपत्रिका ।
गुणाः—वृश्चिका पिच्छलाऽम्ला स्यादश्मवृद्ध्यादिदोषनुत् ॥ ४० ॥

## ( १८ ) ब्राह्मी ( द्वितीयब्राह्मी )

ब्राह्मी वयस्था मत्स्याक्षी मीनाक्षी सोमवल्लरी ।
गुणाः—मत्स्याक्षी शिशिरा रुच्या व्रणदोषक्षयापहा ॥ ४१ ॥

## ( १९ ) गुण्डाला ।

गुण्डाला तु जलोद्भूता गुच्छबुध्ना जलाशया ।
गुणाः—गुण्डाला कटुतिक्तोष्णा शोफव्रणविनाशिनी ॥ ४२ ॥

## ( २० ) भूपाटली ।

भूपाटली च कुम्भी च भूताली रक्तपुष्पिका ।
गुणाः—भूपाटली कटूष्णा च पारदे सुप्रयोजिका ॥ ४३ ॥

## ( २१ ) पाटली ।

पाटली पाण्डुरफली धूसरा वृत्तबीजका । भूरिफली तथा पाण्डुफली सप्ताह्वयाभिधा ॥ ४४ ॥

१ ज. कासरा । २ ज. 'कासरि' । ३ ज. 'षकफाप' । ४ ज. 'लाश्रया । ५ ट. 'ली तु भूकुम्भी भू' ।

गुणाः—शिशिरा पाण्डुरफली गौल्या कृच्छ्रार्तिदोषहा। बल्या पित्तहरा वृष्या मूत्रघातनिवारणी ॥ ४५ ॥

## ( २२ ) श्वेता ।

श्वेता तु च्छुरिकापत्री पर्वमूलाऽप्यविक्रिया[2] ।

गुणाः—श्वेताऽतिमधुरा शीता स्तन्यदा रुचिकृत्परा ॥ ४६ ॥

## ( २३ ) ब्रह्मदण्डी ।

ब्रह्मदण्ड्यजदण्डी[3] च कण्टपत्रफला च सा ।

गुणाः—ब्रह्मदण्डी कटूष्णा स्यात्कफशोफानिलापहा ॥ ४७ ॥

## ( २४ ) द्रोणपुष्पी ।

द्रोणपुष्पी दीर्घपत्रा कुम्भयोनिः कुरम्बिका[4] । चित्राक्षुपः कुरम्बा[5] च सुपुष्पा चित्रपत्रिका[6] ॥ ४८ ॥

गुणाः—द्रोणपुष्पी कटुः सोष्णा रुच्या वातकफापहा। अग्निमान्द्यहरा चैव पथ्या वातापहारिणी ॥ ४९ ॥

## ( २५ ) महाद्रोणा ।

अन्या चैव महाद्रोणा कुरम्बा देवपूर्वका। दिव्यपुष्पी महाद्रोणी देवीकाण्डा[7] षडाह्वया ॥ ५० ॥

गुणाः—देवद्रोणी कटुस्तिक्ता मेध्या वातार्तिभूतनुत्। कफमान्द्यापहा चैव युक्त्या पारदशोधनी ॥ ५१ ॥

## ( २६ ) झण्डूः ।

झण्डूः स्यात्स्थूलपुष्पा तु झण्डूको झेण्डुकस्तथा ।

गुणाः—झण्डूः कटुकषाया स्याज्ज्वरभूतग्रहापहा ॥ ५२ ॥

## ( २७ ) गोरक्षदुग्धी ।

गोरक्षदुग्धी गोरक्षी ताम्रदुग्धी रसायनी। बहुपत्रा मृताजीवी मृतसंजीवनी मुनिः ॥ ५३ ॥

गुणाः—गोरक्षदुग्धी मधुरा वृष्या सा ग्राहिणी हिमा । सर्ववश्यकरी चैव रसे सिद्धिगुणप्रदा ॥ ५४ ॥

—:*:—

इत्थं वितत्य विशदीक्रियमाणनानाक्षुद्रक्षुपाह्वयगुणप्रगुणापवर्गम्। वर्गं विधाय

---

१ ज. कृच्छ्रास्रदोषनुत्। २ ट. °विक्रिया। ३ झ. °जलादण्डी क°। ४ झ. कुतुम्बि°। ५ झ. कुतुम्बा। ६ ज. °त्रपुष्पिका। ७ ज. देवकाण्डी। झ. देविकाञ्जी।

मुखमण्डनमेनमुच्चैरुच्चाटनाय च रुजां प्रभुरस्तु वैद्यः ॥५५॥ क्षुधं रान्ति जनस्योच्चैस्तस्मात्क्षुद्राः प्रकीर्तिताः। तेषां क्षुपाणां वर्गोऽयं रा दाने धातुरुच्यते ॥५६॥ धत्ते नित्यसमाधिसंस्तववशप्रीतार्पितेशार्पितां स्वात्मीयामृतहस्ततां किल सदा यः सर्वसंजीवनीम्। वर्गस्तस्य कृतौ नृसिंहकृतिनो यः पर्पटादिर्महानेष प्राश्नति नामकाण्डपरिषच्चूडामणौ पञ्चमः ॥ ५७ ॥

इति वैद्यकमुकुटमाणिक्यालंकरणश्रीमदीश्वरसूरिसूनुश्रीकण्ठचरणारविन्दसेवकराजहंसकाश्मीराद्यवंशाचार्यपरंपरान्ववायश्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्यायनामधेयवत्यभिधानचूडामणौ पर्पटादिः क्षुद्रक्षुपवर्गः पञ्चमः ॥ ५ ॥

---

# अथ पिप्पल्यादिः षष्ठो वर्गः—

चतुर्धा पिप्पली प्रोक्ता तन्मूलं नागरं तथा । आर्द्रकं मरिचद्वंद्वं धान्यकं च यवानिका ॥ १ ॥ चव्यं च चित्रकद्वंद्वं विडङ्गं च वचाद्वयम्। कुलञ्जो जीरकाः पञ्च मेथिका हिङ्गुपत्रिका ॥ २ ॥ हिङ्गुद्वयं चाग्निजारो रास्ने एलाद्वयं शिवम्। सौवर्चलं च काचाह्वं बिडं च गडनामकम् ॥ ३ ॥ सामुद्रं द्रौणिकं चान्यदौषरं रोमकं तथा । नवधा लवणं प्रोक्तमजमोदा च रेणुका ॥ ४ ॥ बोलं कर्चूरकः पाठा वृक्षाम्लश्चाम्लवेतसम् । कटुकाऽतिविषा मुस्ताद्वयं यष्टीमधुद्वयम् ॥ ५ ॥ भार्गी पुष्करमूलं च शृङ्ग्यथो दन्तिकाद्वयम्। जेपालश्च त्रिवृद्द्वेधा त्वक्पत्रं नागकेसरम् ॥ ६ ॥ तवक्षीरं च तालीसपत्राख्यं वंशरोचना। मञ्जिष्ठा च चतुर्धा स्याद्धरिद्रे च द्विधा मते ॥ ७ ॥ लाक्षा चालक्तको लोध्रो धातक्यब्धिफलं तथा। निर्विषाऽथ विषद्वंद्वं द्विधा चाम्लहरिद्रका ॥८॥ अब्धिफेनमफेनं च टङ्कणौ साकुरुण्डकम् । हिमावली हस्तिमदः स्वर्जिको लोणकस्तथा[1] ॥ ९ ॥ वज्रको यवजश्चाथ सर्वक्षारोऽथ मायिका। औषधान्यभिधीयन्ते षडङ्गमितसंख्यया ॥ १० ॥

## ( १ ) कुलञ्जः।

कुलञ्जो गन्धमूलश्च तीक्ष्णमूलः कुलञ्जनः।

गुणाः—कुलञ्जः कटुतिक्तोष्णो दीपनो मुखदोषनुत् ॥ ११ ॥

---

१ ज. लोणिका तथा। २ झ. °णकं तथा।

## ( २ ) अलक्तकः ।

अलक्तको जन्तुरसो रागो निर्भर्त्सनस्तथा । जननी जन्तुकारी च [1]संघर्षा [2]चक्रमर्दिनी ॥ १२ ॥

गुणाः—अलक्तकः सुतिक्तोष्णः कफवातामयापहः । कण्ठरुक्शमनो रुच्यो व्रणदोषार्तिनाशनः ॥ १३ ॥

## ( ३ ) समुद्रफलम् ।

समुद्रनामप्रथमं पश्चात्फलमुदाहरेत् । समुद्रफलमित्यादि नाम वाच्यं भिषग्वरैः ॥ १४ ॥

गुणाः—फलं समुद्रस्य कटूष्णकारि वातापहं भूतनिरोधकारि । त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि ॥ १५ ॥

## ( ४ ) साकुरुण्डः ।

साकुरुण्डो ग्रन्थिफलो विकटो वस्त्रभूषणः । कुरुण्डः कर्बुरफलः सकुरुण्डश्च सप्तधा ॥ १६ ॥

गुणाः—साकुरुण्डः कषायश्च रुचिकृद्दीपनः परः । श्लेष्मवातापहारी च वस्त्ररञ्जनको लघुः ॥ १६ ॥

## ( ५ ) हिमावली ।

हिमावली च हृद्धात्री कुष्ठघ्नो रङ्गकुष्ठकः । [3]अङ्गारग्रन्थिको ग्रन्थी ग्रन्थिलो वसुसंज्ञकः ॥ १८ ॥

गुणाः—हिमावली [4]सरा तिक्ता प्लीहगुल्मोदरापहा । कृमिकुष्ठगुदात्युग्रस्लजूकण्डूतिहारिणी ॥ १९ ॥

## ( ६ ) हस्तिमदः ।

हस्तिमदो गजमदो गजदानं मदस्तथा । कुम्भिमदो दन्तिमदो दानं द्वीपिमदोऽष्टधा ॥ २० ॥

गुणाः—स्निग्धो हस्तिमदस्तिक्तः केश्योऽपस्मारनाशनः । विषहृत्कुष्ठकण्डूतिव्रणदद्रुविसर्पनुत् ॥ २१ ॥

## ( ७ ) मायाफलम् ।

मायाफलं मायिफलं च मायिका छिद्राफलं मायि च पञ्चनामकम् ।

---

१ ज. ट. संघर्षो । २ ज. ट. चक्रवर्तिनी । ३ झ. गारकुष्ठकः । ४ ज. रसे ।

गुणाः—मायाफलं वातहरं कटूष्णकं शैथिल्यसंकोचककेशकार्ष्ण्यदम् ॥२२॥

—:०:—

इत्थं नानाद्रव्यसंभारनामग्रामव्याख्यातद्गुणाख्यानपूर्वम् । वर्गं वीर्यध्वस्तरोगोपसर्गं बुद्ध्वा वैद्यो विश्ववन्द्यत्वमीयात् ॥ २३ ॥ साफल्याय किलैत्य यानि जनुषः कान्तारदूरान्तरात्स्वौजःपात्रविचारणाय विपणेर्मध्यं समभ्यासते । तेषामाश्रयभूमिरेष भणितः पण्यौषधानां बुधैर्वर्गो द्रव्यगुणाभिधाननिपुणैः पण्यादिवर्गात्मना ॥ २४ ॥ यः सौम्येन सदाशयेन कलयन्दिव्यागमानां जनैर्दुर्ग्राहं महिमानमाशु नुदते स्वं जग्मुषां दुर्गतीः । वर्गः पिप्पलिकादिरेष नृहरेस्तस्येह शस्यात्मनो नामग्रामशिखामणौ खलु कृतौ षष्ठः प्रतिष्ठामगात् ॥ २५ ॥

इति वैद्यराजमण्डलीमौलिमाणिक्यमण्डनश्रीमदीश्वरपण्डिततनुजात्ययनी-<br>रमणचरणारविन्दासौख्यलालसराजहंसश्रीकाश्मीराद्यवंशाचार्य-<br>परंपरान्ववायप्रतिष्ठागरिष्ठश्रीनरहरिपण्डितविरचिते निघ-<br>ण्टुराजापरपर्यायवत्यभिधानचूडामणौ पण्यवर्गा-<br>परनामा पिप्पल्यादिः षष्ठो वर्गः ॥ ६ ॥

## अथ मूलकादिः सप्तमो वर्गः—

मूलकं पञ्चधा प्रोक्तं चतुर्धा शिग्रुरुच्यते । वंशो द्विर्वेत्रो माकन्दी हरिद्रा वनजा तथा ॥ १ ॥ शृङ्गाटो भ्रमरच्छल्ली वन्यार्द्रकमथापरम् । रसोनो द्विविधः प्रोक्तः पलाण्डुश्च द्विधा मतः ॥ २ ॥ विंशत्येकोत्तरं मूलं सूरणद्वंद्वमुच्यते । आलुकसप्तकं चाथ प्रोक्ताश्चारण्यकन्दकाः ॥ ३ ॥ महिषी हस्तिकोलौ च वाराही विष्णुधारणी । द्विधा च नाकुली माला विदारीद्वयशाल्मली ॥ ४ ॥ चण्डालस्तैलकन्दश्च त्रिपर्णी पुष्करस्तथा । मुसली द्विविधा चाथ क्षुद्रगुच्छस्तथैव च ॥ ५ ॥ एषु नागकराह्वा च पत्रशाकमथोच्यते । वास्तुकं चुक्रकं चिल्ली त्रिविधं शिग्रुपत्रकम् ॥ ६ ॥ पालक्यराजशाकिन्यौ चतुर्धोपोदकी क्रमात् । कुणञ्जरः कुसुम्भाख्यः शताह्वा पत्रतण्डुली ॥ ७ ॥ राजिकाद्वयचाङ्गेरी घोलिका त्रिविधा मता । जीवशाकस्तथा गौरसुवर्णाख्यः पुनर्नवा ॥ ८ ॥ वसुकः फाञ्जिकादिश्च मिश्रकोऽङ्कुराह्वयः । अतः परं च कूष्माण्डी कुम्भतुम्बी अलाबुका ॥ ९ ॥ भूतुम्बिका कलिङ्गश्च द्विधा कोशा-

---

१ ज. 'कं वराङ्गसंकोचनकं'।

तकी तथा । पटोलीमधुराद्या च मृगाक्षी दधिपुष्पिका ॥ १० ॥ शिम्बी च कारवल्ली च कर्कोटीस्वादुतुम्बिका । निष्पावीद्वयवार्ताकी डङ्गरी खर्बुजा तथा। कर्कटीत्रपुस्यैर्वारु वालुका चीनकर्कटी ॥ ११ ॥ चिर्भिटा च शशाण्डुली कुडुहुञ्ची मुनीक्षणैः । वेदभेदाः क्रमान्मूलकन्दपत्रफलात्मकाः ॥ १२ ॥ शाकवर्गेऽत्र कथ्यन्ते मनोहरगुणाश्रयाः । एवं चतुर्विधं द्रव्यं बाणखं चन्द्रसंयुतम् ॥ १३ ॥

## ( १ ) वेत्रः ।

वेत्रो वेतो योगिदण्डः सुदण्डो मृदुपर्वकः ।

गुणाः—वेत्रः पञ्चविधः शैत्यकषायो भूतपित्तहृत् ॥ १४ ॥

## ( २ ) माकन्दी ।

माकन्दी बहुमूला च मादनी गन्धमूलिका । एका विशदमूली च श्यामला च तथाऽपरा ॥ १५ ॥

गुणाः—माकन्दी कटुका तिक्ता मधुरा दीपनी परा । रुच्याऽल्पवातुला पथ्या न वर्षासु हिताधिका ॥ १६ ॥

## ( ३ ) शोली ( शोलिका )

शोली वनहरिद्रा स्याद्वन्यारिष्टा च शोलिका ।

गुणाः—शोलिका कटुगौल्या च रुच्या तिक्ता च दीपनी ॥ १७ ॥

## ( ४ ) शृङ्गाटकः ।

शृङ्गाटकः शृङ्गरुहो जलवल्ली जलाश्रया । शृङ्गकन्दः शृङ्गमूलो विषाणी सप्तनामकः ॥ १८ ॥

गुणाः—शृङ्गाटकः शोणितपित्तहारी लघुः सरो वृष्यतमो विशेषात् । त्रिदोषतापश्रमदोषहारी रुचिप्रदो मोहनदार्ढ्यहेतुः ॥ १९ ॥

## ( ५ ) भृङ्गाह्वा ।

भृङ्गाह्वा भ्रमरच्छल्ली भ्रमरा भृङ्गमूलिका ।

गुणाः—भृङ्गच्छल्ली कटूष्णा स्यात्तिक्ता दीपनरोचनी ॥ २० ॥

## ( ६ ) पेऊ

पेऊ वनार्द्रका प्रोक्ता वनजाऽरण्यजाऽऽर्द्रका ।

गुणाः—पेऊ तु कटुकाऽम्ला च रुचिकृद्बल्यदीपनः (नी) ॥ २१ ॥

---

१ क्ष. 'मशोफहा' ।

## ( ७ ) मुखालुः ।

मुखालुर्मण्डपारोहो दीर्घकन्दः सुकन्दकः । स्थूलकन्दो महाकन्दः स्वादुकन्दश्च सप्तधा ॥ २२ ॥

गुणाः—मुखालुकः स्यान्मधुरः शिशिरः पित्तनाशनः । रुचिकृद्वातकृच्चैव दाहशोषतृषापहः ॥ २३ ॥

## ( ८ ) कन्दग्रन्थी ।

पिण्डालुः स्याद्ग्रन्थिलः पिण्डकन्दः कन्दग्रन्थी रोमशो रोमकन्दः । रोमालुः स्यात्सोऽपि ताम्बूलपत्रो नानाकन्दः पिण्डकोऽयं दशाह्वः ॥ २४ ॥

गुणाः—पिण्डालुर्मधुरः शीतो मूत्रकृच्छ्रामयापहः । दाहशोषप्रमेहघ्नो वृष्यः संतर्पणो गुरुः ॥ २५ ॥

## ( ९ ) रक्तपिण्डालुः ।

अन्यस्तु रक्तपिण्डालू रक्तालू रक्तपिण्डकः । लोहितो रक्तकन्दश्च लोहितालुः षडाह्वयः ॥ २६ ॥

गुणाः—रक्तपिण्डालुकः शीतो मधुराम्लः श्रमापहः । पित्तदाहापहो वृष्यो बलपुष्टिकरो गुरुः ॥ २७ ॥

## ( १० ) कासालुः ।

कासालुः कासकन्दश्च कन्दालुश्चाऽऽलुकश्च सः । आलुर्विशालपत्रश्च पत्रालुश्चेति सप्तधा ॥ २८ ॥

गुणाः—कासालुरुग्रकण्डूति[२]विषश्लेष्मामयापहः । अरोचकहरः स्वादुः पथ्यो दीपनकारकः ॥ २९ ॥

## ( ११ ) फोण्डालुः ।

[३]फोण्डालुर्लोहितालुश्च रक्तपत्रो मृदुच्छदः ।

गुणाः—[४]फोण्डालुः श्लेष्मवातघ्नः कटूष्णो दीपनीयकः ॥ ३० ॥

## ( १२ ) पानीयालुः ।

पानीयालुर्जलालुः स्यादनूपालुरवालुकः ।

गुणाः—पानीयालुस्त्रिदोषघ्नः संतर्पणकरः परः ॥ ३१ ॥

---

१ ज. दश: । २ ज. 'तिवातश्ले' । ३ ट. फोडालु' । ४ ट. फोडालुः ।

## ( १३ ) नीलालुः ।

नीलालुरसितालुः स्यात्कृष्णालुः श्यामलालुकः ।
गुणाः—नीलालुर्मधुरः शीतः पित्तदाहश्रमापहः ॥ ३२ ॥

## ( १४ ) शुभ्रालुः ।

शुभ्रालुर्महिषीकन्दो लुलायकन्दश्च शुक्लकन्दश्च । सर्पाख्यो वनवासी विषकन्दो नीलकन्दोऽन्यः ॥ ३३ ॥
गुणाः—कटूष्णो महिषीकन्दः कफवातामयापहः । मुखजाड्यहरो रुच्यो महासिद्धिकरः सितः ॥ ३४ ॥

## ( १५ ) हस्तिकन्दः ।

हस्तिकन्दो हस्तिपत्रः स्थूलकन्दोऽतिकन्दकः । बृहत्पत्रोऽतिपत्रश्च हस्तिकर्णः सुकर्णकः ॥ ३५ ॥ त्वग्दोषारिः कुष्ठहन्ता गिरिवासी नगाश्रयः । गजकन्दो नागकन्दो ज्ञेयो द्विसप्तनामकः ॥ ३६ ॥
गुणाः—हस्तिकन्दः कटूष्णः स्यात्कफवातामयापहः । त्वग्दोषश्रमहा कुष्ठविषवीसर्पनाशकः ॥ ३७ ॥

## ( १६ ) कोलकन्दः ।

कोलकन्दः कृमिघ्नश्च पञ्जलो वस्त्रपञ्जलः । पुटालुः सुपुटश्चैव पुटकन्दश्च सप्तधा ॥ ३८ ॥
गुणाः—कोलकन्दः कटुश्चोष्णः कृमिदोषविनाशनः । वान्तिविच्छर्दिशमनो विषदोषनिवारणः ॥ ३९ ॥

## ( १७ ) विष्णुकन्दः ।

विष्णुकन्दो विष्णुगुप्तः सुपुटो बहुसंपुटः । जलवासो बृहत्कन्दो [1]दीर्घवृत्तो हरिप्रियः ॥ ४० ॥
गुणाः—विष्णुकन्दस्तु मधुरः शिशिरः पित्तनाशनः । दाहशोफहरो रुच्यो संतर्पणकरः परः ॥ ४१ ॥

## ( १८ ) धरणीकन्दः ।

धरणी धारणीया च [2]वीरपत्नी [3]सुकन्दकः । कन्दालुर्वनकन्दश्च [4]कन्दाद्यो दण्डकन्दकः ॥ ४२ ॥

---

१ ज. दीर्घवृन्तो । २ झ. वीरपत्री । ३ ज. सुगन्धकः । ४ ज. कन्दाढ्यो ।

गुणाः—मधुरो धरणीकन्दः कफपित्तामयापहः । वक्त्रदोषप्रशमनः कुष्ठकण्डूतिनाशनः ॥ ४३ ॥

## ( १९ ) मालाकन्दः ।

अथ मालाकन्दः स्यादालिकन्दश्च पङ्क्तिकन्दश्च । त्रिशिखदला ग्रन्थिदला कन्दलता कीर्तिता षोढा ॥ ४४ ॥

गुणाः—मालाकन्दः सुतीक्ष्णः स्याद्गण्डमालाविनाशकः । दीपनो गुल्महारी च वातश्लेष्मापकर्षकृत् ॥ ४५ ॥

## ( २० ) शाल्मलीकन्दः ।

शाल्मलीकन्दकश्चाथ विजुलो वनवासकः । वनवासी मलघ्नश्च मलहन्ता षडाह्वयः ॥ ४६ ॥

गुणाः—मधुरः शाल्मलीकन्दो मलसंग्रहरोधजित् । शिशिरः पित्तदाहार्तिशोषसंतापनाशनः ॥ ४७ ॥

## ( २१ ) चण्डालकन्दः ।

प्रोक्तश्चण्डालकन्दः स्यादेकपत्रो द्विपत्रकः । त्रिपत्रोऽथ चतुष्पत्रः पञ्चपत्रश्च भेदतः ॥ ४८ ॥

गुणाः—चण्डालकन्दो मधुरः कफपित्तास्रदोषजित् । विषभूतादिदोषघ्नो विज्ञेयश्च रसायनः ॥ ४९ ॥

## ( २२ ) तैलकन्दः ।

अथ तैलकन्द उक्तो द्रावककन्दस्तिलाङ्कितदलश्च । करवीरकन्दसंज्ञो ज्ञेयस्तिलचित्रपत्रको बाणैः ॥ ५० ॥

गुणाः—लोहद्रावी तैलकन्दः कटूष्णो वातापस्मारापहारी विषारिः । शोफघ्नः स्याद्बन्धकारी रसस्य द्रागेवासौ देहसिद्धिं विधत्ते ॥ ५१ ॥

## ( २३ ) तिलकन्दः ।

अश्वारिपत्रसंकाशस्तिलबिन्दुसमन्वितः । संस्निग्धाधस्थभूमिश्च तिलकन्दोऽतिविस्तृतः ॥ ५२ ॥ त्रिपर्णिका बृहत्पत्री छिन्नग्रन्थी निका च सा । कन्दालः कन्दबहुलाऽप्यम्लवल्ली विषापहा ॥ ५३ ॥

गुणाः—त्रिपर्णी मधुरा शीता श्वासकासविनाशनी । पित्तप्रकोपशमनी विषव्रणहरा परा ॥ ५४ ॥

---

१ ज. 'शोकसं'। २ ज. 'हशुद्धिं'।

## ( २४ ) लक्ष्मणा ।

लक्ष्मणा पुत्रकन्दा च पुत्रदा नागिनी तथा । नागाह्वा नागपत्नी च तुलिनी मंक्षिका[1] च सा ॥ ५५ ॥ अस्रबिन्दुच्छदा चैवं[2] मुकन्दा दशधाह्वया ।

गुणाः—लक्ष्मणा मधुरा शीता स्त्रीवन्ध्यत्वविनाशनी । रसायनकरी बल्या त्रिदोषशमनी परा ॥ ५६ ॥

## ( २५ ) करजोडिकन्दः ।

हस्तपर्यायपूर्वस्तु जोडिर्वैद्यवरैः स्मृतः । करजोडिरिति ख्यातो रसबन्धादिवश्यकृत् ॥ ५७ ॥

## ( २६ ) मुसलीकन्दः ।

मुसली तालमूली च सुवहा तालमूलिका । गोधापदी हेमपुष्पी भूताली दीर्घकन्दिका ॥ ५८ ॥

गुणाः—मुसली मधुरा शीता वृष्या[3] पुष्टिबलप्रदा । पिच्छिला कफदा पित्तदाहश्रमहरा परा ॥ ५९ ॥ मुसली स्याद्द्विधा प्रोक्ता श्वेता चापरसंज्ञका ।

गुणाः—श्वेता स्वल्पगुणोपेता अपरा च रसायनी ॥ ६० ॥

## ( २७ ) गुच्छाह्वकन्दः ।

गुच्छाह्वकन्दस्तबकाह्वकन्दको गुलुच्छकन्दश्च विघण्टिकाभिधः ।

गुणाः—गुलुच्छकन्दो मधुरः सुशीतलो वृष्यप्रदस्तर्पणदाहनाशनः ॥ ६१ ॥

## ( २८ ) वास्तुकम् ।

वास्तुकं वास्तु वास्तूकं वस्तुकं हिलमोचिका । शाकराजो राजशाकश्चक्रवर्ती च कीर्तितः ॥ ६२ ॥

गुणाः—वास्तुकं तु मधुरं सुशीतलं क्षारमीषदमलं त्रिदोषजित् । रोचनं ज्वरहरं महार्शसां नाशनं च मलमूत्रशुद्धिकृत् ॥ ६३ ॥

## ( २९ ) चुक्रम् ।

चुक्रं तु चुक्रवास्तूकं लिकुचं चाम्लवास्तुकम् । दलाम्लमम्लशाकाख्यमम्लादिहिलमोचिका ॥ ६४ ॥

गुणाः—चुक्रं स्यादम्लपत्रं तु लघूष्णं वातगुल्मनुत् । रुचिकृद्दीपनं पथ्यमीषत्पित्तकरं परम् ॥ ६५ ॥

---

१ ज. मञ्जिका । २ ज. ट. 'व पुंस्कन्दा च दशाह्व' । ३ ज. रस्या ।

## पलाशलोहिता ( चिल्ली )

पलाशलोहिता चिल्ली वास्तुका चिल्लिका च सा । मृदुपत्री क्षारदला चीरपत्री तु वास्तुकी ॥ ६६ ॥

गुणाः—चिल्ली वास्तुकतुल्या च सक्षारा श्लेष्मपित्तनुत् । प्रमेहमूत्रकृच्छ्रघ्नी पथ्या च रुचिकारिणी ॥६७॥ श्वेतचिल्ली तु वास्तूकी सुपथ्या श्वेतचिल्लिका । सितचिल्ल्युपचिल्ली च ज्वरघ्नी क्षुद्रवास्तुकी ॥ ६८ ॥

गुणाः—श्वेतचिल्ली सुमधुरा क्षारा च शिशिरा च सा । त्रिदोषशमनी पथ्या ज्वरदोषविनाशनी ॥ ६९ ॥ अन्या शुनकचिल्ली स्यात्सुचिल्ली श्वानचिल्लिका । गुणाः—श्वचिल्ली कटुतीक्ष्णा च कण्डूतिव्रणहारिणी ॥ ७० ॥

## ( ३१ ) शिग्रुपत्रजम् ।

गुणाः—शिग्रुपत्रभवं शाकं रुच्यं वातकफापहम् । कटूष्णं दीपनं पथ्यं कृमिघ्नं पाचनं परम् ॥ ७१ ॥

## ( ३२ ) पालक्यम् ।

पालक्यं तु पलक्यायां मधुरा क्षुरपत्रिका । सुपत्रा स्निग्धपत्रा च ग्रामीणा ग्राम्यवल्लभा ॥ ७२ ॥

गुणाः—पालक्यमीषत्कटुकं मधुरं पथ्यशीतलम् । रक्तपित्तहरं ग्राहि ज्ञेयं संतर्पणं परम् ॥ ७३ ॥

## ( ३३ ) उपोदकी ।

उपोदकी कलम्बी च पिच्छिला पिच्छिलच्छदा । मोहिनी मदशाकश्च विशालाद्या ह्युपोदकी ॥ ७४ ॥

गुणाः—उपोदकी कषायोष्णा कटुका मधुरा च सा । निद्रालस्यकरी रुच्या विष्टम्भश्लेष्मकारिणी ॥ ७५ ॥

## ( ३४ ) क्षुद्रोपोदकी ।

उपोदकी परा क्षुद्रा सूक्ष्मपत्रा तु मण्डपी । रसवीर्यविपाकेषु सदृशी पूर्वया स्वयम् ॥ ७६ ॥ उपोदकी तृतीया च वनजा वनजाह्वया । वनजोपोदकी तिक्ता कटूष्णा रोचनी च सा ॥ ७७ ॥

## ( ३५ ) मूलपोती ।

मूलपोती क्षुद्रवल्ली पोतिका क्षुद्रपोतिका । क्षुपोपोदकनाम्नी च वल्लिः शाकटपोतिका ॥ ७८ ॥

---

१ अ. वल्लिसा' ।

गुणाः—मूलपोती त्रिदोषघ्नी वृष्या बल्या लघुश्च सा। बलपुष्टिकरी रुच्या जठरानलदीपनी ॥ ७९ ॥

## ( ३६ ) कुञ्जरः।

गुणाः—कुणञ्जरस्त्रिदोषघ्नो मधुरो रुच्यदीपकः। ईषत्कषायः संग्राही पित्तश्लेष्मकरो लघुः ॥ ८० ॥

## ( ३७ ) कौसुम्भशाकम्।

गुणाः—कौसुम्भशाकं मधुरं कटूष्णं विण्मूत्रदोषापहरं मदघ्नम्। दृष्टिप्रसादं कुरुते विशेषाद्रुचिप्रदं दीप्तिकरं च वह्नेः ॥ ८१ ॥

## ( ३८ ) शतपुष्पादलम्।

गुणाः—शतपुष्पादलं सोष्णं मधुरं गुल्मशूलजित्। वातघ्नं दीपनं पथ्यं पित्तकृद्रुचिदायकम् ॥ ८२ ॥

## ( ३९ ) तण्डुलीयदलम्।

गुणाः—तण्डुलीयकदलं हिममर्शःपित्तरक्तविषकासविनाशि। ग्राहकं च मधुरं च विपाके दाहशोषशमनं रुचिदायि ॥ ८३ ॥

## ( ४० ) राजिकापत्रम्।

गुणाः—कटूष्णं राजिकापत्रं कृमिवातकफापहम्। कण्ठामयहरं स्वादु वह्नि-दीपनकारकम् ॥ ८४ ॥

## ( ४१ ) सार्षपपत्रम्।

गुणाः—सार्षपं पत्रमत्युष्णं रक्तपित्तप्रकोपनुत्। विदाहि कटुकं स्वादु शुक्रहृद्रुचिदायकम् ॥ ८५ ॥

## ( ४२ ) चाङ्गेरीशाकम्।

गुणाः—चाङ्गेरीशाकमत्युष्णं कटु रोचनपाचनम्। दीपनं कफवातार्शः-संग्रहण्यतिसारजित् ॥ ८६ ॥

## ( ४३ ) घोली।

घोला च घोलिका घोली कलन्दुः कवलालुकम्।
गुणाः—क्षेत्रजं लवणं रुच्यमम्लं वातकफापहम् ॥ ८७ ॥ आरामघोलिका

---

१ ज. विषघ्नं रुचि°। २ ट. ° पनम्। वि°।

चाम्ला रूक्षा रुच्याऽनिलापहा । पित्तश्लेष्मकरी चान्या सूक्ष्मा जीर्णज्वरापहा ॥ ८८ ॥

## ( ४४ ) जीवन्तः । ( जीवशाकं मालवे प्रसिद्धम् )

जीवन्तो रक्तनालश्च ताम्रपत्रः सनालकः । शाकवीरस्तु मधुरो जीवशाकश्च मेषकः[1] ॥ ८९ ॥

गुणाः—जीवशाकः सुमधुरो बृंहणो बस्तिशोधनः । दीपनः पाचनो बल्यो वृष्यः पित्तापहारकः ॥ ९० ॥

## ( ४५ ) गौरसुवर्णम् । ( गौरसुवर्णशाकं चित्रकूटदेशे प्रसिद्धम् )

गौरसुवर्णं स्वर्णं सुगन्धिकं भूमिजं च वारिजं च । ह्रस्वं च गन्धशाकं कटु शृङ्गाटं च वर्णशाकाङ्कः ॥ ९१ ॥

गुणाः—गौरसुवर्णं शिशिरं कफपित्तज्वरापहम् । पथ्यं दाहरुचिभ्रान्तिरक्तश्रमहरं परम् ॥ ९२ ॥

## ( ४६ ) वर्षाभूः ।

गुणाः—वर्षाभूवसुकौ वर्णकफमान्द्यानिलापहौ । शाके रूक्षतरौ गुल्मप्लीहशूलापहारकौ ॥ ९३ ॥

## ( ४७ ) फञ्जिका ।

फञ्जिका जीवनी पेया तर्कारी चुचुकः पृथक् ।

गुणाः—वातामयहरं ग्राहि दीपनं रुचिदायकम् ॥ ९४ ॥

## ( ४८ ) फञ्जादिशाकम् ।

फञ्जादिपञ्चकं भेडा कुणजस्त्रिपुटस्तथा । इत्यादिनवपत्राणां शाकमेकत्र योजितम् ॥ ९५ ॥

गुणाः—दीपनं पाचनं रुच्यं बलवर्णविधायकम् । त्रिदोषशमनं पथ्यं ग्राहि वृष्यं सुखावहम् ॥ ९६ ॥

## ( ४९ ) असिशिम्बी ।

असिशिम्बी खड्गशिम्बी शिम्बी निस्त्रिंशशिम्बिका । स्थूलशिम्बी महाशिम्बी बृहच्छिम्बी सुशिम्बिका ॥ ९७ ॥

गुणाः—असिशिम्बी तु मधुरा कषाया श्लेष्मपित्तजित् । व्रणदोषापहन्त्री च शीतला रुचिदीपनी[2] ॥ ९८ ॥

---

१ ज. मोचकः । ढ. मोषकः । २ ज. पथ्या ।

## ( ५० ) निष्पावी ।

निष्पावी ग्रामजादिः स्यात्फलिनी नखपूर्विका । मण्डपी फलिका शिम्बी ज्ञेया गुच्छफला च सा ॥९९॥ विशालफलिका चैव निष्पाविश्चिपिटा तथा । अन्याऽङ्गुलीफला चैव नखनिष्पाविका स्मृता ॥१००॥ वृत्तनिष्पाविका ग्राम्या नखगुच्छफला शराः ।

गुणाः—निष्पावौ द्वौ हरिच्छुभ्रौ कषायौ मधुरौ सरौ ॥१०१॥ कण्ठशुद्धिकरौ मेध्यौ दीपनौ रुचिकारकौ । संग्राहिसमवीर्यः स्यादीषच्छ्रेष्ठो द्वितीयकः ॥ १०२ ॥

## ( ५१ ) शशाण्डुली ।

शशाण्डुली बहुफला तण्डुली क्षेत्रसंभवा । क्षुद्राऽम्ला लोमशफला धूम्रवृत्तफला च सा ॥ १०३ ॥

गुणाः—शशाण्डुली तिक्तकटुश्च कोमला कट्वम्लयुक्ता जरठा कफावहा । पाके तु साम्ला मधुरा विदाहकृत्कफश्च शुष्कारुचिकृच्च दीपनी ॥ १०४ ॥

इति मूलकन्दफलपत्रसुन्दरक्रमनामतद्गुणनिरूपणोल्बणम् । अवलोक्य वर्गमिममामयोचितामगदप्रयुक्तिमवबुध्यतां बुधः ॥ १०५ ॥ मन्दाग्निमरोचकिनं येऽपि शिलामाशयन्ति निजशक्त्या । तेषां शाकानामयमाश्रयभूः शाकवर्ग इति कथितः ॥ १०६ ॥ लब्धान्योन्यसहायवैद्यककलाशङ्काकलङ्कापनुद्दक्ष्यावतरोऽयमित्यविरतं सन्तः प्रशंसन्ति यम् । तस्य श्रीनृहरेः कृताववसितो यो मूलकादिर्महान्वर्गोऽसावभिधानकोशपरिषच्चूडामणौ सप्तमः ॥ १०७ ॥

इति वैद्यराजमुकुटमण्डलीमाणिक्यमणिमण्डनश्रीमदीश्वरपण्डितात्मजरजनरिमणखण्डचूडामणिचरणाम्बुजन्मनिर्मलमोदास्वादसंमदप्रमुदितचित्तचञ्चरीकश्रीकाश्मीराद्यवंशाचार्यपरंपरान्ववायप्रधानश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधानचूडामणौ शाकवर्गापरपर्यायनाममूलादिवर्गः सप्तमः ॥ ७ ॥

---

## अथ शाल्मल्यादिरष्टमो वर्गः—

---

शाल्मली तस्य निर्यासो रोहितश्चैकवीरकः । पारिभद्रोऽब्धिखदिरः[2] खदिरः

---

१ ज. 'प्राग्रस' । २ झ. 'द्रोऽथ खदिरः काम्भोजी क्षा' ।

खादिरः स्मृतः ॥ १ ॥ शमीद्वयं च बर्बुरद्वितयमरिमेदकः । पैकाण्डेङ्गुदिका प्रोक्ता निष्पत्री च स्नुही द्विधा ॥ २ ॥ कन्थारिका त्रिधैरण्डो घोण्टा वल्ली-करञ्जकः । कारिका मदनस्त्रीणि बिल्वान्तरतर्रेटिका ॥ ३ ॥ श्रीवल्ली कुञ्जिका चैव रामकाण्डस्तथाऽपरः । सयावनालौ द्विशरौ मुञ्जकाशौ द्विधा कुशः ॥४॥ बल्वजा कत्तृणं चाथ नलौ दूर्वा चतुर्विधा । कुन्दुरो भूतृणं ज्ञेयो उँखल इक्षु-दर्भकः ॥ ५ ॥ गोमूत्रशिल्पिनीश्रेणीगर्मोटीमञ्जरास्तथा । गिरिभूर्वंशपत्री च मन्थानः पल्लिवाहकः ॥ ६ ॥ ज्ञेये पटुतृणशूके त्रिपण्यन्धा त्रिगुण्डकः । कसे-रुश्चणिका प्रोक्ता गुण्डाला शूलिका तथा ॥ ७ ॥ परिपेलं हिञ्जुलं च सेवालं च शराङ्कधा ।

## ( १ ) एकवीरः ।

एकवीरो महावीरः सकृद्वीरः सुवीरकः । एकादिवीरपर्यायैर्वीरश्चेति षडा-ह्वयः ॥ ८ ॥

गुणाः—एकवीरो भवेच्चोष्णः कटुकस्तोदवातनुत् । गृध्रसिकटिपृष्ठादिशूल-पक्षाभिघातनुत् ॥ ९ ॥

## ( २ ) पारिभद्रः ।

अथ भवति पारिभद्रो मन्दारः पारिजातको निम्बतरुः । रक्तकुसुमः कृमिघ्नो बहुपुष्पो रक्तकेसरो वसवः ॥ १० ॥

गुणाः—पारिभद्रः कटूष्णः स्यात्कफवातनिकृन्तनः । अरोचकहरः पथ्यो दीपनश्चापि कीर्तितः ॥ ११ ॥

## ( ३ ) बर्बुरः ।

बर्बुरो युगलाक्षश्च कण्टालुस्तीक्ष्णकण्टकः । गोशृङ्गः पङ्क्तिबीजश्च दीर्घ-कण्टः कफान्तकः ॥ १२ ॥ दृढबीजः श्वासभक्षो ज्ञेयश्चेति दशाह्वयः ।

गुणाः—बर्बुरस्तु कषायोष्णः कफकासामयापहः । आमरक्तातिसारघ्नः पित्तदाहार्तिनाशनः ॥ १३ ॥

## ( ४ ) जालबर्बुरः ।

जालबर्बुरकस्त्वन्यश्छत्राकः स्थूलकण्टकः । सूक्ष्मशाखस्तनुच्छायो रन्ध्र-कण्टः षडाह्वयः ॥ १४ ॥

गुणाः—जालबर्बुरको रूक्षो वातामयविनाशकृत् । पित्तकृच्च कषायोष्णः कफहृद्दाहकारकः ॥ १५ ॥

१ झ. पलाण्डे । २ झ. रट्टिका । ३ झ. ऊसल । ट. ऊशल ।

## ( ५ ) पंक्काण्डः ।

पंक्काण्डः पश्चकृत्पश्चवर्धनः पश्वरक्षकः ।
गुणाः—हस्ताञ्जनविधौ शस्तः कटुर्जीर्णज्वरापहः ॥ १६ ॥

## ( ६ ) इङ्गुदी ।

इङ्गुदी हिङ्गुपत्रश्च विषकण्टोऽनिलान्तकः । गौरस्तूक्तः सुपत्रश्च शूलारिस्तापसद्रुमः ॥ १७ ॥ तीक्ष्णकण्टस्तैलफलः पूतिगन्धो[1] विगन्धकः । ज्ञेयः क्रोष्टुफलश्चैव वह्नीन्दुगणिताह्वयः ॥ १८ ॥

गुणाः—इङ्गुदी मदगन्धी स्यात्कटूष्णा फेनिला लघुः । रसायनी हन्ति जन्तुवातामयकफव्रणान् ॥ १९ ॥

## ( ७ ) कन्थारी ।

कन्थारी कथरी कन्था दुर्धर्षा तीक्ष्णकण्टका । तीक्ष्णगन्धा क्रूरगन्धा दुष्प्रवेशाऽष्टकाभिदा ॥ २० ॥

गुणाः—कन्थारी कटुतिक्तोष्णा कफवातनिकृन्तनी । शोफघ्नी दीपनी रुच्या रक्तग्रन्थिरुजापहा ॥ २१ ॥

## ( ८ ) घोण्टा ।

घोण्टा बदरिका घोटी गोलिका शत्रुकण्टकः । कर्कटी च तुरङ्गी च तुरगाह्वाऽष्टधा स्मृता ॥ २२ ॥

गुणाः—घोटिका कटुकोष्णा च मधुरा वातनाशनी । व्रणकण्डूतिकुष्ठास्रग्दोषश्वयथुहारिणी ॥ २३ ॥

## ( ९ ) लताकरञ्जः ।

लताकरञ्जो दुःस्पर्शो वीरास्यो वज्रबीजकः । धनदाक्षः कण्टफलः कुबेराक्षश्च सप्तधा ॥ २४ ॥

गुणाः—लताकरञ्जपत्रं तु कटूष्णं कफवातनुत् । तद्बीजं दीपनं पथ्यं शूलगुल्मव्यथापहम् ॥ २५ ॥

## ( १० ) कारी ।

कारी तु कारिका कार्या गिरिजा कटुपत्रिका । तत्रैका कण्टकारी स्यादन्या त्वाकर्षकारिका ॥ २६ ॥

---

१ झ. पखौडः । २ झ. पखौडः । ३ ज. 'न्धोऽतिग' ।

गुणाः—कारी कषायमधुरा द्विविधा पित्तनाशनी । दीपनी ग्राहिणी रुच्या कण्ठशोधकरी गुरुः ॥ २७ ॥

## ( ११ ) वाराहमदनः ।

वाराहोऽन्यः कृष्णवर्णो महापिण्डीतको महान् । स्निग्धपिण्डीतकश्चान्यः स्थूलवृक्षफलस्तथा ॥ २८ ॥

गुणाः—अन्यौ च मदनौ श्रेष्ठौ कटुतिक्तरसान्वितौ । छर्दनौ कफहृद्रोगपकामाशयशोधनौ ॥ २९ ॥

## ( १२ ) बिल्वान्तरः ।

बिल्वान्तरश्चीरवृक्षः क्षुधाकुशलसंज्ञकः । दीर्घमूलो वीरवृक्षः कृच्छ्रारिश्च षडाह्वयः ॥ ३० ॥

गुणाः—बिल्वान्तरः कटूष्णश्च कृच्छ्रघ्नः संधिशूलनुत् । वह्निदीप्तिकरः पथ्यो वातामयविनाशनः ॥ ३१ ॥

## ( १३ ) तरटी ।

तरटी तारटी तीव्रा बर्बुरा[१] रक्तबीजका ।

गुणाः—तरटी तिक्तमधुरा गुरुर्बल्या कफापहा ॥ ३२ ॥

## ( १४ ) श्रीवल्ली ।

श्रीवल्ली शिववल्ली च कण्टवल्ली च शीतला । अम्ला कटुफलाऽथ तथा दुरारोहा च साऽष्टधा ॥ ३३ ॥

गुणाः—श्रीवल्ली कटुकाऽम्ला च वातशोफकफापहा । तत्फलं तैललेपघ्नमत्यम्लं रुचिकृत्परम् ॥ ३४ ॥

## ( १५ ) निकुञ्जिका ।

अन्या निकुञ्जिकाऽम्लाख्या कुञ्जिका कुञ्जवल्लरी । निकुञ्जिका बुधैरुक्ता श्रीवल्लीसदृशी गुणैः ॥ ३५ ॥

## ( १६ ) *अपर्वदण्डः ।

अपर्वदण्डो दीर्घश्च रामबाणो नृपप्रियः । रामकाण्डो रामशरो रामस्येषुश्च सप्तधा ॥ ३६ ॥

---

* अपर्वदण्डो मालवदेशे प्रसिद्धः ।

---

१ ग. खर्बुरा ।

गुणाः— रामकाण्डजमूलं स्यादीषदुष्णं रुचिप्रदम् । रसे चाम्लं कषायं च पित्तकृत्कफवातहृत् ॥ ३७ ॥

## ( १७ ) यावनालः ।

यावनालोऽथ नदिजो दृढत्वग्वारिसंभवः । यावनालनिभश्चैव खरपत्रः षडाह्वयः ॥ ३८ ॥

गुणाः—यावनालशरमूलमीषन्मधुररुच्यकम् । शीतं पित्ततृषापघ्नं पशूनाम-बलप्रदम् ॥ ३९ ॥

## ( १८ ) बल्वजा ।

बल्वजा दृढपत्री च तृणेक्षुस्तृणबल्वजा । मौञ्जीपत्रा दृढतृणा पानीयाश्वा दृढक्षुरा ॥ ४० ॥

गुणाः—बल्वजा मधुरा शीता पित्तदाहतृषापहा । वातप्रकोपनी रुच्या कण्ठशुद्धिकरी परा ॥ ४१ ॥

## ( १९ ) भूतृणम् ।

भूतृणं रोहिणो भूतिर्भूतिकोऽथ कुटुम्बकः । मालातृणं सुमाली च च्छत्रोऽतिच्छत्रकस्तथा ॥ ४२ ॥ गुह्यबीजः सुगन्धश्च गुंलालः पुंस्त्वविग्रहः । बधिरश्चातिगन्धश्च शृङ्गरोहः शरेन्दुकः ॥ ४२ ॥

गुणाः—भूतृणं कटुतिक्तं च वातसंतापनाशनम् । हन्ति भूतग्रहावेशान्विषदोषांश्च दारुणान् ॥ ४३ ॥

## ( २० ) सुगन्धतृणम् ।

सुगन्धभूतृणश्चान्यः सुरसः सुरभिस्तथा । गन्धतृणः सुगन्धश्च मुखवासः षडाह्वयः ॥ ४४ ॥

गुणाः—गन्धतृणं सुगन्धि स्यादीषत्तिक्तं रसायनम् । स्निग्धं मधुरशीतं च कफपित्तश्रमापहम् ॥ ४५ ॥

## ( २१ ) उखलः ( उखलः )

उखलो भूरिपत्रश्च सुतृणश्च तृणोत्तमः ।

गुणाः—उखलो बलदो रुच्यः पशूनां सर्वदा हितः ॥ ४६ ॥

---

१ ज. गुच्छबुशरवि'। २ ज. उस्वरो । झ. उषलो । ट. उखरो । ३ ज. उस्वरो । ट. उखरो ।

## ( २२ ) इक्षुदर्भा ।

इक्षुदर्भा सुदर्भा च पत्रालुस्तृणपत्रिका ।
गुणाः—इक्षुदर्भा सुमधुरा स्निग्धोष्णा तु कषायका । कफपित्तहरा रुच्या लघुः संतर्पणी स्मृता ॥ ४७ ॥

## ( २३ ) गोमूत्रिका ।

गोमूत्रिका रक्ततृणा क्षेत्रजा कृष्णभूमिजा ।
गुणाः—गोमूत्रिका तु मधुरा वृष्या गोदुग्धदायिनी ॥ ४८ ॥

## ( २४ ) शिल्पिका ।

शिल्पिका शिल्पिनी शीता क्षेत्रजा च मृदुच्छदा ।
गुणाः—शिल्पिका मधुरा शीता तद्वीजं बलवृष्यदम् ॥ ४९ ॥

## ( २५ ) निश्रेणिका ।

निश्रेणिका श्रेणिका च नीरसा [1]वनवल्लरी ।
गुणाः—निश्रेणिका नीरसोष्णा पशूनामबलप्रदा ॥ ५० ॥

## ( २६ ) गर्मोटिका ।

गर्मोटिका सुनीला च [2]जरडी च जलाश्रया ।
गुणाः—[3]जरडी मधुरा शीता सारिणी दाहहारिणी ॥ ५१ ॥

## ( २७ ) मज्जरः ।

मज्जरः पवनः प्रोक्तः सुतृणः स्निग्धपत्रकः । मृदुग्रन्थिश्च मधुरो धेनुदुग्धकरश्च सः ॥ ५२ ॥

## ( २८ ) तृणाढ्यम् । (तृणाख्यम्)

[4]तृणाढ्यं पर्वततृणं पत्राढ्यं च मृगप्रियम् ।
गुणाः—बलपुष्टिकरं रुच्यं पशूनां सर्वदा हितम् ॥ ५३ ॥

## ( २९ ) वंशपत्री ।

वंशपत्री वंशदला [5]जीरिका जीर्णपत्रिका ।
गुणाः—वंशपत्री सुमधुरा शिशिरा पित्तनाशिनी । रक्तदोषहरा रुच्या पशूनां दुग्धदायिनी ॥ ५४ ॥

---

१ ज. वनवल्लभा । २ ज. जठरी । ट. जरटी । ३ ज. जठरी । ट. जरटी । ४ झ. तृणाख्यं ।
५ ज. जिरिका ।

## ( ३० ) मन्थानकः ।

मन्थानकस्तु हरितो दृढमूलस्तृणाधिपः ।
गुणाः—स्निग्धो धेनुप्रियो दोग्धा मधुरो बहुवीर्यकः ॥ ५५ ॥

## ( ३१ ) पल्लिवाहः ।

पल्लिवाहो दीर्घतृणः सुपत्रस्ताम्रवर्णकः ।
गुणाः—अर्हदं शाकपत्रादि पशूनां च बलप्रदः(म्) ॥ ५६ ॥

## ( ३२ ) लवणतृणम् ।

लवणतृणं लोणतृणं तृणाम्लं पटुतृणकमम्लकाण्डं च ।
गुणाः—पटुतृणकं क्षाराम्लं कषायस्तन्यमश्ववृद्धिकरम् ॥ ५७ ॥

## ( ३३ ) पण्यन्धः ।

पण्यन्धः कङ्कुणीपत्रः पण्यन्धा पणधा च सः ।
गुणाः—पण्यन्धा समवीर्या स्यात्तिक्ता क्षारा च सारिणी ॥ ५८ ॥ तत्कालशस्त्रघातस्य व्रणसंरोपणी परा । दीर्घा मध्या तथा ह्रस्वा पण्यन्धा त्रिविधा स्मृता ॥ ५९ ॥

## (३४) गुण्डः ।

गुण्डस्तु काण्डगुण्डः स्याद्दीर्घकाण्डस्त्रिकोणकः । छत्रगुच्छोऽसिपत्रश्च नीलपत्रस्त्रिधारकः ॥ ६० ॥ वृत्तगुण्डोऽपरो वृत्तो दीर्घनालो जलाश्रयः । तत्र स्थूलो लघुश्चान्यस्त्रिधाऽयं द्वादशाभिधः ॥ ६१ ॥
गुणाः—गुण्डास्तु मधुराः शीताः कफपित्तातिसारहाः । दाहरक्तहरास्तेषां मध्ये स्थूलतरोऽधिकः ॥ ६२ ॥

## (३५) गुण्डकन्दः ।

गुण्डकन्दः कसेरुः स्यात्क्षुद्रमुस्ता कसेरुका । सूकरेष्टः सुगन्धिश्च सुकन्दो गन्धकन्दकः ॥ ६३ ॥
गुणाः—कसेरुकः कषायोऽल्पमधुरोऽतिखरस्तथा । रक्तपित्तप्रशमनः शीतो दाहश्रमापहः ॥ ६४ ॥

## (३६) चणिका।

चणिका दुग्धदा गौल्या सुनीला क्षेत्रजा हिमा ।
गुणाः—वृष्या बल्याऽतिमधुरा बीजैः पशुहिता तृणैः ॥ ६५ ॥

१ झ. 'दृढः शा' । २ झ. सुगन्धो । ३ झ. गन्धकन्दलः । ४ ज. 'धुरः कटुतिक्तकः । र' ।

## ( ३७ ) गुण्डासिनी ।

गुण्डासिनी तु गुण्डा गुण्डाला गुच्छमूलका चिपिटा । तृणपत्री जलवासा पृथुला सुविष्टरा च नवाह्वा ॥ ६६ ॥

गुणाः—गुण्डासिनी कटुः स्वादे पित्तदाहश्रमापहा । तिक्तोष्णा १श्वयथुघ्नी च व्रणदोषनिबर्हणी ॥ ६७ ॥

## ( ३८ ) शूली ।

शूली तु शूलपत्री स्यादशाखा धूम्रमूलिका । जलाश्रया मृदुलता पिच्छला महिषीप्रिया ॥ ६८ ॥

गुणाः—शूली तु पिच्छिला चोष्णा गुरुर्गौल्या बलप्रदा । पित्तदाहहरा रुच्या दुग्धवृद्धिप्रदायिका ॥ ६९ ॥

## ( ३९ ) हिज्जलः ।

हिज्जुलोऽथ नदीकान्तो जलजो दीर्घपत्रकः । नदीजो निचुलो रक्तः कार्मुकः कथितश्च सः ॥ ७० ॥

गुणाः—हिज्जुलः कटुरुष्णश्च पवित्रो भूतनाशनः । वातामयहरो नानाग्रह-संचारदोषजित् ॥ ७१ ॥

—:०:—

इत्थं नानाकण्टकिविटपिप्रस्तावव्याख्यातैरण्डादिकतृणविस्ताराढ्यम् । वर्गं विद्वान्वैद्यकेविषयप्रावीण्यं २ज्ञेयापण्यारण्यकगुणमीयाद्वैद्यः॥७२॥ दुर्वारां विकृतिं स्वसेवनविदां भिन्दन्ति ये भूयसा ३दुर्ग्राह्याश्च हठेन कण्टकितया सूक्ष्माश्च ये केचन । तेषामेष महागमान्तरभुवामारण्यकानां किल क्रूरातङ्कभयार्तनिर्वृतिकरो वर्गः सतां संमतः ॥ ७३ ॥ द्विजानां यो राजा जयति रचयन्नोषधिगणं प्रतीतोऽयं नृणाममृतकरतां धारयति च । अमुष्यायं वर्गो नृहरिकृतिनः काङ्क्षति कृतौ स्थितिं शाल्मल्यादिर्वसुभिरभिधाशेखरमणौ ॥ ७४ ॥

इति वैद्यराजराजमुकुटमण्डलीमाणिक्यमणिमण्डनायितश्रीमदीश्वरपाण्डितात्मजश्री-मदुमारमणचरणनलिनाराधनराजहंसश्रीकाश्मीराद्यवंशाचार्यपरंपरान्वयल-ब्धाधिकारश्रीनरसिंहपण्डितविरचिते निघण्टुराजापरनामधेयवत्यभि-धानचूडामणावरण्यवर्गापरनामा शाल्मल्यादिरष्टमो वर्गः ॥ ८ ॥

---

१ ट. 'ष्णा च पशुघ्नी । २ झ. 'ककथितप्रा' । ३ झ. दुर्वाह्या' ।

# अथ प्रभद्रादिर्नवमो वर्गः—

प्रभद्रः पञ्चधा प्रोक्तः काश्मर्यो लघुपूर्वकः । द्विरग्निमन्थः श्योनाकद्वितयं चाजशृङ्गिका ॥ १ ॥ काश्मर्योऽश्मन्तकश्चाथ कर्णिकारद्वयं तथा । वृश्चिकाली च कुटजस्तद्बीजं च शिरीषकः ॥ २ ॥ करञ्जाः षड्विधाः कोलो नीलः सर्जश्च कर्णकौ । तालश्रीतालहिन्तालमाडास्तूलस्तमालकाः ॥ ३ ॥ चतुर्विधः कदम्बोऽथ वानीरः कुम्भवेतसः । धवश्च धन्वनो भूर्जस्तिनिशश्च ततोऽर्जुनः ॥ ४ ॥ हरिद्रुदुग्धाशाखोटाः शाकोऽथो शिंशपात्रयम् । असनत्रयं वरुणः पुत्रजीवश्च पिण्डिका ॥ ५ ॥ कारस्करोऽथ कटभी क्षवको देवसर्षपः । इङ्गुर्विकङ्कतश्चेति शराब्धिगणिताः क्रमात् ॥ ६ ॥

## (१) वृश्चिकाली ।

वृश्चिकाली विषाणी च विषघ्नी नेत्ररोगहा । उष्ट्रिकाऽप्यलिपर्णी च दक्षिणावर्तकी तथा ॥ ७ ॥ कलिकाऽप्यागमावर्ता देवलाङ्गुलिका तथा । करभा भूरिदुग्धा च कर्कशा चामरा च सा ॥ ८ ॥ स्वर्णपुष्पा युग्मफला तथा क्षीरविषाणिका । प्रोक्ता भासुरपुष्पा च वसुचन्द्रसमाह्वया ॥ ९ ॥

गुणाः—वृश्चिकाली कटुस्तिक्ता सोष्णा हृद्वक्त्रशुद्धिकृत् । रक्तपित्तहरा बल्या विबन्धारोचकापहा ॥ १० ॥

## (२) नीलः ।

नीलस्तु नीलवृक्षो वातारिः शोफनाशनो नरनामा । नखवृक्षश्च नखालुर्नखप्रियो दिग्गजेन्द्रमितसंज्ञः ॥ ११ ॥

गुणाः—नीलवृक्षस्तु कटुकः कषायोष्णो लघुस्तथा । वातामयप्रशमनो नानाश्वयथुनाशनः ॥ १२ ॥

## (३) जरणद्रुमः ।

जरणद्रुमोऽश्वकर्णस्तार्क्ष्यप्रसवश्च सस्यसंवरणः । धन्यश्च दीर्घपर्णः कुशिकतरुः कौशिकश्चापि ॥ १३ ॥

गुणाः—अश्वकर्णः कटुस्तिक्तः स्निग्धः पित्तास्रनाशनः । ज्वरविस्फोटककण्डुघ्नः शिरादोषार्तिकृन्तनः ॥ १४ ॥

---

१ ज. °टजः कौटजं । झ. ड. °टजः स्नुहीजं । २ ज. °र्णदा सा यु° । ३ झ. °नः । उरोवि° । ४ ज. शिरोदो° ।

## ( ४ ) तमालः ।

तमालो नीलतालः स्यात्कालस्कन्धस्तमालकः । नीलध्वजश्च तापिच्छः कालतालो महाबलः ॥ १५ ॥

गुणाः—तमालो मधुरो बल्यो वृष्यश्च शिशिरो गुरुः । कफपित्ततृषादाहश्रमभ्रान्तिकरः परः ॥ १६ ॥

## (५) वानीरः ।

वानीरो वृत्तपुष्पश्च शाखालो जलवेतसः । व्याधिघातः परिव्याधो नादेयो जलसंभवः ॥ १७ ॥

गुणाः—वानीरस्तिक्तशिशिरो रक्षोघ्नो व्रणशोधनः । पित्तास्रकफदोषघ्नः संग्राही च कषायकः ॥ १८ ॥

## ( ६ ) कुम्भीरः ।

कुम्भी रोमालुविटपी रोमशः पर्पटद्रुमः ।

गुणाः—कुम्भी कटुः कषायोष्णो ग्राही वातकफापहः ॥ १९ ॥

## ( ७ ) धन्वनः ।

धन्वनो रक्तकुसुमो धनुर्वृक्षो महाबलः । रुजासहः[1] पिच्छलको रूक्षः स्वादुफलश्च सः ॥ २० ॥

गुणाः—धन्वनः कटुकोष्णश्च कषायः कफनाशनः । दाहशोषकरो ग्राही कण्ठामयशमप्रदः ॥ २१ ॥

## ( ८ ) भूर्जः ।

भूर्जो वल्कद्रुमो भूर्जः सुचर्मा भूर्जपत्रकः । चित्रत्वग्बिन्दुपत्रश्च रक्षापत्रो विचित्रकः ॥ २२ ॥ भूतघ्नो मृदुपत्रश्च शैलेन्द्रस्थो द्विभूमितः ।

गुणाः—भूर्जः कटुकषायोष्णो भूतरक्षाकरः परः । त्रिदोषशमनः पथ्यो दुष्टकौटिल्यनाशनः ॥ २३ ॥

## ( ९ ) तिनिसः ।

तिनिशः स्यन्दनश्चक्री रैथाङ्गः[2] शकटो रथः । रथिका भस्मगर्भश्च मेषी जलधरो दश ॥ २४ ॥

गुणाः—तिनिशस्तु कषायोष्णः कफरक्तातिसारजित् । ग्राहको दाहजननो वातामयहरः परः ॥ २५ ॥

---

१ ट. रुजापहः । २ झ. ढ. शताङ्गः ।

## ( १० ) हरिद्रुः ।

हरिद्रुः पीतदारुः स्यात्पीतकाष्ठश्च पीतकः । कदम्बकः सुपुष्पश्च सुराह्वः पीतकद्रुमः ॥ २६ ॥

गुणाः—हरिद्रुः शीतलस्तिक्तो मङ्गल्यः पित्तवान्तिजित् । अङ्गकान्तिकरो बल्यो नानात्वग्दोषनाशनः ॥ २७ ॥

## ( ११ ) दग्धा ।

दग्धा दग्धरुहा प्रोक्ता दग्धिका च स्थलेरुहा । रोमशा कर्कशदला भस्मरोहा सुदग्धिका ॥ २८ ॥

गुणाः—दग्धा कटुकषायोष्णा कफवातनिकृन्तनी । पित्तप्रकोपनी चैव जठरानलदीपनी ॥ २९ ॥

## ( १२ ) शाखोटः ।

शाखोटः स्याद्भूतवृक्षो गवाक्षी घूकावासो भूर्जपत्रश्च पीतः ।

गुणाः—कौशिक्योऽजक्षीरनाशश्च सूक्तस्तिक्तोष्णोऽयं पित्तकृद्वातहारी॥३०॥

## ( १३ ) *पुत्रजीवः ।

पुत्रजीवः पवित्रश्च गर्भदः सुतजीवकः । कुटजीवोऽपत्यजीवः सिद्धिदोऽपत्यजीवकः ॥ ३१ ॥

गुणाः—पुत्रजीवो हिमो वृष्यः श्लेष्मदो गर्भजीवदः । चक्षुष्यः पित्तशमनो दाहतृष्णानिवारणः ॥ ३२ ॥

## ( १४ ) महापिण्डी ।

महापिण्डीतरुः प्रोक्तः श्वेतपिण्डीतकश्च सः । करहाटः क्षुरश्चैव शल्यकोशतरुः सरः ॥ ३९ ॥

गुणाः—पिण्डीतरुः कषायोष्णस्त्रिदोषशमनोऽपि च । चर्मरोगापहश्चैव विशेषाद्रक्तदोषजित् ॥ ४० ॥

## ( १५ ) कारस्करः ।

कारस्करस्तु किंपाको विषतिन्दुर्विषद्रुमः । गरद्रुमो रम्यफलः कुपाकः कालकूटकः ॥ ४१ ॥

---

* पुत्रजीववृक्षः कोलापुरे प्रसिद्धः ।

---

१ ज. 'वातजि' । २ झ. ढ. 'कंरद' । ३ ज. ट. 'हश्रमनि' । ४ ट. 'तकः प्रो' ।

गुणाः—कारस्करः कटूष्णश्च तिक्तः कुष्ठविनाशनः। वातामयास्रकण्डूति-कफामार्शोव्रणापहः ॥ ४२ ॥

## ( १६ ) कटभी।

कटभी नाभिका शौण्डी पाटली किणिही तथा। मधुरेणुः क्षुद्रशामा कैडर्यः श्यामला नव ॥ ४३ ॥ शितादिकटभी श्वेता किणिही गिरिकर्णिका। शिरीषपत्रा कालिन्दी शतपादी विषघ्निका ॥ ४४ ॥ महाश्वेता महाशौण्डी महादिकटभी दश।

गुणाः—कटभी भवेत्कटूष्णा गुल्मविषाध्मानशूलदोषघ्नी। वातकफाजीर्णरुजाशमनी श्वेता च तत्र गुणयुक्ता ॥ ४५ ॥

## ( १७ ) क्षुवकः।

क्षुवकः क्षुरकस्तीक्ष्णः क्रूरो भूताङ्कुशः क्षवः। राजोद्वेजनसंज्ञश्च भूतद्रावी ग्रहाह्वयः ॥ ४६ ॥

गुणाः—भूताङ्कुशस्तीव्रगन्धः कषायोष्णः कटुस्तथा। भूतग्रहादिदोषघ्नः कफवातनिकृन्तनः ॥ ४७ ॥

## ( १८ ) देवसर्षपकः।

देवसर्षपकश्चाक्षो बदरो रक्तमूलकः। सुरसर्षपकश्चैन्द्रस्तथा सूक्ष्मदलः स्मृतः ॥ ४८ ॥ सर्षपो निर्जरादिः स्यात्कुरराङ्घ्रिर्नवाभिधः।

गुणाः—देवसर्षपनामा तु कटूष्णः कफनाशनः। जन्तुदोषहरो रुच्यो वक्त्रामयविशोधनः ॥ ४९ ॥

## ( १९ ) लकुचः।

लकुचो लिकुचः शालः कषायी दृढवल्कलैः। दृढः कार्श्यश्च शूरश्च स्थूलस्कन्धो नवाह्वयः ॥ ५० ॥

गुणाः—लकुचः स्वरसे तिक्तः कषायोष्णो लघुस्तथा। कैफदोषहरो दाँही मलसंग्रहदायकः ॥ ५१ ॥

—:•:—

इत्थं वन्यमहीरुहाह्वयगुणाभिख्यानमुख्याऽनया भङ्ग्या भङ्गुरिताभिधान्तरमहाभोगश्रिया भास्वरम्। वैद्यो वेद्यतु वर्गमेनमखिलं विज्ञाय वैज्ञानिकः प्रज्ञालोकविजृम्भणेन रहसा स्वैरं गदानां गणम् ॥ ५२ ॥ ये वृश्चन्ति नृणां

---

१ ज. °कफवातत्र°। २ ट. °कः क्षरक°। ३ घ. ढ. °लः। दद्रूकार्शश्च। ४ ज. ट. कण्ठदो°। ५ ज. ग्राही।

गदान्गुरुतरानाक्रम्य वीर्यासिना ये स्थित्वाऽपि वने गुणेन सरुजां स्वेनावनं तन्वते । तेषामेष महानसीममहिमा वन्यात्मनां वासभूर्वृक्षाणां भणितो भिषग्भिरसमो यो वृक्षवर्गाख्यया ॥ ५३ ॥ यः काश्मीरकुलोज्ज्वलाम्बुजवनीहंसोऽपि संसेव्यते नित्योल्लासितनीलकण्ठमनसः प्रीत्याद्यभग्नश्रिया । तस्यायं नवमः कृतौ नरहरेर्वर्गः प्रभद्रादिको भद्रात्मन्यभिधानशेखरशिखाचूडामणौ संस्थितः ॥ ५४ ॥

इति श्रीवैद्यकराजमण्डलीमौलिमाणिक्यमण्डनश्रीमदीश्वरपण्डिततनुजातकात्यायनीरमणचरणारविन्दसौख्यजालसराजहंसश्रीकाश्मीराद्यवंशाचार्यश्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्यायेऽभिधानचूडामणौ प्रभद्रादिर्नवमो वर्गः ॥ ९ ॥

## अथ करवीरादिर्दशमो वर्गः—

चतुर्धा करवीरोऽथ धत्तूरत्रितयं तथा । कोविदारोऽब्धिरर्कः स्यान्नमेरुः किंशुकस्तथा ॥ १ ॥ पुंनागस्तिलकोऽगस्त्यः पाटल्यौ च द्विधा स्मृते । अशोकश्चम्पको धन्वी केतकी द्विविधा तथा ॥ २ ॥ सिन्दूरी च तथा जाती मुद्गरः शतपत्रिका । मल्लिका च चतुर्धा स्याद्वासन्ती नवमल्लिका ॥ ३ ॥ अतिमुक्तो द्विधा यूथी कुब्जको मुचकुन्दकः । करुणी माधवी चाथ गणिकारी च कुन्दकः ॥ ४ ॥ बककेविकबन्धूकास्त्रिसंधिश्च जपा तथा । मोक्ता भ्रमरमारी च तरुण्यम्लानकस्तथा ॥ ५ ॥ किङ्किरातोऽथ बालाख्यो झिण्टिका चोष्ट्रकाण्डिका । तगरं दमनद्वंद्वं तुलसी मरुवो द्विधा ॥ ६ ॥ अर्जकश्च चतुर्गङ्गापत्री पाच्यौ च वालकः । बर्बरो मश्विकापत्रः मोक्ता चाऽऽरामशीतला ॥ ७ ॥ अथ कमलपुण्डरीकाह्वयकोकनदानि पद्मिनी चैव । पद्माक्षं च मृणालं तत्कन्दः केसरश्च तथा ॥८॥ उत्पलकुमुदकुवलयमुत्पलिनी मरन्दो बाणषण्मित्या(?)। उत्तंसनाम्नि वर्गे द्रव्याण्यत्रोपदिश्यन्ते ॥ ९ ॥

### ( १ ) सुरपुंनागः ।

नमेरुः सुरपुंनागः सुरेष्टः सुरपर्णिका । सुरतुङ्गश्च पञ्चाह्वः पुंनागगुणसंयुतः ॥ १० ॥

### ( २ ) पुंनागः ।

पुंनागः पुरुषस्तुङ्गः पुंनामा पाटलः पुमान् । रक्तपुष्पो रक्तरेणुररुणोऽयं नवाह्वयः ॥ ११ ॥

गुणाः—पुंनागो मधुरः शीतः सुगन्धिः पित्तनाशकृत् । भूतविद्रावणश्चैव देवतानां प्रसादनः ॥ १२ ॥

## ( ३ ) अगस्त्यः ।

अगस्त्यः शीघ्रपुष्पः स्यादगस्तिस्तु मुनिद्रुमः । व्रणारिर्दीर्घफलको वक्रपुष्पः सुरप्रियः ॥ १३ ॥

गुणाः—सितपीतनीललोहितकुसुमविशेषाच्चतुर्विधोऽगस्तिः । मधुरशिशिरस्त्रिदोषश्रमकासविनाशनश्च भूतघ्नः ॥ १४ ॥ तथाच—अगस्त्यं शिशिरं गौल्यं त्रिदोषघ्नं श्रमापहम् । बलासकासवैवर्ण्यभूतघ्नं च बलापहम् ॥ १५ ॥

## ( ४ ) सितपाटलिः ।

सितपाटलिका चान्या सितकुम्भी फलेरुहा । सिता मोघा कुबेराक्षी सिताह्वा काष्ठपाटला ॥ १६ ॥ पाटली धवला प्रोक्ता ज्ञेया वसुमिताह्वया ॥ १७ ॥

गुणाः—सितपाटलिका तिक्ता गुरूष्णा वातदोषनुत् । वमिहिक्काकफघ्नी च श्रमशोषापहारिका ॥ १८ ॥

## ( ५ ) सिन्दूरी ।

सिन्दूरी वीरपुष्पश्च तृणपुष्पी करच्छदः । सिन्दूरपुष्पी शोणादिपुष्पी बाणाह्वयः स्मृतः ॥ १९ ॥

गुणाः—सिन्दूरी कटुका तिक्ता कषाया श्लेष्मवातजित् । शिरोर्तिशमनी भूतनाशा चण्डीप्रिया भवेत् ॥ २० ॥

## ( ६ ) मुद्गरः ।

मुद्गरो गन्धसारस्तु सप्तपत्रश्च कर्दमी । वृत्तपुष्पोऽतिगन्धश्च गन्धराजो विटप्रियः ॥ २१ ॥ गेयप्रियो जनेष्टश्च मृगेष्टो रुद्रसंमितः ।

गुणाः—मुद्गरो मधुरः शीतः सुरभिः सौख्यदायकः । मनोज्ञो मधुपानन्दकारी पित्तप्रकोपहृत् ॥ २२ ॥

## ( ७ ) मल्लिका ।

मल्लिका मोदिनी चान्या वटपत्रा कुमारिका । सुगन्धाढ्या वृत्तपुष्पा मुक्ताभा वृत्तमल्लिका ॥ २३ ॥

गुणाः—नेत्ररोगापहर्त्री स्यात्कटूष्णा वृत्तमल्लिका । व्रणघ्नी गन्धबहुला दारयत्यास्यजान्गदान् ॥ २४ ॥

---

१ ज. °पुष्पी चारुण° । २ ज. सदापत्रा तु क° । 48

## ( ८ ) मुचकुन्दः ।

मुचकुन्दो बहुपत्रः सुदलो हरिवल्लभः सुपुष्पश्च । अर्घ्यार्हो लक्ष्मणको रक्तप्रसवश्च वसुनामा ॥ २५ ॥

गुणाः—मुचकुन्दः कटुतिक्तः कफकासविनाशनश्च कंण्टहरः । त्वग्दोषशोफशमनो व्रणपामाविनाशनश्चैव ॥ २६ ॥

## ( ९ ) करुणी ।

करुणी ग्रीष्मपुष्पी स्याद्रक्तपुष्पी च वारुणी । राजप्रिया राजपुष्पी सूक्ष्मा च ब्रह्मचारिणी ॥ २७ ॥

गुणाः—करुणी कटुतिक्तोष्णा कफमारुतनाशिनी । आध्मानविषविच्छर्दिजेन्त्रूर्ध्वश्वासहारिणी ॥ २८ ॥

## ( १० ) माधवी ।

माधवी चन्द्रवल्ली च सुगन्धा भ्रमरोत्सवा । भृङ्गप्रिया भद्रलता भूमिमण्डपभूषणी ॥ २९ ॥

गुणाः— माधवी कटुका तिक्ता कषाया मदगन्धिका । पित्तकासव्रणान्हन्ति दाहशोकविनाशिनी ॥ ३० ॥

## ( ११ ) *गणिकारी ।

गणिकारी काञ्चनिका काञ्चनपुष्पी वसन्तदूती च । गन्धकुसुमाऽतिमोदा वासन्ती मदमादिनी चैव ॥ ३१ ॥

गुणाः—गणिकारी सुरभितरा त्रिदोषशमनी च दाहशोषहरा । कामक्रीडाडम्बरशम्बरहरचापलप्रसरा ॥ ३२ ॥

## ( १२ ) केविका ।

केविका कविका केवा भृङ्गारिर्नृपवल्लभा । भृङ्गमारी महागन्धा राजकन्याऽलिमोहिनी ॥ ३३ ॥

गुणाः—केविका मधुरा शीता दाहपित्तश्रमापहा । वातश्लेष्मरुजां हन्त्री पित्तच्छर्दिविनाशिनी ॥ ३४ ॥

## ( १३ ) बन्धूकः ।

बन्धूको बन्धुजीवः स्यादोष्ठपुष्पोऽर्कवल्लभः । मध्यंदिनो रक्तपुष्पो रागपुष्पो हरिप्रियः ॥ ३५ ॥ असितसितपीतलोहितपुष्पविशेषाच्चतुर्विधो बन्धूकः ।

* इयं गणिकारी कोंकणे प्रसिद्धा ।

१ ज. कण्ठकरः । झ. ढ. कण्ठदोषहरः । २ ज. ट. 'जन्तुघ्नश्वा' ।

गुणाः—ज्वरहारी विविधग्रहपिशाचशमनः प्रसादनः सवितुः स्यात् ॥३६॥

## ( १४ ) त्रिसंधिः ।

त्रिसंधिः सांध्यकुसुमा संधिवल्ली सदाफला । त्रिसंध्यकुसुमा कान्ता सुकुमारा च संधिजा ॥ ३७ ॥ त्रिसंधिस्त्रिविधा ज्ञेया रक्ता चान्या सिताऽसिता ।

गुणाः—कफकासहरा रुच्या त्वग्दोषशमनी परा ॥ ३८ ॥

## ( १५ ) जपा ।

जपाख्या ओण्ड्काख्या च रक्तपुष्पी जवा च सा । अर्कप्रिया रक्तपुष्पी प्रातिका हरिवल्लभा ॥ ३९ ॥

गुणाः—जपा तु कटुरुष्णा स्यादिन्द्रलुप्तकनाशकृत् । विच्छर्दिजन्तुजननी सूर्याराधनसाधनी ॥ ४० ॥

## ( १६ ) भ्रमरारिः ( मालवे प्रसिद्धा )

भ्रमरारिर्भृङ्गमारी भृङ्गारिर्मासपुष्पिका । कुष्ठारिर्भ्रमरी चैव ज्ञेया यष्टिलता मुनिः ॥ ४१ ॥

गुणाः—तिक्ता भ्रमरमारी स्याद्वातश्लेष्मज्वरापहा । शोफकण्डूतिकुष्ठघ्नी व्रणदोषास्थिदोषनुत् ॥ ४२ ॥

## ( १७ ) उष्ट्रकाण्डी ।

उष्ट्रकाण्डी रक्तपुष्पी ज्ञेया करभकाण्डिका । रक्ता लोहितपुष्पी च वर्णपुष्पी षडाह्वया ॥ ४३ ॥

गुणाः—उष्ट्रकाण्डी तु तिक्तोष्णा रुच्या हृद्रोगहारिणी । तद्बीजं मधुरं शीतं वृष्यं संतर्पणं स्मृतम् ॥ ४४ ॥

## ( १८ ) गङ्गापत्री ।

गङ्गापत्री तु पत्री स्यात्सुगन्धा गन्धपत्रिका ।

गुणाः—गङ्गापत्री कटूष्णा च वातजिद्व्रणरोपणी ॥ ४५ ॥

## ( १९ ) पाची ।

पाची मरकतपत्री हरितलता हरितपत्रिका पत्री । सुरभिर्मल्लारिष्टा गारुत्मतपत्रिका चैव ॥ ४६ ॥

गुणाः—पाची कटुतिक्तोष्णा सकषाया वातदोषहृन्नी च। ग्रहभूतविकारकारी त्वग्दोषप्रशमनी व्रणेषु हिता ॥ ४७ ॥

## ( २० ) बर्बरः ।

बर्बरः सुमुखश्चैव गरघ्नः कृष्णबर्बरः । सुकन्दनो गन्धपत्रः पूतगन्धः सुराईकः ॥ ४८ ॥

गुणाः—बर्बरः कटुकोष्णश्च सुगन्धिर्वान्तिनाशनः [2] । विसर्पविषविध्वंसी त्वग्दोषशमनस्तथा ॥ ४९ ॥

## ( २१ ) सुरपर्णम् ।

सुरपर्णं देवपर्णं वीरपर्णं सुगन्धिकम् । मञ्जिपत्रं सूक्ष्मपत्रं देवार्हं गन्धपत्रकम् ॥ ५० ॥

गुणाः—कटूष्णं सुरपर्णं च कृमिश्वासबलासजित् । दीपनं कफवातघ्नं वर्ण्यं बालहितं [3] तथा ॥ ५१ ॥

## ( २२ ) आरामशीतला ।

आरामशीतला नन्दा शीतला सा सुनन्दिनी । रामा चैव महानन्दा गन्धाढ्याऽऽरामशीतला ॥ ५२ ॥

गुणाः—आरामशीतला तिक्ता शीतला पित्तहारिणी । दाहशोषप्रशमनी विस्फोटव्रणरोपणी ॥ ५३ ॥

## ( २३ ) पुष्पद्रवः ।

पुष्पद्रवः पुष्पसारः पुष्पस्वेदश्च पुष्पजः । पुष्पनिर्यासकश्चैव पुष्पाम्बुजः षडाह्वयः ॥ ५४ ॥

गुणाः—पुष्पद्रवः सुरभिशीतकषायगौल्यो दाहश्रमार्तिवमिमोहमुखामयघ्नः । तृष्णार्तिपित्तकफदोषहरः सरश्च संतर्पणश्चिरमरोचकहारकश्च ॥ ५५ ॥

## ( २४ ) जात्यादिमोदः ।

गुणाः—जाती भाति मृदुर्मनोज्ञमधुराऽऽमोदो मुहूर्तद्वयं द्वैगुण्येन च मल्लिका मदकरी गन्धाधिका यूथिका । एकाहं वनमालिका मदकरं चाहां त्र्यं चम्पकं तीव्रामोदमथाष्टवासरमितामोदान्विता केतकी ॥ ५६ ॥

—:०:—

इत्थं नानाप्रथितसुमनःपत्रपत्राभिधानप्रस्थानोक्तिप्रगुणिततया तद्गुणाख्याप्रवीणम् । वाचोयुक्तिस्थिरपरिमलं वर्गमेनं पठित्वा नित्यामोदैर्मुखसरसिजं वासयत्वाशु वैद्यः ॥ ५७ ॥ स्थैर्ये शैलशिलोपमान्यपि शनैरासाद्य तद्भावनां

१ ज. ट. 'रहरा त्व' । २ ज. 'वीतना' । ३ ज. वातहरं । ४ ज. 'मातिव' ।

भेद्यत्वं यमिनां मनांस्यपि ययुः पुष्पाशुगस्याऽऽशुगैः । तेषां भूषयतां सुरादिकशिरःपत्रप्रसूनात्मनां वर्गोऽयं वसतिर्मता सुमनसामुत्तंसवर्गाख्यया ॥ ५८ ॥

लोकान्स्पर्शनयोगतः प्रसूमराण्यामोदयन्त्यञ्जसा प्रोत्फुल्लानि च यद्यशांसि विशदान्युत्तंसयन्ते दिशः । तस्यायं दशमः कृतौ स्थितिमगाद्वर्गो नृसिंहेशितुः सूरीन्दोः करवीरकादिरभिधासंभारचूडामणौ ॥ ५९ ॥

इति श्रीनिघण्टुराजचूडामणौ करवीरादिर्दशमो वर्गः ॥ १० ॥

## अथाऽऽम्रादिरेकादशो वर्गः—

आम्राः पञ्चविधाः प्रोक्ता जम्बूश्चैव चतुर्विधा । पनसः पञ्चकदली नालिकेरद्वयं तथा ॥ १ ॥ खर्जूरी पञ्चधा चैव चारो भल्लातरायणी । दाडिमं तिन्दुकौ चाथो अक्षोटः पीलुको द्विधा ॥ २ ॥ पारेवते मधूकं तु द्विधा भव्यारुके क्रमात् । द्राक्षा त्रिधाऽथ कर्मारः परुषः पिप्पलो वटः ॥ ३ ॥ वटी अश्वत्थिका प्लक्षस्तथा चोदुम्बरस्त्रिधा । तत्त्वचा बदरं चाब्धि बीजपूरं त्रिधा मतम् ॥ ४ ॥ आमलक्यौ द्विधा चैव चिञ्चा चिञ्चारसस्तथा । आम्रातकोऽथ नारङ्गो निम्बूर्जम्बीरकद्वयम् ॥ ५ ॥ कपित्थस्तुम्बरश्चाथ रुद्राक्षो बिल्वसल्लकी । कतकः कर्कटश्चैव द्विधा श्लेष्मातकस्तथा ॥ ६ ॥ मुष्ककः करमर्दश्च तथा तेजःफलस्तथा । विकण्टकः शिवा सप्ताप्यक्षः पूगोऽष्टधा स्मृतः ॥७॥ सप्तधा नागवल्ली स्याच्चूर्णं चैवाष्टधा स्मृतम् । उक्ता आम्रादिके वर्गे वेदचन्द्रेन्दु(वृक्षास्त्रिपञ्च)संख्यया ॥ ८ ॥

### ( १ ) पनसः ( फनसः ) ( उत्तराषाढा )

पनसस्तु महासर्जः फलिनः फलवृक्षकः । स्थूलः कण्टफलश्चैव स्यान्मूलफलदः स्मृतः ॥ ९ ॥ अपुष्पफलदः पूतफलो ह्यङ्कमितस्तथा ।

गुणाः—पनसं मधुरं सुपिच्छिलं गुरु हृद्यं बलवीर्यवृद्धिदम् । श्रमदाहविशोषनाशनं रुचिकृद्ग्राहि च दुर्जरं परम् ॥ १० ॥ ईषत्कषायं मधुरं तद्बीजं वातलं गुरु । तत्फलस्य विकारघ्नं रुच्यं त्वग्दोषनाशनम् ॥ ११ ॥ बालं तु नीरसं हृद्यं मध्यपक्वं तु दीपनम् । रुचिदं लवणाद्युक्तं पनसस्य फलं स्मृतम् ॥ १२ ॥

### ( २ ) कर्मारः ।

कर्मारः कर्मरकः पीतफलः कर्मरश्च मुद्गरकः । मुद्गरफलश्च धाराफलकस्तु कर्मारकश्चैव ॥ १३ ॥

गुणाः—कर्मारकोऽम्ल उष्णश्च वातहृत्पित्तकारकः । पक्वस्तु मधुराम्लः स्याद्बलपुष्टिरुचिप्रदः ॥ १४ ॥

## ( ३ ) रुद्राक्षः ।

रुद्राक्षश्च शिवाक्षश्च शर्वाक्षो भूतनाशनः । पावनो नीलकण्ठाक्षो हराक्षश्च शिवप्रियः ॥ १५ ॥

गुणाः—रुद्राक्षमम्लमुष्णं च वातघ्नं कफनाशनम् । शिरोर्तिशमनं रुच्यं भूतग्रहविनाशनम् ॥ १६ ॥

## ( ४ ) तेजःफलः ।

तेजःफलो बहुफलस्तथोक्तः शाल्मलीफलः । फलस्तीक्ष्णादिसंयुक्तः फलान्तस्तबकादिकः ॥ १७ ॥ स्तेयीफलो गन्धफलः कण्टवृक्षः प्रकीर्तितः ।

गुणाः—तेजःफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनः परः । वातश्लेष्मारुचिघ्नश्च बालरक्षाकरः परः ॥ १८ ॥

## ( ५ ) विकण्टकः ।

विकण्टको मृदुफलो ग्रन्थिकः स्वादुकण्टकः । गोकण्टकः[1] काययातो व्याघ्रपादो घनद्रुमः ॥ १९ ॥ गर्जाफलो घनफलो मेघस्तनितोद्भवश्च मुदिरफलः । प्रावृष्यो हास्यफलः स्तनितफलः पञ्चदशसंज्ञः ॥ २० ॥

गुणाः—विकण्टकः कषायः स्यात्कटू रूक्षो रुचिप्रदः । दीपनः कफहारी च वस्त्ररङ्गविधायकः ॥ २१ ॥

—:०:—

इत्थं नानाफलतरुलतानामवत्तद्गुणादिव्यक्ताख्यानप्रगुणरचनाचारुसौरभ्यसारम् । वर्गं वक्त्राम्बुरुहवलभीलास्यलीलारसालं विद्यावैद्यः खलु सफलयेदेतमाम्नाय भूम्ना ॥२२॥ यान्युपभुञ्जानानां स भवति संसारपादपः सफलः । तेषामेष फलानां वर्गः फलवर्ग इति कथितः ॥२३॥ यस्याजस्रविकस्वरामलयशःप्राग्भारपुष्पोद्गमः साश्चर्यं विबुधेप्सितानि फलति श्रीमान्करः स्वर्द्रुमः। तस्यायं कवितुः कृतौ नरहरेराम्रादिरेकादशो वर्गः स्वर्गसभाभिषग्भिरभिधाचूडामणावीरितः ॥२४॥

इति प्रतिभटवैद्यमदकरटिकोटिकटकोत्पाटनकलाप्रगल्भपौरुषपञ्चाननविनोदविदितनिजाभिधानश्रीमदीश्वरसूरिसूनुश्रीमदमृतेशचरणारविन्दनित्याराधननिरतिशयानन्दरसानुभवसुभगान्तरङ्गश्रीकाश्मीरादिवंशपरंपरान्ववायश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्नि श्रीमदभिधानचूडामणौ फलवर्गापराख्योऽयमाम्रादिवर्ग एकादशः ॥ ११ ॥

---

१ झ. ढ. गोरण्टकः । २ झ. ढ. 'घफलस्त' ।

# अथ चन्दनादिर्द्वादशो वर्गः।

श्रीखण्डं शबरं पीतं पैत्राङ्गं रक्तचन्दनम्। बर्बरं हरिगन्धं च चन्दनं सप्तधा स्मृतम् ॥ १ ॥ देवदारु द्विधा प्रोक्तं चीडा सप्तच्छदस्तथा। सरलः कुङ्कुमं कङ्गुः कस्तूरी रोचना तथा ॥ २ ॥ कर्पूरः स्याज्जवादिस्तु नन्दी दुर्जातिपत्रिका। जातीफलं च कङ्कोलं लवङ्गं स्वादुरुच्यते ॥ ३ ॥ अगरुश्च त्रिधा मांसी तुरुष्को गुग्गुलुस्त्रिधा। रालः कुन्दुरुकः कुष्ठः सारिवा तु द्विधा नखौ ॥ ४ ॥ स्पृक्का स्थौणेयकं चैव मुरा शैलेयचोरकः। पद्मप्रपुण्डरीके च लामज्जं रोहिणी द्विधा ॥५॥ श्रीवेष्टोशीरनलिका मुनिबाण(इन्दूदधि) मिताह्वयाः।

## (१) जवादि।

जवादि गन्धराजं स्यात्कृत्रिमं मृगचर्मजम्। समूहगन्धं गन्धाढ्यं स्निग्धं साम्राणिकर्दमम् ॥ ६ ॥ सुगन्धं तैलनिर्यासं कुटामोदं दशाभिधम्।

गुणाः—सौगन्धिकं जवादि स्यात्स्निग्धं चोष्णं सुखावहम्। वाते हितं च राज्ञां च मोहनाह्लादकारणम् ॥ ७ ॥ जवादि नीलं संस्निग्धमीषत्पीतं सुगन्धदम्। आतपे बहलामोदं राज्ञां योग्यं न चान्यथा ॥ ८ ॥

—:०:—

इत्थं गन्धद्रव्यकदम्बाह्वयवीर्यव्याख्यावाचोयुक्तिविविक्तोज्ज्वलसर्गम्। वर्गं वक्त्राम्भोरुहमोदार्हमधीयाथैनं मध्येसंसदसौ दीव्यति वैद्यः ॥ ९ ॥ ये गन्धयन्ति सकलानि च भूतलानि लोकांश्च येऽपि सुखयन्ति च गन्धलुब्धान्। तेषामयं मलयजादिसुगन्धिनाम्नां भूर्गन्धवर्ग इति विश्रुतिमेति वर्गः ॥ १० ॥ उच्चैर्यच्चरितानि शीतसुरभीण्यम्भस्यसत्यात्मनां दुश्चारित्रजना निषङ्गजनितं द्राग्दौस्थ्यमास्थन्स्वकम्। तस्यायं कृतिनः कृतौ नरहरेः श्रीचन्दनादिः स्थितिं वर्गो वाञ्छति नामनैगमशिखाभूषामणौ द्वादशः ॥ ११ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्यायनामधेयवत्यभिधानचूडामणौ गन्धवर्गापरनामा चन्दनादिर्द्वादशो वर्गः ॥ १२ ॥

# अथ सुवर्णादिस्त्रयोदशो वर्गः।

त्रिस्वर्णरौप्यताम्राणि त्रपुसीसद्विरीतिका। कांस्यायोवर्तकं कान्तं किट्टं मुण्डं

१ ज. ट. पतङ्गं।

च तीक्ष्णकम् ॥ १ ॥ शिला सिन्दूरभूनागं हिङ्गुलं गैरिकं द्विधा । तुवरी हरितालं च गन्धकं च शिलाजतु ॥ २ ॥ सिक्थकं च द्विकासीसं माक्षिको पञ्चधाऽञ्जनम् । कम्पिल्लतुत्थरसकं पारदं चाभ्रकं चतुः ॥ ३ ॥ स्फटी च क्षुल्लकः शङ्खौ कपर्दः शुक्तिका द्विधा । खटिनी दुग्धपाषाणो विमला च द्विधा मता ॥४॥ सिकता च द्विकङ्कुष्ठं शर(चन्द्र)वेदमिताह्वयाः । अथ रत्नं नवं वक्ष्ये पद्मरागादिकं क्रमात् ॥ ५ ॥ माणिक्यमुक्ताफलविद्रुमाणि गारुत्मतं स्यादथ पुष्परागः । वज्रं च नीलं च नव क्रमेण गोमेदवैडूर्ययुतानि तानि ॥ ६ ॥ स्फटिकश्च सूर्यकान्तो वैक्रान्तश्चन्द्रकान्तकः । राजावर्तः पेरोजं स्यादुभौ बाणाश्वसंख्यया ॥ ७ ॥

## ( १ ) भूनागः ।

भूनागः क्षितिनागश्च भूजन्तू रक्तजन्तुकः । क्षितिजः क्षितिजन्तुश्च भूमिजो रक्ततुण्डकः ॥ ८ ॥

गुणाः—भूनागो वज्रमारः स्यान्नानाविज्ञानकारकः । रसस्य जारणे तूक्तं तत्सत्त्वं तु रसायनम् ॥ ९ ॥

## (२) स्फटिकी ।

स्फटी च स्फटिकी प्रोक्ता श्वेता शुभ्रा च रङ्गदा । रङ्गदृढा दृढरङ्गा रङ्गदा वसुसंमिता ॥ १० ॥

गुणाः—स्फटी च कटुका स्निग्धा कषाया प्रदरापहा । मेहकृच्छ्रवमीशोषदोषघ्नी दृढरङ्गदा ॥ ११ ॥

## ( ३ ) मुक्ताशुक्तिः ।

शुक्तिर्मुक्ताप्रसूश्चैव महाशुक्तिश्च शुक्तिका । मुक्तास्फोटस्तौतिकं तु मौक्तिकप्रसवा च सा ॥ १२ ॥ ज्ञेया मौक्तिकसूश्चैव मुक्तामाताऽङ्कधा स्मृता ।

गुणाः—मुक्ताशुक्तिः कटुः स्निग्धा श्वासहृद्रोगहारिणी । शूलप्रशमनी रुच्या मधुरा दीपनी परा ॥ १३ ॥

## (४) खटिनी ।

खटिनी खटिका चैव खटी धवलमृत्तिका । सितधातुः श्वेतधातुः पाण्डुमृत्पाण्डुमृत्तिका ॥ १४ ॥

---

१ ज. झ. ढ. रङ्गाङ्गा । २ ज. ट. मौक्तिकशुक्तिश्च ।

गुणाः—खटिनी मधुरा तिक्ता शीतला पित्तदाहनुत् । व्रणदोषकफास्रघ्नी नेत्ररोगनिकृन्तनी ॥ १५ ॥

## ( ५ ) दुग्धपाषाणः ।

दुग्धाश्मा दुग्धपाषाणः क्षीरीगोमेदसंनिभः । वज्राभो दीप्तिकः सौधो दुग्धी क्षीरयवोऽपि च ॥ १६ ॥

गुणाः—दुग्धपाषाणको रुच्य ईषदुष्णो ज्वरापहः । पित्तहृद्रोगशूलघ्नः कासाध्मानविनाशनः ॥ १७ ॥

## ( ६ ) कर्पूरमणिः ।

कर्पूरनामभिश्चाऽऽदावन्ते च मणिवाचकः ।

गुणाः—कर्पूरमणिनामाऽयं शुक्त्या वातादिदोषनुत् ॥ १८ ॥

## ( ७ ) आखुपाषाणः ।

मूषकस्याभिधा पूर्वं पाषाणस्याभिधा ततः ।

गुणाः—आखुपाषाणनामाऽयं लोहसंकरकारकः ॥ १९ ॥

## ( ८ ) रत्नानि ।

धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत् । ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥२०॥ द्रव्यं काञ्चनलक्ष्मीभोग्यं वसुवस्तुसंपदो वृद्धिः । श्रीर्न्यवहार्यं द्रविणं धनमर्थो राः स्वापतेयं च ॥ २१ ॥

## ( ९ ) रत्नसामान्यम् ।

रत्नं वसुमणिरुपलो दृषद्द्रविणदीप्तवीर्याणि । रौहिणकमब्धिसारं खानिकमाकरजमित्यभिन्नार्थाः ॥ २२ ॥

## ( १० ) माणिक्यम् ।

माणिक्यं शोणरत्नं च रत्नराड्रविरत्नकम् । शृङ्गारि रङ्गमाणिक्यं तरलो रत्ननायकः ॥२३॥ रागदृक्पद्मरागश्च रत्नं शोणोपलस्तथा । सौगन्धिकं लोहितकं कुरुविन्दं शरेन्दुकम् ॥ २४ ॥

गुणाः—माणिक्यं मधुरं स्निग्धं वातपित्तप्रणाशनम् । रत्नप्रयोगप्रज्ञानां रसायनकरं परम् ॥ २५ ॥

माणिक्यलक्षणम्—स्निग्धं गुरुगात्रयुतं दीप्तं स्वच्छं सुरङ्गं च । इति जात्या माणिक्यं कल्याणं धारणात्कुरुते ॥ २६ ॥

---

१ झ. ढ. क्षीरगो° । २ झ. ढ. °ग्धी क्षार° । ३ ट. युक्त्या । ४ ज. ट. तरणो । ५ ज. ट. °त्तव्रणापहम् ।

माणिक्यदोषाः—द्विच्छायमभ्रपिहितं कर्कशशर्करिलं भिन्नधूम्रं च। रागविकलं विरूपं लघुमाणिक्यं न धारयेद्धीमान् ॥ २७ ॥

चतुर्विधमाणिक्यजातिः—तद्रक्तं यदि पद्मरागमथ तत्पीतातिरक्तं द्विधा ज्ञानीयात्कुरुविन्दकं यदरुणं स्यादेषु सौगन्धिकम्। तन्नीलं यदि नीलगन्धिकमिति ज्ञेयं चतुर्धा बुधैर्माणिक्यं कषघर्षणेऽप्यविकलं रागेण जात्यं जगुः ॥ २८ ॥

## ( ११ ) पुष्परागः।

पीतस्तु पुष्परागः पीतस्फटिकश्च पीतरक्तश्च। पीताश्मा गुरुरत्नं पीतमणिः पुष्परागश्च ॥ २९ ॥

गुणाः—पुष्परागोऽम्लशीतश्च वातजिद्दीपनः परः। आयुः श्रियं च प्रज्ञां च धारणात्कुरुते नृणाम् ॥ ३० ॥

पुष्परागलक्षणम्—सच्छायपीतगुरुगात्रसुरङ्गशुद्धं स्निग्धं च निर्मलमतीव सुवृत्तशीतम्। यः पुष्परागममलं कलयेदमुष्य पुष्णाति कीर्तिमतिशौर्यसुखायुरर्थान् ॥ ३१ ॥

दुष्टपुष्परागलक्षणम्—कृष्णबिन्द्वङ्कितं रूक्षं धवलं मलिनं लघु। विच्छायं शर्कराङ्गाभं पुष्परागं सदोषकम् ॥ ३२ ॥

पुष्परागपरीक्षा—घृष्टं निकाषपट्टे यत्पुष्यति रागमधिकमात्मीयम्। तेन खलु पुष्परागो जात्यतयाऽयं परीक्षकैरुक्तः ॥ ३३ ॥

## ( १२ ) नीलः।

नीलस्तु शौरिरत्नं स्यान्नीलाश्मा नीलरत्नकः। नीलोपलस्तृणग्राही महानीलः सुनीलकः ॥ ३४ ॥

गुणाः—मसारमिन्द्रनीलं स्याद्गल्लर्कः पद्मरागजः। नीलः सतिक्तकोष्णश्च कफपित्तानिलापहः ॥३५॥ यो दधाति शरीरे स्यात्सौ(च्छौ)रिर्मङ्गलदो भवेत्।

नीललक्षणम्—ननिम्नो निर्मलो गात्रमसृणो गुरुदीप्तिकः। तृणग्राही मृदुर्नीलो दुर्लभो लक्षणान्वितः ॥ ३६ ॥

कुनीललक्षणम्—मृच्छर्कराश्मकलिलो विच्छायो मलिनो लघुः। रूक्षः स्फुटितगर्तश्च वर्ज्यो नीलः सदोषकः ॥३७॥ सितशोणपीतकृष्णाश्छाया नीले क्रमादिमाः कथिताः। विप्रादिवर्णसिद्ध्यै धारणमस्यापि वज्रवत्फलवत् ॥ ३८ ॥ आस्थानं चन्द्रिकास्यन्दं सुन्दरं क्षीरपूरितम्। यः पात्रं रञ्जयत्याशु स जात्यो नील उच्यते ॥ ३९ ॥

---

१ झ. ढ. जात्या। २ झ. ढ. °गश्नकलं। ३ ज. ट. कृष्णं बि°।

## ( १३ ) गोमेदकः ।

गोमेदकस्तु गोमेदो राहुरत्नं तमोमणिः । स्वर्भानवः षडाहोऽयं पिङ्गः स्फटिक इत्यपि ॥ ४० ॥

गुणाः—गोमेदकोऽम्ल उष्णश्च वातकोपविकारजित् । दीपनः पाचनश्चैव धृतोऽयं पापनाशनः ॥ ४१ ॥

गोमेदलक्षणम्—गोमूत्राभं यन्मृदु स्निग्धमुग्धं शुद्धच्छायं गौरवं यच्च धत्ते । हेमारक्तं श्रीमतां योग्यमेतद्गोमेदाख्यं रत्नमाख्यान्ति सन्तः ॥ ४२ ॥

गोमेदपरीक्षा—पात्रे यत्र न्यस्ते पयः प्रयात्येव गोजलोज्ज्वलताम् । घर्षेऽप्यहीनकान्ति गोमेदं तं बुधा विदुर्जात्यम् ॥ ४३ ॥ अरङ्गं श्वेतकृष्णाङ्गं रेखात्रासयुतं लघु । विच्छायं शर्करागारं गोमेदं विबुधस्त्यजेत् ॥ ४४ ॥

## ( १४ ) वैडूर्यम् ।

वैडूर्यं केतुरत्नं च कैतवं बालवीयजम् । प्रावृष्यमभ्रलोहं च सशब्दाङ्कुरकस्तथा । वैडूर्यरत्नं संप्रोक्तं ज्ञेयं विदुरजं तथा ॥ ४५ ॥

गुणाः—वैडूर्यमुष्णमम्लं च कफमारुतनाशनम् । गुल्मादिदोषशमनं भूषितं च शुभावहम् ॥ ४६ ॥

वैडूर्यलक्षणम्—एकं वेणुपलाशपेशलरुचामायूरकण्ठत्विषा मार्जारेक्षणपिङ्गलच्छविजुषा ज्ञेयं त्रिधा छायया । यद्गात्रे गुरुतां दधाति नितरां स्निग्धं तु दोषोज्झितं वैडूर्यं विमलं वदन्ति सुधियः स्वच्छं च तच्छोभनम् ॥ ४७ ॥

कुवैडूर्यलक्षणम्—विच्छायं मृच्छिलागर्भं लघु रूक्षं च सक्षतम् । सत्रासं परुषं कृष्णं वैडूर्यं दूरतस्त्यजेत् ॥ ४८ ॥

विशेषः—घृष्टं यदात्मना स्वच्छं स्वच्छायां निकषाश्मनि । स्फुटं प्रदर्शयेदेतद्वैडूर्यं जात्यमुच्यते ॥ ४९ ॥

## (१५ ) नवग्रहरत्नक्रमः ।

माणिक्यं पद्मबन्धोरतिविमलतमं मौक्तिकं शीतभानोर्माहेयस्य प्रवालं मरकतमतुलं कल्पयेदिन्दुसूनोः । देवेज्ये पुष्परागं कुलिशमपि कवेर्नीलमर्कात्मजस्य स्वर्भानोश्चापि गोमेदकमथ विदुरोद्भावितं किंतु केतोः ॥ ५० ॥

गुणाः—इत्थमेतानि रत्नानि तत्तदुद्देशतः क्रमात् । यो दद्याद्बिभृयाद्वाऽपि तस्मिन्सानुग्रहा ग्रहाः ॥ ५१ ॥

साधारणरत्नदोषाः—संत्यज्य वज्रमेकं सर्वत्रान्यत्र संघाते । लाघवमथ कोमलता साधारणदोष एव विज्ञेयः ॥ ५२ ॥

## ( १६ ) महारत्नोपरत्नानि ।

लोहितकवज्रमौक्तिकमरकतनीला महोपलाः पञ्च । वैडूर्यपुष्परागप्रवालगो-मेदकादयोऽर्वाञ्चः ॥५२॥ गोमेदप्रवालवायव्यं देवेज्यमणीन्दुतरणिकान्ताद्याः । नानावर्णगुणाढ्या विज्ञेयाः स्फटिकजातयः प्राज्ञैः ॥ ५३ ॥

## ( १७ ) स्फटिकः ।

स्फटिकः सितोपलः स्यादमलमणिर्निर्मलोपलः स्वच्छः । स्वच्छमणिरमलरत्नं निस्तुषरत्नं शिवप्रियं नवधा ॥ ५४ ॥

गुणाः—स्फटिकः समवीर्यश्च पित्तदाहार्तिदोषनुत् । तस्याक्षमाला जपतां दत्ते कोटिगुणं फलम् ॥ ५५ ॥

स्फटिकपरीक्षा—यद्गङ्गातोयबिन्दुच्छविविमलतमं निस्तुषं नेत्रहृद्यं स्निग्धं शुद्धान्तरालं मधुरमतिहिमं पित्तदाहास्रहारि । पाषाणैर्यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात्तज्जात्यं जात्वलभ्यं शुभमुपचिनुते शैवरत्नं विचित्रम् ॥ ५६ ॥

## ( १८ ) सूर्यकान्तः ।

अथ भवति सूर्यकान्तस्तपनमणिस्तपनश्च रविकान्तः । दीप्तोपलोऽग्निगर्भो ज्वलनाश्माऽर्कोपलश्च वसुनामा ॥ ५७ ॥

गुणाः—सूर्यकान्तो भवेदुष्णो निर्मलश्च रसायनः । वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः ॥ ५८ ॥

सूर्यकान्तपरीक्षा—शुद्धः स्निग्धो निर्व्रणो निस्तुषोऽन्तर्यो निर्घृष्टो[२] व्योमनैर्म[३]ल्यमेति । यः सूर्यांशुस्पर्शनिष्ठ्युतवह्निर्जात्यः सोऽयं जायते सूर्यकान्तः ॥५९॥

## ( १९ ) वैक्रान्तम् ।

वैक्रान्तं चैव विक्रान्तं नीचवज्रं कुवज्रकम् । गोनासः क्षुद्रकुलिशं[४] चूर्णवज्रं च गोनसः ॥ ६० ॥

गुणाः—वज्राभावे च वैक्रान्तं रसवीर्यादिके समम् । क्षयकुष्ठविषघ्नं च पुष्टिदं सुरसायनम् ॥ ६१ ॥ वज्राकारतयैव प्रसह्य हरणाय सर्वरोगाणाम् । यद्विक्रान्तिं धत्ते तद्वैक्रान्तं बुधैरिदं कथितम् ॥ ६२ ॥

## ( २० ) इन्दुकान्तः ।

इन्दुकान्तश्चन्द्रकान्तश्चन्द्राश्मा चन्द्रजोपलः । शीताश्मा चन्द्रिकाद्रावः शशिकान्तश्च सप्तधा ॥ ६३ ॥

---

१ ढ. 'दवाल्वायजदे' । २ झ. ट. ढ. निमृष्टो । ३ झ. ढ. व्योम्नि नै' । ४ ज. 'शं जीर्णं' ।

गुणाः—चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रतापहृत् । शिवप्रीतिकरः स्वच्छो ग्रहालक्ष्मीविनाशकृत् ॥ ६४ ॥

इन्दुकान्तलक्षणम्—स्निग्धं श्वेतं पीतमात्रासमेतं धत्ते चित्ते स्वच्छतां यन्मुनीनाम् । यच्च स्रावं याति चन्द्रांशुसङ्गाज्जात्यं रत्नं चन्द्रकान्ताख्यमेतत् ॥६५॥

## ( २१ ) पेरोजम् ।

पेरोजं हरिताश्मं च भस्माङ्गं हरितं द्विषा ॥

गुणाः—पेरोजं सुकषायं स्यान्मधुरं दीपनं परम् । स्थावरं जङ्गमं चैव संयोगाच्च यथा विषम् ॥ ६६ ॥ तत्सर्वं नाशयेच्छीघ्रं शूलं भूतादिदोषजम् ।

संस्कारहीनरत्नधातूनां च दोषाः—सिद्धाः पारदमभ्रकं च विविधान्धातूंश्च लोहानि च प्राहुः किंच मणीनपीह सकलान्संस्कारतः सिद्धिदान् । यत्संस्कारविहीनमेषु हि भवेद्यच्चान्यथा संस्कृतं तन्मर्त्यं विषवन्निहन्ति तदिह ज्ञेया बुधैः [1]संस्क्रियाः ॥ ६७ ॥ यान्संस्कृताञ्शुभगुणानथ चान्यथा चेद्दोषांश्च यानपि दिशन्ति रसादयोऽमी । याश्चेह सन्ति खलु संस्कृतयस्तदेतन्नात्राभ्यधायि बहुविस्तरभीतिभाग्भिः ॥ ६८ ॥

—:०:—

इति लोहधातुरसरत्नतच्छिदाद्यभिधागुणप्रकटनस्फुटाक्षरम् । अवधार्य वर्गमिममाद्यवैद्यकप्रगुणप्रयोगकुशलो भवेद्बुधः ॥ ६९ ॥ कुर्वन्ति ये निजगुणेन रसाध्वगेन नॄणां जरन्त्यपि वपूंषि पुनर्नवानि । तेषामयं निवसतिः कनकादिकानां वर्गः प्रसिध्यति रसायनवर्गनाम्ना ॥ ७० ॥ नित्यं यस्य गुणाः किलान्तरलसत्कल्याणभूय(ये)स्तथा चित्ताकर्षणचञ्चवस्त्रिभुवनं भूम्ना परिष्कुर्वते । तेनात्रैष कृते नृसिंहकृतिना नामादिचूडामणौ संस्थामेति मितस्त्रयोदशतया वर्गः सुवर्णादिकः ॥ ७१ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्यायनाम्न्यभिधानचूडामणौ रसायनवर्गमण्डनवर्गापरपर्यायः सुवर्णादिवर्गस्त्रयोदशः ॥ १३ ॥

---

# अथ पानीयादिश्चतुर्दशो वर्गः—

---

## ( १ ) गङ्गा ।

गङ्गा स्वर्गसरिद्वरा त्रिपथगा मन्दाकिनी जाह्नवी पुण्या विष्णुपदी समु-

---

[1] क्ष. ट. सत्क्रियाः ।

द्रसुभगा भागीरथी स्वर्णदी । त्रिःस्रोता सुरदीर्घिका सुरनदी सिद्धापगा स्वर्धुनी ज्येष्ठा जह्नुसुता च भीष्मजननी शुभ्रा च शैलेन्द्रजा ॥ १ ॥

गुणाः—शीतं स्वादु स्वच्छमत्यन्तरुच्यं पथ्यं पाक्यं पावनं पापहारि । तृष्णामोहध्वंसनं दीपनं च प्रज्ञां दत्ते वारि भागीरथीयम् ॥ २ ॥

## ( २ ) यमुना ।

यमुना तपनतनूजा कलिन्दकन्या यमस्वसा च कालिन्दी ।

गुणाः—पित्तदाहवमनश्रमापहं स्वादु वातजननं च पाचनम् । वह्निदीपनकरं[1] विरोचनं यामुनं जलमिदं बलप्रदम् ॥ ३ ॥

## ( ३ ) नर्मदा ।

रेवा मेकलकन्या सोमसुता नर्मदा च विज्ञेया ॥ ४ ॥

गुणाः—सलिलं लघु शीतलं सुपथ्यं कुरुते पित्तकफप्रकोपनम् । सकलामयमर्दनं च रुच्यं मधुरं मेकलकन्यकासमुत्थम् ॥ ५ ॥

## ( ४ ) सरस्वती ।

सरस्वती प्लक्षसमुद्भवा च सा वाक्प्रदा ब्रह्मसती च भारती । वेदाग्रणीश्चैव पयोष्णिजाता वाणी विशाला कुटिला दशार्हा ॥ ६ ॥

गुणाः—सरस्वतीजलं स्वादु पूतं सर्वरुजापहम् । रुच्यं दीपनदं पथ्यं देहकान्तिकरं लघु ॥ ७ ॥

## ( ५ ) *चन्द्रभागा ।

गुणाः—चान्द्रभागसलिलं सुशीतलं दाहपित्तशमनं च वातदम् ।

## ( ६ ) मधुमती ।

गुणाः—चन्द्रभागगुणसाम्यदं जलं किंच माधुमतमग्निदीपनम् ॥ ८ ॥

## ( ७ ) शतद्र्वादिनदीजलानां गुणाः ।

गुणाः—शुतुद्रेर्विपाशायुजः सिन्धुनद्याः सुशीतं लघु स्वादु सर्वामयघ्नम् । जलं निर्मलं दीपनं पाचनं च प्रदत्ते बलं बुद्धिमेधायुजं च ॥ ९ ॥

## ( ८ ) †शोणजलगुणाः ( बर्बरनदी )

गुणाः—शोणे बर्बरके[2] जलं तु रुचिदं संतापशोषापहं पथ्यं वह्निकरं तथा च बलदं क्षीणाङ्गपुष्टिप्रदम् ।

---

*काश्मीरे प्रसिद्धा(?) । † शोणनदी विन्ध्योत्तरे प्रसिद्धा ।

---

१ ज. ट' 'रं च रो' । २ ज. ट. घर्घरके ।

## ( ९ ) *वेत्रवती ।

गुणाः—तत्रान्या दधते जलं सुमधुरं कान्तिप्रदं पुष्टिदं वृष्यं दीपनपाचनं बलकरं वेत्रावती तापिनी ॥ १० ॥

## ( १० ) †पयोष्णी ।

गुणाः—पयोष्णीसलिलं रुच्यं पवित्रं पापनाशनम् । सर्वामयहरं सौख्यं बलकान्तिप्रदं लघु ॥ ११ ॥

## ( ११ ) +वितस्ता ।

गुणाः—वितस्तासलिलं स्वादु त्रिदोषशमनं लघु । प्रज्ञाबुद्धिप्रदं पथ्यं तापजाड्यहरं परम् ॥ १२ ॥

## ( १२ ) *सरयूः ।

गुणाः—सरयूसलिलं स्वादु बलपुष्टिप्रदायकम् ।

## ( १३ ) †गोदावरी ।

गोदावरी गौतमसंभवा सा ब्रह्माद्रिजाताऽप्यथ गौतमी च ।
गुणाः—पित्तार्तिरक्तार्तिसमीरहारि पथ्यं परं दीपनपापहारि ॥ १३ ॥
कुष्ठादिदुष्टामयदोषहारि गोदावरीवारि तृषानिवारि ।

## ( १४ ) ×कृष्णा ( कृष्णगङ्गा )

कृष्णानदी कृष्णसमुद्भवा स्यात्सा कृष्णवेणाऽपि च कृष्णगङ्गा ।
गुणाः—कार्ष्णं जाड्यकरं स्वादु पूतं पित्तास्रकोपनम् । कृष्णवेणाजलं स्वच्छं रुच्यं दीपनपाचनम् ॥ १४ ॥

## ( १५ ) भीमरथीमलापहाघट्टगाः ।

गुणाः—मलापहा भीमरथी च घट्टगा यथा च कृष्णाजलसाम्यदा गुणैः । मलापहाघट्टगयोस्तथाऽपि पथ्यं लघु स्वादुतरं सुकान्तिदम् ॥ १५ ॥

## ( १६ ) तुङ्गभद्रा ।

गुणाः—तुङ्गभद्राजलं स्निग्धं निर्मलं स्वाददं गुरु । कण्डुपित्तास्रदं प्रायः सात्म्ये पथ्यकरं परम् ॥ १६ ॥

---

* इयमुत्तरे प्रसिद्धा । † इयं विन्ध्याचलदक्षिणे प्रसिद्धा । + वितस्ता काश्मीरे प्रसिद्धा ।
* उत्तरे प्रसिद्धा । † विन्ध्यदक्षिणे प्रसिद्धा । +विन्ध्यदक्षिणे प्रसिद्धा ।

## ( १७ ) कावेरी।

गुणाः—कावेरीसलिलं स्वादु श्रमघ्नं लघु दीपनम् । दद्रुकुष्ठादिदोषघ्नं मेधाबुद्धिरुचिप्रदम् ॥ १७ ॥

नदीविशेषगुणाः—नदीनामित्थमन्यासां देशदोषादिभेदतः । तत्तद्गुणान्वितं वारि ज्ञातव्यं कृतबुद्धिभिः ॥ १८ ॥

—:०:—

इत्थं वार्धिनदीनदह्रदसरःकुल्यादितीरान्तरप्रक्रान्तेक्षुगुडादिमाक्षिकभिदा मद्यप्रभेदानपि । प्रागस्मात्प्रतिबुध्य नामगुणतो निर्णीतयोगौचितीयाथातथ्यवशाद्विनिश्चितमनाः कुर्वीत वैद्यः क्रियाम् ॥ १९ ॥ ये रस्यमाना हि नृणां यथास्वं दोषान्निरस्यन्त्यपि दुर्निरासान् । तेषां रसानां वसतिः किलायं वर्गः प्रसिद्धो रसवर्गनाम्ना ॥ २० ॥ निस्पन्दं दुग्धसिन्धावमृतमथ समस्तौषधीनां न दोहं तापार्हं नो चिकित्सामभिलषति रसं नापि दोषाकरस्य । लब्ध्वा यत्सौहृद्य्यं जगति बुधजनस्तेन वर्गः कृतेऽस्मिन्पानीयादिः प्रसिद्धिं व्रजति मनुमितो नामगीर्मौलिरत्ने ॥ २१ ॥

इति श्रीनिघण्टुराजे पानीयादिश्चतुर्दशो वर्गः ॥ १४ ॥

---

## अथ क्षीरादिः पञ्चदशो वर्गः—

---

## ( १ ) नवनीतम् ।

गुणाः—शीतं वर्णबलावहं सुमधुरं वृष्यं च संग्राहकं वातघ्नं कफ³हारकं रुचिकरं सर्वाङ्गशूलापहम् । कासघ्नं श्रमनाशनं सुखकरं कान्तिप्रदं पुष्टिदं चक्षुष्यं नवनीतमुद्धृतनवं गोः सर्वदोषापहम् ॥ १ ॥

## (२) गोमहिष्योर्नवनीतम् ।

गुणाः—गव्यं च माहिषं चापि नवनीतं नवोद्भवम् । शस्यते बालवृद्धानां बलकृत्पुष्टिवर्धनम् ॥ २ ॥

## ( ३ ) माहिषनवनीतम् ।

गुणाः—माहिषं नवनीतं तु कषायं मधुरं रसे । शीतं वृष्यप्रदं⁵ ग्राहि पित्तघ्नं⁶ तु बलप्रदम् ॥ ३ ॥

---

१ ट. 'चितिर्यथा' । २ ज. पित्तापहं । ३ ज. 'फकार' । ४ ज. ट. 'कृद्धातुव' । ५ ट. ढ. 'दं बल्यं ग्रा' । ६ ट. ढ. 'त्तघ्नतुन्दद' ।

## (४) लघ्वजानवनीतम् ।

गुणाः—लघ्वजाजं तु मधुरं कषायं च त्रिदोषनुत् । चक्षुष्यं दीपनं बल्यं नवनीतं हितं सदा ॥ ४ ॥

## (५) छागनवनीतम् ।

गुणाः—नवनीतं नवोत्थं तु च्छागजं क्षयकासजित् । बल्यं नेत्रामयघ्नं च कफघ्नं दीपनं परम् ॥ ५ ॥

## (६) आविकनवनीतम् ।

गुणाः—आविकं नवनीतं तु विपाके तु हिमं लघु । योनिशूले कफे वाते दुर्नाम्नि च हितं सदा ॥ ६ ॥

## (७) एडकनवनीतम् ।

गुणाः—ऐडकं नवनीतं तु कषायं शीतलं लघु । मेधाहृद्गुरु पुष्ट्यं च स्थौल्यं मन्दाग्निदीपनम् ॥ ७ ॥

## (८) हस्तिनीनवनीतम् ।

गुणाः—हस्तिनीनवनीतं तु कषायं शीतलं लघु । तिक्तं विष्टम्भि जन्तुघ्नं हन्ति जन्तुकफक्रमीन् ॥ ८ ॥

## (९) अश्वीयनवनीतम् ।

अश्वीयं नवनीतं स्यात्कषायं कफवातजित् । चक्षुष्यं कटुकं चोष्णमीषद्वा-तापहारकम् ॥ ९ ॥

## (१०) गर्दभीनवनीतम् ।

गुणाः—गर्दभीनवनीतं तु कषायं कफवातनुत् । बल्यं दीपनदं पाके लघूष्णं मूत्रदोषनुत् ॥ १० ॥

## (११) उष्ट्रीनवनीतम् ।

गुणाः—औष्ट्रं तु नवनीतं स्याद्विपाके लघु शीतलम् । व्रणक्रमिकफास्रघ्नं वातघ्नं विषनाशनम् ॥ ११ ॥

## (१२) नारीनवनीतम् ।

गुणाः—नवनीतं तु नारीणां रुच्यं पाके लघु स्मृतम् । चक्षुष्यं सर्वरोगघ्नं दीपनं विषनाशनम् ॥ १२ ॥

## ( १३ ) जीर्णनवनीतम् ।

गुणाः—एकाहाद्युषितं प्रोक्तमुत्तरोत्तरगन्धिदम् । अहृद्यं सर्वरोगाढ्यं दधिजं तद्धृतं स्मृतम् ॥ १३ ॥

इत्येकादशनवनीतप्रकरणम् ।

## ( १४ ) तैलम् ।

तैलं यत्तिलसर्षपोदितकुसुम्भोत्थातसीधान्यजं यच्चैरण्डकरञ्जकेङ्गुदिफलैर्निम्बाक्षनिर्गुण्डकैः । ज्योतिष्मत्यभयोद्भवं मधुरिकाकोशाम्रचिश्चाभवं कर्पूरत्रपुसादिजं च सकलं सिद्ध्यै क्रमात्कथ्यते ॥ १४ ॥

## ( १५ ) धान्यजतैलम् ।

गुणाः—गोधूमयावनालव्रीहियवाद्यखिलधान्यजं तैलम् । वातकफपित्तशमनं कण्डूकुष्ठादिहारि चक्षुष्यम् ॥ १५ ॥

## ( १६ ) करञ्जतैलम् ।

गुणाः—करञ्जतैलं नयनार्तिनाशनं वातामयध्वंसनमुष्णतीक्ष्णकम् । कुष्ठार्तिकण्डूतिविचर्चिकापहं लेपेन नानाविधचर्मदोषनुत् ॥ १६ ॥

## ( १७ ) इङ्गुदीतैलम् ।

गुणाः—स्निग्धं स्यादिङ्गुदीतैलं मधुरं पित्तनाशनम् । शीतलं कान्तिदं बल्यं श्लेष्मलं केशवर्धनम् ॥ १७ ॥

## ( १८ ) शिग्रुतैलम् ।

गुणाः—शिग्रुतैलं कटूष्णं च वातजित्कफनाशनम् । त्वग्दोषव्रणकण्डूतिशोफहारि च पिच्छलम् ॥ १८ ॥

## ( १९ ) ज्योतिष्मतीतैलम् ।

गुणाः—कटु ज्योतिष्मतीतैलं तिक्तोष्णं वातनाशनम् । पित्तसंतापनं मेधाप्रज्ञाबुद्धिविवर्धनम् ॥ १९ ॥

## ( २० ) हरीतकीतैलम् ।

गुणाः—शीतं हरीतकीतैलं कषायं मधुरं कटु । सर्वव्याधिहरं पथ्यं नानात्वग्दोषनाशनम् ॥ २० ॥

## ( २१ ) राजिकातैलम् ।

गुणाः—तीक्ष्णं तु राजिकातैलं ज्ञेयं वातादिदोषनुत् । शिशिरं कटु पुंस्त्वघ्नं[1] केश्यं त्वग्दोषनाशनम् ॥ २१ ॥

## ( २२ ) चिञ्चातैलम् ।

गुणाः—यवचिञ्चाभवं[2] तैलं कटु पाके विलेखनम् । कफवातहरं रुच्यं कषायं नातिशीतलम् ॥ २२ ॥

## ( २३ ) कर्पूरतैलम् ।

गुणाः—कर्पूरतैलहिमतैलशितांशुतैलशीताभ्रतैलतुहिनांशुसुधांशुतैलम् । कर्पूरतैल(लं)कटुकोष्णकफामहारि वातामयघ्नरददार्ढ्यदपित्तहारि ॥ २३ ॥

## ( २४ ) त्रपुसादितैलम् ।

गुणाः—त्रपुसैर्वारुकचारककूष्माण्डप्रभृतिबीजजं च यत्तैलम् । तन्मधुरं गुरु शिशिरं केश्यं कफपित्तनाशि कान्तिकरम् ॥ २४ ॥

तैलसेवने योग्यायोग्यविचारः—तैलं न सेवयेद्धीमान्यस्य कस्य च यद्भवेत् । विषसाम्यगुणत्वाच्च योगे[3] तन्न प्रयोजयेत् ॥ २५ ॥

उक्तं च—विषस्य तैलस्य न किंचिदन्तरं मृतस्य सुप्तस्य न किंचिदन्तरम् । तृणस्य दासस्य न किंचिदन्तरं मूर्खस्य काष्ठस्य न किंचिदन्तरम् ॥ २६ ॥

—:०:—

इत्थं गवादिकपयःप्रभृतिप्रपञ्चप्रस्तावर्वाणततिलादिकतैलजातम् । वर्गे निसर्गललितोज्ज्वलशब्दसर्गे बुद्ध्वा भिषक्पतिरशङ्कतया भिषज्येत् ॥ २७ ॥ पातारमात्मनः किल यान्ति प्रत्युपचिकीर्षया यानि । तेषामेव निवासः परिकथितः पेयवर्ग इति कृतिभिः ॥ २८ ॥ पायं पायं मधुरविमलां शीतलां यस्य कीर्तिं स्रोतोधारां जहति सुजना दुर्जनासङ्ग[4]दौस्थ्यम् । वर्गस्तस्य व्रजति नृहरेर्नामनिर्माणनाम्नश्चूडारत्ने खलु तिथिमितः क्षीरकादिः समाप्तिम् ॥ २९ ॥

इति श्रीनिघण्टुराजे पञ्चदशः क्षीरादिवर्गः ॥ १५ ॥

---

१ ज. दोषघ्नं । २ झ. ट. ढ. 'चिञ्चीभ' । ३ ज. ट. 'गे प्रोक्तं न वर्जये' । ४ ज. ट. 'ङ्गदोषान् । व' ।

# अथ शाल्यादिः षोडशो वर्गः—

## ( १ ) धान्यम् ।

धान्यं भोग्यं च भोगार्हमन्नाद्यं जीवसाधनम् । तच्च तावत्त्रिधा ज्ञेयं शूकशिम्बीतृणाह्वयम् ॥ १ ॥ व्रीह्यादिकं यदिह शूकसमन्वितं स्यात्तच्छूकधान्यमथ मुद्गमकुष्ठकादि । शिम्बी निगूढमिति तत्प्रवदन्ति शिम्बीधान्यं तृणोद्भवतया तृणधान्यमन्यत् ॥ २ ॥

गुणाः—वातादिदोषशमनं लघु शूकधान्यं तेजोबलातिशयवीर्यविवृद्धिदायि । शिम्बीभवं गुरु हिमं च विबन्धदायि वातूलकं तु शिशिरं तृणधान्यमाहुः ॥ ३ ॥ देशे देशे शूकधान्येषु संख्या ज्ञातुं शक्या नैवं तद्दैवतैर्वा । तस्मादेषां येषु भोगोपयोगास्तान्यस्माभिर्व्याक्रियन्ते कियन्ति ॥ ४ ॥

## ( २ ) पललम् ।

पललं तिलकल्कं स्यात्तिलचूर्णं च पिष्टकम् ।

गुणाः—पललं मधुरं रुच्यं पित्तास्रबलपुष्टिदम् ॥ ५ ॥

## ( ३ ) तैलकिट्टम् ।

तैलकिट्टं तु पिण्याकः खलः स्यात्तैलकल्कजः ।

गुणाः—पिण्याकः कटुको गौल्यः कफवातप्रमेहनुत् ॥ ६ ॥

## ( ४ ) शिम्बीधान्यम् ।

धान्यानां कञ्चुके शिम्बी बीजगुप्तिश्च सा भवेत् ।

तद्गुप्तानि च धान्यानि शिम्बीधान्यानि चक्षते ॥ ७ ॥

## ( ५ ) लाजा ।

ये के च व्रीहयो भृष्टास्ते लाजा इति कीर्तिताः । यवादयश्च ये भृष्टा धानास्ते परिकीर्तिताः ॥ ८ ॥

गुणाः—लाजा च यवधाना च तर्पणी पित्तनाशिनी । गोधूमयावनालोत्थाः किंचिदुष्णाश्च दीपनाः ॥ ९ ॥ केदारपक्वैर्गोधूमैराकुलाः परिकीर्तिताः । आकुला गुरवो वृष्या मधुरा बलकारिणः ॥ १० ॥

## ( ६ ) पृथुकाः ।

व्रीहयोऽप्यर्धपक्वाश्च तप्तास्ते पृथुकाः स्मृताः ।

१ ज. ट. 'व तैर्दैव' । २ झ. ढ. 'नाः ॥९॥ रसैर' । ट. 'नाः ॥९॥ तसैर' । ३ ज. ट. स्वादवो ।

गुणाः—पृथुकाः स्वादवः स्निग्धा हृद्या मेदनवर्धनाः ॥ ११ ॥

## ( ७ ) पुपालादि ।

गुणाः—पुपाला मधुराः प्रोक्ता वृष्यास्ते बलदाः स्मृताः । पित्तहृत्तर्पणा हृद्याः स्निग्धास्ते बलवर्धनाः ॥ १२ ॥ दुग्धबीजा सुमधुरा दुर्जरा वीर्यपुष्टिदा । ये चान्ये यावनालाद्याश्चिपिटास्तप्ततण्डुलाः ॥ १३ ॥ अतप्ततण्डुलास्ते तु दुग्धबीजाः प्रकीर्तिताः ।

गुणाः—शालेययावनालीयचिपिटाः पुष्टिवर्धनाः । दुग्धबीजाः सुमधुरा दुर्जरा वीर्यपुष्टिदाः ॥ १४ ॥ तप्तांश्चणाः कफहराः परमोलकास्ते सद्यस्तृषार्तिरुचिपित्तकृतश्च जग्धाः । वाताल्पदाः सुखकरा ह्यबलाश्च रूक्षा हृद्या भवन्ति युवजर्जरबालकानाम् ॥ १२ ॥ मुद्गगोधूमचणका यावनालादयः स्मृताः ।

गुणाः—यदर्धपक्वं तद्धान्यं विष्टम्भाध्मानदोषकृत् ॥ १६ ॥

## ( ८ ) कर्णिका ।

शुष्कगोधूमचूर्णं तु कर्णिका समुदाहृता ।

## ( ९ ) दालिः ।

स्फोटस्तु चणकादीनां दालीति परिकीर्तिता ।

## ( १० ) हरितलूनम् ।

पक्वं हरितलूनं च धान्यं सर्वगुणावहम् ।

## ( ११ ) शुष्कलूनम् ।

शुष्कलूनं तु निःसारं रूक्षं तेत्सत्त्वनाशनम् ।

## ( १२ ) कोशान्नम् ।

कोशधान्यं नवं बल्यं मधुरं वत्सरोषितम् ।
गुणाः—निर्दोषं लघु पथ्यं च तद्वर्षादचरं भवेत् ॥ १७ ॥

## ( १३ ) नवधान्यम् ।

नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
गुणाः—द्व्यब्दोषितं लघु पथ्यं त्रिवर्षादबलं भवेत् ॥ १८ ॥ चणास्तु यवगोधूमतिलमाषा नवा हिताः ।

---

१ज. दुर्जराः । २ ज. मान्यविवर्धनाः । ३ झ. ढ. °प्तास्तु मुद्गचणकाः सुमनादिलङ्का स° । ४ झ. ढ. दग्धाः । ५ ज. तत्क्षतना° ।

जीर्णधान्यगुणाः—पुराणा विरसा रूक्षास्त्वहिता दुर्जराबलाः ॥ १९ ॥

धान्यविशेषगुणाः—धान्यं वापितमुत्तमं तदखिलं छिन्नोद्भवं मध्यमं ज्ञेयं यद्यदवापितं तदधमं निःसारदोषप्रदम् । दग्धायां भुवि यत्नतोऽपि विपिने ये वापिताः शालयो ये च च्छिन्नभवा भवन्ति खलु ते विण्मूत्रबन्धप्रदाः ॥ २० ॥

क्षारोदकधान्यगुणाः—क्षारोदकसमुत्पन्नं धान्यं श्लेष्मरुजापहम् ।

मृत्तिकोद्भूतधान्यगुणाः—सुस्निग्धमृत्तिकोद्भूतं धान्यमोजोबलावहम् ॥ २१ ॥

वालुकामृत्तिकोद्भूतधान्यगुणाः—बलपुष्टिप्रभावघ्नं वालुकामृत्तिकोद्भवम् । उक्तं च—धान्यं श्रेष्ठं षष्टिकं राजभोग्यं मांसं त्वाजं तैत्तिरं लावकीयम् । पानीयं स्यात्कृष्णमृत्स्नासमुत्थं क्षीराज्यादौ गव्यमाजं प्रशस्तम् ॥ २२ ॥

—:०:—

इत्थंप्रसिद्धतरधान्यगुणाभिधानवीर्याभिवर्णनविशृङ्खलवाग्विलासम् । आम्नायवर्गमिममाशु लभेत वैद्यो विद्यां विषण्णजनजीवनदानधान्यम् ॥ २३ ॥ यानि सदा भुज्यन्ते भुञ्जानजनाश्च यानि भुञ्जन्ते । तेषां खलु धान्यानां वर्गोऽयं भोज्यवर्ग इति कथितः ॥ २४ ॥ येनाऽऽचारचणेन मुग्धमधुरश्रीशालिना सन्महामानार्हा बहुधान्यसंपदुचिता संनीयते संततम् । तेन श्रीनृहरीश्वरेण रचिते नामोक्तिचूडामणौ वर्गोऽयं स्थितिमेति नूत्नरचनो धान्याह्वयः षोडशः ॥ २५ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्याभिधानचूडामणौ भोज्यवर्गापरनामा षोडशो धान्यवर्गः ॥ १६ ॥

---

# अथ मांसादिः सप्तदशो वर्गः ।

## ( १ ) त्याज्यमांसम् ।

बालस्य वृद्धस्य कृशस्य रोगिणो विषाग्निदग्धस्य मृतस्य चाम्बुषु । त्याज्यं मृगादेः पिशितं[1] तु[2] तस्य[3] विगन्धि शुष्कं च चिरस्थितं च[4] ॥ १ ॥

## (२) साधारणमांसगुणाः ।

सर्वं मांसं वातविध्वंसि वृष्यं बल्यं रुच्यं बृंहणं तत्समासात् । देशस्थानाद्याऽऽत्मसंस्थं च सर्वं भू(नस्वात्म्यसंस्थास्वभावैर्भू)यो नानारूपतां याति नूनम् ॥ २ ॥

१ ट. 'तं मृत'। २ ज. च। ३ ज. 'स्य सदाविद्यु'। ४ ज. तथा।

## ( ३ ) अनूपादिदेशमांसम् ।

तत्रानूपीयमांसं गवयरुरुमृगक्रोडगण्डादिकानां स्निग्धं पथ्यं च बल्यं लघु शशशिखराद्युद्भवं जाङ्गलीयम् । पुष्टिं दीप्तिं च दत्ते रुचिकृदथ लघु स्वादु साधारणीयं वृष्यं वल्यं च रुच्यं रुरुहरिणमृगक्रोडसारङ्गकाणाम् ॥ ३ ॥

## (४) सारसादिमांसम् ।

मांसं सारसहंसरात्रिविरहिक्रौञ्चादिजं शीतलं स्निग्धं वातकफापहं गुरु ततः स्वादु त्रिदोषापहम् । पथ्यं लावकतित्तिरादिजनितं वृष्यं लघु स्यात्परं चक्रक्रौञ्चमयूरतित्तिरभवं देशत्रयादीदृशम् ॥ ४ ॥

## अथ स्थानविशेषेण मांसगुणाः—

## ( ५ ) द्रुतादिमांसगुणाः ।

द्रुतो विलम्बितश्चैव प्लवश्चेति गतैस्त्रयः । स्थानतोऽपि त्रयस्ते तु बिलस्थलजलाश्रयाः ॥ ५ ॥ पुनस्ते तु प्रसहनाः प्रतुदा विष्किरा इति । स्वभावतस्त्रयः प्रोक्ताः क्रमशो मृगपक्षिणः ॥ ६ ॥ अथैषां क्रमशो लक्ष्मगुणान्वक्ष्यामि वर्गशः । एवं नवविधाः प्रोक्तास्त एव मृगपक्षिणः ॥ ७ ॥

द्रुतमांसम्—अजशशहरिणादयः स्वयं ये द्रुतगमना द्रुतसंज्ञकाः स्मृतास्ते । तदुदितपललं च पथ्यबल्यं रचयति वीर्यमदप्रदं लघु स्यात् ॥ ८ ॥

विलम्बितमांसगुणाः—गजखड्गप्रमुखा महामृगा निजगत्यैव विलम्बिताः स्मृतास्ते । बलकृत्पिशितं च पिच्छलं कफकासानिलमान्द्यदं गुरु स्यात्॥ ९ ॥ सारसहंसवलाकाश्चक्रक्रौञ्चादयो जले प्लवनात् । प्लवसंज्ञाः कथितास्ते तन्मांसं गुरूष्णं च बलदायि ॥ १० ॥

## ( ६ ) जलेशयमांसगुणाः ।

झषमकरनक्रकर्कटकूर्मप्रमुखा जलेशयाः कथिताः । मांसं तेषां तु सरं वृष्यं गुरु शिशिरबलसमीरकरम् ॥ ११ ॥

## ( ७ ) पक्षिमृगमांसगुणाः ।

यत्र स्थिता ये गतितोऽपि देशादन्यत्र याता मृगपक्षिमुख्याः । स्वस्वोचितस्थाननिवर्तनेन मांसेऽपि तेषां गुणपर्ययाः स्युः ॥ १२ ॥

---

१ ज. ट. 'सं गुरुवयसिरुरुक्रो' । २ झ. ढ. अथ श' ।

## (८) खड्गगवयमांसगुणाः ।

मांसं खड्गमृगोत्थं तु बलकृद्बृंहणं गुरु । गवयस्याऽऽमिषं बल्यं रुच्यं वृष्यं च बृंहणम् ॥ १३ ॥

## (९) रुरुमांसम् ।

गुणाः—रुरुक्रव्यं गुरु स्निग्धं मन्दवह्निबलप्रदम् ।

## (१०) सारङ्गमांसम् ।

गुणाः—सारङ्गं जाङ्गलं स्निग्धं मधुरं लघु वृष्यकम् ।

## (११) शिखरीमांसम् ।

गुणाः—शिखरीसंभवं मांसं लघु हृद्यं बलप्रदम् ।

## (१२) शरशृङ्गमांसम् ।

गुणाः—शरशृङ्गस्य मांसं तु गुरु स्निग्धं कफप्रदम् । बल्यं वृष्यकरं पुष्टि-किंचिद्वातकरं परम् ॥ १४ ॥

## (१३) शल्यमांसम् ।

गुणाः—शल्यमांसं गुरु स्निग्धं दीपनं श्वासकासजित् ।

## (१४) शशमांसम् ।

गुणाः—शशमांसं त्रिदोषघ्नं दीपनं श्वासकासजित् ।

## (१५) बिलेशयानां मांसम् ।

गुणाः—अन्ये बिलेशया ये स्युः कोकडोन्दुरुकादयः । गर्हितं तस्य मांसं च मान्द्यं गौरवदुर्जरम् ॥ १५ ॥

## (१६) हारीतमांसम् ।

गुणाः—हारीतपललं स्वादु कफपित्तास्रदोषजित् ।

## (१७) जलपक्षिमांसम् ।

गुणाः—स्निग्धहिमं गुरु वृष्यं मांसं जलपक्षिणां तु वातहरम् । तेष्वपि च हंसमांसं वृष्यतमं तिमिरहरणं च ॥ १६ ॥ अन्ये बकबलाकाद्या गुरवो मांस-भक्षणात् । अनुक्तं तु मृगादीनां मांसं ग्राह्यं हितादिषु ॥ १७ ॥

---

१ ज. 'न्दवीर्यंब' ।

## ( १८ ) पक्वभृष्टमांसे ।

गुणाः—पक्वं मांसं हितं सर्वं बलवीर्यविवर्धनम् ।
भृष्टमांसं विदाहि स्यादस्रवातादिदोषकृत् ॥ १८ ॥

## ( १९ ) स्त्रीपुरुषभेदेन मांसम् ।

गुणाः—पूर्वार्धे पुरुषस्य तद्गुरुतरं पश्चार्धभागः स्त्रियाः स्त्री गुर्वी किल गुर्विणी यदि तथा योषिच्च तुल्या लघुः । पक्षी चेत्पुरुषो लघुः शृणु शिरः-स्कन्धोरुपृष्ठे क्रमान्मांसं यच्च कटिस्थितं तदखिलं गुर्वेव सर्वात्मना ॥ १९ ॥
रसरक्तादिधातूना गुरु स्यादुत्तरोत्तरम् । मेदृवृक्कयकृन्मांसं वार्षणं चाति-मात्रतः ॥ २० ॥

—:०:—

इत्थं प्रतिस्थलबिलाम्बुनभःप्रचारप्राण्यङ्गमांसगुणनिर्णयपूर्णमेनम् । वर्गं विचार्य भिषजा विनियुज्यमानो भुक्त्वाऽशनं न विकृतिं समुपैति मर्त्यः॥२१॥
यस्याऽऽसीत्समितिद्विपाधिपबृहत्कुम्भान्तरस्थामिषप्रायाभ्यासपिपासयेव तरु-णी नेत्राम्बुधारा द्विषाम् । तस्यायं पुरुषप्रतापसुहृदः श्रीमन्नृसिंहेशितु-र्वर्गः सप्तदशो निषीदति कृतौ नामादिचूडामणौ ॥ २२ ॥

इति वैद्यराजराजिराजीव(निताजित)राजहंसश्रीमदीश्वरसूरिसूनुश्रीकाश्मीरायवं-शाचार्यपरंपरान्ववायश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभि-धानचूडामणौ सप्तदशो मांसवर्गः ॥ १७ ॥

---

# अथ मनुष्यादिरष्टादशो वर्गः—

---

## ( १ ) भर्ता ।

भर्ता पतिर्वरः कान्तः परिणेता प्रियो गृही ।

## ( २ ) भार्या ।

भार्या पत्नी प्रिया जाया दाराश्च गृहिणी च सा ॥ १ ॥

## ( ३ ) नपुंसकपोटे ।

नपुंसकं भवेत्क्लीबं तृतीयाप्रकृतिस्तथा । षण्ढः पण्डश्च नारी तु पोटा स्त्रीपुं-सलक्षणा ॥ २ ॥

---

१ ज. तद्गुणतरं । २ झ. ढ. °न्धोष्ठपृ° । ३ ज °वृक्सृक्क° ।

## ( ४ ) राजपत्नीनामानि ।

अथ राज्ञी च पट्टार्हा महिषी राजवल्लभा । भोगिन्योऽन्या विलासिन्यः संभुङ्क्ते यास्तु पार्थिवः ॥ ३ ॥ राजभोग्याः सुमुख्यो यास्ता भट्टिन्य इति स्मृताः ।

## ( ५ ) वेश्या ।

वेश्या तु गणिका भोग्या वारस्त्री स्मरदीपिका[1] ॥ ४ ॥

## ( ६ ) ब्राह्मणः ।

ब्रह्मा तु ब्राह्मणो विप्रः षट्कर्मा च द्विजोत्तमः ।

## ( ७ ) क्षत्रियः ।

राजा तु सार्वभौमः स्यात्पार्थिवः क्षत्रियो नृपः ॥ ५ ॥

## ( ८ ) वैश्यः ।

वैश्यस्तु व्यवहर्ता विड्वार्तिको वाणिजो वणिक् ।

## ( ९ ) शूद्रः ।

शूद्रः पज्जश्चतुर्थः स्याद्विजदास उपासकः ॥ ६ ॥ विप्रः क्षत्रो वैश्यशूद्रौ च वर्णाश्चत्वारोऽमी तत्र पूर्वे द्विजाः स्युः । एषामेव प्रातिलोम्यानुलोम्याज्जायन्तेऽन्या जातयः संकरेण ॥ ७ ॥

## ( १० ) बालसामान्यनामानि ।

बालः पाकोऽर्भको गर्भः पोतकः पृथुकः शिशुः । शावोऽर्भो बालिशो डिम्भो बटुर्माणवको मतः ॥ ८ ॥

## ( ११ ) शिशुविशेषनामानि ।

जातोऽर्भकः पक्षदिनेन मासतः पाकस्त्रिभिस्तैरथ पोतकाभिधः । षड्भिस्तु मासैः पृथुकोऽब्दतः शिशुस्त्रिभिर्बटुर्माणवकश्च सप्तभिः ॥ ९ ॥

## ( १२ ) बाल्याद्यवस्थाचतुष्टयपरिमाणम् ।

बालोऽब्दैः पञ्चदशभिः कुमारस्त्रिंशता स्मृतः । युवा पञ्चाशता वर्षैर्वृद्धः स्यादत उत्तरैः ॥ १० ॥

## ( १३ ) कौमाराद्यवस्थावधिः ।

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशाद्यौवनं तु ततः परम् ॥ ११ ॥

---

१ ज. ट. °रवीथिका ।

## ( १४ ) युववृद्धनामानि ।

युवा वयस्थस्तरुणो वृद्धस्तु स्थविरो जरन् । प्रवया यातयामश्च जीनो जीर्णश्च जर्जरः ॥ १२॥

## ( १५ ) बालिकानामानि ।

बालोत्तानशया डिम्भा स्तनपा च स्तनंधयी ।

## ( १६ ) कन्यागौर्यौ ।

कन्या कुमारी गौरी तु नग्निकाऽनागतार्तवा ॥ १३ ॥

## (१७) मध्यमा ।

सा मध्यमा वयस्था च युवती सुस्तनी च सा । चिरण्टी सुवयाः श्यामा प्रौढा दृढ(ष्ट)रजाश्च सा ॥ १४ ॥

## (१८) गुर्विणी ।

गुर्विण्यापन्नसत्त्वा स्यादन्तर्वत्नी च गर्भिणी ।

## ( १९ ) वृद्धा ।

निष्फला[1] चातिवृद्धा स्यात्स्थविरा च गतार्तवा ॥ १५ ॥

## ( २० ) रजस्वला ।

पुष्पिता मलिना म्लाना पांसुला च रजस्वला ।

## ( २१ ) वन्ध्या ।

वन्ध्या च केशिनी शून्या मोघपुष्पा वृथार्तवा ॥ १६ ॥

## (२२) अवयवः ।

अङ्गमंसः प्रतीकश्चापघनोऽवयवोऽपि च ।

## ( २३ ) शिरः ।

शिरःशीर्षकमुण्डं च मूर्धा मौलिश्च मस्तकम् । वराङ्गमुत्तमाङ्गं च कपालं केश[2]भृत्स्मृतम् ॥ १७ ॥

## ( २४ ) केशकेशबन्धौ ।

केशाः शिरसिजा बालाः कुन्तला मूर्धजाः कचाः । चिकुराः करुहाश्चाथ तद्वेष्टाः कबरीमुखाः ॥ १८ ॥

---

१ ज. ट. 'ला जरती वृद्धा स्थवि' । २ ज. ट. 'शभूः स्मृत' ।

## (२५) दृष्टिः।

दृग्दृष्टिर्लोचनं नेत्रं चक्षुर्नयनमम्बकम्। ईक्षणं ग्रहणं चाक्षि दर्शनं च विलोचनम् ॥ १९ ॥

## (२६) अपाङ्गकनीनिके।

अपाङ्गो नेत्रपर्यन्तो नयनोपान्त इत्यपि। तयोर्मध्यगता तारा बिम्बिनी च कनीनिका ॥ २० ॥

## (२७) ललाटभ्रूभ्रूमध्यश्रवणानि।

भालं ललाटमलिकं कथयन्ति गोधिर्भ्रूश्चिल्लिका च नयनोर्ध्वगरोमराजिः। मध्यं तयोर्भवति कूर्चमथ श्रुतिस्तु श्रोतःश्रवःश्रवणकर्णवचोग्रहाश्च ॥ २१ ॥

## (२८) ओष्ठतत्प्रान्तभागौ।

ओष्ठोऽधरो दन्तवासो दन्तवस्त्रं रदच्छदः। तयोरुभयतो देशो यौ प्रान्तौ सृक्कणी च तौ ॥ २२ ॥

## (२९) घ्राणम्।

घ्राणं गन्धवहा घोणा सिङ्घिणी नासिका च सा।

## (३०) शङ्खनासिकामलौ।

शङ्खः कर्णसमीपः स्यात्सिङ्घाणं नासिकामले ॥ २३ ॥

## (३१) मुखम्।

तुण्डमास्यं मुखं वक्त्रं वदनं लपनानने।

## (३२) चिबुकगल्लौ।

ओष्ठाधरस्तु चिबुकं गण्डो गल्लः कपोलकः ॥ २४ ॥

## (३३) हनुदन्तौ।

हनूस्तदूर्ध्वं दशनाश्च दन्ता द्विजा रदास्ते रदनास्तथोक्ताः।

## (३४) जिह्वातालुसूक्ष्मजिह्वोपजिह्वाः।

जिह्वा रसज्ञा रसना च सोक्ता स्यात्काकुदं तालु च तालुकं च ॥ २५ ॥ तदूर्ध्वं सूक्ष्मजिह्वा या घण्टिका लम्बिका च सा। अन्याऽधोमूलजिह्वा स्यात्प्रतिजिह्वोपजिह्विका ॥ २६ ॥

## ( ३५ ) अवटः ।

अटवस्तु शिरःपश्चात्संधिर्घाटा कृकाटिका ।

## ( ३६ ) ग्रीवा ।

ग्रीवा च कन्धरा कन्धिः शिरोधिश्च शिरोधरा ॥ २७ ॥

## ( ३७ ) कण्ठादीनि ।

कण्ठो गलो निगालोऽथ घण्टिका गलेशुण्डिका ।

## ( ३८ ) शिरादीनि ।

धमनी तु शिराऽसे तु स्कन्धोऽधःशिखरं तथा । तस्य संधिस्तु जत्रु स्यात्कक्षा दोर्मूलसंज्ञका ॥ २८ ॥

## ( ३९ ) पार्श्वपृष्ठे ।

तदधस्ताद्भवेत्पार्श्वं पृष्ठं पश्चात्तनोः स्मृतम् ।

## ( ४० ) बाहुः ।

दोर्दोषा च प्रवेष्टश्च बाहुर्बाहा भुजो भुजा ॥ २९ ॥

## ( ४१ ) हस्तः ।

पाणिस्तु पञ्चशाखः स्यात्करो हस्तः शयस्तथा ॥ ३० ॥

## ( ४२ ) हस्तमूलादीनि ।

करमूले मणिबन्धो भुजमध्ये कूर्परः कफोणिश्च । तस्मादधः प्रकोष्ठः प्रगण्डकः कूर्परांसमध्यं स्यात् ॥ ३१ ॥

## ( ४३ ) अङ्गुल्यादीनि ।

अङ्गुल्यः करशाखाः स्युः प्रदेशिन्यां तु तर्जनी । परुः स्यादङ्गुलीसंधिः पर्वसंधिश्च कथ्यते ॥ ३२ ॥ अथाङ्गुष्ठप्रदेशिन्यौ मध्यमाऽनामिका तथा । कनिष्ठा चेति पञ्च स्युः क्रमेणाङ्गुलयः स्मृताः ॥ ३३ ॥

## ( ४४ ) नखम् ।

कामाङ्कुशाः कररुहाः करजा नखरा नखाः । पाणिजाङ्गुलिसंभूताः पुनर्भवपुनर्नवाः ॥ ३४ ॥

---

१ ज °ल्गुण्डिका । २ झ. ढ. °शुण्ठिका ।

## ( ४५ ) करतलरेखे ।

करस्याधः प्रपाणिः स्यादूर्ध्वं करतलं स्मृतम् । रेखा सामुद्रिके ज्ञेया शुभाशुभनिवेदिका ॥ ३५ ॥

## ( ४६ ) स्तनः ।

स्तनोरसिजवक्षोजपयोधरकुचास्तथा ।

## ( ४७ ) स्तनाग्रम् ।

स्तनाग्रं चूचुकं वृत्तं शिखा स्तनमुखं च तत् ॥ ३६ ॥

## ( ४८ ) वक्षः ।

वक्षो वत्समुरः क्रोडो हृदयं हृद्भुजान्तरम् ।

## ( ४९ ) कुक्षिः ।

कुक्षिः पिचण्डो जठरं तुन्दं स्यादुदरं च तत् ॥ ३७ ॥

## ( ५० ) मर्मत्रिके ।

जीवस्थानं तु मर्म स्यात्कटिप्रान्ते त्रिकं स्मृतम् ।

## ( ५१ ) नाभ्यादीनि ।

नाभिः स्यादुदरावर्तस्ततोऽधो बस्तिरुच्यते ॥ ३८ ॥ बस्तिश्च वातशीर्षं स्याद्गर्भस्थानं च तत्स्त्रियाः । गर्भाशयो जरायुश्च गर्भाधारश्च स स्मृतः ॥३९॥

## ( ५२ ) आमाशयः ।

नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः ॥ ४० ॥

## ( ५३ ) पक्वाशयमूत्राशयौ ।

पक्वाशयो ह्यधो नाभेर्बस्तिर्मूत्राशयः स्मृतः ।

## ( ५४ ) कट्यादीनि ।

कटिः ककुद्मती श्रोणी नितम्बश्च कटीरकम् । आरोहं श्रोणिफलकं कलत्रं रसनापदम् । नितम्बश्चरमं श्रोणेः स्त्रीणां जघनमग्रतः ॥ ४१ ॥

## ( ५५ ) ककुन्दरादीनि ।

ककुन्दरौ तु सर्वेषां स्यातां जघनकूपकौ । कटिप्रोथौ स्फिचौ पायुर्गुदापानं[1] तदासनम् ॥ ४२ ॥

---

१ ह्र. द. 'नं तु दा' ।

## ( ५६ ) भगः।

गुदमुष्कद्वयोर्मध्ये पुंसामङ्गं भगः स्मृतः।

## ( ५७ ) अण्डकोशः।

मुष्कोऽण्डमण्डकोशश्च वृषणो बीजपेशिका॥ ४३॥

## ( ५८ ) शिश्नोपस्थे।

शिश्नं शेफश्च लिङ्गं च मेढ्रं साधनमेहने। योनिर्भगो वराङ्गं स्यादुपस्थं स्मरमन्दिरम्॥ ४४॥

## ( ५९ ) ऊरू।

ऊरू तु सक्थिनी[२] श्रोणिसक्थ्नोः संधिस्तु वङ्क्षणः। जङ्घोरुमध्यपर्व स्याज्जान्वष्ठीवच्च वै[३]क्रियः॥ ४५॥

## ( ६० ) जङ्घा।

जङ्घा तु प्रसृता ज्ञेया तन्मध्ये पि[४]ण्डिका तथा।

## ( ६१ ) घुटिका।

जङ्घाङ्घ्रिसंधिग्रन्थौ तु घुटिका गुल्फ इत्यपि॥ ४६॥

## ( ६२ ) पार्ष्णिः।

गुल्फस्याधस्तु पार्ष्णिः स्यात्पादाग्रं प्रपदं मतम्। विक्रमश्चरणः पादः पदङ्घ्रिश्च पदं क्रमः॥ ४७॥

## ( ६३ ) उत्सङ्गादीनि।

क्रोडमङ्कस्तथोत्सङ्गः प्राग्भागो वपुषः स्मृतः॥ ४८॥ करो भवेत्संहित-विस्तृताङ्गुलस्तलश्चपेटः प्रतलः प्रहस्तकः। मुष्टिर्भवेत्संहृतपिण्डिताङ्गुलावाकु-ञ्चितोऽग्रे प्रसृतः प्रकीर्तितः॥ ४९॥

## ( ६४ ) प्रादेशाद्यङ्गुलिनामानि।

स्यात्तर्जनी मध्यमिका त्वनामिका कनिष्ठिकाङ्गुष्ठयुता यदा तदा। प्रादेश-तालाभिधगोश्रवस्तथा वितस्तिरत्यर्थमिह क्रमादियम्॥ ५०॥

---

१ झ. ढ. 'ध्ये यो भागः स भ'। २ झ. ढ. 'नी श्रोणिः स'। ३ ज. चक्रिका। ट. चाक्रिया। ४ झ. ढ. पीडिका।

## ( ६५ ) हस्तः ।

हस्तस्तु विस्तृते पाणावामध्याङ्गुलिकूर्परम् ।

## ( ६६ ) रत्न्यरत्नी ।

बद्धमुष्टिः स रत्निः स्यादरत्निरकनिष्ठिकः ॥ ५१ ॥

## ( ६७ ) व्यामः ।

व्यामः सहस्तयोः स्यात्तु तिर्यग्बाह्वोर्यदन्तरम् । ऊर्ध्वविस्तृतदोष्पाणिनृमानं पौरुषं विदुः ॥ ५२ ॥

## ( ६८ ) जीवनस्थानानि ।

जीवस्थानं तु मर्म स्याज्जीवागारं तदुच्यते । मर्मस्थानं च तत्प्रोक्तं भ्रूमध्यादिष्वनेकधा ॥ ५३ ॥ भ्रूमध्यकण्ठगलशङ्ककचांसपृष्ठग्रीवागुदाण्डपदपाणियुगास्थिसंधीन् । वैद्याः शरेक्षणमितानि वदन्ति मर्मस्थानानि चाङ्गगतिनाशकराणि मर्त्ये ॥ ५४ ॥

## ( ६९ ) लाला ।

लाला भवेन्मुखस्रावः मृणिका स्यन्दिनी च सा ।

## ( ७० ) स्वेदनेत्रमले ।

स्वेदो घर्मश्च घर्माम्भो दूषिका नेत्रयोर्मलम् ॥ ५५ ॥

## ( ७१ ) *बली ।

बली चर्मतरङ्गः स्यात्त्वगूर्मिस्त्वक्तरङ्गकः ।

## ( ७२ ) पलितम् ।

पलितं च जरालक्ष्म केशशौक्ल्यं च तद्भवेत् ॥ ५६ ॥

## ( ७३ ) मस्तिष्कम् ।

स्नेहस्तु तिलकं क्लोम मस्तिष्कं मस्तकोद्भवम् ।

## ( ७४ ) अन्त्रगुल्मौ ।

अन्त्रं पुरीतदाख्यातं प्लीहा गुल्म इति स्मृतः ॥ ५७ ॥

---

* चामखीळ इति ख्याते ।

---

१ ज. 'ङ्ककुचा' । २ ट. 'ण्डमथ पा' । ३ ज. 'नि नाकग' । ४ ट. वल्ली । ५ ह्य. ढ. तिफकं । ६ ट. लोम ।

## ( ७५ ) नाडी ।

सा¹ त्वक्शिरोधिजा मन्या धमनी धरणी धरा । तन्तुकी जीवितज्ञा च नाडी सिंही च कीर्तिता ॥ ५८ ॥

## ( ७६ ) महानाडी ।

कण्डरा² तु महास्नायुर्महानाडी च सा स्मृता ॥ ५९ ॥

## ( ७७ ) शरीरास्थ्यादीनि ।

शरीरास्थि तु कङ्कालं स्यात्करङ्कोऽस्थिपञ्जरः । स्रोतांसि खानि च्छिद्राणि कालखण्डं यकृन्मतम् ॥ ६० ॥ शिरोस्थि तु करोटिः स्याच्छिरस्त्राणं तु शीर्षकम् । तत्खण्डं खर्परं प्राहुः कपालं च तदीरितम् ॥ ६१ ॥

## ( ७८ ) पृष्ठास्थि ।

पृष्ठास्थि तु कसेरुः स्याच्छङ्खास्थि नलकं स्मृतम् ।

## ( ७९ ) पार्श्वास्थि ।

पार्श्वास्थि पार्श्वकं प्रोक्तमिति देहाङ्गनिर्णयः ॥ ६२ ॥

## ( ८० ) आत्मा ।

आत्मा शरीरी क्षेत्रज्ञः पुद्गलः प्राण ईश्वरः । जीवो विभुः पुमानीशः सर्वज्ञः शंभुरव्ययः ॥ ६३ ॥

## ( ८१ ) प्रकृतिः ।

प्रधानं प्रकृतिर्माया शक्तिश्चैतन्यमित्यपि ।

## (८२) अहंकारः ।

अहंकारोऽभिमानः स्यादहंताऽहंमतिस्तथा ॥ ६४ ॥

## ( ८३ ) मनः ।

मानसं हृदयं स्वान्तं चित्तं चेतो मनश्च हृत् ।

## ( ८४ ) सत्त्वादिगुणाः ।

सत्त्वं रजस्तमश्चेति प्रोक्ताः पुंसस्त्रयो गुणाः ॥ ६५ ॥

## ( ८५ ) अक्षिपञ्चकम् ।

श्रोत्रं त्वग्रसना नेत्रं नासा चेत्यक्षिपञ्चकम् ।

---

१ झ. ढ. सत्व° । २ झ. करण्डा ।

## ( ८६ ) विषयेन्द्रियम् ।

अक्षं हृषीकं करणं बर्हणं विषयीन्द्रियम् ॥ ६६ ॥

## (८७) विषयाः ।

शब्दः स्पर्शो रसो रूपं गन्धश्च विषया अमी ।

## ( ८८ ) पञ्चभूतगुणाः ।

इन्द्रियार्थो गोचरास्ते पञ्चभूतगुणाश्च ते ॥ ६७ ॥

## ( ८९ ) पञ्चभूतानि ।

आकाशमनिलस्तोयं तेजः पृथ्वी च तान्यपि । क्रमेण पञ्च भूतानि कीर्तितानि मनीषिभिः ॥ ६८ ॥

—:०:—

इत्येष मानुषवयोन्तरवर्णगात्रधात्वङ्गलक्षणनिरूपणपूर्यमाणः । वर्गः करोतु भिषजां बहुदेहदोषनानानिदानगणनिर्णयधीनिवेशम् ॥ ६९ ॥ इति पशुपतिपादाम्भोजसेवासमाधिमतिसमयसमुत्थानन्दसौख्यैकसीम्ना । नरहरिकृतिनाऽयं निर्मिते याति नामप्रचयमुकुटरत्ने शान्तिमष्टादशाङ्कः ॥ ७० ॥

इति वैद्यराजिराजहंसश्रीमदीश्वरसूरिसूनुश्रीकाश्मीराद्यवंशाचार्यपरंपरान्ववायश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधानचूडामणौ मनुष्यादिरष्टादशो वर्गः ॥ १८ ॥

---

# अथ सिंहादिरेकोनविंशो वर्गः—

---

## ( १ ) ऋक्षः ।

ऋक्षो भल्लूकोऽथ भल्लः सशल्यो दुर्घोषः स्याद्भेल्लकः पृष्ठदृष्टिः । द्राघिष्ठः स्याद्दीर्घकेशश्चिरायुर्ज्ञेयः सोऽयं दुश्चरो दीर्घदर्शी ॥ १ ॥

## ( २ ) खड्गः ।

खड्गः खड्गमृगः क्रोधी मुखशृङ्गो मुखेबली । गण्डको वज्रचर्मा च खड्गी च प्रीणसश्च सः ॥ २ ॥

१ झ. ढ. कृतस्तु । ट. करोति । २ ज. 'ल्लुकः । ३ झ. ढ. दीर्घकेशी । ४ झ. 'ङ्गी बध्रीण'।

## ( ३ ) *शल्यकः।

शल्यकः स्याच्छल्यमृगो वज्रशुक्तिर्बिलेशयः।

## (४) शल्यतल्लोमनी।

शल्योऽन्यः श्वाविदित्युक्तः शली च शलली च सः। शल्यलोम्नि तु विज्ञेया शलली शललं शलम् ॥ ३ ॥

## ( ५ ) कोकडः।

कोकडो जेवनः प्रोक्तः कौकोवाचो बिलेशयः। ज्ञेयश्चमरपुच्छश्च लोमशो धूम्रवर्णकः ॥ ४ ॥

## ( ६ ) नकुलः।

नकुलः सूचिरदनः सर्पारिर्लोहिताननः।

## ( ७ ) †बर्बुरी।

बर्बुरी घोरिका घोरा दीर्घरूपा भयावहा। स्थूलचक्षुर्दीर्घपादा सर्पभक्षी गुणारिका ॥ ५ ॥

## ( ८ ) ब्राह्मणी।

ब्राह्मणी गृहगोधा च सुपदी रक्तपुच्छिका।

## ( ९ ) सरटः।

सरटः कृकलासः स्यात्प्रतिसूर्यः शयानकः ॥ ६ ॥

## ( १० ) +जाहकः।

जाहको गात्रसंकोची मण्डली बहुरूपकः। कामरूपी विरूपी च येलुवासः प्रकीर्तितः ॥ ७ ॥

## ( ११ ) पल्ली।

पल्ली तु मुसली प्रोक्ता गृहगोधा गृहालिका। ज्येष्ठा च कुड्यमत्स्या च पल्लिका गृहगोधिका ॥ ८ ॥

---

* खवले मांजर इति ख्याते। † घुणारी इति ख्याता। + येलसरडु इति प्रसिद्धः।

---

१ ज. 'प्रशल्की बिले'। २ ज. ट. जविनः। ३ ट. कोड्डोवा'।

## ( १२ ) तन्तुवायादयः ।

तन्तुवायस्तूर्णनाभो लूता मर्कटकः कृमिः । हालाहलस्त्वञ्जलिका सोक्ता कुटिलकीटकः ॥ ९ ॥ वृश्चिकः शूककीटः स्यादलिद्रोणश्च वृश्चिके ।

## ( १३ ) कर्णजलूका ।

अथ कर्णजलूका स्याच्चित्राङ्गी शतपद्यपि ॥ १० ॥

## ( १४ ) पिपीलिका ।

पिपीलकः पिपीलश्च स्त्रीसंज्ञा च पिपीलिका ।

## ( १५ ) तैलपिपीलिका ।

उदङ्क्या कपिजङ्घिका ज्ञेया तैलपिपीलिका ॥ ११ ॥

## ( १६ ) कृष्णपिपीलिका ।

कृष्णाऽन्या च पिपीली तु स्थूला वृक्षरुहा च सा ॥

## ( १७ ) मत्कुणः ।

मत्कुणो रक्तपायी स्याद्रक्ताङ्गो मञ्चकाश्रयी ॥ १२ ॥

## ( १८ ) शिशुकनक्रौ ।

शिशुकः शिशुमारः स्यात्स च ग्राहो वराहकः । भवेन्नक्रस्तु कुम्भीरो गलग्राहो महाबलः ॥ १३ ॥

## ( १९ ) जलूका ।

जलूका तु जलौका स्याद्रक्तपा रक्तपायिनी । रक्तसंदोहिका तीक्ष्णा वमनी जलजीविनी ॥ १४ ॥

## ( २० ) जलकाकः ।

जलकाकस्तु दात्यूहः स च स्यात्कालकण्टकः ।

## ( २१ ) जलपारावतः ।

जलपारावतः कोपी प्रोक्तो जलकपोतकः ॥ १५ ॥ तथा च—स्थले करितुरङ्गाद्या यावन्तः सन्ति जन्तवः । जलेऽपि ते च तावन्तो ज्ञातव्या जलपूर्वकाः ॥ १६ ॥

## ( २२ ) काष्ठकुट्टः ।

काष्ठकुट्टः काष्ठभङ्गी काष्ठकूटश्च शब्दितः ।

---

१ झ. ढ. जन्तु॰ । २ झ. ढ. जन्तु॰ । ३ ज. झ. ढ. कर्कटकः । ४ ज. उदंया ।

## ( २३ ) कङ्कः।

कङ्कस्तु लोहपृष्ठः स्यात्संदंशवदनः खरः। रणालंकरणः क्रूरः स च स्यादामिषप्रियः॥ १७॥

## ( २४ ) चर्मकी।

चर्मकी चर्मपक्षी च चर्माङ्गी चर्मगन्धिका। कृत्याशूकारिणी चर्मी चर्मपत्री च मेलिका॥ १८॥

## ( २५ ) बकः।

बकः कङ्को बकोटश्च तीर्थसेवी च तापसः। मीनघाती मृषाध्यानी निश्चलाङ्घ्रिश्च दाम्भिकः॥ १९॥

## ( २६ ) शकुनी।

शकुनी पोतकी श्यामा पाण्डवी श्वेतपक्षिणी।

## ( २७ ) दुर्गा।

दुर्गा भगवती चैव सैवोक्ता सत्यपाण्डवी॥ २०॥

## ( २८ ) बलाका।

बलाका विषकण्ठी स्याच्छुष्काङ्गी दीर्घकंधरा।

## ( २९ ) घर्मान्तः।

घर्मान्तकामुकी श्वेता मेघानन्दा[1] जलाश्रया।

## ( ३० ) टिट्टिभी।

*टिट्टिभी पीतपादश्च सदा लूता नृजागरः। निशाचरी चित्रपक्षी जलशायी सुचेतना॥ २२॥

## ( ३१ ) जलकुक्कुटकः।

जलकुकुटकश्चान्यो जलशायी जलस्थितः।

## ( ३२ ) ठिकः।

†ठिकः पाशगडो ठिको जलसार्यतिलाशयः। जलपक्षी महापक्षी जलसाघतिवासकः(?)॥ २३॥

---

* अयं श्लोको ज. ट. पुस्तकयोर्नास्ति। † अयं श्लोको ज. ट. पुस्तकयोर्नोपलभ्यते।

---

१ झ. ढ. मेघनादा।

## ( ३३ ) जलशायी ।

[ *जलशायी मण्डलीनो मन्दगः श्लेष्मलोऽविषी । सराजी राजिमन्तश्च ( मांश्चापि ) जलसर्पः स दुन्दुभिः ( डुण्डुभः ) ॥ २४ ॥ द्विविगोडो निसश्चैव चित्री शल्पी च गोमुखः । ]

## ( ३४ ) क्षुद्रसारसाः ।

अन्ये च प्लवगा ये ये ते सर्वे क्षुद्रसारसाः ॥ २५ ॥

## ( ३५ ) चकोरः ।

चकोरश्चन्द्रिकापायी कौमुदीजीवनोऽपि सः । चातकस्तोककः सोऽपि सारङ्गो मेघजीवनः ॥ २६ ॥

## ( ३६ ) हारीतककपिञ्जलौ ।

हारीतकस्तु हारीतो गञ्जलश्च[1] कपिञ्जलः ।

## ( ३७ ) धूसरी ।

†धूसरी पिङ्गला सूची भैरवी योगिनी जया । कुमारी सुविचित्रा च माता कोटरवासिनी ॥ २७ ॥

## ( ३८ ) तैलपाजिनपत्रिके ।

तैलपास्तु परोष्णी स्याज्जतुकाऽजिनपत्रिका ।

## ( ३९ ) खद्योततैलकीटौ ।

प्रभाकीटस्तु खद्योतः खज्योतिरुपसूर्यकः । तैलिनी तैलकीटः स्यात्षड्बिम्बा दद्रुनाशिनी ॥ २८ ॥

## ( ४० ) इन्द्रगोपः ।

शक्रगोपस्तु वर्षाभू रक्तवर्णेन्द्रगोपकौ ।

## ( ४१ ) दंशः ।

दंशो दुष्टमुखः क्रूरः क्षुद्रिका वनमक्षिका । मक्षिका त्वमृतोत्पन्ना वमनी चापला च सा ॥ २९ ॥

---

* एतच्चिह्नगतं ज. ट. पुस्तकयोर्न दृश्यते । † अयं श्लोको ज. ट. पुस्तकयोर्नास्ति ।

---

१ ज. ट. 'रीतस्तेजलस्तु क' ।

## ( ४२ ) कालिकः।

*कालिकः कोकिलः प्रोक्तः कालुश्चः कृष्णदंष्ट्रकः। कसारिका दीर्घपूर्छा गृहवासा बिलाशयी ॥ ३० ॥

## ( ४३ ) यूका।

यूका तु केशकीटः स्यात्स्वेदजः षट्पदः स्मृतः।

## ( ४४ ) पक्ष्मयूका।

पक्ष्मजा पक्ष्मयूका स्यात्सूक्ष्मा षट्चरणाऽपि सा ॥ ३१ ॥

## ( ४५ ) श्वेतयूका।

श्वेतयूकाऽङ्गवस्त्रोत्था लिक्षा यूकाण्डवस्त्रके। कथितेष्वेषु यो जीवः क्षोदीयान्वृश्चिकादिकः ॥ ३२ ॥ तत्र तत्र बुधैर्ज्ञेयः स सर्वः कीटसंज्ञकः ॥

## ( ४६ ) कीटिका।

†कीटिका चटिका प्रोक्ता वज्रदंष्ट्रा बहुप्रजा। कृशाङ्गी तामसी शूरा कीरिभारा महाबला ॥ ३३ ॥

## (४७) मङ्कारिः।

+मङ्कोरो मङ्कटः कृष्णस्तीक्ष्णदंष्ट्रो विशालुकः। षट्पादकस्तु मात्सर्यो माकोटस्तूर्ध्वगुह्यकः ॥ ३४ ॥

## (४८) षड्बिन्दुकीटः।

षड्बिन्दुर्बिन्दुकीटस्तु दीर्घकीटस्तु पादतः ॥ ३५ ॥

—:०:—

इत्थं नानातिर्यगाख्याप्रपञ्चव्याख्यापूर्णं वर्गमेनं विदित्वा। बुद्ध्या सम्यक्चाभिसंधाय धीमान्वैद्यः कुर्यान्मांसवर्गप्रयोगम् ॥ ३६ ॥ येनेभास्यपिता मृगाङ्कमुकुटः शार्दूलचर्माम्बरः सर्पालंकरणः सुपुंगवगतिः पञ्चाननोऽभ्यर्च्यते। तस्य श्रीनृहरीशितुः खलु कृतावेकोनविंशोऽभिधाचूडापीठमणावगादवसितिं सिंहादिवर्गो महान् ॥ ३७ ॥

इति श्रीकाश्मीराद्यवंशाचार्यपरंपरान्ववायश्रीनरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधानचूडामणौ सिंहादिरेकोनविंशो वर्गः ॥ १९ ॥

---

* ज. ट. पुस्तकयोरयं श्लोको न दृश्यते। † ज. ट. पुस्तकयोर्नैतदुपलभ्यते। + ज. ट. पुस्तकयोर्नास्तीदम्।

# अथ रोगादिर्विंशो वर्गः—

( १ ) व्याधिः—गदो रुजा व्याधिरपाटवामरोगामयातङ्कभयोपघाताः । रुग्मान्द्यभङ्गार्तितमोविकारग्लानिक्षयानार्जवमृत्युभृत्याः ॥ १ ॥

( २ ) राजयक्ष्मा—राजयक्ष्मा क्षयो यक्ष्मा रोगराजो गदाग्रणीः । उष्मा शोषोऽतिरोगश्च रोगाधीशो नृपामयः ॥ २ ॥

( ३ ) पाण्डुः—पाण्डुरोगस्तु पाण्डुः स्यात्

( ४ ) विसर्पः—विसर्पः सचिवामयः ।

( ५ ) शोफकासौ—शोफः शोथस्तु श्वयथुः कासः क्षवथुरुच्यते ॥ ३ ॥

( ६ ) क्षुतम्—क्षुतं तु क्षवथुः क्षुच्च

( ७ ) प्रतिश्यायः—प्रतिश्यायस्तु पीनसः ।

( ८ ) नेत्रामयः—नेत्रामयो नेत्ररोगो

( ९ ) मुखरोगः—मुखरोगो मुखामयः ॥ ४ ॥

( १० ) दुश्चर्मा—दुश्चर्मा मण्डलं कोठस्त्वग्दोषश्चर्मदूषिका ।

( ११ ) कुष्ठम्—कुष्ठं तु पुण्डरीकः स्यात्

( १२ ) श्वित्रम्—श्वित्रं तु चर्मचित्रकम् ॥ ५ ॥

( १३ ) किलासः—किलाससिध्मे च

( १४ ) शिखी—शिखी श्वासः

( १५ ) पामा—पामा विचर्चिका ।

( १६ ) कण्डूः—कण्डूः कण्डूतिकण्डूयाखर्जूकण्डूयनानि च ॥ ६ ॥

( १७ ) संचार्यादयः—संचारी शुण्ठिकास्फोटे सूक्ष्मस्फोटे विचर्चिका । पीतस्फोटे तु पामा च क्षुद्रस्फोटे तु कच्छिका ॥ ७ ॥

( १८ ) पिटका—पिटका विटका प्रोक्ता

( १९ ) मसूरिका—मसूराभा मसूरिका ।

( २० ) विस्फोटः—विस्फोटः स्फोटकः स्फोटः

( २१ ) केशघ्नः—केशघ्नस्त्विन्द्रलुप्तकः ॥ ८ ॥

( २२ ) गलशुण्डी—गलशुण्डी तु शुण्डा स्यात्

( २३ ) गलगण्डः—मलगण्डो गलस्तनः ।

( २४ ) दन्तार्बुदः—दन्तार्बुदो दन्तमूलं दन्तशोथो द्विजव्रणः ॥ ९ ॥

---

१ झ. ढ. °चिराम° । २ ज. °री सिडिका° । ३ ट. शुडिका° । ४ झ. ढ. पामपामे । ५ झ. ढ. °स्फोटा विचर्चिका । ६ ट. °लकीलं तु । ७ ज. ट. दन्दशोफो ।

( २५ ) गुल्मः—गुल्मस्तु जाठरग्रन्थिः
( २६ ) पृष्ठग्रन्थिः—पृष्ठग्रन्थौ गडुर्भवेत् ।
( २७ ) पङ्क्तिशूलम्—पङ्क्तिशूलं तु शूलं स्यात्
( २८ ) पाकजम्—पाकजं परिणामजम् ॥ १० ॥
( २९ ) लूता—लूता चर्मव्रणो व्रक्कं
( ३० ) नाडी—नाडी नाडीव्रणो भवेत् ।
( ३१ ) श्लीपदम्—श्लीपदं पादवल्मीकं
( ३२ ) पादस्फोटः—पादस्फोटो विपादिका ॥ ११ ॥
( ३३ ) विष्टम्भः—विष्टम्भस्तु विबन्धः स्यादानाहो मलरोधनम् ।
( ३४ ) अर्शः—अर्शांसि गुदकीलाः स्युर्दुर्नामानि गुदाङ्कुराः ॥ १२ ॥
( ३५ ) अतीसारः—मलवेगस्त्वतीसारो
( ३६ ) ग्रहणी—ग्रहणी रुक्प्रवाहिका ।
( ३७ ) वमिः—वमथुर्वान्तिरुद्गारच्छर्दिर्विच्छर्दिका वमिः ॥ १३ ॥
( ३८ ) हृद्रोगश्वासौ—हृद्रोगो हृद्रदो हृद्रुगुत्प्राणः श्वास उच्यते ।
( ३९ ) ज्वरः—ज्वरस्तु स ज्वरातङ्को रोगश्रेष्ठो महागदः ॥ १४ ॥
( ४० ) द्वंद्वजाः—द्वंद्वजा द्वंद्वदोषोत्थाः शीताद्या विषमज्वराः । अतीत्याऽऽगन्तवस्ते द्व्यैकाहिकत्र्याहिकादयः ॥ १५ ॥
( ४१ ) रक्तपित्तम्—रक्तपित्तं पित्तरक्तं पित्तास्रं पित्तशोणितम् । इत्येवं रक्तवातादिद्वंद्वदोषमुदाहरेत् ॥ १६ ॥
( ४२ ) तृष्णादयः—तृष्णोदन्या पिपासा तृण्मदातङ्को मदात्ययः । पानात्ययो मदव्याधिर्मदस्तूद्रिक्तचित्तता ॥ १७ ॥ मूर्छा तु मोहो मूढिश्च स्वरसादः स्वरक्षयः ।
( ४३ ) अरोचकम्—अश्रद्धाऽनभिलाषः स्यादरुचिश्चाप्यरोचकः ॥ १८ ॥
( ४४ ) प्रमेहः—मूत्रदोषस्तु विज्ञेयः प्रमेहो मेह इत्यपि ।
( ४५ ) कृच्छ्रं—कृच्छ्रं तु मूत्रकृच्छ्रं स्यात्
( ४६ ) मूत्ररोधः—मूत्ररोधोऽश्मरी च सा ॥ १९ ॥
( ४७ ) वातव्याधिः—वातव्याधिश्चलातङ्को वातरोगोऽनिलामयः ।
( ४८ ) कम्पः—कम्पस्तु वेपनं वेपः कम्पनं वेपथुस्तथा ॥ २० ॥
( ४९ ) जृम्भा—जृम्भा तु जृम्भिका जम्भा जृम्भणं जम्भिका च सा ।
( ५० ) आलस्यम्—आलस्यं मन्दता मान्द्यं कार्यप्रद्वेष इत्यपि ॥ २१ ॥
( ५१ ) तुन्दः—तुन्दः स्थविष्ठ इत्युक्तो जठरघ्नो जलोदरः ।

१ ज. मर्मव्रणो । २ घ. ढ. ज्वरान्तको । ३ ज. जठरामो । ट. जलराजो ।

( ५२ ) आमरक्तामयौ—आमो मलस्य वैषम्याद्रक्तार्तिः शोणितामयः॥२२॥

( ५३ ) ज्वालागर्दभकः—ज्वालागर्दभकः प्रोक्तो ज्वालारासभकामयः। ज्वालाखरगदो ज्ञेयः स गर्दभगदस्तथा ॥ २३ ॥

( ५४ ) विद्रधिः—विद्रधिः स्याद्विदरणं

( ५५ ) हृद्ग्रन्थिः—हृद्ग्रन्थिर्हृद्व्रणश्च सः ।

( ५६ ) भगंदरः—व्रणो भगप्रदेशे यः स भगंदरनामकः ॥ २४ ॥

( ५७ ) शूलः—शिरःशूलादयो ज्ञेयास्तत्तदङ्गाभिधानकाः । इत्थमन्येऽपि बोद्धव्या भिषग्भिर्देहतो गदाः ॥ २५ ॥

( ५८ ) संतापः—संतापः संज्वरस्तापः शोष ऊष्मा च कथ्यते ।

( ५९ ) अन्तर्दाहः—यश्चापि कोष्ठसंतापः सोऽन्तर्दाह इति स्मृतः ॥२६॥

( ६० ) दाहादयः—स दाहो मुखताल्वोष्ठे दवथुश्चक्षुरादिषु । पाणिपादांसमूलेषु शाखापित्तं तदुच्यते ॥ २७ ॥

( ६१ ) तन्द्रा—तन्द्रा तु विषयाज्ञानं प्रमीला तन्द्रिका च सा ।

( ६२ ) प्रलयः—प्रलयस्त्विन्द्रियस्वापश्चेष्टानाशः प्रलीनता ॥ २८ ॥

( ६३ ) उन्मादः—उन्मादो मतिविभ्रान्तिरुन्मनायितमित्यपि[1] ।

( ६४ ) आवेशः—आवेशो भूतसंचारो भूतक्रान्तिर्ग्रहागमः ॥ २९ ॥

( ६५ ) अपस्मारः—अपस्मारोऽङ्गविकृतिर्लोलाङ्गो[2] भूतविक्रिया ।

( ६६ ) स्तैमित्यम्—स्तैमित्यं जडता जाड्यं शीतलत्वमपाटवम् ॥ ३० ॥

( ६७ ) साधारणव्याधिः—वातिको वातजो व्याधिः पैत्तिकः पित्तसंभवः । श्लैष्मिकः श्लेष्मसंभूतः समूहः सांनिपातिकः ॥ ३१ ॥

( ६८ ) रोगविशेषनामानि—तद्विशेषास्तु विज्ञेयास्तन्मत्वर्थीययोगतः । यथा ज्वरितकण्डूलवातकक्षयदद्रुणाः ॥ ३२ ॥

( ६९ ) रोगिवर्तनम्—उत्साही द्विजदेवभेषजभिषग्भक्तोऽपि[3] पथ्ये रतो धीरो धर्मपरायणः प्रियवचा मानी मृदुर्मानदः । विश्वासी ऋजुरास्तिकः सुचरितो दाता दयालुः शुचिर्यः स्यात्काममवञ्चकः स विकृतो मुच्येत मृत्योरपि॥३४॥

( ७० ) चिकित्सा—उपचारस्तूपचर्या चिकित्सा रुक्प्रतिक्रिया । निग्रहो वेदनानिष्ठा[4] क्रिया चोपक्रमः समाः ॥ ३५ ॥

( ७१ ) कुवैद्याः—अधीरः कर्कशः स्तब्धः सरोगो न्यूनशिक्षितः[5] । पञ्च वैद्या न पूज्यन्ते धन्वन्तरिसमा अपि ॥ ३६ ॥

( ७२ ) ओषधिखननम्—यथावदुत्खाय शुचिप्रदेशजा द्विजेन कालादिक-

---

१ ज. 'विभ्रंश उन्म'। २ ज. 'तिर्लोलान्धो भू'। ट. 'तिर्लोलाधो भू'। ३ ज. झ. ढ. 'क्तोऽतिप'। ४ झ. ढ. 'निष्ठा क्रि'। ५ झ. ढ. नित्याशिक्षकः।

तत्त्ववेदिना। यथायथं चौषधयो गुणोत्तराः [प्रयोजिताः] प्रत्याहरन्ते यमगोचरानपि ॥ ३७ ॥

( ७३ ) ओषधिखननमन्त्रः—येन त्वां खनते ब्रह्मा येनेन्द्रो येन केशवः। तेनाहं त्वां खनिष्यामि सिद्धिं कुरु महौषधि ॥३८॥ विप्रः पठन्निमं मन्त्रं प्रयतात्मा महौषधीम्। खात्वा खादिरकीलेन यथावत्तां प्रयोजयेत् ॥३९॥ वीर्यं प्रकाश्य निजमौषधयः किलोचुरन्योन्यमुर्व्यपि दिवो भुवमाव्रजन्त्यः। जीवं मुमूर्षुमपि यं हि वयं महिम्ना स्वेन स्तुवीमहि स जात्वपि नैव नश्येत् ॥ ४० ॥ प्रत्यायिताः प्रमुदिता मुदितेन राज्ञा सोमेन साकमिदमोषधयः समूचुः। यस्मै द्विजो दिशति भेषजमाशु राजंस्तं पालयाम इति च श्रुतिराह साक्षात् ॥ ४१ ॥ आसामीशो लिखितपठितः स द्विजानां हि राजा सिद्ध्यै याश्च द्विजमनुजिनं स्वाश्रयं कामयन्ते। तास्वेवान्यः प्रसरति मदाद्यस्तु जात्या च गत्या हीनः शून्यो जगति कुपिताः पातयन्त्येनमेताः ॥ ४२ ॥

( ७४ ) अष्टाङ्गम्—द्रव्याभिधानगदनिश्चयकायसौख्यं शल्यादिभूतविषनिग्रहबालवैद्यम्। विद्याद्रसायनवरं दृढदेहहेतुमायुःश्रुतेर्द्विचतुरङ्गमिहाऽऽह शंभुः ॥ ४३ ॥ अन्यच्च—अष्टाङ्गं शल्यशालाक्यकायभूतविषं तथा। बालो रसायनं वृष्यमिति कैश्चिदुदाहृतम् ॥ ४४ ॥

( ७५ ) सुवैद्यः—अष्टाङ्गज्ञः सुवैद्यो हि कियद्धीनो यथाङ्गतः। अङ्गहीनः स विज्ञेयो न श्लाघ्यो राजमन्दिरे ॥ ४५ ॥

( ७६ ) पण्डितनामानि—प्राज्ञो विज्ञः पण्डितो दीर्घदर्शी धीरो धीमान्कोविदो लब्धवर्णः। दोषज्ञः सन्दूरदर्शी मनीषी मेधावी ज्ञः सूरिविज्ञौ विपश्चित् ॥४६॥ वैज्ञानिकः कृतमुखः संख्यावान्मतिमान्कृती। कुशाग्रीयमतिः कृष्टिः कुशलो विदुरो बुधः ॥४७॥ निष्णातः शिक्षितो दक्षः सुदीक्षः कृतधीः सुधीः। अभिज्ञो निपुणो विद्वान्कृतकर्मा विचक्षणः ॥ ४८ ॥ विदग्धश्चतुरश्चैव प्रौढो बोद्धा विशारदः। सुमेधाः सुमतिस्तीक्ष्णः प्रेक्षावान्विबुधो विदन् ॥ ४९ ॥

( ७७ ) बुद्धिः—मनीषा धिषणा प्रज्ञा धारणा शेमुषी मतिः। धीर्बुद्धिः प्रतिपत्प्रेक्षा प्रतिपत्तिश्च चेतना ॥ ५० ॥ संविज्ज्ञप्तिश्चोपलब्धिश्चिन्मेधा मननं मनः। भानं बोधश्च हृल्लेखः संख्या च प्रतिभा च सा ॥ ५१ ॥

( ७८ ) आदानम्—आदानं रोगहेतुः स्यात्

( ७९ ) निदानम्—निदानं रोगलक्षणम्।

( ८० ) चिकित्सा—चिकित्सा तत्प्रतीकारः

---

१ झ. ढ यथा रथः।

( ८१ ) आरोग्यम्—आरोग्यं रुङ्निवर्तनम् ॥ ५२ ॥

( ८२ ) पथ्यभेदाः—मण्डः पेयं विलेपी च यवागूः पथ्यभेदकाः । भक्तैर्विना द्रवो मण्डः पेयं भक्तसमन्वितः ॥ ५३ ॥ विलेपी बहुभक्तः स्याद्यवागूर्विरलद्रवा । विदलं माषमुद्गादि पक्वं सूपाभिधानकम् ॥ ५४ ॥

( ८३ ) व्यञ्जनादयः—व्यञ्जनं सूपशाकादि मिष्टान्नं तेमनं स्मृतम् । उपदंशो विदंशः स्यात्संधानो रोचकश्च सः ॥ ५५ ॥

( ८४ ) भोजनपाने—जेमनमभ्यवहारः प्रत्यवसानं च भोजनं जग्धिः । वल्भनमशनं स्वदनं निघसाहारौ च निगरणं न्यादः ॥ ५६ ॥ जक्षणं भक्षणं लेहः खादनं रसनस्वदौ । चर्वणं पानपीती च धयनं चूषणं भिधाः ॥ ५७ ॥

( ८५ ) मधुरः—मधुरं गौल्यमित्याहुरिक्ष्वादौ च स लक्ष्यते ।

( ८६ ) लवणः—लवणस्तु वैरः प्रोक्तः सैन्धवादौ स दृश्यते ॥ ५८ ॥

( ८७ ) तिक्तः—तिक्तश्च पिचुमन्दादौ व्यक्तमास्वाद्यते रसः ।

( ८८ ) कषायः—कषायस्तुवरः प्रोक्तः स तु पूगिफलादिषु ॥ ५९ ॥

( ८९ ) अम्लः—अम्लस्तु चिञ्चाजम्बीरमातुलिङ्गफलादिषु ।

( ९० ) कटुकः—कटुस्तु क्षारसंज्ञः स्यान्मरीचादौ स चेक्ष्यते ॥ ६० ॥

( ९१ ) मधुरगुणाः—मधुरश्च रसश्चिनोति केशान्वपुपः स्थैर्यबलौजवीर्यदायी । अतिसेवनतः प्रमेहशैत्यं जडतामान्ध्यमुखान्करोति दोषान् ॥ ६१ ॥

( ९२ ) लवणगुणाः—लवणो रुचिकृद्रसोऽग्निदायी पचनः स्वादुकरश्च सारकश्च । अतिसेवनतो जरां च पित्तं सितिमानं च ददाति कुष्ठकारी ॥६२॥

( ९३ ) तिक्तगुणाः—तिक्तो जन्तून्हन्ति कुष्ठं ज्वरार्तिं कासं दाहं दीपनो रोचनश्च । मर्त्ये गाढं प्रत्यहं सेवितश्चेत्तीव्रं दत्ते राजयक्ष्माणमेपः ॥ ६३ ॥

( ९४ ) कषायगुणाः—कषायनामा निरुणद्धि शोफं वर्णं तनोर्दीपनपाचनश्च । सत्त्वापहोऽसौ शिथिलत्वकारी निषेवितः पाण्डु करोति गात्रम् ॥६४॥

( ९५ ) अम्लगुणाः—अम्लाभिधः प्रीतिकरो रुचिप्रदः प्रपाचनोऽग्नेः पटुतां च यच्छति । भ्रान्तिं च कुष्ठं कफपाण्डुतां च कार्ष्ण्यं च कासं कुरुतेऽतिसेवितः ॥ ६५ ॥

( ९६ ) कटुगुणाः—कटुः कफं कण्ठजदोषशोफमन्दानिलश्वित्रगदान्निहन्ति । एषोऽपि दत्ते बहुसेवितश्चेत्क्षयावहो वीर्यबलक्षयं च ॥ ६६ ॥

( ९७ ) द्वंद्वरसगुणाः—कटुः कषायश्च कफापहारिणौ माधुर्यतिक्तावपि

---

१ झ. ढ. वह्निवर्धनम् । २ ज. ट. सूर्यादिदाहक° । ३ ज. ट. पटुः । ४ ज. °श्च । रसितो नितरां ज° । ट. °श्च । रसितोऽतितरां ज° । ५ ज. ट. °हं चाप्यसौ रो° ।

पित्तनाशनौ । कट्वम्लसंज्ञौ च रसौ मरुद्धरावित्थं द्विशोऽमी सकलामयापहाः ॥ ६७ ॥

( ९८ ) मिश्ररसगुणाः—अन्योन्यं मधुराम्लौ लवणाम्लौ कटुतिक्तकौ च रसौ। कटुलवणौ च स्यातां मिश्ररसौ तिक्तलवणौ च ॥६८॥ लवणमधुरौ विरुद्धावथ कटुमधुरौ च तिक्तमधुरौ च । साधारणः कषायः सर्वत्र समानतां धत्ते ॥ ६९ ॥ संधत्ते मधुरोऽम्लतां च लवणो धत्ते यथावत्स्थितिं तिक्ताख्यः कटुतां तथा मधुरतां धत्ते कषायाह्वयः। अम्लस्तिक्तरुचिं ददाति कटुको यात्यन्ततस्तिक्ततामित्येषां स्वविपाकतोऽपि कथिता षण्णां रसानां स्थितिः॥७०॥

( ९९ ) षड्रसाः—मधुरोऽम्लः कटुस्तिक्तः कटुस्तुवर इत्यमी । क्रमादन्योन्यसंकीर्णा नानात्वं यान्ति षड्रसाः ॥ ७१ ॥

( १०० ) रसभेदाः—आद्याद्यो मधुरादिश्चेदेकैकेनोत्तरेण युक् । द्विकभेदाः पञ्चदश पर्यायैः पञ्चभिस्तथा ॥ ७२ ॥ आद्यः सानन्तरः प्राग्वदुत्तरेण युतो यदा । चतुर्भिरपि पर्यायैराद्ये प्रोक्ता भिदा दश ॥ ७३ ॥ एवं द्वितीये षड्भेदास्तृतीये च त्रयः स्मृताः । चतुर्थे चैक इत्येते त्रिकभेदास्तु विंशतिः ॥ ७४ ॥ आद्यौ सानन्तरौ त्रिः (?) षडेकैकाग्रिमयोगतः । त्यक्ते द्वितीये चत्वारः स्वाग्रिमेकैकसंयुते ॥ ७५ ॥ आद्ये त्यक्ते तु पञ्च स्युः स्वाग्रिमेकैकसंयुते । चतुष्कभेदा इत्येते क्रमात्पञ्चदशेरिताः । ॥ ७६ ॥ ततः पञ्चकभेदाः षडेकैकत्यागतः स्मृताः । एकः सर्वसमासेन व्यासे षडिति सप्त ते ॥७७॥ एवं त्रिषष्टिराख्याता रसभेदाः समासतः। तारतम्येष्वसंख्यातास्तान्वेत्ति यदि शंकरः ॥ ७८ ॥

( १०१ ) बृंहणादिनामानि—बृंहणं पुष्टिदं पोष्यमुक्तं पीनत्वदं च तत् । वीर्यवृद्धिकरं वृष्यं वाजीकरणबीजकृत् ॥ ७९ ॥ आप्यायनं तर्पणं च प्रीणनं तोषणं च तत् । निष्यन्दनमभिष्यन्दि नेत्रद्रावं सरं च तत् ॥ ८० ॥

—:०:—

इति बहुविधरोगव्याश्रितोपक्रमोऽत्र प्रकृतभिषगनूक्ताहारपथ्यप्रयोगम् । इममखिलमुदित्वा वर्गमुत्सर्गसिद्धान्प्रवदतु स च विद्वानामयप्रत्ययांस्तान् ॥८१॥ येन व्याधिशतान्धकारपटलीनिष्कासनाभास्करप्रायेणापि पुनस्तरां प्रविहिता हन्त द्विषां व्याधयः । तस्यायं कृतिवाचि विंशतितमः श्रीमन्नृसिंहेशितुः शान्ति नामकिरीटमण्डनमणौ वर्गो गदादिर्गतः ॥ ८२ ॥

इति श्रीमन्नरहरिपण्डितविरचिते निघण्टुराजापरनाम्न्यभिधान-
चूडामणौ रोगप्रकरणं नाम विंशो वर्गः ॥ २० ॥

# अथ सत्त्वादिरेकविंशो वर्गः ।

( १ ) त्रिगुणाः—सत्त्वं रजस्तमश्चेति पुंसामुक्तास्त्रयो गुणाः । तेषु क्रमादमी दोषाः कफपित्तानिलाः स्थिताः[1] ॥ १ ॥ सत्त्वं श्लेष्मा रजः पित्तं तमश्चापि समीरणः[2] । द्रव्यस्य मानमुद्रिक्तं पुंसि पुंस्यनुवर्तते ॥ २ ॥

( २ ) सत्त्वगुणः—सत्त्वं मनोविकाशः[3] स्यात्सत्त्वायत्ता तथा स्थितिः ।

( ३ ) रजोगुणः—रजो रूषणमुद्रेकः कालुष्यं मतिविभ्रमः ॥ ३ ॥

( ४ ) तमोगुणः—तमस्तिमिरमान्ध्यं च चित्तोन्मेषश्च मूढता । हृदयावरणं ध्वान्तमन्धकारो विमोहनम् ॥ ४ ॥

( ५ ) गुणत्रयलक्षणम्—सत्त्वं चित्तविकाशमाशु[4] तनुते दत्ते प्रबोधं[5] परं कालुष्यं कुरुते रजस्तु मनसः प्रस्तौति चाव्याकृतिम् । आन्ध्यं हन्त हृदि[6] प्रयच्छति तिरोधत्ते स्वतत्त्वे धियं संधत्ते जडतां च संततमुपाधत्ते प्रमीलां तमः ॥ ५ ॥

( ६ ) वातगुणाः—वातः स्वैरः स्याल्लघुः शीतरूक्षः[7] सूक्ष्मस्पर्शज्ञानकस्तो-[8]दकारी । माधुर्यान्ने सोऽभ्रकालेऽपराह्णे प्रत्यूषेऽन्ने याति जीर्णे च कोपम् ॥६॥

( ७ ) पित्तगुणाः—पित्तं च तिक्ताम्लरसं च सारकं चोष्णं द्रवं तीक्ष्णमिदं मधौ बहु । वर्षान्तकाले भृशमर्धरात्रे मध्यंदिनेऽन्नस्य जरे च कुप्यति ॥७॥

( ८ ) श्लेष्मगुणाः—श्लेष्मा गुरुः श्लक्ष्णमृदुः प्रेमृत्सुकः स्निग्धः पटुः शीतजडश्च गौल्यवान् । शीते वसन्ते च भृशं निशामुखे पूर्वेऽह्नि भुक्तोपरि च प्रकुप्यति ॥ ८ ॥

( ९ ) दोषत्रयस्य भेदनिरूपणम्—दोषत्रयस्य ये भेदा वृद्धिक्षयविकल्पतः[9][10] । तानतः संप्रवक्ष्यामि संक्षेपार्थं समञ्जसम् ॥ ९ ॥ एकैकवृद्धौ स्युर्भेदास्त्रयो ये वृद्धिदास्त्रयः । तत्राप्येकतरौ[11] द्वयें(वृद्धौ)षडेवं द्वादशैव ते ॥१०॥ वृद्धा-[12]न्योन्यव्यत्ययाभ्यां षट्[13]त्रिवृद्ध्या तु सप्तमः । वृद्धोऽन्योऽन्यो वृद्धतरः परो वृद्धतमस्त्विवति ॥ ११ ॥ तारतम्येन षड्भेदास्त एवं पञ्चविंशतिः । एवं क्षयेऽपि तावन्तस्ततः पञ्चाशदीरिताः ॥ १२ ॥ वृद्धोऽन्योऽन्यः समोऽन्यश्च क्षीणस्त्विवति पुनश्च षट् । द्विवृद्ध्यैकक्षयादुक्तव्यत्ययाच्च पुनश्च षट् ॥ १३ ॥ एते द्वादशतः सर्वे द्विषष्टिः समुदाहृताः । त्रिषष्टस्त्वन्तिमो भेदस्त्रयाणां प्रकृतौ

१ ज. ट. स्मृताः । २ ज. ट. °णः । उद्रिच्यमा° । ३ ज. °कासः स्या° । ट. °कारः स्या° । ४ ज. ट. °कासमा° । ५ झ. ढ. °बोधज्ञतां का° । ६ ज. हृदः । ७ ज. °तरुक्षः । ८ झ. ढ. सूक्ष्मः स्प° । ९ ज. प्रमर्दतः । ट. प्रदर्शनः । १० ज. ट. °ल्पनैः । ता° । ११ ज. ट. °रान्यर्थे । १२ ज. वृध्द्यात्यन्योन्यवृत्याभ्यां । १३ झ. ढ. °त्रिप्रवृ° ।

स्थितिः ॥ १४ ॥ एवं दोषत्रयस्यैतान्भेदान्विज्ञाय तत्त्वतः। ततो भिषक्प्रयुञ्जीत तदवस्थोचिताः क्रियाः ॥ १९ ॥

( १० ) कालत्रयम्—कालस्तु वेलासमयोऽप्यनेहा दिष्टश्चलश्चावसरः स्थिरश्च । सोऽप्येष भूतः किल वर्तमानस्तथा भविष्यन्निति च त्रिधोक्तः॥१६॥ भूते वृत्तमतीतं च ह्यस्तनं निसृतं गतम् । वर्तमाने भवच्चाद्यतनं स्यादधुनातनम् ॥ १७ ॥ अनागतं भविष्ये स्याच्छ्वस्तनं च प्रगेतनम् । वत्स्यद्वर्तिष्यमाणं च स्यादागामि च भावि च ॥ १८ ॥

( ११ ) साधारणकालः—साधारणं तु सामान्यं तत्सर्वत्रानुवर्तते । विशेषणं विशेषश्च सकृत्स्थाने च वर्तते ॥ १९ ॥ तुर्यं पादं चतुर्थांशमीषत्किंचित्तथोच्यते ।

( १२ ) [*पार्वणफलादि—भूषापीयूषांशुस्वच्छोद्योतप्रस्यन्दामन्दस्वच्छन्दापूराम्भःस्वर्गङ्गासङ्गोन्मीलनमौलिम् । मेरुश्रीकैलासक्रीडासंघाटी[दि]शोभान[र]म्भःश्लाघाजङ्घालश्रीगौरीगूढाङ्गं वन्दे शंभुम् ] ॥ २० ॥

( १३ ) पलादयः—शब्दोच्चारे सकलगुरुके षष्टिवर्णप्रमाणे मानं काले पलमिति दश स्यात्क्षणस्तानि तैस्तु । षड्भिर्नाडी प्रहर इति ताः सप्त सार्धास्तथाऽहोरात्रो ज्ञेयः सुमतिभिरसावष्टभिस्तैः प्रदिष्टः ॥ २१ ॥

( १४ ) पक्षः—पक्षः स्यात्पञ्चदशभिरहोरात्रैः

( १९ ) मासः—उभाविमौ । मासो

( १६ ) संवत्सरः—द्वादशभिर्मासैः संवत्सर उदाहृतः ॥ २२ ॥

( १७ ) ऋतुः—द्विशश्चैत्रादिभिर्मासैर्विज्ञेया ऋतवश्च षट् ।

( १८ ) अयनम्—त्रिभिस्त्रिभिः क्रमादेतैः स्यातां च विषुवायने ॥ २३ ॥

( १९ ) विघटिकादयः—पलं विघटिका प्रोक्ता नाडी तास्तु त्रिविंशतिः । नाडी तु घटिका प्रोक्ता तद्द्वयं च मुहूर्तकम् ॥ २४ ॥

( २० ) प्रहरः—यामः प्रहर इत्युक्तो दिनभागो दिनांशकः ।

( २१ ) अहोरात्रादयः—अहोरात्रदिवारात्राहर्दिवाहर्निशानि च ॥ २९ ॥ घस्रो दिनोऽपि दिवसो वासरो भास्वरो दिवा । प्राह्णापराह्णमध्याह्नसायाह्नाः स्युस्तदंशकाः ॥ २६ ॥

( २२ ) प्रातः—प्रातर्दिनादिः प्रत्यूषो निशान्तः प्रत्युषोऽप्युषः । व्युष्टं चाहर्मुखं कल्यं प्रगे प्राह्णं प्रभातकम् ॥ २७ ॥

( २३ ) आतपादयः—आतपस्तु दिनज्योतिः सूर्यालोकः प्रभाकरः । रविप्र-

* एतच्चिह्नान्तर्गतमधिकमिति प्रतिभाति ।

१ झ. ट. 'प्यस्त्विति । २ ज. निभृतं । झ. ढ. निस्तुतं । ३ ज. भवेद्या' । ४ ज. ट. 'लोको दिनप्रभा । र' ।

काशः प्रद्योतस्तमोरिस्तपनद्युतिः ॥ २८ ॥ रोचिर्दीप्तिर्द्युतिः शोचिस्त्विडोजो भा रुचिः प्रभा । विभा लोकप्रकाशश्च तेज ओजायितं च रुक् ॥ २९ ॥ संध्या—सायंसंध्या दिनान्तश्च निशादिर्दिवसात्ययः । सायं पितृप्रसूश्चाथ प्रदोषः स्यान्निशामुखम् ॥ ३० ॥

( २४ ) छाया—छाया विभानुगा श्यामा तेजोभीरुरनातपः । अभीतिरातपाभावो भावालीना च सा स्मृता ॥ ३१ ॥

( २५ ) रात्रिनामानि—शर्वरी क्षणदा रात्रिर्निशा[1] श्यामा तमस्विनी । तमी त्रियामा शयनी क्षपा यामवती तमा ॥ ३२ ॥ नक्तं निशीथिनी दोषा ताराभूषा विभावरी । ज्योतिष्मती तारकिनी काली साऽपि कपालिनी ॥ ३३ ॥ सा ज्यौत्स्नी चन्द्रिकायुक्ता तमिस्रा तु तमोन्विता । अर्धरात्रादिनामानि—अर्धरात्रो निशीथे स्यान्मध्यरात्रश्च स स्मृतः ॥ ३४ ॥ ज्योत्स्ना तु चन्द्रिका चान्द्री कौमुदी कामवल्लभा । चन्द्रातपश्चन्द्रकान्ता शीताऽमृततरङ्गिणी ॥३५॥

( २६ ) कान्तिः—कान्तिस्तु सुषमा शोभा छविश्छाया विभा शुभा । श्रीर्लक्ष्मीर्दृक्प्रियाऽभिख्या भानं भातिरुमा रमा ॥ ३६ ॥

( २७ ) अन्धकारः—तमस्तमिस्रं तिमिरं ध्वान्तं संतमसं तमः । अन्धकारं च भूछायं तच्चान्धतमसं घनम् ॥ ३७ ॥

( २८ ) आतपादिगुणाः—आतपः कटुको रूक्षश्छाया मधुरशीतला । त्रिदोषशमनी ज्योत्स्ना सर्वव्याधिकरं तमः ॥ ३८ ॥

( २९ ) तिथिः—पक्षादिः प्रथमाऽऽद्या च पक्षतिः प्रतिपच्च सा । पक्षान्तोऽर्केन्दुविश्लेषः पर्व पञ्चदशी तथा । द्वितीयं तु भवेत्पर्व चन्द्रार्कात्यन्तसंगमः । ॥ ३९ ॥ प्रतिपदमारभ्यैताः क्रमाद्द्वितीयादिकाश्च पञ्चदश ॥ पक्षे तिथयो ज्ञेयाः पक्षश्च सितोऽसितो द्विविधः ॥ ४० ॥

( ३० ) शुक्लपक्षः—सितस्त्वापूर्यमाणः स्याच्छुक्लश्च विशदः शुचिः ।

( ३१ ) कृष्णपक्षः—असितो मलिनः कृष्णो बहुलो वदि च स्मृतः ॥४१॥

( ३२ ) मण्डलम्—दिवसैर्यत्र तत्रापि वसुसागरसंमितैः । भिषक्क्रियोपयोगाय मण्डलं भिषजां मतम् ॥ ४२ ॥

( ३३ ) पूर्णिमा—पूर्णिमा पौर्णमासी च ज्यौत्स्नी चेन्दुमती सिता । सा पूर्वाऽनुमतिर्ज्ञेया राका स्यादुत्तरा च सा ॥ ४३ ॥

( ३४ ) अमावास्या—दर्शस्तु स्यादमावास्याऽमावस्याऽर्केन्दुसंगमः ॥४४॥ सा पूर्वा तु सिनीवाली द्वितीया तु कुहूर्मता ।

( ३५ ) पक्षमानम्—मासार्धस्तु भवेत्पक्षः स पञ्चदशरात्रकः ॥ ४५ ॥

---

[1] ज. रात्री निशा ।

( ३६ ) मासप्रमाणम्—द्विपक्षस्तु भवेन्मासश्चैत्राद्या द्वादशापि ते ।

( ३७ ) मासानां नामानि—चैत्रस्तु चैत्रिकश्चैत्री मधुः कालादिकश्च सः । वैशाखो माधवो राधो ज्येष्ठः शुक्रस्तपस्तथा ॥ ४६ ॥ आषाढः शुचिरुक्तः श्रावणिकः श्रावणो नभाश्चापि । भाद्रो भाद्रपदोऽपि प्रौष्ठपदः स्यान्नभो नभस्यश्च ॥ ४७ ॥ इषस्त्वाश्वयुजश्च स्यादाश्विनः शारदश्च सः । कार्तिको बाहुलोऽपि स्यादूर्जः कार्तिकिकश्च सः ॥ ४८ ॥ मार्गः सहा मार्गशीर्ष आग्रहायणिकोऽपि सः । पौषस्तु पौषिकस्तैषः सहस्यो हैमनोऽपि च ॥ माघस्तपास्तपस्यस्तु फाल्गुनो वत्सरान्तकः ॥ ४८ ॥

( ३८ ) वसन्तादिऋतवः—चैत्रादिमासौ[1] द्वौ द्वौ स्युर्नाम्ना षड्तवः क्रमात् ॥५०॥ भवेद्वसन्तो मधुमाधवाभ्यां स्यातां तथा शुक्रशुची निदाघः । नभोनभस्यौ जलदागमः स्यादिषोर्जकाभ्यां शरदं वदन्ति ॥ ५१ ॥ हेमन्तकालस्तु सहःसहस्यौ तपस्तपस्यौ शिशिरः क्रमेण । मासद्विकेनेति वसन्तकाद्या धीमद्भिरुक्ता ऋतवः षडेते ॥ ५२ ॥

( ३९ ) वसन्तः—ऋतुराजो वसन्तः स्यात्सुरभिर्माधवो मधुः । पुष्पमासः पिकानन्दः कान्तः कामरसश्च सः ॥ ५३ ॥

( ४० ) निदाघः—निदाघस्तूष्मको घर्मो ग्रीष्म ऊष्मागमस्तपः । तापनश्चोष्णकालः स्यादुष्णश्चोष्णागमश्च सः ॥ ५४ ॥

( ४१ ) वर्षाः—वर्षाः प्रावृड्वर्षकालो घर्मान्तो जलदागमः । मयूरोल्लासकः[2] कान्तश्चातकाह्लादनोऽपि सः ॥ ५५ ॥

( ४२ ) शरत्—शरद्वर्षावसायः स्यान्मेघान्तः प्रावृडत्ययः ॥

( ४३ ) हेमन्तः—ऊष्मापहस्तु हेमन्तः शरदन्तो हिमागमः ॥ ५६ ॥

( ४४ ) शिशिरः—शिशिरः कम्पनः शीतो हिमकूटश्च कौटनः[3] । इत्येतन्नामतः प्रोक्तमृतुषट्कं यथाक्रमम् ॥ ५७ ॥

( ४५ ) प्रतिदिनस्थमृतुषट्कम्—इह सुरभिनिदाघमेघकालाः शिशिरशरद्धिमहायनाः क्रमेण । प्रतिदिनमृतवः स्युरूर्ध्वमर्कोदयसमयाद्दशकेन नाडिकानाम् ॥ ५८ ॥

( ४६ ) उत्तरायणम्—मकरक्रान्तिमारभ्य भानोः स्यादुत्तरायणम् ॥

( ४७ ) दक्षिणायनम्—कर्कटक्रमणादूर्ध्वं दक्षिणायनमुच्यते ॥ ५९ ॥

( ४८ ) विषुवायनादीनि—यदा तुलायां मेषे च सूर्यसंक्रमणं क्रमात् । तदा विषुवती स्यातां विषुवे अपि ते स्मृते ॥ ६० ॥ कालज्ञैः षष्टिराख्याता वत्सराः

---

१ ज. ट. द्वौ द्वौ स्यातां वसन्ताद्यौ नाम्ना । २ झ. ढ. 'यूराल्स' । ३ झ. ढ. कूटनः । ५-६

प्रभवादयः । शरत्संवत्सरोऽब्दश्च हायनो वत्सरः समाः ॥६१॥ वसन्ते दक्षिणे घातो भवेद्वर्षासु पश्चिमः । उत्तरः शारदे काले पूर्वो हैमन्तशैशिरे ॥ ६२ ॥

( ४९ ) पूर्वादिक्रमेण वायुगुणाः—पूर्वस्तु मधुरो वातः स्निग्धः कटुरसान्वितः । गुरुर्विदाहशमनो वातदः पित्तनाशनः ॥ ६३ ॥ दक्षिणः षड्रसो वायुश्चक्षुष्यो बलवर्धनः । रक्तपित्तप्रशमनः सौख्यकान्तिबलप्रदः ॥ ६४ ॥ पश्चिमो मारुतस्तीक्ष्णः कफमेदोविशोषणः । सद्यः प्राणापहो दुष्टः शोषकारी शरीरिणाम् ॥ ६५ ॥ उत्तरः पवनः स्निग्धो मृदुर्मधुर एव च । सकषायरसः शीतो दोषाणां च प्रकोपनः ॥ ६६ ॥

( ५० ) दिग्लक्षणम्—कृत्वैकमवधिं तस्मादिदं पूर्वं च पश्चिमम् । इति देशौ निदिश्येते यया सा दिगिति स्मृता ॥ ६७ ॥

( ५१ ) दिक्—दिगाशा च हरित्काष्ठा ककुप्सा च निदेशिनी । सा च देशविभागेन दशधा परिकल्प्यते ॥ ६८ ॥ ज्योतींषि तपनादीनि ज्योतिश्चक्रभ्रमीक्रमात् । यतो नित्यमुदीयन्ते सा पूर्वाख्या दिगुच्यते ॥ ६९ ॥ पूर्वा च दक्षिणा चैव पश्चिमा चोत्तराऽपि च । प्रादक्षिण्यक्रमेणैताश्चतस्रः स्युर्महादिशः ॥ ७० ॥ पूर्वा प्राची पुरो मघोन्यैन्द्री माघवती च सा । शामनी दक्षिणाऽवाची यामी वैवस्वती च सा ॥ ७१ ॥ पश्चिमा तु प्रतीची स्याद्वारुणी प्रत्यगित्यपि । उत्तरा दिक्कु कौबेरी दैवी सा स्यादुदीच्यपि ॥ ७२ ॥

( ५२ ) विदिशः—दिशोर्द्वयोर्द्वयोर्मध्ये यो भागः कोणसंज्ञकः । विदिशस्ताश्चतस्रश्च प्रोक्ता उपदिशस्तथा ॥ ७३ ॥ आग्नेयी स्यात्प्राच्यवाच्योस्तु मध्ये नैर्ऋत्याख्या स्यादवाचीप्रतीच्योः । वायव्याऽपि स्यादुदीचीप्रतीच्योरैशानी स्यादन्तरा प्राच्युदीच्योः ॥ ७४ ॥ उपरिष्टाद्दिगूर्ध्वं स्यादधस्तादधरा स्मृता । अन्तस्त्वभ्यन्तरं प्रोक्तमन्तरं चान्तरालकम् ॥ ७५ ॥

( ५३ ) अङ्गुलादिमानम्—स्पष्टस्त्वष्टयवैर्देशो मितो ज्ञेयोऽङ्गुलाह्वयः । स्याच्चतुर्विंशकैस्तैस्तु हस्तो हस्तचतुष्टयम् ॥ ७६ ॥ दण्डो दण्डैर्द्विसाहस्रैः क्रोशस्तेषां चतुष्टयम् । योजनं स्यादिति ह्येष देशस्योक्तो मितिक्रमः ॥ ७७ ॥ इति प्रस्तावतो वैद्यस्योपयुक्ततया मया । परिमाणं तथोन्मानमिति द्वितयमीर्यते ॥ ७८ ॥

( ५४ ) धान्यमानम्—धान्ये सा निष्टिका पुंसो यत्तु मुष्टिचतुष्टयम् । तद्द्वयेनाष्टिका ज्ञेया कुडवस्तद्द्वयेन तु ॥ ७९ ॥ प्रस्थस्तु तच्चतुष्केण तच्चतुष्केण चाऽऽढकी । ताश्चतस्रो भवेद्द्रोणः खारी तेषां तु विंशतिः ॥ ८० ॥

( ५५ ) औषधप्रमाणम्—गोधूमद्वितयोन्मितिस्तु कथिता गुञ्जा तया सार्धया

---

१ झ. ढ. स्निग्धकटुर । २ ज. न्तिमतिप्र । ३ ज. ट. प्राणहरो । ४ ज. तो नानादोषप्र ।

वल्लो वल्लचतुष्टयेन भिषजां माषो मतस्तच्चतुः । निष्को निष्कयुगं तु सार्धमुदितः कर्षः पलं तच्चतुस्तद्वत्तच्छतकेन चाथ च तुला भारस्तुलाविंशतिः ॥८१॥

—:०:—

इत्थंसत्त्वरजस्तमस्त्रिगुणिकानुक्रान्तदोषत्रयप्रक्रान्तोचितकालदेशकलनाभिख्यानसुख्यापितम् । वर्गं स्वर्गसभासुभास्वरभिषग्वर्यातिवीर्यामयध्वंसाश्चर्यकरी प्रयाति मतिमानेनं पठित्वा प्रथाम् ॥८२॥ संग्रामोत्सङ्गरिङ्गत्तुरगखुरपटोद्भूतधात्रीरजोभिः संरभं याति सान्द्रे तमसि किल शमं यद्द्विषां याति सत्त्वम् । तस्यैषोऽप्येकविंशः श्रयति खलु कृतौ नामनिर्माणचूडारत्नापीडे प्रशान्ति नरहरिकृतिनः कोऽपि सत्त्वादिवर्गः ॥ ८३ ॥

इति श्रीनरहरिपण्डितविरचिते राजनिघण्टौ सत्त्वादिरेकविंशो वर्गः ॥ २१ ॥

# अथ मिश्रकादिर्द्वाविंशो वर्गः—

यान्यौषधानि मिलितानि परस्परेण संज्ञान्तरैर्व्यवहृतानि च योगकृद्भिः[1] । तेषां स्वरूपकथनाय विमिश्रकाख्यं वर्गं महागुणमुदारमुदीरयामः ॥ १ ॥

( १ ) आद्यपुष्पकम्—चन्दनं कुङ्कुमं वारि त्रयमेतद्वरार्धकम्[2] । त्रिभागकुङ्कुमोपेतं तदुक्तं[3] चाऽऽद्यपुष्पकम् ॥ २ ॥

( २ ) समत्रितयम्—हरीतकी नागरं च गुडश्चेति त्रयं समम् । समत्रितयमित्युक्तं त्रिसमं च समत्रयम् ॥ ३ ॥

( ३ ) त्रिशर्करा—गुडोत्पन्ना हिमोत्पन्ना[4] मधुजातेति मिश्रितम् । त्रिशर्करा च त्रिसिता सितात्रयसितात्रिके ॥ ४ ॥

( ४ ) अञ्जनत्रितयम्—कालाञ्जनसमायुक्ते पुष्पाञ्जनरसाञ्जने । अञ्जनत्रितयं प्राहुस्त्र्यञ्जनं चाञ्जनत्रयम् ॥ ५ ॥

( ५ ) त्रिदोषम्—वातः पित्तं कफश्चेति त्रयमेकत्र संयुतम् । दोषत्रयं त्रिदोषं स्याद्दोषत्रितयमित्यपि ॥ ६ ॥

( ६ ) त्रिदोषसमम्—वातपित्तकफा यत्र समतां यान्ति नित्यशः । त्रिदोषसममित्येतत्समदोषत्रयं तथा ॥ ७ ॥

( ७ ) त्रिकण्टकम्—बृहती चाग्निदमनी[6] दुःस्पर्शा चेति तु त्रयम्[5] । कण्टकारीत्रयं प्रोक्तं त्रिकण्टं कण्टकत्रयम् ॥ ८ ॥

( ८ ) त्रिकर्षिकम्—नागराऽतिविषा मुस्ता त्रयमेतत्त्रिकर्षिकम् ।

१ ज. °गविद्भिः । २ ज. °रार्धक° । ट. °रार्थक° । ३ ज. ट. °क्तं वाऽऽद्य° । ४ ज. °मोत्था च म° । ५ ज. झ. ढ. °धुरा चेति । ६ ज. °ग्निधम° ।

( ९ ) देवकर्दमः—श्रीखण्डागरुकर्पूरकाश्मीरैस्तु समांशकैः । मृगाङ्कमुकुटार्होऽयं मिलितैर्देवकर्दमः ॥ ९ ॥

( १० ) मूत्रपञ्चकम्—गवामजानां मेषीणां महिषीणां च मिश्रितम् । मूत्रेण गर्दभीनां यत्तन्मूत्रं मूत्रपञ्चकम् ॥ १० ॥

( ११ ) त्रिलोहकम्—सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकम् ।

( १२ ) पञ्चलोहकम्—वङ्गनागसमायुक्तं तत्प्राहुः पञ्चलोहकम् ॥ ११ ॥

( १३ ) द्वितीयं पञ्चलोहकम्—सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं समम् । ग्रहाङ्गमिति बोद्धव्यं द्वितीयं पञ्चलोहकम् ॥ १२ ॥

( १४ ) सप्त धातवः—रसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः । शरीरस्थैर्यदैरेतैः सप्तधातुगणो मतः ॥ १३ ॥

( १५ ) अष्टलोहः—पञ्चलोहसमायुक्तैः कान्तमुण्डकतीक्ष्णकैः । कल्पितः कथितो धीरैरष्टलोहाभिधो गणः ॥ १४ ॥

( १६ ) महारसाः—दरदः पारदः सस्यो वैक्रान्तं कान्तमभ्रकम् । माक्षिकं विमलं चेति स्युरेतेऽष्टौ महारसाः ॥ १५ ॥

( १७ ) उपरसाः—खेचराञ्जनकङ्कुष्ठगन्धोलगैरिकाक्षितीः । शैलेयाञ्जनसंमिश्राः शंसन्त्युपरसान्बुधाः ॥ १६ ॥

( १८ ) सामान्यरसाः—कम्पिल्लगौरीचपलाकपर्दसशैलसिन्दूरकवह्निजारान् । पाषाणिनो बोदरशृङ्गयुक्तानित्यष्टसामान्यरसानि चाऽऽहुः ॥ १७ ॥

( १९ ) क्षारदशकम्—शिग्रुमूलकपलाशचुक्रिकाचित्रकार्द्रकसनिम्बसंभवैः । इक्षुशैखरिकमोचिकोद्भवैः क्षारपूर्वदशकं प्रकीर्तितम् ॥ १८ ॥

( २० ) मूत्रदशकम्—मूत्राणि हस्तिमहिषोष्ट्रगवाजकानां मेषाश्वरासभकमानुषमानुषीणाम् । यत्नेन यत्र मिलितानि दशेति तानि शास्त्रेषु मूत्रदशकाह्वयभाञ्जि भान्ति ॥ १९ ॥

( २१ ) मन्थः—सक्तुभिः सर्पिषाऽभ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छो नातिसान्द्रश्च मन्थ इत्यभिधीयते ॥ २० ॥

( २२ ) सुरदारुकम्—भार्गीशटीपुष्करवत्सबीजदुरालभाशृङ्गिपटोलतिक्ताः । किरातविश्वेन्द्रकणेन्द्रबीजधान्यानि तिक्तं सुरदारुकं च ॥ २१ ॥ अष्टादशाङ्गाभिध एष योगः समागमे स्याद्दशमूलकेन । द्विधा च भार्ग्यादिक एक एष ज्ञेयो द्वितीयस्तु किरातकादिः ॥ २२ ॥

—:०:—

१ ज. ट. तत्प्रोक्तं । २ ट. सीसं । ३ ज. ट. 'मलश्चेति । ४ ज. 'न्धारीगै' । ट. 'न्धालिंगै' । ५ झ. ढ. 'ष्टकं सूतसमानमाहुः । ६ ज. 'गींसटी' । ७ झ. ढ. 'णेभवी' ।

इत्थं नानामिश्रयोगाभिधानादेनं वर्गं मिश्रकाख्यं विदित्वा । वैद्यः कुर्याद्योगमत्रत्यसंज्ञाप्रज्ञासंज्ञो बन्धुभिर्येन धीरः ॥ २३ ॥ शौर्यासङ्गरता रमा स्वयमुमा शश्वच्छिवासङ्गिनी सा वाणी चतुराननप्रणयिनी श्रीसंमिता यं श्रिता । तस्यांगादभिधानशेखरमणौ वर्गो नृसिंहेशितुर्द्वाविंशोऽवसितिं कृतौ कृतधियां यो मिश्रकाख्यो मतः ॥ २४ ॥

इति श्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्यायवत्यभिधानचूडामणौ मिश्रकाख्यो द्वाविंशो वर्गः ॥ २२ ॥

## अथैकार्थादिस्त्रयोविंशो वर्गः ।

### तत्रैकार्थाः ।

[3]श्रीश्च लक्ष्मीफले ज्ञेया [4]त्वशनो बीजवृक्षकः । शालूकं पद्मकन्दे स्यात्सदापुष्पो रविद्रुमे ॥ १ ॥ कुबेरको नन्दिवृक्षे गोकण्टो गोक्षुरे तथा । दन्तफलस्तु पिप्पल्यां कसेरुर्भद्रमुस्तके ॥ २ ॥ नागरोत्था कच्छरुहा अङ्कोले दीर्घकीलके । [5]वेल्लकी सल्लकीवृक्षे मातुलुङ्गे तु पूरकः ॥ ३ ॥ ब्रह्मघ्नी तु कुमारी स्यादङ्कोले गूढमाल्लिका । अतिविषा श्वेतवचोपकुञ्ची स्थूलजीरके ॥ ४ ॥ कवचः स्यात्पर्पटके लवणं तु पयोधिजम् । बृहत्त्वक्सप्तपर्णे स्यात्काम्भोजी बाकुची तथा ॥ ५ ॥ [6]कीटपादी हंसपाद्यां कुनटी तु मनःशिला । वैकुण्ठर्मजके प्राहुर्भूधात्र्यां तु तमालिनी ॥ ६ ॥ शतकुन्दः [7]करीरे स्यादग्निकाष्ठं तथाऽगुरौ । सूक्ष्मपत्री शतावर्यां क्षीरपर्ण्यर्कसंज्ञके ॥ ७ ॥ शौण्डी तु पिप्पलिर्ज्ञेया कस्तूर्यां मदनी तथा । ब्रह्मपर्णी पृश्निपर्ण्यां चित्रपर्णी च सा स्मृता ॥ ८ ॥ छत्रपर्णः सप्तपर्णे पीलुपर्णी तु तुण्डिका । शाकश्रेष्ठस्तु वृन्ताके [8]शङ्करः शमिरुच्यते ॥ ९ ॥ [9]भरटः स्याद्विट्खदिरे तुण्डिश्चारण्यबिम्बिका । विष्णुगुप्तं तु चाणक्यमूलेऽनन्ता यवासके ॥१०॥ कपिकच्छूरात्मगुप्ता वातपोथस्तु किंशुके । पीता तु रजनी ज्ञेया बोधिवृक्षस्तु पिप्पलः ॥ ११ ॥ उशीरे समगन्धिः स्याद्धिङ्गुले [10]चूर्णपारदः । हिङ्गावगूढगन्धः स्याद्गोदन्ते विस्रगन्धिके ॥१२॥ शम्यामीशान इत्याहुर्दिवान्धो घूक उच्यते । पयस्या क्षीरकाकोल्यां शतवेध्यम्लवेतसे ॥ १३ ॥ रोचनी नारिकेरे च भूधात्र्यां चारुहा स्मृता । प्रियां प्रियङ्गुके प्राहुः खराह्वा चाजमोदके ॥१४॥ तगरं दण्डहस्ती स्याद्-

---

१ झ. ढ. 'स्यायं त्वभि' । २ झ ढ. 'सितः कृ' । ३ ज. ट. श्रीस्तु । ४ ज. आसनो । ५झ. ढ. शल्लकी । ६ झ. ढ. वीटपाटी । ट. किटमादी । ७ झ. ढ. शरीरे । ८ ज. ट. शंकरः । ९ ढ. गोरटः । १० ज. जीर्णपारदः ।

सोनो लशुने स्मृतः। तपस्विनी जटामांस्यां मेघपुष्पेऽजशृङ्गिका ॥१५॥ ज्ञेयं मातुलपुष्पं तु धत्तूरे चोरके रिपुः। शष्पं बालतृणं प्रोक्तं शैलेयं चाश्मपुष्पके ॥ १६ ॥ श्रीपुष्पं तु लवङ्गे स्याद्बालपुष्पी तु यूथिका । स्थूलपुष्पं तु झेण्डूके चित्रके दारुणः स्मृतः ॥ १७ ॥ अथ स्याद्विषपुष्पं तु पुष्पं श्यामदलान्वितम्। बलभद्रः कर्दम्बोऽन्य आखोटे भूतवृक्षकः ॥ १८ ॥ रामा तमालपत्रे स्याद्भूर्जे चर्मदलो मतः। आत्मशल्या शतावर्यां पिकौ(पीलौ) कलभवल्लभा(भः) ॥१९॥ विप्रप्रिया पलाशे च ज्वरारिस्तु गुडूचिका। कण्टकार्यां तु श्वेतायां ज्ञेया तु कपटेश्वरी ॥ २० ॥ पाण्डुफलं पटोले स्याच्छालिपर्ण्यां स्थिरा मता। गायत्री खदिरे प्रोक्ता स्यादेर्वारुस्तु कर्कटी ॥ २१ ॥ नीवारेऽरण्यशालिः स्यात्पार्वत्यां गजपिप्पली। स्पृक्कायां देवपुत्री स्यादङ्कोले देवदारु च ॥ २२ ॥ रीठां प्रकीर्यके प्राहुर्दन्त्यां केशरुहा स्मृता। आम्रस्तु सहकारे स्याज्ज्ञेयस्ताले द्रुमेश्वरः ॥ २३ ॥ दुष्पुत्रश्चोरके प्रोक्तो माडे चैव वितानकः। माचिषा मण्डके प्रोक्ता मार्जारी मृगनाभिजा ॥ २४॥ तित्तिडीके तु बीजाम्लः कदल्यां तु सकृत्फला। जर्तिलश्चारण्यतिले तार्क्ष्यतैलं रसाञ्जने ॥ २५ ॥ विभीतके कलिन्दः स्याच्छालिर्ज्ञेया तु पाटला। रङ्गमाता तु लाक्षायामग्निज्वाला तु धातकी ॥ २६ ॥ तिनिशे स्याद्भस्मगर्भा मधूल्यां मधुकर्कटी। सितगुञ्जा काकपीलौ चन्द्रायां तु गुडूचिका ॥ २६ ॥ नटश्चाशोकवृक्षे स्याद्दाडिमे फलशाँडवः। निष्पावे तु पलङ्कः स्यात्कलशी पृश्निपर्णिका ॥२८॥ राजाह्वे दीर्घशूकः स्याज्जरणः कृष्णजीरके। पिङ्गा चैव हरिद्रायां श्वेतशूके यवः स्मृतः ॥ २९ ॥ श्यामाके तु त्रिबीजः स्यादाढक्यां तुवरी स्मृता। गोधूमेऽथ मृदुः प्रोक्तः करला त्रिपुटा तथा ॥ ३० ॥ सूपश्रेष्ठो हरिन्मुद्गे राजाह्वे ह्रस्वतण्डुलः। मकुष्ठो वनमुद्गे स्यान्मकुष्ठे च क्रमीलकः ॥ ३१ ॥ कृष्णः काश्मीरवृक्षे स्याद्विषतिन्दुर्विषद्रुमे। पलाशे पत्रकः प्रोक्तो न्यग्रोधो रोहिणः स्मृतः ॥ ३२ ॥ नारिकेले रसफलस्तथा ताले तु शम्बरः । विकङ्कतो मृदुफले केसरे बकुलः स्मृतः ॥ ३३ ॥ शेफाली सिन्धुवारे च हिलमोची तु वास्तुके। वास्तुके श्वेतचिल्ली स्याद्वेल्लिका स्यादुपोदकी ॥ ३४ ॥ आरामवल्लिकायां तु मूलपोती तु विश्रुता। मकरन्दः पुष्परसे जात्यां तु सुमना स्मृता ॥३५॥ आम्रातके पीतनकः क्षौद्रे पुष्पासवः स्मृतः। मृदुः कन्या तु संप्रोक्ता जीवा स्याज्जीवके तथा ॥ ३६ ॥ छिन्नायां तु गुडूची स्यान्नारायण्यां शतावरी। सर्जे तु बस्तकर्णी च शलाटुबिल्वके तथा ॥ ३७ ॥ सर्जान्तरे चाश्वकर्णो गोकर्णी समंधौ रसे। कृष्णं

१ झ. ढ. पुष्पं। २ झ. ढ. स्थूलक्षेण्डूके। ३ ज. ट. ढ. 'भद्रे क'। ४ ज. झ. ढ. 'दम्बेऽल्प आ'। ५ ट. 'म्बोऽन्यः शाखो'। ६ ट. 'च्छाली ज्ञेया। ७ झ. ढ. 'शाण्डवः। ८ ट. 'मवेलीका'। ९ ट. छिन्नार्या। १० ज. झ. ढ. 'मदोर'।

नीलाञ्जने माहुराखुकर्णी तु शम्बरी ॥ ३८ ॥ दुर्गा तु श्यामयक्षी स्याद्भूतो मुस्ताऽथ दुर्ग्रहः। अपामार्गोऽथ रक्ता तु मञ्जिष्ठायां शटस्तथा ॥ ३९ ॥ धत्तूरे ब्रह्मजा ब्राह्मी गन्धर्वः कोकिले स्मृतः। सैरटी तु दुरारोहा बाहुल्यां तर्वटः स्मृतः ॥ ४० ॥ सर्षपं तु दुराधर्षो ह्रीबेरं बालके तथा। हैमवती चाल्परसा भिषग्माताऽटरूषके ॥ ४१ ॥ ब्रह्मपुत्री तु भार्गी स्याद्धस्तिपर्णी तु कर्कटी। तुलसी बहुमञ्जर्यां कटभ्यां गर्दभी स्मृता ॥ ४२ ॥ कच्छुघ्नी हपुषायां च शाल्मली च यमद्रुमे। सूक्ष्मैला चैव कोरङ्ग्यां गन्धाढ्यां धूम्रपत्रिका ॥ ४३ ॥ शैलजा गजपिप्पल्यां क्षीरिणी तु कुटुम्बिनी। देवबलायां त्रायन्ती कटी च खैदिरे स्मृता ॥ ४४ ॥ इन्दीवरा करम्भायां कन्दे चेन्दीवरं स्मृतम्। पुष्पान्तरे राजकन्या पार्थिवे तगरं तथा ॥ ४५ ॥ सागरे रत्नगर्भश्च रत्नगर्भा तु मेदिनी। सुवर्णे काञ्चनं ज्ञेयं हेमदुग्धा तु काञ्चनी ॥ ४६ ॥ प्रसारिण्यां राजबला कर्पूरे हिमवालुकः। हिमं कर्पूरके प्रोक्तं गोशीर्षं चन्दनं स्मृतम् ॥ ४७ ॥ ब्रह्मदारुः स्मृतः फञ्ज्यां पण्यन्धा पणधा स्मृता। वत्सादनी गुडूच्यां च सोमवल्यश्ववल्लिका ॥ ४८ ॥ नद्याम्रे च समष्ठिलोऽथ रजनी स्यात्कालमेष्यां बुधैर्दुग्धाहस्तिलके पलाण्डुरिति च स्याद्दीपने चोक्ततः। मोचा हस्तिविषाणके च कथिता भार्ग्यां तु पद्मा स्मृता निम्बे शीर्णदलस्तथाऽत्र कथितः स्याद्धान्यराजो यवे ॥ ४९ ॥

इत्येकार्थानि॥

# अथ द्व्यर्थानि।

सौराष्ट्र्यां रुचिदे चैव संधानं च प्रचक्षते। पलाशिके सटी लाक्षा कितवश्चोरके शठे ॥ १ ॥ बलाका बर्हिणश्चैव मेघानन्दः प्रकीर्तितः। आकाशेऽभ्रके गगनं जलूका मत्कुणास्तपोः ॥ २ ॥ नासानक्षत्रयोर्नाडी कोलायां शुण्डिके कणा। ज्वरघ्नश्छिन्नवास्तूके ललना चारसर्जयोः ॥ ३ ॥ मञ्जिष्ठायां गुडूच्यां तु कुमारी नागपूर्विका। मुद्गरे सप्तपर्णे स्यात्सप्तच्छदमुदाहृतम् ॥ ४ ॥ कृत्रिमकं बिडे काचे पाक्यं च यवजे बिडे। सर्पान्तरे पटोले च कुलकः समुदाहृतः ॥५॥ जन्तुकायां तु वास्तूके विज्ञेया चक्रवर्तिनी। मधुरा जीवके प्रोक्ता मेदायां च तथा स्मृता ॥ ६ ॥ कर्कन्धूश्चेति संप्रोक्तो बदरे पूतिमारुते। वासन्ती कोकिलायां तु पुष्पजात्यां प्रचक्षते ॥७॥ चन्द्राब्जे चोत्पलं कुष्ठे कृकरश्चव्यैवातयोः। चपला मद्य-

१ ट. सरठे। २ ज. 'ती बल्यर'। ३ झ. ढ. बीदरे। ४ ट. 'धैर्दुग्धाहोत्तिल'। ५ ज. ढ. 'व्यपात'।

मागध्योर्धरण्यां खदिरे क्षमा ॥ ८ ॥ सिन्धुपुष्पं कदम्बे च बकुले चाथ लोमशा। काकोल्यां च वचायां च सूक्ष्मैला चेन्द्रवारुणी ॥९॥ ऐन्द्र्यां गोदावरी चैव गौतम्यां रोचना तथा। कुसुम्भेऽरण्यजे चैव कौसुम्भं कुसुम्भाञ्जने ॥ १० ॥ सटी गन्धनिशायां च चोरके चाथ कर्कटी। देवदाल्यां त्रपुस्यां च शताह्वायां शतावरी॥११॥ मिशिस्तु तुत्थनीलिन्यां सूक्ष्मैलायां तथा स्मृता। वितुन्नकं तु भूधात्र्यां ख्याता कुस्तुम्बरी तथा ॥१२॥ बर्हिर्दर्भे मयूरे च प्लक्षमर्कटयोः प्लवः। आखुपर्णी सुतश्रेण्यां प्रत्यक्श्रेण्यां तथा स्मृता ॥ १३ ॥ वस्त्रे तमालपत्रे च अंशुकः समुदाहृतः। दर्भे च कुशिके वज्रं कङ्गुधान्ये प्रियङ्गुके ॥ १४ ॥ कङ्कुरङ्गारवल्ली तु फञ्जी हस्तिकरञ्जयोः। वक्रपुष्पमगस्त्ये च पलाशे च श्वपुच्छकम् ॥ १५ ॥ माषपर्ण्यां शुनः पुच्छे चिल्ली स्याच्छाकलोध्रयोः ॥ अथवा चेन्द्रवारुण्यां शक्राह्वेन्द्रयवं तथा ॥ १६ ॥ काकभाण्डी काकतुण्ड्यां ख्याता हस्तिकरञ्जके। दीर्घाङ्कुश्यां[1] पलाशे च याज्ञिकोऽथ विदारिका ॥ १७ ॥ काश्मर्यां च शृगाल्यां च टेण्टौ च मृगधूर्तके। भल्लूकोऽथ रुदन्त्यां च गोक्षुरे चणपत्रकः। कटुका गजपिप्पल्योः ख्याता च शकुलादनी ॥ १८ ॥ मन्थानके समाख्यातो राजवृक्षस्तृणाधिपे। मदने कुटिले चैव तगरं चाथ रक्तिका ॥ १९ ॥ गुञ्जायां राजिकायां[2] च पिशुनं चापि कुङ्कुमे। तगरेऽथ यवाह्वायां यवक्षारे यवासिका ॥ २० ॥ अङ्क्रौदनयोः कूरो दन्तीमधुकपुष्पयोः। मधुपुष्पं च शोफान्ध्यौ शालिपर्णीपुनर्नवे। बालपत्रो यवासे च खदिरे चाथ बालके ॥ २१ ॥ उदीच्यमुत्तरे देशे कपिः कीशतुरुष्कयोः। लाङ्गलीदर्भयोः सीरी प्रग्रहे जलवेतसे। व्याधिघातो लवङ्गं च श्रीगन्धे दिव्यचन्दने ॥ २२ ॥ स्वादुकण्टकमाचख्युर्गोक्षुरे च विकङ्कते। वंशबीजे यवफलो वत्सके धान्यमार्कवे ॥२३॥ अगस्तो देवप्रियः स्याद्द्वाश्वेतादिपिच्छरी[3](?)। गोलोम्यां गृञ्जनं प्रोक्तं लशुने वृत्तमूलके ॥ २४ ॥ कुङ्कुमे रामठे बाह्लिर्बलायामोदनी भवेत्। महासमं गजैश्वर्यां जटामांस्यां जटा स्मृता ॥ २५ ॥ कस्तूरी मृगनाभौ च धत्तूरे परिकीर्तिता। हंसपाद्यां मुसल्यां च ख्याता गोधापदी बुधैः ॥ २६ ॥ तपस्वी हिङ्गुपत्र्यां च प्रकीर्ये रौप्यमुक्तयोः। तारं स्यान्माषपर्ण्यां तु लिङ्ग्यां चाऽऽहुः स्वयंभुवम् ॥ २७ ॥ सहस्रवेधी कस्तूर्यां रामठेऽथाब्जकेसरे। पुन्नागे तुङ्गमाचख्युस्त्रिवृद्धान्यविशेषयोः ॥ २८ ॥ मसूरोऽप्यथ विश्वायां शुण्ठी अतिविषा[4] तथा। श्रीगन्धं गन्धपाषाणे गन्धसारेऽथ पिच्छिले ॥ २९ ॥ शाल्मलीशिंशपे वासाबृहत्यौ हिंस्त्रिकाभिधे। मर्कटस्त्वजमोदायां वनौकसि च विश्रुतः ॥ ३० ॥

---

१ ज. झ. टेरो च। २ ज. ट. ढ. 'सिवा। अ'। ३ ट. 'च्छदि। गो'। ४ ज. झ. ढ. प्रतिविषं।

स्याल्लाङ्गली गुडूच्यां तु विशल्यामथ तेजिनी। तेजोवत्यां तु मूर्वायां चाङ्गेरीलोणशाकयोः ॥ ३१ ॥ लोणिका चापि पिण्याकं तिलकिट्टतुरुष्कयोः। बृहत्यां चैव वृन्ताके वार्ताकी च सदाफलम् ॥ ३२ ॥ उदुम्बरे बिल्ववृक्षे लज्जा खदिरवृक्षयोः। खदिरे चाथ सामुद्रं लवणे चाब्धिफेनके ॥ ३३ ॥ ग्रन्थिलो गोक्षुरे बिल्वे कटुका मीनपित्तयोः। मत्स्यपित्तोऽथ रजनी हरिद्रानीलिकाख्ययोः ॥ ३४ ॥ मिश्रेयके मुरल्यां च वातपत्रोऽथ मुस्तके। अब्दोऽभ्रके श्वेतपद्मे पुष्करं पुष्करे मतम् ॥ ३५ ॥ तुण्डिकेर्यां च कार्पासे तुण्डिका च प्रशस्यते। धत्तूरे च विडे धूर्तः श्रीवेष्टे सूचिपत्रके ॥ ३६ ॥ वृक्षधूपो हिमांशौ[3] स्यात्कर्पूरे त्विन्दुरीरितः। जातीफलं च शैलूषे श्रीफले च सितावरी ॥ ३७ ॥ सूचिपत्रे तु बाकुच्यां शर्करागण्डदूर्वयोः। मत्स्यण्डिका तु द्राक्षायां चैराब्दे तापसप्रिया ॥ ३८ ॥ फञ्जी तु बोकडी चैव अजान्त्र्यां तु प्रशस्यते। अर्कावर्ते रवौ सूर्यः पेयं क्षीरे जले स्मृतम् ॥ ३९ ॥ कर्पूरे चुक्रके चन्द्रः क्षौद्रे ताप्ये च माक्षिकम्। मञ्जिष्ठातगरे भण्डी तूचटा गुञ्जमुस्तयोः ॥ ४० ॥ सुवर्चलं मातुलिङ्गे रुचके च सुवर्चला। अर्कावर्ते तु मण्डूक्यां ह्रीबेरपिचुमन्दयोः ॥४१॥ निम्बोऽथ सप्तलायां तु सप्तला नवमल्लिका। लाङ्गल्यां गजपिप्पल्यां ख्याता वह्निशिखा तथा ॥ ४२ ॥ ज्योतिष्मत्यां काकजङ्घा पारावतपदी तथा। दुरालभा यवासे च यासे च क्षुरको मतः ॥ ४३ ॥ गोक्षुरे कोकिलाक्षे च क्षुरे गोकण्टके क्षुरः। पुष्करं च पलाशे च क्षीरश्रेष्ठः[5] प्रकीर्तितः ॥ ४४ ॥ सोमो धान्याभ्रके[6] सोमे प्रिया मद्येङ्गनान्तरे। मुनिर्दुंघण्टुके[7]ऽगस्त्येऽथामृणालमुशीरके ॥ ४५ ॥ लामज्जके ब्रह्मवृक्षो रक्तागस्त्येऽपलाशके। वटे प्लक्षे च श्टङ्गी स्यात्कान्तारो वनवंशयोः ॥ ४६ ॥ भूतृणे धान्यके छत्रे[8] मूलके शिग्रुमूलके। मूलकं च यवानी तु दीपिकाबस्तमोदयोः ॥ ४७ ॥ एलावालुककर्कट्योर्वालुकं क्षीरभूरुहम्। ताम्रं चोदुम्बरे चाथ भूर्जेन्द्रा[9] श्रवणी तथा ॥ ४८ ॥ रीत्यां पुष्पाञ्जने रीतिः सचिवो मन्त्रिधूर्तयोः। चाणका[10] मूलके[11] मिश्रे शाल्योऽ[12]थार्कसारिवे ॥ ४९ ॥ आस्फोतायां तु पर्जन्यो वृष्टिदारुहरिद्रयोः। लकुचं चुक्रवास्तूके लिकुचेऽथ गुणा मता ॥ ५० ॥ दूर्वायां मांसरोहिण्यां सातला मांसरोहिणी। उभे चर्मकषायां तु नीवारे पिण्डखर्जुरे[13] ॥ ५१ ॥ मुनिप्रियो वरायां तु गुडूची तु विडङ्गके[14]। रसं तु पारदे बोले रसः पारदचर्मणोः ॥ ५२ ॥ मल्लूकः

---

१ ज. 'नपीतयोः। २ ज. 'द्रातिल्वका'। झ. ढ. 'द्रातिलिका'। ३ ज. ढ. हिमांशुः। ४ ट. चारद्रा। ५ ज. झ. ढ. क्षुरश्रेष्ठः। ६ ज. ट. धान्याभ्रके। ७ ट. 'दुधुण्डु'। ८ ज. ट. छत्रा। ९ ज. स्यूर्जयद्राश्मणी। ट. स्फूर्जमद्राश्मणी। १० ट. चाणक्ये। ११ ट. मूलको। १२ ट. शाल्येयोऽ'। १३ ज. झ. ढ. 'ण्डकर्जुरे। १४ ज. विगण्डकः।

शुनके ऋक्षे पद्मिन्यां नलिनी त्विभी । किंशुके प्रवरौ ख्यातौ आरूके परिकीर्तिताः(?)॥ ५३ ॥ चित्रके मेथिकाबीजे ज्योतिष्कश्चाथ वार्षिके । त्रायमाणाऽन्यपुष्प्यां च मेथिकाचित्रमूलयोः ॥ ५४ ॥ वल्लरी चाथ कलभो धत्तूरे च गजार्भके । तटिनीलिकयोरेला शिखण्डी च मयूरके ॥ ५५ ॥ सुवर्णयूथिकायां च कारवे रुचके तथा । तत्प्रोक्तं कृष्णलवणं दाडिमे च कपित्थके । स्मृतं कुचफलं शाकश्रेष्ठः कूष्माण्डके तथा ॥ ५६ ॥ कलिङ्गे च स्मृतश्चाथ खगो वायौ च पक्षिणि ॥ ५७ ॥ धनुर्वृक्षो धन्वनागे स स्याद्भल्लात इत्यपि । टेण्टुके[1] खड्गशिम्ब्यां च पृथुशिम्ब्यथ चेतना ॥५८॥ पथ्याऽरुष्कस्तु[2] निचुले अशोके वञ्जुलः स्मृतः । कपिकच्छ्वां त्वपामार्गे मर्कटी चान्यपक्षिणि ॥ ५९ ॥ भारद्वाजो भवेद्वन्यकार्पासे चाथ गुग्गुलौ । दहनागुरौ पुरं च प्रोक्ताऽथ जतुपत्रिका ॥ ६० ॥ क्षुद्राश्मभेदे चाङ्गेर्यामतसी शालिपर्णिका । एकमूला तु कुम्भी स्यात्पाटलीद्रोणपुष्पयोः ॥ ६१ ॥ वाराही च हरिक्रान्ता विष्णुक्रान्ताभिधा मता । सारङ्गश्चातके रङ्कौ शङ्खो वारिभवे नखे ॥ ६२ ॥ मांसलं तु फले प्रोक्तं वृन्ताके तु कलिङ्गके । निष्पत्रिकायां वंशाग्रे करीरं संप्रकीर्तितम् ॥ ६३ ॥ माषपर्ण्यां तु गुञ्जायां काम्भोजी चाथ पूतना । गन्धमांस्यां हरीतक्यां चित्राङ्गं म्लेच्छतालयोः ॥ ६४ ॥ अङ्कोलके तु मदनं ख्यातं गन्धोत्कटे बुधैः । द्विनिशे शिंशपायां तु भस्मगर्भः प्रकीर्तितः ॥ ६५ ॥ वाते मरुद्रदे चैव ख्यातो वैद्यैः समीरणः । क्षीरं दुग्धे तैवक्षीरे[3] क्षवथुः क्षुतकासयोः ॥ ६६ ॥ सितमन्दारके पुष्पविशेषे कुरवः स्मृतः । सुषवी कटुहुञ्च्यां च विश्रुता स्थूलजीरके ॥ ६७ ॥ कण्टकी खदिरे प्रोक्ता वृन्ताके चाथ नीलिका । सिन्दुवारे च नीलिन्यां पिके चैव तु कोकिलः । कोकिलाक्षे च गान्धार्यां पत्री स्यात्सा यवासके ॥ ६८ ॥ चक्राङ्गी चैव रोहिण्यां माञ्जिष्ठायां प्रकीर्तिता ॥६९॥ मसूरा त्रिवृतायां च प्रोक्ता धान्यविशेषके ॥ गिरिजं गैरिकं प्रोक्तं शिलाजतु प्रशस्यते ॥ ७० ॥ चन्द्रिका चन्द्रकान्तौ च निर्गुण्ड्यां च प्रकीर्तिता ॥ फञ्जी योजनवल्ल्यां तु भार्ग्यां चैवाथ नीलिका ॥ ७१ ॥ (?) मृगाक्षी श्रीफलीकायां मृगाक्षी धात्रिकाफलम् ॥ ख्याताऽमृतफले चाथ श्यामेक्षुः कोकिलाक्षकः ॥७२॥ इक्षुरके वक्रशल्यां कटुविम्बी[4] (?) प्रचक्षते ॥ दन्त्यान्तरे विभाण्ड्यां च प्रख्याता कैर्तरी बुधैः ॥ ७३ ॥ अभया च समाख्याता हरीतक्यमृणालयोः ॥ जन्तुकायां जनन्यां तु भ्रामरी च भिषग्वरैः ॥७४॥ गोरसे रोचने गव्यं कार्पास्यां चव्यं चव्यके ॥ गोरोचना रोचनायां ख्याता स्याद्वंशरोचना ॥ ७५ ॥ ज्योतिष्मत्यां पक्षिभेदे पिङ्गला च प्रकीर्तिता ॥ अमृते शालिपर्ण्यां तु सुधा च परिकीर्तिता । रसराजः समा-

१ ज. घेटुके । झ. ढ. घुटुके । २ झ. °रुष्कोऽस्तु । ३ झ. नवक्षीरे । ४ ट. वर्तकी ।

ख्यातः पारदे च रसाञ्जने ॥ ७६ ॥ वल्लीकरञ्जे सितपाटलायां कुबेरनेत्राऽथ जटादिमांस्याम् । मांसी रुदन्त्यां लवणे महीजे कान्तायसाश्मे तु हि रोमकाख्यम् ॥ ७७ ॥

इति द्व्यर्थाः ।

---

# अथ त्र्यर्थाः ।

---

सितजे शतपत्रे च वासन्त्यां माधवी भवेत् । ज्योतिष्मत्यां किणिह्यां च सुपुष्प्यां कटभी स्मृता ॥ १ ॥ पुनर्नवेन्द्रगोपौ तु वर्षाभूर्दर्दुराः स्मृताः । सुकुमारस्तु श्यामाके चम्पके क्षवके तथा ॥ २ ॥ स्पृक्का तु सुकुमारायां नेपाली मालती स्मृता । महाबला गैवाक्षी च गिरिकर्णी गवादनी ॥ ३ ॥ अरिष्टस्तक्रभेदे च निम्बे च लशुने तथा । कटुका वंशदूर्वास्तु शतपर्वा च किंशुकः ॥ ४ ॥ ज्योतिष्मत्यां पलाशे च नन्दीवृक्षेऽथ लाङ्गली । हलिन्यां गजपिपल्यां नारिकेरे प्रशस्यते ॥ ५ ॥ कदम्बे मल्लिकाख्ये च शिरीषे वृत्तपुष्पकः । गिरिकर्णीन्द्रवारुण्यां पिण्डिन्यां च गवादनी ॥ ६ ॥ शिरीषे मधुके दन्त्यां मधुपुष्पं तु वञ्जुलः । अशोके चैव भेरिण्यां निचुले चाथ नाकुली ॥७॥ सर्पाक्ष्यां सितक्षुद्रायां यवतिक्तेऽथ दर्दुरः । भल्लातके ऋषभकेऽनडुहि च प्रशस्यते ॥ ८ ॥ मयूरके मेथिकायां चित्रके च भवेच्छिखी । कदल्यामजमोदायां गजे हस्तीति संज्ञका ॥ ९ ॥ अमोघा पद्मभेदे स्यात्पाटल्यां च विडङ्गके । कुल्माषः काञ्जिके वंशे गन्धमाल्यां सुविश्रुतः ॥१०॥ सोमायां (ख्या) महिषीवल्लीब्राह्मीहेमलताः स्मृताः । वंशे स्यान्नारिकेरे च ताले च तृणराजकः ॥ ११ ॥ मुस्तायामभ्रके मेघे घनश्चाथ पितृप्रियः । अगस्त्ये भृङ्गराजे च कालशाके च विश्रुतः ॥ १२ ॥ दन्तशठस्तु चाङ्गेर्यां जम्बीरेऽथ कपित्थके । दहनोऽरुष्करे प्रोक्तो वृश्चिकाल्यां च चित्रके ॥ १३ ॥ विडङ्गे च जयन्त्यां च मोटायां च बला स्मृता । आम्रातके शिरीषे च प्लक्षे चैव कपीतनः ॥ १४ ॥ कडुडुच्यां कारवल्ली कॉण्डीरे चीरपत्रके । यवासे क्षुद्रखदिरे कार्पासे च मरुद्भवा ॥ १५ ॥ समुद्रान्ता च स्पृक्कायां कार्पासे च यवासके । मण्डूकपर्णी मण्डूक्यां मञ्जिष्ठादित्यकान्तयोः ॥ १६ ॥ ऋषभके तु वासायां बलीवर्दे वृषः स्मृतः । चाम्पेयं चम्पके प्रोक्तं किञ्जल्के नागकेसरे ॥ १७ ॥ उशीरे च लवङ्गे च श्रीखण्डे वारिसंभवः । पालितं शैलजे

---

१ ढ. लवणं । २ ज. झ. ट. सुपुल्यां । ३ ज. झ. ढ. गवाख्यां । ४ ट. सेरण्यां । ५ ज. झ. ढ. °भक आनड्वा च । ६ ज. कार्डीरे । ७ ज. चीरपत्रके । ढ. चणपत्रके ।

श्यामे शुभ्रकेशे च विश्रुतम् ॥ १८ ॥ कुन्दुरुको धूपभेदे शल्लक्यां च तृणान्तरे। पृथ्वीकायां हिङ्गुपत्री स्थूलैला कलिका स्मृता ॥ १९ ॥ शतपत्रो राजकीरे कमले पुष्पभेदके । न्यग्रोधस्त्वाखुपर्ण्यां च विषपर्ण्यां वटे स्मृतः ॥ २० ॥ क्षुद्राग्निमन्थे तर्कारी जीमूते चाग्निमन्थके । श्वेते रौप्ये च मीनाण्ड्यां सिता च परिकीर्तिता ॥ २१ ॥ सोमवल्कस्तु रीठायां कदरे कृष्णगर्भके । शैलेयके शिलाह्वा च कुनट्यां च शिलाजतौ ॥ २२ ॥ पाटलायां माषपर्ण्यां काश्मर्यां कृष्णवृन्तिका । जटामांस्यां च मांसे च लाक्षायां च पलं स्मृतम् ॥ २३ ॥ समङ्गायां रक्तपादी मञ्जिष्ठा च बला स्मृता । भल्लातके बिल्वतरौ पार्थे वीरतरुः स्मृतः ॥ २४ ॥ दुःस्पर्शायां कण्टकारी कपिकच्छूर्दुरालभा । वत्सादन्यां गुडूची च तार्क्ष्यां च गजपिप्पली ॥ २५ ॥ आमण्डे पुष्करे कञ्जे पद्मपत्रं प्रचक्षते । कालेयकं तु दार्व्यां च कुङ्कुमे हरिचन्दने ॥ २६ ॥ श्रीखण्डे चाजगन्धे स्याच्छ्रीवेष्टे तिलपर्णिका । लोध्रे पूगीफले चैव तूले च क्रमुकः स्मृतः ॥ २७ ॥ पिप्पल्यां यूथिकायां च जीरके माधवी भवेत् । अजमोदा शताह्वायां मिशिश्चैव शतावरी ॥ २८ ॥ त्रपुस्यां कर्कटी तौसी तथा स्याद्वनकर्कटी । कुस्तुम्बर्यां च भूधात्र्यां धान्यं व्रीह्यादिकं स्मृतम् ॥ २९ ॥ त्रपुसी देवदाली च घोटिके शफले स्मृता । तण्डुल्यां यवतिक्ता च शशाण्डुल्यब्दनादयोः ॥ ३० ॥ सुरदारुगन्धवल्वोश्चण्डायां गन्धमादिनी । श्यामेक्षुके क्षुरकेऽपि काकाक्षे कोकिलाक्षकः ॥ ३१ ॥ वराङ्गं मस्तके गुह्ये त्वचायां च प्रशस्यते । कर्ण्यां श्वेतकिणिह्यां च कटभ्यां गिरिकर्णिका ॥ ३२ ॥ पतङ्गोऽर्के मधूके च पट्टरञ्जनके तथा । द्राक्षा च शतवीर्यायां दूर्वा चैव शतावरी ॥ ३३ ॥ शुण्ठी प्रतिविषा चैव विश्वायां च शतावरी । जया हरिद्रा विजया जयन्त्यां च प्रशस्यते ॥ ३४ ॥ कच्छुरायां दुरालम्भा स्वयंगुप्ता यवासकः । पुण्ड्रेक्षौ चाथ गोधूमे रसाले च प्रचक्षते ॥३५॥ द्राक्षायां तु रसाला स्याद्दृश्यते च भिषग्वरैः । हेमवत्यां वचा श्वेतक्षीरिणी लोमशा स्मृता ॥ ३६ ॥ बिल्वे धात्रीफले चैव श्रीफलं चाऽऽर्द्रचिक्कणे । जात्यां पक्षिविशेषे च कमलं सारसं स्मृतम् । तिलके च च्छिन्नरुहा सुपवी केतकी भवेत् ॥३७॥ वंशः सर्जद्रुमे वेणौ कलाम्नाये च विश्रु(कीर्ति)तः । सलिले वत्सनाभे च व्याले चैव विषं स्मृतम् ॥ ३८ ॥ स्थूलकन्दो मुखालुः स्यात्सूरणं हस्तिकन्दकम् । आम्रातके पीतनकेऽप्यम्लिका च पलाशिका ॥ ३९ ॥

---

१ ज. झ. ट. श्वेतश्रोण्यां । २ झ. ट. चाभिम° । ३ झ. ट. कुण्डल्यां । ४ ज. जटामांसी च लाक्षायां सेलिक्के च प° । झ. ट. जटामांसी च लाक्षायां लाक्षायां च बलं । ५ ज. आमन्द्रे । ६ ज. ट. °स्त्रीको घोटिकी श° । ७ ट. °दारुगं° । ८ ज. ट. कालाम्नाये ।

विषदोर्ड्यां[1] महानिम्बे मदने विषमुष्टिकः। तगरे कुङ्कुमे प्रोक्तो धत्तूरे च शठः स्मृतः ॥ ४० ॥ कपित्थः स्वर्णयूथ्यां च कूष्माण्डे नागपुष्पके। तिलके चातिमुक्ते च इक्षुभेदे च पुण्ड्रकः ॥ ४१ ॥ आखोटे वारुणी चैव गवाक्ष्यां चर्मवादिनी। तोयवल्लर्यां च काण्डीरो महादुग्धाऽमृतस्त्रवा ॥ ४२ ॥ पृथ्व्यां पुनर्नवा मेदा धारिणी च प्रशस्यते। मुचुकुन्दे जयापुष्पे गणेर्यां हरिवल्लभा॥४३॥ कामुके लघुकाश्मर्यां कैडर्योऽन्यकरञ्जके। द्राक्षान्तरे शिखरिणी नेवाल्यां दधिभेदके ॥ ४४ ॥ कुटजेन्द्रयवौ प्रोक्तौ पुष्पकासीसवत्सके। क्षौद्रे मद्यान्तरे प्रोक्तो मधुयष्ट्यां मधुः स्मृतः ॥ ४५ ॥ चटके स्वरसे[2] चैव नीलकण्ठो मयूरके। शोणितं कुङ्कुमे रक्ते रक्तगन्ध इति स्मृतम् ॥ ४६ ॥ तर्कारी देवदाल्यां च अरण्यां वह्निमण्डले। वसर्यां वृश्चिके चैव काकवन्ध्या सकृत्प्रजा ॥ ४७ ॥ कद्वङ्गर्यां च कटभ्यां च पटोल्यां दधिपुष्पिका। धत्तूरे केसरे हेम्नि सुवर्णं संप्रचक्षते ॥ ४८ ॥ सुवर्णायां हरिद्रायां वारुणी कणगुग्गुलुः। वाराह्यां शिशुमार्यां च कन्दभेदे च सूकरी ॥ ४९ ॥ पलाण्ड्वन्तरे लशुने मूले चाणक्यसंज्ञके। महाकन्दः समाख्यातो वैद्यशास्त्रार्थकोविदैः ॥ ५० ॥ लोहे च वनरम्भायां लघुपाषाणभेदके। त्रिष्वेतेषु च गिरिजा प्रोक्ता यत्र भिषग्वरैः ॥५१॥ जरणः कासमर्दे तु रामठे कृष्णजीरके। स शमं जायते(?) तीक्ष्णं तगरे च प्रशस्यते ॥५२॥ दुरालभायां कपिकच्छुके स्यात्तथा शिखर्यां दुरभिग्रहा च। महासमङ्गा बहुपुत्रिका च सा सारिवा स्यात्फणिजिह्विकायाम् ॥ ५३ ॥

इति त्र्यर्थाः।

---

## अथ चतुरर्थाः।

---

अम्लिकायां तु चाङ्गेर्यां मोचिका चाऽऽम्रचिञ्चके। वयस्थायां च काकोल्यौ[3] दार्वी च सोमवल्लरी ॥१॥ जन्तुकायां पुत्रदात्र्यां षट्पद्यां भ्रमरी त्वँचौ। [4]भ्रमरीचार(वाच)को वैद्यशास्त्रमायुष्मते (विशारदैः) स्मृतः (?) ॥२॥ अभया चिर्भिटा वन्ध्याकर्कोटी च मृगादनी। पथ्यायां संप्रवक्ष्यन्ते चतस्त्रश्च भिषग्वरैः ॥ ३ ॥ कुष्ठे कुन्दुरुके निम्बे राजके राजभद्रकः। कटके काचवे लोहे तिलके गन्धभेदकः ॥ ४ ॥ मीनाख्यायां महाराष्ट्र्यां काकमाच्यां ततः परम्। ब्रह्ममण्डूकिकायां तु मत्स्याक्षी च प्रचक्षते ॥ ५ ॥ नक्तञ्चरः कौशिके स्याद्गुलुगुले दुण्डुले तुरे। शिफाऽजगन्धाकारव्यौ मेथिका चाजमोदिका ॥ ६ ॥ पञ्चास्ये मर्कटे चाश्वे

१ ज. ट. विषतुण्ड्यां। २ झ ढ. त्वरसे। ३ ज ट. त्वसौ। ४ ज. भ्रामरीवाचको।

मण्डूके च हरिः स्मृतः । श्यामालङ्का त्रिपुटायां स्थूलैला वृत्तमल्लिका ॥ ७ ॥ लोहं च लोहजे कांस्ये कृष्णलोहे तथाऽगुरौ । खर्जूर्यां नारिकेरे च ताले वंशे दुरारुहा ॥ ८ ॥ शुण्ठी मरीचपिप्पल्यां कणामूलं षडूषणम् । अग्निस्त्वरुष्करे जारे निम्बुके चित्रके तथा ॥ ९ ॥ भूताङ्कुशस्त्वपामार्गे सुकुमारश्च राजिका । त्वचे चाक्षवले चैव प्रोक्तस्तत्र भिषग्वरैः (?) ॥ १० ॥ शमी हरिद्रा वृद्धिश्च लक्ष्मी स्यात्पद्मचारिणी । जम्बूकी सोममत्स्याक्षी क्रोडि(डी) ब्राह्मी च कीर्तिता ॥ ११ ॥ मार्कवे भ्रामरे भृङ्गस्त्वचे पक्षिविशेषके । रोचनं स्याद्दाडिमके जम्भे निम्बे च पूरके ॥ १२ ॥ सिताज्ये दमने व्याघ्रे रुग्भेदे पुण्डरीककः । जलजं मौक्तिके शङ्खे लोणक्षारे लवङ्गके ॥ १३ ॥ वन्ध्याकर्कोटकी चैव बृहत्यन्या च लक्ष्मणा । सुतदा पुत्रदायां तु चतस्रः परिकीर्तिताः ॥ १४ ॥ उशीरं गृञ्जनं चैव मधुपुष्पं च वञ्जुलः । दीर्घपत्रे च केतक्यां कन्यायां दीर्घपत्रिका ॥ १५ ॥ वांसन्ते रुचके प्लैक्षः कलिङ्गे देवसर्षपे । लामज्जके दीर्घमूलं यासे वेल्लैन्तरे शठे ॥ १६ ॥ तथा स्याच्छालिपर्ण्यां च दीर्घमूला स्मृता बुधैः । रामायां त्रायमाणायां कन्याऽशोकश्च सातला ॥ १७ ॥ अमृतं वेदनक्षारे सुधायां च तथा विषे । वराहः शिशुमारे च वाराह्यां सूकरे घने ॥ १८ ॥ वाराहे वञ्जुले कासे नादेयी जलवेतसे । शारदो बकुले राष्ट्र्यां सारिवाकृष्णमुद्गयोः ॥ १९ ॥ कुब्जके वार्षिकायां च फलिन्यां योषिति प्रिया । काश्मीरं कुङ्कुमे देशे पौष्करे मृगनाभिजे ॥ २० ॥ केसरो बकुले हेम्नि किञ्जल्के च कसीसके । जम्बीरः स्यान्मरुबके गुच्छे चार्जुनयुग्मके ॥२१॥ [* वस्तुके वसुराजार्ककृष्णागरुपुनर्नवाः । जपानृकन्दान्यक्षुद्रामुचुकुन्देषु लक्ष्मणा ॥ २२ ॥ हर्षणे सारसे कामी चक्रे पारावते तथा । मूषके कुक्कुटे क्रौञ्च्यां वृश्चिके च बहुप्रजः ॥२३॥ अजशृङ्गी च मञ्जिष्ठायुक्ता कर्कटशृङ्गिका । प्रतिविषासमायुक्ता शृङ्ग्यां चैव प्रशस्यते ॥२४॥ सुरसे तुलसीब्राह्मीनिगुण्डीकणयुक्ताकर्कगुग्गुलुः (?) । चीणायां कारवल्ल्यां च वचायां लवणे पटुः ॥ २५ ॥ पाटल्यां श्यामकिणिही ताम्रवल्ली तथाऽपरम् । जीवन्तिका ताम्रपुष्पी कथिताः शास्त्रकोविदैः ॥ २६ ॥ हिङ्गुले कुङ्कुमे रक्तमस्रे चोक्तं च पद्मके । दुग्धी गोडुभोंपलाशे (?) काकोल्यां दुग्धफेनके ॥ २७ ॥ मुसली स्वर्णुली चैव कण्टकारीन्द्रवारुणी । आख्याता हेमपुष्प्यां च नानार्थज्ञविशारदैः ॥ २८ ॥ निशायां चैव नीलिन्यां हरिद्रायामलक्तके । रजनीति समाख्याता आयुर्वेदेषु धीमता ॥ २९ ॥

इति चतुर्थः ।

* एतच्चिह्नगतं जपुस्तकेऽधिकं दृश्यते ।

१ ट. वासके । २ ट. ग्लक्षः । ३ ज. ल्लतरे ।

## अथ पञ्चार्थाः ।

अजमोदाऽजगन्धा च शिखण्डी कोकिलाक्षकः ॥१॥ अपामार्गस्तु पञ्चैते मयूर इति शब्दिताः। कदली शाल्मली मोदा नीली शोभाञ्जनं तथा ॥२॥ पञ्चस्वेतेषु मोचाख्यां प्रयुञ्जन्ति भिषग्वराः। सुरभिः शल्लकी बोकं कदम्बश्चम्पकः सुरा ॥ ३ ॥ ययो दर्भो हरिद्रा च पवित्रे हिज्जलस्तिलः । यवानी जीरकश्चैव मोदाऽब्जा रक्तचित्रकः ॥ ४ ॥ निम्बुश्चेति च पञ्चैवं दीप्यकाः समुदाहृताः। कपिकच्छूः कोविदारः पन्नगः कृतमालकः ॥ ५ ॥ तथा छिन्नरुहा चेति कुण्डलीपञ्चकं स्मृतम् । शलाटुरग्निमन्थश्च क्षुद्राग्निमथनं तथा ॥ ६ ॥ काश्मीरी शिंशपा चैव श्रीपर्णी पञ्चधा स्मृता। महासमङ्गा वन्दाका जतुका चामृतस्रवा ॥ ७ ॥ महामेदा च पञ्चैता ज्ञेया वृक्षरुहा बुधैः । गोविशेषे मृगादन्यां शिंशपारेणुकाह्वयोः ॥ ८ ॥ रीत्यन्तरे च विबुधैः कपिला पञ्चसु स्मृता । कायस्थायां च काकोल्यौ पथ्यैला बहुमञ्जरी ॥ ९ ॥ व्यालस्तु चित्रक-व्याघ्रसिंहदुष्टद्विपादिषु । वृन्ताके चान्यवारुण्यां क्षुद्रायां चिर्भिटाह्वये ॥ १० ॥ लिङ्गिन्यां चेति पञ्चसु ज्ञेया चित्रफला बुधैः । बर्बरो हिङ्गुले बाले भारङ्ग्यां हरिचन्दने ॥ ११ ॥ असिते चार्जके चैव कथितः शास्त्रकोविदैः। यवान्या-मजमोदायां वचायां दीप्यके तथा ॥ १२ ॥ अरक्तलशुने चैव ह्युग्रगन्धा तु पञ्चसु । महाबलायां संप्रोक्ता सहदेवी तु नीलिनी ॥ १३ ॥ वत्सादनी देवसहा पिप्पली पञ्चसु स्मृता। ज्योतिष्मत्यां काकतुण्ड्यां काकमाच्यां तथैव च ॥ १४ ॥ वायसी काकजङ्घायां काक्यां चैव तु पञ्चधा । लिङ्गिनी स्वर्णजीवन्ती रौद्री स्यान्नाकुली तथा ॥ १५ ॥ वन्ध्याकर्कोटकी चैव ईश्वर्या संप्रकीर्त्यते ॥१७॥ ] वसन्तदूत्यां गणिकारिकाम्रवासन्तिकापाटलकोकिलाश्च । वत्सादनी बाकुचिका गुडूची सोमा समण्डूकिकसोमवल्ल्याम् ॥ १७ ॥ चक्री नखान्तरे कोके दद्रुघ्ने तिनिशे खरे। सिन्धुजे तिलके धात्र्यां पारदे टङ्कणे शिवम् ॥ १८ ॥ जाती मुरीरी कटुतुम्बिनी च चुच्छुन्दरी रेणुरसाऽजपुत्री। स्वर्णेऽप्यथो गुग्गुलुकेसराखुशठेषु धीराः कनकं वदन्ति ॥ १९ ॥

इति पञ्चार्थाः ।

## अथ षडर्थाः ।

बृहद्दलावरी ताली कटुकाऽतिविषा तथा । काकोली चैव षड्वर्गे वीरायां

च प्रचक्षते ॥ १ ॥ सातला क्षीरकाकोली विभाण्डी चाजभृङ्गिका । कुञ्जरो दर्दुरश्चैव षड्विषाणीति कीर्तिताः ॥२॥ नीलदूर्वा निशाभश्च रोचना च हरीतकी । बहुपुष्पी भिषग्वर्यैः शिलायां षडमी स्मृताः ॥ ३ ॥ निम्बखर्जूरितालीसं मरिचं वृन्तमूलकम् । पलाण्डुश्चेति षडमी निम्बसंज्ञाः प्रकीर्तिताः ॥ ४ ॥ मूर्वा स्पृक्का सहदेवी देवद्रोणी च केसरम् । आदित्यभक्ता षडिति देवीसंज्ञाः प्रकीर्तिताः ॥५॥ ब्राह्मणः क्षत्रियो वैश्यो दन्तः सर्पः खगस्तथा। द्विजद्विजन्मशब्दाभ्यामीरिताः सूरिभिः सदा ॥६॥ गवादनी चैव दूर्वा गण्डदूर्वा च हस्तिनी । प्रतीची मदिरा चेति वारुण्यां षट्सुसंमता ॥ ७ ॥ हपुषा पीतनिर्गुण्डी विष्णुक्रान्ता जयन्तिका । सिताद्रिकर्णीशङ्खिन्यौ षडेता अपराजिताः ॥ ८ ॥ कुमारी च वाराही च वन्ध्याकर्कोटकी मृदुः । स्थूलैला स्थूलपर्णी च षट्कन्याश्च कुमारिकाः ॥ ९ ॥ बीजद्रुमे गजे चैव सीसके नागकेसरे । विषे च पन्नगे चैव षट्सूक्तो नाग इत्यपि ॥ १० ॥ सूक्ष्मैला च महाराष्ट्री मत्स्याक्षी काकमाचिका । गण्डदूर्वा च गण्डूकी मत्स्यादन्यां षडीरिताः ॥११॥ मेणे कलिङ्गे कोशाम्रे शल्ये काके च धूर्तके । मदनश्च समाख्यातः षडमी समुदाहृताः (षट्स्वमीषु भिषग्वरैः) ॥ १२ ॥ दोडी गुडूची मेदा च काकोली हरिणी तथा । जीवन्ती चैव षट् प्रोक्ता जीवन्त्यां च भिषग्वरैः ॥ १३ ॥ धूम्राटभृङ्गयोः खलु मांसले च प्लक्षे शिरीषे कुटजे कुलिङ्गे । द्राक्षा च दूर्वा जरणा कणा च कृष्णाभिधा वाकुचिका कटुश्च ॥ १४ ॥

इति षडर्थाः ।

---

## अथ सप्तार्थाः ।

---

भद्रायां तु बला नीली दन्ती काश्मरी सारिवा । श्वेताद्रिकर्णी गौरी च सप्त प्रोक्ता भिषग्वरैः ॥ १ ॥ मञ्जिष्ठा कटुका पथ्या काश्मरी चन्द्रवल्लभा ॥ वन्दाक्को रजनी चैव रोहिण्यां सप्त च स्मृताः ॥२॥ धात्री बहुफलायां स्याच्छर्दिनी काकमाचिका । काम्भोजी च शशाण्डूली कटुदुग्धी च वालुकी ॥ ३ ॥ मण्डूकी ब्रह्मजा शङ्खपुष्पी ज्योतिष्मती मुनिः । विष्णुक्रान्ता वचा श्वेता मेध्यायां सप्त संमताः ॥ ४ ॥ आखुकर्णी सुतश्रेणी इन्द्राह्वा च कलिङ्गकः ।

---

१ ट. °रिकासीसं । २ ज. झ. ढ. देवद्रोणा । ३ ज. °का । शीतादिक° । ४ झ. ढ. डोडी । ५ ज. झ. ढ. °रिका । श्वे° । ६ ज. ट. कटुदु° ।

गण्डदूर्वा गवाक्षी च चित्रायामृक्षमेकतः ॥५॥ रास्ना पाठा प्रियङ्गुश्च सितक्षुद्रा हरीतकी । श्रेयस्यां चेति संप्रोक्ता अम्बष्ठा गजपिप्पली ॥ ६ ॥

इति सप्तार्थाः ।

## अथाष्टार्थाः ।

विजया काञ्चनद्वंद्वं मञ्जिष्ठा च वचा तथा । स्यात्तथा श्वेतनिर्गुण्डी जयन्ती काञ्जिकाऽभया ॥ १ ॥ एरण्डनद्याम्रलताकरञ्जाः स्याद्ब्रह्मदण्डी पनसः कुसुम्भः । स्याद्गोक्षुरः कण्टफले च धूर्तो भिषग्भिरष्टाविति संप्रदिष्टाः ॥ २ ॥ स्वर्णे कपिच्छे दधिनारिकेरयोः स्याज्जीवके चेत्स्थलपद्मके तथा । मयूरकेतौ समधूकके तथा माङ्गल्यमष्टाविति संप्रचक्षते ॥ ३ ॥

इत्यष्टार्थाः ।

## अथ नवार्थाः ।

वातारिर्जतुकायां च भल्ल्यां मीलदवञ्ज(शतमूलीविडङ्ग)योः । टेटुकामण्डयोर्भार्ग्यां निर्गुण्ड्यां सूरणे स्मृतः ॥१॥ धात्री गुडूची रास्ना च द्विधा दूर्वा हरीतकी । लिङ्गिनी तुवरी मद्यं धीमतायां नवौषधी ॥ २ ॥ ब्राह्मी वराही लशुनी विषं च शुक्रादिकन्दः सितकण्टकारी । भूम्याहुली चेदपराजिता च शुण्ठीति चैतासु महौषधी स्यात् ॥ ३ ॥

इति नवार्थाः ।

## अथ दशार्थाः ।

सितायां बाकुची दूर्वा मद्यं धात्री कुटुम्बिनी । चन्द्रिका च प्रिया पिङ्गा त्रायमाणा च तेजिनी ॥ १ ॥

इति दशार्थाः ।

१ ज. झ. ढ. च सिमाक्षु' । २ ज. झ. ट. 'की । ई' । ३ ट. नवौषधम् ।　५८

## अथैकादशार्थाः।

स्यादभ्रमांसी तुलसी हरिद्रा तालं तथा रोचनहेममोचाः। जनप्रिया योजनवल्लिका स्यात्समल्लिका चन्द्रशशी च गौर्याम् ॥ १ ॥ दूर्वा निशा ऋद्धिवचा प्रिया च सा माषपर्णी शिमिरोचना त्वथ। त्रायन्तिका जीवनिका महाबला मङ्गल्यकायामिति चन्द्रमाह्वयाः ॥ २ ॥ प्रियङ्गुच्छिन्ना त्रिवृता कणाह्वया वन्दाकदूर्वा तुलसी च नीलिनी। दुर्गा खगः कस्तुरिकृष्णसारिवा श्यामा महीन्दुः कथिता भिषग्वरैः ॥ ३ ॥

—:०:—

इत्थं विचिन्त्य विनिवेशिततत्तदेकानेकार्थनामगणसंग्रहपूर्णमेनम्। वर्गं विचार्य भिषजा बहुभक्तिभाजा ज्ञेयाः स्वयं प्रकरणानुगुणाः प्रयोगाः ॥ ४ ॥ एको यश्च मनस्विनामचतुरो यश्च द्वयोरश्विनोर्यक्षाद्याचतुरो नृपश्ववदनो नाम्नाऽरिषण्णां जयी। एकार्थादिरमुष्य नामरचनाचूडामणौ यस्त्रयोविंशोऽसौ समपूरि सार्धममुना ग्रन्थेन वर्गो महान् ॥ ५ ॥

इत्येकादशार्थाः।

इति काश्मीरमण्डलप्रसिद्धवसतिश्रीमठसिंहगुहास्थानस्थितश्रीनन्दीस्फोटप्रासिद्धमहिमानन्दश्रीसोमानन्दाचार्यवंशोद्भवचतुर्दशविद्याविनोदपरिणतसमागमद्विजवैराग्ययोग्यश्रीपरमहंसजगदविज्ञानतिमिरमार्तण्डश्रीचण्डेश्वरापरनामधेयश्रीराजराजेन्द्रगिरिश्रीपादपद्मसर्वशास्त्रमकरन्दामोदमुदितसद्वैद्यविद्याविशारदमानसहितारिधुरंधरनानाधनग्रहणसत्त्वगुणसहजश्रीमदीश्वरसूरिसूनुश्रीमदमृतेशानन्दचरणारविन्दमकरन्दानन्दितश्रीनरहरिपण्डितविरचिते निघण्टुराजापरपर्यायवत्यभिधानचूडामणौ चैकार्थाद्यभिधानस्त्रयोविंशो वर्गः ॥ २३ ॥

समाप्तोऽयं परिशिष्टो राजनिघण्टुः।

## श्रीकामाक्ष्यै नमः ।

निघण्टुमुत्तरं वक्ष्ये द्रव्याण्यत्राऽऽश्रितानि च ।

एकार्थद्व्यर्थत्र्यर्थानि नानार्थानि तथैव च ॥ १ ॥

१ शतपुष्पा–शतप्रसूना( शतकुसुमा )
२ दण्डहस्ती–तगरम् ।
३ भण्डीरी ( भण्डीरिका )–मञ्जिष्ठा ।
४ सर्वरसः–सर्जरसः ।
५ बहुस्रवा ( बहुश्रया )–सल्लकी ।
६ कुम्भोलूखलकम्–गुग्गुलुः ।
७ प्रावृषायणी–कपिकच्छूः ।
८ अग्निज्वाला–धातकी ।
९ कुक्कुरम्–स्थौणेयकम् ।
१० कोटिवर्षा–स्पृक्का ।
११ चन्द्रकः –कम्पिल्लकः ।
१२ रसः–बलिः ।
१३ बृहत्त्वक्–सप्तपर्णः ।
१४ मधुधातुः–अश्ममाक्षिकम् ।
१५ ब्रह्मकुशा( ब्रह्मदर्भा )–अजमोदा ।
१६ आत्मशल्या–लघुशतावरी ।
१७ पुच्छविषाणिका, (विषा-
( णिका–कर्कटशृङ्गी ।
१८ हट्टविलासिनी–नखम् ।
१९ अञ्जनकेशी–नालिका ।
२० इक्षुपत्री ( क्षुद्रपत्री )–वचा ।
२१ हिङ्गुली( हिङ्गुलानि )–बृहती ।
२२ वनशृङ्गाटः( वनशृङ्गाटिका)–गोक्षुरः।
२३ मण्डूकपर्णी, ( मण्डूकपर्णः )–
स्योनाकः ।
२४ गोकर्णी, गोपर्णी,–मूर्वा ।
२५ क्लीतनका–मधुयष्टिका ।
२६ महाक्लीतनका–शालिपणी ।
२७ कुमुदिका–कट्फलम् ।
२८ महाकुमुदिका–काश्मरी ।
२९ स्रुवावृक्षः–विकङ्कतः ।
३० तापसवृक्षः–इङ्गुदीवृक्षः ।
३१ चर्मवृक्षः–भूर्जपत्रम् ।
३२ शङ्खपुष्पिका–क्षीरपुष्पी ।
३३ पयस्या–अर्कपुष्पी ।
३४ कन्दरालः–प्लक्षः ।
३५ शफरी–अश्मन्तकः ।
३६ कुटिलपुष्पम्–तिलपुष्पम् ।
३७ वनत्रपुसी–चिर्भटम् ।
३८ कंधरः–तण्डुलीयकः ।
३९ क्षुधाभिजननः–क्षुवकः ।
४० अजशृङ्गी–कर्कटशृङ्गी ।
४१ स्यन्दनः–अतिमुक्तकः ।
४२ एलापर्णी–रास्ना ।
४३ कार्पासी–भारद्वाजी ।
४४ भद्रकार्पासी–वन्यकार्पासी ।
४५ वीरणम्–वीरतरम् ।
४६ अभीरुपर्णी–शतावरी ।
४७ नालिका–शाकनालिका ।
४८ मारिषः–गन्धारी ।
४९ यवासकः कुनाशकम् ।
५० क्षारपत्रम्–वास्तुकम् ।
५१ कुठेरकः–कुठिञ्जरः ।
५२ मत्स्यकाली–उपोदकी ।
५३ शृङ्गवेरिका–गोजिह्वा ।
५४ निष्पावः–राजशिम्बी ।
५५ काकाण्डः–सूकरशिम्बी ।
५६ आढकी–तुवरी ।
५७ कलिन्दकः–कर्कारुकः ।
५८ कर्कटिका–उर्वारुः ।

५९ सोमकः—कूष्माण्डकः।
६० राजकर्कटिका—कर्कारुः।
६१ व्यडम्बः एरण्डः।
६२ वासन्तः—कृष्णमुद्गः।
६३ शारदः—पीतमुद्गः।
६४ हरिमन्थः—चणकः।
६५ मुकुष्टकः—मकुष्ठकः।
६६ प्रियङ्गुः—कङ्गुः।
६७ हरेणुः—सतीनकः।
६८ उमा—अतसी।
६९ विष्णुक्रान्ता—अपराजिता।
७० नारायणी—शतावरी।
७१ कुमारः—जीवकः।
७२ पललः—तिलकल्कः।
७३ पलम्—मांसम्।
७४ वल्लूरम्—शुष्कमांसम्।
७५ नागवल्ली—ताम्बूली।
७६ धत्तूरफलम्—मातुलानी।
७७ सुवर्चला—आदित्यपर्णी।
७८ पाटला—पाटलीपुष्पम्।
७९ एकविषा—त्रिवृत्।
८० पृथुका—आज्यतण्डुला।
८१ यवकः—गोधूमः।
८२ यवः—सितशूकः।
८३ कोरदूषः—कोद्रवः।
८४ पुत्रम्—पुत्रजीवकः।
८५ कालशाकम्—कालिकाशाकम्।
८६ नन्दीमुखः—गोधूमः।
८७ अक्षतधान्यम्—यवः।
८८ अतसी—नन्दमुखी।
८९ कुमारी—मुद्गपर्णी।
९० अलाबुका—अलाबूः।
९१ मातुलम्—मातुलफलम्।

इत्येकार्थानि।

---

# अथ द्व्यर्थानि।

---

१ मधु—माक्षिकम्, मार्द्वीकं च।
२ पयः—क्षीरम्, उदकं च।
३ पिण्याकम्—तिलकल्कम्, तुरुष्कश्च।
४ शिग्रुः—सौभाञ्जनम्, हरितशाकश्च।
५ प्रियङ्गुः—गन्धद्रव्यम्, कङ्गुश्च।
६ धान्यम्—धान्यकम्, व्रीह्यादिकं च।
७ सीरी—लाङ्गलीका, दर्भविशेषश्च।
८ शताह्वा—शतपुष्पा, शतावरी च।
९ उदुम्बरम्—क्षीरवृक्षः, ताम्रं च।
१० विश्वा—शुण्ठी, अतिविषा च।
११ जया—तर्कारी, हरीतकी च।
१२ राजादनम्—क्षीरिका, पियालश्च।
१३ अम्बु—वालकम्, उदकं च।
१४ केसरम्—किञ्जल्कम्, नागकेसरम्।
१५ गन्धकम्—गन्धकः, पाषाणगन्धरश्च।
१६ कुण्डली—गुडूची, कोविदारश्च।
१७ क्रमुकः—श्वेतरोध्रः, पूगश्च।
१८ बृहती—सिंही, वासा च।
१९ पिच्छला—शाल्मली, शिंशपा च।
२० कटुका—नागबला, मृणालश्च।
२१ सेव्यम्—लामज्जकम्, उशीरं च।
२२ वृक्षाम्लम्—अम्लिका, फलं च।
२३ दीप्यकम्—यवानी, अजमोदा च।
२४ कारवी—अजमोदा, शतपुष्पा च।
२५ कबरी—अजगन्धा, हिङ्गुपत्रिका च।
२६ स्वादुकण्टका—गोक्षुरकः, विकङ्कतश्च
२७ ब्राह्मणी—स्पृक्का, भार्ङ्गी च।
२८ मधूलिका—मधुयष्टिका, मूर्वा च।

२९ मूर्वा—पीलुपर्णी, बिम्बी च।
३० अग्निमुखी—भल्लातकी, लाङ्गली च।
३१ अग्निशिखः—कुसुम्भम्, कुङ्कुमं च।
३२ क्लीतिका—मधुयष्टिका, नीलिका च।
३३ आस्फोता—सारिवा, गिरिकर्णिका च।
३४ अमोघा—पाटला, विडङ्गश्च।
३५ अञ्जनम्—स्रोतोञ्जनम्, सौवीरं च।
३६ अग्निः—चित्रकः, भल्लातश्च।
३७ रोचनः—कम्पिल्लः, रोचना च।
३८ श्वेतदूर्वा—गोलोमी, वचा च।
३९ कणा—पिप्पली, जीरकं च।
४० शारदी—सारिवा, जलपिप्पली च।
४१ कृमिघ्नः—विडङ्गम्, हरिद्रा च।
४२ देवी—मूर्वा, स्पृक्का च।
४३ अरुणम्—मञ्जिष्ठा, अतिविषा च।
४४ श्यामा—सारिवा, प्रियङ्गुश्च।
४५ चर्मकषा—मांसरोहिणी, सातला च
४६ उग्रगन्धा—वचा, यवानी च।
४७ मधुरा—काकोली, जीवकश्च।
४८ मधुरम्—विषम्, जीविकम्।
४९ चोचम्—त्वक्, पालेवतम्।
५० निर्गुण्डी—शेफालिका, नीलसिन्धुवारश्च।
५१ पोटगलः—काशः, नलश्च।
५२ शीतलशिवम्—सैन्धवम्, मिश्रेया च
५३ करञ्जः—करजः, नखश्च।
५४ अलोमशा-काकजङ्घा, कासीसं च
५५ दीर्घमूला—शालिपर्णी, यवासकश्च।
५६ मरुकः—जम्बीरकः, दमनकश्च।
५७ परिव्याधः—जलवेतसः, कर्णिकारश्च।
५८ अजशृङ्गी—कर्कटशृङ्गी, विषाणिका च।
५९ त्रिपुटा—त्रिवृत्, सूक्ष्मैला च।
६० प्रत्यक्श्रेणी—दन्ती, द्रवन्ती च।
६१ अपराजिता—श्वेतबला, गिरिकर्णिका च।
६२ पारावतपदी—काकजङ्घा, ज्योतिष्मती च।
६३ यवफलम्—वंशः, कुटजम्।
६४ बालपत्रः—खदिरः, यवासश्च।
६५ रुहा—दूर्वा, मांसरोहिणी च।
६६ अरिष्टः—निम्बः, रसोनश्च।
६७ धारा—गुडूची, क्षीरकाकोली च।
६८ चित्रा—इन्द्रवारुणी, बृहद्दन्ती च।
६९ पद्मा—पद्मचारिणी, भार्ङ्गी च।
७० अमृणालम्—लामज्जकम्, उशीरं च।
७१ गन्धकली—प्रियङ्गुः, चम्पककलिका च।
७२ ऐन्द्री—इन्द्रवारुणी, इन्द्राणी च।
७३ तुण्डीकेरी—बिम्बिका, कार्पासी च।
७४ नतम्—तगरम्, स्योनाकश्च।
७५ शकुलादनी—कटुका, जलपिप्पली च।
७६ भण्डीरिका—मञ्जिष्ठा, तण्डुलीयश्च।
७७ दधि—श्रीवासकः, गोरसश्च।
७८ क्षारः—यवक्षारः, सर्जिकाक्षारश्च।
७९ तेजनी—तेजोवती, मूर्वा च।
८० कटम्भरा—कटुका, स्योनाकश्च।
८१ कर्कशम्—कासमर्दः, कम्पिल्लकश्च।
८२ कुलकम्—पटोलम्, काकतिन्दुकं च।
८३ पुष्करम्—पुष्करमूलम्, पयाक्षश्च।
८४ तेजनः—शरः, वेणुश्च।
८५ शतवीर्या—शतावरी, दूर्वा च।
८६ सहस्रवीर्या—ऊर्ध्वकण्टकः, शतावरी च।
८७ दन्तशठः—जम्बीरः, कपित्थश्च।
८८ दन्तशठा—चाङ्गेरी, आम्लिका च।
८९ लोणित्थः—चाङ्गेरी, लोणिशाकं च।
९० अम्लिका—चाङ्गेरी, तिन्तिडीकं च।
९१ कुवलयम्—नीलपद्मम्, बदरं च।

९२ पुष्पफलम्–कूष्माण्डम्, कपित्थश्च ।
९३ श्रीपर्णी–काश्मरी, कट्फलं च ।
९४ नन्दीवृक्षः–तूणिकम्, काश्मरी च ।
९५ वितुन्नकम्–धान्यकम्, तुत्थं च ।
९६ भृङ्गः–भृङ्गराजः, त्वक् च ।
९७ गन्धारी-दुरालभा, गन्धपलाशी च।
९८ शीतशिवम्–सैन्धवम्, मिश्रेया च ।
९९ मोचा–कदली, शाल्मली च ।
१०० अङ्गारवल्ली–भार्ङ्गी, गुञ्जा च ।
१०१ वारि–वालकम्, उदकं च ।
१०२ कोशातकी–महाकोशातकी, राजकोशातकी च ।

इति द्व्यर्थानि ।

---

## अथ त्र्यर्थानि वक्ष्यामः ।

१ सौवीरकम्—अञ्जनम् , काञ्जिकम् , बदरं च ।
२ अरिष्टः—निम्बः, रसोनः, वासकश्च ।
३ महौषधम्—अतिविषम्, शुण्ठी, रसोनश्च ।
४ दुस्पर्शा—दुरालभा, कण्टकारिका, कपिकच्छूश्च ।
५ कृष्णा—पिप्पली, शालिका, अञ्जनं च ।
६ उपकुञ्चिका—जीरकद्वयम्, एला च ।
७ अमृता—गुडूची, हरीतकी आमलकी च ।
८ पिण्डा—हरिद्रा, खर्जूरी, हिङ्गुपत्रिका च ।
९ सोमवल्ली—बाकुची, गुडूची, ब्राह्मी, च ।
१० शुकः—शिरीषः, स्थौणेयकम्, तालीस(श)पत्रं च ।
११ काला—उपकुञ्चिका, त्रिवृत्, नालिका च ।
१२ कालमेषी—मञ्जिष्ठा, स्योनाकः, बाकुचिका च ।
१३ कालानुसार्यकः—तगरम्, कालीयकम्, शैलेयकश्च ।
१४ पलाशः—किंशुकम्, शठी, पत्रकश्च ।
१५ मोचा—कदली, शाल्मली, सौभाञ्जनश्च ।
१६ पृथ्वीका—हिङ्गुपत्रिका, उपकुञ्चिका, सूक्ष्मै(बृहदे)ला च
१७ लता—प्रियङ्गुः, सारिवा, ज्योतिष्मती च ।
१८ मधु—क्षौद्रम्, पुष्परसः, मद्यं च ।
१९ सुरभी—सल्लकी, एलवालुकम्, मुरा च ।
२० श्राद्वः(?)—श्रीवासकम्, बिल्वः, लवङ्गश्च ।
२१ शिलाह्वा—शिलाजतु, शैलेयकम्, मनःशिला च ।
२२ चाम्पेयः—चम्पकः, नागकेसरम्, पद्मकिञ्जल्कश्च ।

